THE

# NEW TESTAMENT

OF OUR

LORD AND SAVIOUR

# JESUS CHRIST,

IN SANSCRIT.

---

TRANSLATED FROM THE GREEK

BY THE CALCUTTA BAPTIST MISSIONARIES

WITH NATIVE ASSISTANTS.

---

Calcutta:

PRINTED AT THE BAPTIST MISSION PRESS, CIRCULAR ROAD, FOR THE BIBLE TRANSLATION SOCIETY, AND THE AMERICAN AND FOREIGN BIBLE SOCIETY.

1851.

*Second Edition.*

| | | |
|---|---|---|
| Testament, Complete, 1st Edition | Copies | 1000 |
| ——————— 2nd Ditto | ,, | 2500 |
| Four Gospels and the Acts, together, 1st Ed. | ,, | 500 |
| ——————————— 2nd Ed. | ,, | 1500 |
| ——————————— 3rd Ed. | ,, | 2500 |
| Four Gospels and the Acts, Separately, 1st Ed | ,, | 19500 |
| ———————————— 2nd Ed. | ,, | 12500 |
| ———————————— 3rd Ed. | ,, | 12500 |
| Luke and Acts, together, one Edition | ,, | 1500 |

धर्म्मपुस्तकस्य शेषांशः ।

अर्थतः

प्रभुना यीशुख्रीष्टेन

निरूपितस्य

# नूतनधर्म्मनियमस्य

ग्रन्थसङ्ग्रहः ।

इंलण्डीयवङ्गदेशीयपण्डितै र्यूनानीयभाषातो व्याकृतः

धर्म्मसमाजसाहाय्येन मुद्राक्षराङ्कितश्च ।

कलिकातानगरे

१७७१ शाके ईं सन १८५१ ।

# निर्घण्टपत्रं।

# मथिलिखितः सुसंवादः ।

---

## १ प्रथमोऽध्यायः ।

१ ख्रीष्टस्य पूर्व्ववंशावलिः १८ जन्मकथनञ्च ।

१ इब्राहीमः सन्तानो दायूद् तस्य सन्तानो यीशुख्रीष्टस्तस्य
२ पूर्व्वपुरुषवंशश्रेणी । इब्राहीमः पुत्र इस्हाक् तस्य पुत्रो याकूब्
३ तस्य पुत्रो यिहूदास्तस्य भ्रातरश्च । तस्माद् यिहूदातस्तामरो
गर्भे पेरस्सेरहौ जज्ञाते, तस्य पेरसः पुत्रो हिष्रोण् तस्य पुत्रो
४ ऽराम् । तस्य पुत्रो ऽम्मीनादब् तस्य पुत्रो नहशोन् तस्य पुत्रः
५ सल्मोन् । तस्माद् राहबो गर्भे बोयस् जज्ञे, तस्माद् रूतो
६ गर्भे ओबेद् जज्ञे, तस्य पुत्रो यिशयः । तस्य पुत्रो दायूद्राजः
७ तस्माद् मृतोरियस्य जायायां सुलेमान् जज्ञे । तस्य पुत्रो
८ रिहबियाम्, तस्य पुत्रोऽबियः, तस्य पुत्र आसाः । तस्य सुतो
९ यिहोशाफट् तस्य सुतो यिहोराम् तस्य सुत उषियः । तस्य
१० सुतो योथम् तस्य सुत आहस् तस्य सुतो हिष्कियः । तस्य
सुतो मिनशिः, तस्य सुत आमोन् तस्य सुतो योशियः ।
११ बाबिल्नगरे प्रवसनात् पूर्व्वं स योशियो यिखनियं तस्य
१२ भ्रातॄंश्च जनयामास । ततो बाबिलि प्रवसनकाले यिखनियः
१३ शल्तीयेलं जनयामास, तस्य सुतः सिरुब्बाविल् । तस्य सुतो
१४ ऽबीहूद् तस्य सुत इलीयाकीम् तस्य सुतोऽसोर् । असोरः
१५ सुतः सादोक् तस्य सुत आखीम् तस्य सुत इलीहूद् । तस्य

सुत इलियासर् तस्य सुतो मत्तन्। तस्य सुतो याकूब् तस्य १६ सुतो यूषफ् तस्य जाया मरियम्; तस्या गर्भे यीशुरजनि, तमेव ख्रीष्टम् (अर्थाद् अभिषिक्तं) वदन्ति। इत्थम् इब्राहीमो १७ दायूदं यावत् साकल्येन चतुर्दशपुरुषाः; आ दायूदः कालाद् बाबिलि प्रवसनकालं यावत् चतुर्दशपुरुषा भवन्ति; बाबिलि प्रवासकालात् ख्रीष्टस्य कालं यावत् चतुर्दशपुरुषा भवन्ति।

यीशुख्रीष्टस्य जन्म कथ्यते। मरियम् नामिका कन्या १८ यूषफे वाग्दत्तासीत्, तदा तयोः सङ्गमात् प्राक् सा कन्या पवित्रेणात्मना गर्भवती बभूव। तत्र तस्याः पति र्यूषफ् सौज- १९ न्यात् तस्याः कलङ्कं प्रकाशयितुम् अनिच्छन् गोपनेन तां परित्यक्तुं मनश्चक्रे। स तथैव भावयति, तदानीं परमेश्वरस्य २० दूतः स्वप्ने तं दर्शनं दत्त्वा व्याजहार, हे दायूदः सन्तान यूषफ् त्वं निजां जायां मरियमम् आदातुं मा भैषीः। यत- २१ स्तस्या गर्भः पवित्रादात्मनोऽभवत्, सा च पुत्रं प्रसविष्यते, तदा त्वं तस्य नाम यीशुम् (अर्थात् त्रातारं) करिष्यसे, यस्मात् स निजमनुजान् तेषां कलुषेभ्य उद्धरिष्यति। इत्थं सति, २२

पश्य गर्भवती कन्या तनयं प्रसविष्यते।

इम्मानूयेल् तदीयञ्च नामधेयं भविष्यति॥

इम्मानूयेल् अस्माकं सङ्गीश्वरइत्यर्थः। इति यद् वचनं पूर्व्वं २३ भविष्यद्वक्त्रा ईश्वरः कथयामास, तत् तदानीं सिद्धमभवत्। अनन्तरं यूषफ् निद्रातो जागरित उत्थाय परमेश्वरीयदूतस्य २४ निदेशानुसारेण निजां जायां जग्राह, किन्तु यावत् सा निजं २५ प्रथमसुतं न सुषुवे, तावत् तां नोपागच्छत्, ततः सुतस्य नाम यीशुं चक्रे।

# २ द्वितीयोऽध्यायः ।

१ तारकादर्शनात् ज्योतिर्विदां यिरूशालमागमनं १३ यूषफा यीशुमरियमो मिसरानयनं १६ बैत्लेहमि नगरे हेरोद्राजस्य शिशूनां हननं १९ इस्रायेल्-देशं प्रति ख्रीष्टस्य पुनरागमनं नासरत्नगरे निवसनञ्च ।

१ अनन्तरं हेरोद्संज्ञके राज्ञि राज्यं शासति यिहूदीय-देशस्य बैत्लेहमि नगरे यीशौ जातवति च, कतिपया ज्योति-र्व्विदः पूर्व्वस्या दिशो यिरूशालम्नगरं समेत्य कथयामासुः, २ यो यिहूदीयानां राजा जातवान्, स कुत्रास्ते? वयं पूर्व्वस्यां दिशि तिष्ठन्तस्तदीयां तारकाम् अपश्याम तस्मात् तं प्रणन्तुम् ३ आगमाम । तदा हेरोद् राजा कथामेतां निशम्य यिरूशालम्-४ नगरस्थितैः सर्व्वमानवैः सार्द्धम् उद्विज्य सर्व्वान् प्रधानयाज-कान् अध्यापकांश्च समाहूयानीय पप्रच्छ, ख्रीष्टः कुत्र जनि-५ ष्यते? तदा ते कथयामासुः, यिहूदीयदेशस्य बैत्लेहमि नगरे, यतो भविष्यद्वादिना इत्थं लिखितमास्ते,

६ सर्व्वाभ्यो राजधानीभ्यो यिहूदीयस्य नीवृतः ।
हे यिहूदीयदेशस्थे बैत्लेहम् त्वं न चावरा ।
इस्रायेलीयलोकान् मे यतो यः पालयिष्यति ।
तादृगेको महाराजस्त्वन्मध्य उद्भविष्यति ॥

७ तदानीं हेरोद् राजा तान् ज्योतिर्व्विदो गोपनम् आहूय ८ सा तारका कदा दृष्टाभवत्, तद् विनिश्चयामास । अपरं तान् बैत्लेहमं प्रहित्य गदितवान्, यूयं यात, यत्नात् तं शिशुम् अन्विष्य तदुद्देशे प्राप्ते मह्यं वार्त्तां दास्यथ, ततो मयापि ९ गत्वा स प्रणंस्यते । तदानीं राज्ञ एतादृशीम् आज्ञां प्राप्य ते प्रतस्थिरे, ततः पूर्व्वस्यां दिशि स्थितैस्तै र्या तारका दृष्टा सा तारका तेषामग्रे गत्वा यत्र स्थाने शिशुरास्ते, तस्य स्थानस्यो-

परि स्थगिता तस्थौ। तद् दृष्ट्वा ते महानन्दिता बभूवुः, ततो १०
गेहमध्यं प्रविश्य तस्य मात्रा मरियमा सार्द्धं तं शिशुं निरीक्ष्य ११
दण्डवद् भूत्वा प्रणेमुः, अपरं स्वेषां धनसम्पत्तिं मोचयित्वा सुवर्णं
कुन्दुरुं गन्धरसञ्च तस्मै दर्शनीयं दत्तवन्तः। पश्चाद् हेरोद्- १२
राजस्य समीपं पुनरपि गन्तुं स्वप्न ईश्वरेण निषिद्धाः सन्तो
ऽन्येन पथा ते निजदेशं प्रति प्रतस्थिरे।

अनन्तरं तेषु गतवत्सु परमेश्वरस्य दूतो यूषफे स्वप्ने दर्शनं १३
दत्त्वा जगाद, त्वम् उत्थाय शिशुं तन्मातरञ्च गृहीत्वा मिसर्-
देशं पलायस्व, अपरं यावदहं तुभ्यं वार्त्तां न कथयिष्यामि,
तावत् तत्रैव निवस, यतो राजा हेरोद् शिशुं नाशयितुं
मृगयिष्यते। तदानीं यूषफ् उत्थाय रजन्यां शिशुं तन्मातरञ्च १४
गृहीत्वा मिसर्देशं प्रति प्रतस्थे, गत्वा च हेरोदो नृपते र्मरण- १५
पर्य्यन्तं तत्र देशे न्युवास, तेन

मिसर्देशादहं पुत्रं स्वकीयं समुपाह्वयम्।

यदेतद्वचनम् ईश्वरेण भविष्यद्वादिना कथितं तत् सफलमभूत्।

अनन्तरं हेरोद् ज्योतिर्विद्भिरात्मानं प्रवञ्चितं विज्ञाय १६
भृशं चुकोप; अपरं ज्योतिर्व्विद्भ्यस्तेन विनिश्चितं यद् दिनं
तद्दिनाद् गणयित्वा द्वितीयवत्सरं प्रविष्टा यावन्तो बालका
अस्मिन् बैत्लेहम्नगरे तत्सीममध्ये चासन्, लोकान् प्रहित्य
तान् सर्व्वान् घातयामास। अतः १७

अनेकस्य विलापस्य निनादः क्रन्दनस्य च।
शोकेन कृतशब्दश्च रामायां संनिशम्यते।
स्वबालगणहेतोर्वै राहेल् नारी तु रोदिनी।
न मन्यते प्रबोधन्तु यतस्ते नैव सन्ति हि॥

१८ यदेतद् वचनं यिरिमियनामकभविष्यद्वादिना कथितं तत् तदानीं सफलम् अभूत्।

१९ तदनन्तरं हेरोदि राजनि मृते परमेश्वरस्य दूतो मिसर्द्देशे
२० स्वप्ने दर्शनं दत्त्वा यूषफे कथितवान् त्वम् उत्थाय शिशुं तन्मातरञ्च गृहीत्वा पुनरपीस्रायेलो देशं याहि, ये जनाः शिशुं
२१ नाशयितुम् अमृगयन्त, ते मृतवन्तः। तदानीं स उत्थाय शिशुं
२२ तन्मातरञ्च गृह्लन् इस्रायेल्देशम् आजगाम। किन्तु यिहूदीयदेशे अर्खिलायनामा राजकुमारो निजपितु र्हेरोदः पदं प्राप्य राजत्वं करोतीति निशम्य तत्स्थानं यातुं शङ्कितवान्, पश्चात् स्वप्न ईश्वरात् प्रबोधं प्राप्य गालील्देशस्य
२३ प्रदेशैकं प्रस्थाय नासरन्नाम नगरं गत्वा तत्र न्युषितवान्, तेन तं नासरतीयं कथयिष्यन्ति, यदेतद्वाक्यं भविष्यद्वादिभिरुक्तं तत् सफलमभवत्।

---

## ३ तृतीयोऽध्यायः।

१ योहनो विवरणं ७ तस्य मज्जनप्रचारः १३ खीष्टस्य मज्जनञ्च।

१ तदानीं योहन्नामा मज्जयिता यिहूदीयदेशस्य प्रान्तरम्
२ उपस्थाय प्रचारयन् कथयामास, मनांसि परावर्त्तयत, स्वर्गीयराजत्वं समीपमागतम्।

३ परमेशस्य पन्थानं परिष्कुरुत सर्व्वतः।
तस्य राजपथांश्चैव समीकुरुत सर्व्वथा।
इत्येतत् प्रान्तरे वाक्यं वदतः कस्यचिद्रवः॥

४ एतद्वचनं यिशयियभविष्यद्वादिना योहनमुद्दिश्य भाषितम्। योहनो वसनं महाङ्गरोमजं तस्य कटौ चर्म्मकटिबन्धनं; स

च शूककीटान् मधु च भुक्तवान्। तदानीं यिरूशालम्- ५
नगरनिवासिनः सर्व्वे यिहूदिदेशीया यर्द्दन्तटिन्या उभयत-
टस्थाश्च मानवा वहिरागत्य तस्य समीपे स्वीयं स्वीयं दुरि- ६
तम् अङ्गीकृत्य तस्यां यर्द्दनि तेन मज्जिता बभूवुः।

अपरं बहून् फिरूशिनः सिदूकिनश्च मनुजान् मंक्तुं ७
स्वसमीपम् आगच्छतो विलोक्य स तान् अभिदधौ, रे रे
भुजगवंशा आगामिनः कोपात् पलायितुं युष्मान् कश्चेतित-
वान्? मनःपरावर्त्तनस्य समुचितं फलं फलत। किन्त्वस्माकं ८
तात इब्राहीम् अस्तीति स्वेषु मनःसु चिन्तयन्तो मा व्याहृ- ९
रत। यतो युष्मान् अहं वदामि, ईश्वर एतेभ्यः पाषाणेभ्य
इब्राहीमः सन्तानान् उत्पादयितुं शक्नोति। अपरं पादपानां १०
मूले कुठार इदानीमपि लगन् आस्ते, तस्माद् यस्मिन् पादपे
उत्तमं फलं न भवति, स कृत्तो मध्येऽग्निं निक्षेप्स्यते। अपरम् ११
अहं मनःपरावर्त्तनसूचकेन मज्जनेन युष्मान् मज्जयामीति
सत्यं, किन्तु मम पश्चाद् य आगच्छति, स मत्तोपि महान्,
अहं तदीयोपानहौ वोढुमपि नहि योग्योस्मि, स युष्मान्
वह्निरूपे पवित्र आत्मनि संमज्जयिष्यति। तस्य करे सूर्प १२
आस्ते, स स्वीयशस्यानि सम्यक् प्रस्फोट्य निजान् सकलगोधूमान्
संगृह्य भाण्डागारे स्थापयिष्यति, किन्तु सर्व्वाणि वुषाण्य-
निर्व्वाणवह्निना दाहयिष्यति।

अनन्तरं यीशु र्योहना मज्जितो भवितुं गालील्प्रदेशाद् १३
यर्द्दनि तस्य समीपम् आजगाम। किन्तु योहन् तं निषिध्य १४
बभाषे, त्वं किं मम समीपम् आगच्छसि? वरं त्वया मज्जनं
मम प्रयोजनम् आस्ते। तदानीं यीशुः प्रत्यवोचत्; इदानीम् १५

अनुमन्यस्व, यत इत्थं सर्व्वधर्म्मसाधनम् अस्माकं कर्त्तव्यं, ततः
१६ सोऽन्वमन्यत। अनन्तरं यीशुरम्भसि मज्जितः सन् तत्क्षणात्
तोयमध्याद् उत्थाय जगाम, तदा जीमूतद्वारे मुक्ते जाते स
ईश्वरस्यात्मानं कपोतवद् अवरुह्य स्वोपर्य्यागच्छन्तं वीचाञ्चक्रे।
१७ अपरम् एष मम प्रियः पुत्र एतस्मिन्नेव मम महासन्तोष
एतादृशी व्योमजा वाग् बभूव।

---

## ४ चतुर्थोऽध्यायः।

१ प्रतारकेण ख्रीष्टस्य परीचणं १२ तस्य कफर्नाहूमि वसनं १७ तस्य सुसंवाद-प्रचारणं १८ पितर्-आन्द्रिय-याकूब्-योहन् एतेषामाह्वानं २३ ख्रीष्टेन रोगिणां रोगमोचनञ्च।

१ ततः परं यीशुः प्रतारकेण परीक्षितो भवितुम् आत्मना
२ प्रान्तरम् आकृष्टः सन् चत्वारिंशदहोरात्रान् अनाहारस्तिष्ठन्
३ क्षुधितो बभूव। तदानीं परीक्षिता तत्समीपम् आगत्य व्याहृत-
वान्, यदि त्वमीश्वरात्मजो भवेस्तर्ह्याज्ञया पाषाणानेतान्
४ पूपान् विधेहि। ततः स प्रत्यब्रवीत्, इत्थं लिखितमास्ते,
'मनुजः केवलपूपेन न जीविष्यति, किन्त्वीश्वरस्य वदनाद्
५ यानि यानि वचांसि निःसरन्ति तैरेव जीविष्यति।' तदा
प्रतारकस्तं पुण्यनगरं नीत्वा मन्दिरस्य चूडोपरि निधाय
६ गदितवान्, त्वं यदीश्वरस्य तनयो भवेस्तर्हीतोऽधः पत, यत
इत्थं लिखितमास्ते,

आदेक्ष्यति निजान् दूतान् रक्षितुं त्वां परेश्वरः।
यथा सर्व्वेषु मार्गेषु त्वदीयचरणद्वये।
न लगेत् प्रस्तराघातस्त्वां धरिष्यन्ति ते करैः॥

७ तदानीं यीशुस्तस्मै कथितवान् एतदपि लिखितमास्ते, 'त्वं

निजप्रभुं परमेश्वरं मा परीक्षस्व।' अनन्तरं प्रतारकः पुन- ८
रपि तम् अत्युच्चधराधरोपरि नीत्वा जगतः सकलराज्यानि
तदैश्वर्य्याणि च दर्शयाञ्चकार कथयाञ्चकार च, यदि त्वं ९
दण्डवद् भवन् मां प्रणमेस्तर्ह्यहम् एतानि तुभ्यं प्रदास्यामि।
तदानीं यीशुस्तमवोचत्, दूरीभव प्रतारक, लिखितमिदम् १०
आस्ते, 'त्वया निजः प्रभुः परमेश्वरः प्रणम्यः केवलः स से-
व्यश्च।' ततः प्रतारकेण स पर्य्यत्याजि, तदा स्वर्गीयदूतै- ११
रागत्य स सिषेवे।

तदनन्तरं योहन् कारायां बबन्धे, तद्वार्त्तां निशम्य १२
यीशुना गालील् प्रास्थीयत। ततः परं स नासरन्नगरं विहाय १३
जलधेस्तटे सिबूलून्नप्ताली एतयोरुभयोः प्रदेशयोः सीम्नो-
र्मध्यवर्त्ती यः कफर्नाहूम् तन्नगरम् इत्वा न्यवसत्। तस्मात्, १४

अन्यदेशीयगालीलि यर्द्दन्पारेऽब्धिरोधसि।
नप्तालिसिबूलून्देशौ यत्र स्थाने स्थितौ पुरा।
तत्रत्या मनुजा ये ये पर्य्यभ्राम्यन् तमिस्रके। १५
तैर्जनैर्बृहदालोकः परिदर्शिष्यते तदा।
अवसन् ये जना देशे मृत्युच्छायास्वरूपके।
तेषामुपरि लोकानामालोकः संप्रकाशितः॥

यदेतद्वचनं यिशयियभविष्यद्वादिना प्रोक्तं, तत् तदा सफलम् १६
अभूत्।

अनन्तरं यीशुः सुसंवादं प्रचारयन् एतां कथां कथ- १७
यितुम् आरेभे, मनांसि परावर्त्तयत, स्वर्गीयराजत्वं सविध-
मभवत्। ततः परं यीशु र्गालीलो जलधेस्तटेन गच्छन् १८
गच्छन् आन्द्रियस्तस्य भ्राता शिमोन् अर्थतो यं पितरं

वदन्ति एतावुभौ जलधौ जालं क्षिपन्तौ ददर्श, यतस्तौ मीन-
१९ धारिणावास्ताम्। तदा स तावाहूय व्याजहार, युवां मम
२० पश्चाद् आगच्छतं, युवामहं मनुजधारिणौ करिष्यामि। तेनैव
२१ तौ जालं विहाय तस्य पश्चात् आगच्छताम्। अनन्तरं
तस्मात् स्थानात् व्रजन् व्रजन् सिवदियस्य सुतौ याकूब्
योहन्नामानौ द्वौ सहजौ तातेन सार्द्धं नौकोपरि जालस्य
२२ जीर्णोद्धारं कुर्व्वन्तौ वीक्ष्य तावाहूतवान्। तत्क्षणात् तौ नावं
स्वतातञ्च विहाय तस्य पश्चाद्गामिनौ बभूवतुः।

२३ अनन्तरं भजनभवने समुपदिशन् समुपदिशन् राज्यस्य
सुसंवादं प्रचारयन् प्रचारयन् मनुजानां सर्व्वप्रकारान् रोगान्
सर्व्वप्रकारपीडाश्च शमयन् शमयन् यीशुः कृत्स्नं गालील्देशं
२४ भ्रमितुम् आरभत। तेन कृत्स्नसुरियादेशस्य मध्यं तस्य
यशो व्याप्नोत्, अपरं भूतग्रस्ता अपस्माररोगिणः पक्षाघाति-
प्रभृतयश्च यावन्तो मनुजा नानाविधव्याधिभिः क्लिष्टा आसन्,
तेषु सर्व्वेषु तस्य समीपम् आनीतेषु स तान् स्वस्थान् चकार।
२५ एतेन गालील्-दिकपलि-यिरूशालम्-यिहूदीयदेशेभ्यो यर्द्दनः
पाराच्च बहवो मनुजास्तस्य पश्चाद् अगच्छन्।

---

## ५ पञ्चमोऽध्यायः।

१ ख्रीष्टोपदेशारम्भः ३ धन्यजनानां निर्णयः १३ ख्रीष्टशिष्याणां लवणदीप्तिस्वरूपत्व-
कथनं १७ व्यवस्थासाधनाय ख्रीष्टावतारः २१ वधक्रोधयोर्निषेधः २७ पारदारि-
कत्वप्रतिषेधः ३३ शपथनिषेधः ३८ हिंसाप्रतिषेधः ४३ रिपुभिः सार्द्धं प्रीति-
व्यवस्था च।

१ अनन्तरं स जननिवहं निरीक्ष्य भूधरोपरि व्रजित्वा
२ समुपविवेश। तदानीं शिष्येषु तस्य समीपमागतेषु तेन तेभ्य
एषा कथा कथयाञ्चक्रे।

अभिमानहीना जना धन्याः, यतस्ते स्वर्गीयराज्यम् अधि- ३
करिष्यन्ति। खिद्यमाना मनुजा धन्याः, यस्मात् ते सान्त्वनां ४
प्राप्स्यन्ति। नम्रा मानवाश्च धन्याः, यस्मात् ते मेदिनीम् ५
अधिकरिष्यन्ति। धर्म्माय बुभुक्षिताः तृषार्त्ताश्च मनुजा धन्याः, ६
यस्मात् ते परितर्प्स्यन्ति। कृपालवो मानवा धन्याः, यस्मात् ते ७
कृपां प्राप्स्यन्ति। निर्म्मलहृदया मनुजाश्च धन्याः, यस्मात् ते ८
ईश्वरं द्रक्ष्यन्ति। मेलयितारो मानवा धन्याः, यस्मात् त ईश्व- ९
रस्य सन्तानत्वेन विख्यास्यन्ति। धर्म्मकारणात् ताडिता मनुजा १०
धन्या, यस्मात् स्वर्गीयराज्ये तेषामधिकारो विद्यते। यदा ११
मनुजा मम नामकृते युष्मान् निन्दन्ति ताडयन्ति मृषा नाना-
दुर्व्वाक्यानि वदन्ति च, तदा यूयं धन्याः। तदा आनन्दत, १२
तथा भृशं ह्लादध्वञ्च, यतः स्वर्गे भूयांसि फलानि लप्स्यध्वे;
ते युष्माकं पुरातनान् भविष्यद्वादिनोऽपि तादृग् अताडयन्।

यूयं मेदिन्यां लवणरूपाः, किन्तु यदि लवणस्य लवण- १३
त्वम् अपयाति, तर्हि तत् केन प्रकारेण स्वादुयुक्तं भविष्यति?
तत् कस्यापि कार्य्यस्यायोग्यत्वात् केवलं बहिः प्रक्षेप्तुं नराणां
पदतलेन दलयितुञ्च योग्यं भवति। यूयं जगति दीप्तिरूपाः, १४
भूधरोपरि स्थितं नगरं गुप्तं भवितुं नहि शक्ष्यति। अपरं १५
मनुजाः प्रदीपान् प्रज्वाल्य द्रोणाधो न स्थापयन्ति, किन्तु
दीपाधारोपर्य्येव स्थापयन्ति, तेन ते दीपा गेहस्थितान् सक-
लान् प्रकाशयन्ति। येन मानवा युष्माकं सत्कर्म्माणि विलोक्य १६
युष्माकं स्वर्गस्थं पितरं धन्यं वदन्ति, तेषां समक्षं युष्माकं
दीप्तिस्तादृक् प्रकाशताम्।

अहं व्यवस्थां भविष्यद्वाक्यञ्च लोप्तुम् आगतवान्, इत्थं १७

मानुभवत, ते द्वे लोप्तुं नागतवान्, किन्तु सफले कर्त्तुम्
१८ आगतोस्मि । अपरं युष्मान् अहं तथ्यं वदामि यावत् व्योम-
मेदिन्यो ध्वंसो न भविष्यति, तावत् सर्व्वस्मिन् सफले न जाते
१९ व्यवस्थाया एका मात्रा विन्दुरेकोपि वा न लोप्स्यते । तस्मात्
यो जन एतासाम् आज्ञानाम् अतिक्षुद्राम् एकाज्ञामपि
लंघते मनुजांश्च तथैव शिक्षयति, स स्वर्गीयराज्ये सर्व्वेभ्यः
क्षुद्रत्वेन विख्यास्यते, किन्तु यो जनस्तां पालयति, तथैव
२० शिक्षयति च, स स्वर्गीयराज्ये प्रधानत्वेन विख्यास्यते। अपरं
युष्मान् अहं वदामि, अध्यापकफिरूशिमानवानां धर्म्मानुष्ठा-
नात् युष्माकं धर्म्मानुष्ठाने नोत्तमे जाते यूयम् ईश्वरीयराज्यं
प्रवेष्टुं न शक्ष्यथ ।

२१　अपरञ्च त्वं नरं मा वधीः, यस्मात् यो नरं हन्ति, स
विचारसभायां दण्डार्हो भविष्यति, पूर्व्वकालीनजनेभ्य इति
२२ कथितमासीत्, युष्माभिरश्रावि । किन्त्वहं युष्मान् वदामि, यः
कश्चित् कारणं विना निजभ्रात्रे कुप्यति, स विचारसभायां
दण्डार्हो भविष्यति ; यः कश्चिच्च स्वीयसहजं निर्ब्बोधं वदति,
स महासभायां दण्डार्हो भविष्यति ; पुनश्च त्वं मूढ इति
वाक्यं यदि कश्चित् स्वीयभ्रातरं वक्ति, तर्हि नरकाग्नौ स
२३ दण्डार्हो भविष्यति । अतो वेद्याः समीपं निजनैवेद्ये समानी-
तेऽपि निजभ्रातरं प्रति कस्माच्चित् कारणात् त्वं यदि दोषी
२४ विद्यसे, तदानीं तव तस्य स्मृति र्जायते च, तर्हि तस्यां वेद्याः
समीपे निजनैवेद्यं निधाय तदैव गत्वा पूर्व्वं तेन सार्द्धं मिल,
२५ पश्चात् आगत्य निजनैवेद्यं निवेदय । अन्यच्च यावत् विवादिना
सार्द्धं वर्त्मनि तिष्ठसि, तावत् तेन सार्द्धं मेलनं कुरु ; नो चेत्

विवादी विचारयितुः समीपे त्वां समर्पयति विचारयिता च रक्षिणः सन्निधौ समर्पयति तदा त्वं कारायां बध्येथाः। तर्हि २६ त्वामहं तथ्यं ब्रवीमि, शेषकपर्दकेऽपि न परिशोधिते तस्मात् स्थानात् कदापि वहिरागन्तुं न शक्ष्यसि।

अपरं त्वं मा व्यभिचर, यदेतद् वचनं पूर्व्वकालीनलोकेभ्यः २७ कथितमासीत्, तद् यूयं श्रुतवन्तः; किन्त्वहं युष्मान् वदामि, २८ यदि कश्चित् कामतः काञ्चन योषितं पश्यति, तर्हि स मनसा तदैव व्यभिचरितवान्। तस्मात् तव दक्षिणं नेत्रं यदि त्वां २९ बाधते, तर्हि तन्नेत्रम् उत्पाट्य दूरे निक्षिप, यस्मात् तव सर्व्व-वपुषो नरके निक्षेपात् तवैकाङ्गस्य नाशो वरं। यद्वा तव दक्षिणः ३० करो यदि त्वां बाधते, तर्हि तं करं छित्त्वा दूरे निक्षिप, यतः सर्व्ववपुषो नरके निक्षेपात् एकाङ्गस्य नाशो वरं।

उक्तमास्ते, यदि कश्चिन् निजजायां परित्यक्तुम् इच्छति, ३१ तर्हि स तस्यै त्यागपत्रं ददातु। किन्त्वहं युष्मान् व्याहरामि, ३२ व्यभिचारदोषे न जाते यदि कश्चिन् निजजायां परित्यजति, तर्हि स तां व्यभिचारयति; यश्च तां त्यक्तां स्त्रियं विवहति, सोपि व्यभिचरति।

पुनश्च त्वं मृषा शपथम् न कुर्व्वन् ईश्वराय निजशपथं ३३ पालय, पूर्व्वकालीनलोकेभ्यो यैषा कथा कथिता, तामपि यूयं श्रुतवन्तः। किन्त्वहं युष्मान् वदामि, कमपि शपथं मा कार्ष्ट, ३४ अर्थतः स्वर्गनाम्ना न, यतः स ईश्वरस्य सिंहासनं; पृथिव्या ३५ नाम्नापि न, यतः सा तस्य पादपीठं; यिरूशालमो नाम्नापि न, यतः सा महाराजस्य पुरी; निजशिरोनाम्नापि न, यस्मात् ३६ तस्यैकं कचमपि सितम् असितं वा कर्त्तुं त्वया न शक्यते। अपरं ३७

यूयं संलापसमये केवलं भवतीति न भवतीति च वदत यत इतोऽधिकं यत् तत् पापात्मनो जायते।

३८ अपरं लोचनस्य विनिमयेन लोचनं दन्तस्य विनिमयेन
३९ दन्तः पूर्व्वोक्तमिदं वचनञ्च युष्माभिरश्रूयत। किन्त्वहं युष्मान् वदामि यूयं हिंसकं नरं मा व्याघातयत। किन्तु केनचित् तव दक्षिणकपोले चपेटाघाते कृते तं प्रति वामं कपोलञ्च
४० व्याघोटय। अपरं केनचित् त्वया सार्द्धं विवादं कृत्वा तव परि-
४१ धेयवसने जिघृक्षिते तस्मायुत्तरीयवसनमपि देहि। यदि कश्चित् त्वां क्रोशमेकं नयनार्थं अन्यायतो धरति, तदा तेन
४२ सार्द्धं क्रोशद्वयं याहि। यश्च मानवस्त्वां याचते, तस्मै देहि, यदि कश्चित् तुभ्यं धारयितुम् इच्छति, तर्हि तं प्रति पराङ्मुखो मा भूः।

४३ निजसमीपवासिनि प्रेम कुरु, किन्तु शत्रुं प्रति द्वेषं कुरु,
४४ यदेतत् पुरोक्तं वचनं एतदपि यूयं श्रुतवन्तः। किन्त्वहं युष्मान् वदामि, यूयं रिपुष्वपि प्रेम कुरुत, ये च युष्मान् शपन्ते, तान् आशिषं वदत, ये च युष्मान् ऋतीयन्ते, तेषां मङ्गलं कुरुत, ये च युष्मान् निन्दन्ति, ताडयन्ति च, तेषां कृते प्रार्थयध्वं।
४५ तत्र यः सतामसताञ्चोपरि प्रभाकरम् उदाययति, तथा धार्म्मिकानामधार्म्मिकानाञ्चोपरि नीरं वर्षयति तादृशो यो
४६ युष्माकं स्वर्गस्थः पिता, यूयं तस्यैव सन्ताना भविष्यथ। ये युष्मासु प्रेम कुर्व्वन्ति, यूयं यदि केवलं तेष्वेव प्रेम कुरुथ, तर्हि युष्माकं किं फलं भविष्यति? चण्डाला अपि तादृशं
४७ किं न कुर्व्वन्ति? अपरं यूयं यदि केवलं स्वीयभ्रातृत्वेन नमत, तर्हि किं महत् कर्म्म कुरुथ? चण्डाला अपि तादृशं किं न

कुर्व्वन्ति? तस्मात् युष्माकं स्वर्गस्थः पिता यथा पूर्णो भवति, ४८ यूयमपि तादृशा भवत।

---

## ६ षष्ठोऽध्यायः।

१ धर्म्मकर्म्मणः कथनं २ दानकरणव्यवस्थापनं ५ प्रार्थनव्यवस्थापनं १६ उपवासव्यवस्थापनं १९ धनसञ्चयोपदेशनं २४ धर्म्मचेष्टायां आवश्यकत्वञ्च।

सावधाना भवत, मनुजान् दर्शयितुं तेषां गोचरे धर्म्मकर्म्म मा कुरुत, तथा कृते युष्माकं स्वर्गस्थपितुः सकाशात् किञ्चन फलं न प्राप्स्यथ। १

त्वं यदा ददासि तदा कपटिनो जना यथा मनुजेभ्यः प्रशंसां प्राप्तुं भजनभवने राजमार्गे च तूरीं वादयन्ति, तथा मा कुरु, अहं तुभ्यं यथार्थं कथयामि, ते स्वकीयं फलम् अलभन्त। किन्तु त्वं यदा ददासि, तदा निजदक्षिणकरो यत् करोति, तद् वामकरं मा ज्ञापय। तेन तव दानं गुप्तं भविष्यति यस्तु तव पिता गुप्तदर्शी, स प्रकाश्य तुभ्यं फलं दास्यति। २ ३ ४

अपरं यदा प्रार्थयसे, तदा कपटिनइव मा कुरु, यस्मात् ते भजनभवने राजमार्गस्य कोणे तिष्ठन्तो लोकान् दर्शयन्तः प्रार्थयितुं प्रीयन्ते; अहं युष्मान् तथ्यं वदामि, ते स्वकीयफलं प्राप्नुवन्। तस्मात् प्रार्थनाकाले अन्तरागारं प्रविश्य द्वारं रुद्ध्वा गुप्तं पश्यतस्तव पितुः समीपे प्रार्थयस्व; तेन तव यः पिता गुप्तदर्शी, स प्रकाश्य तुभ्यं फलं दास्यति। अपरं प्रार्थनाकाले देवपूजकाइव मुधा पुनरुक्तिं मा कुरु, यस्मात् ते बोधन्ते, बहुवारं कथायां कथितायां तेषां प्रार्थना ग्राहिष्यते। यूयं तेषामिव मा कुरुत, यस्मात् युष्माकं यद् यत् प्रयोजनं ५ ६ ७ ८

९ याचनातः प्रागेव युष्माकं पिता तत् जानाति । अतएव यूयम् ईदृक् प्रार्थयध्वं, हे अस्माकं स्वर्गस्थपितः, तव नाम
१० पूज्यं भवतु । तव राजत्वं भवतु; तवेच्छा स्वर्गे यथा तथैव
११ मेदिन्यामपि सफला भवतु । अस्माकं प्रयोजनीयम् आहारम्
१२ अद्य देहि । वयं यथा निजापराधिनः क्षमामहे, तथैवास्माकम्
१३ अपराधान् क्षमस्व । अस्मान् परीक्षां मानय, किन्तु पापात्मनो रक्ष, (राजत्वं गौरवं पराक्रमः एते सर्व्वे सर्व्वदा तव; तथास्तु) ।
१४ यदि यूयम् अन्येषाम् अपराधान् क्षमध्वे तर्हि युष्माकं स्वर्गस्थ-
१५ पितापि युष्मान् क्षमिष्यते; किन्तु यदि यूयम् अन्येषाम् अपराधान् न क्षमध्वे, तर्हि युष्माकं जनकोऽपि युष्माकम् अपराधान् न क्षमिष्यते ।

१६ अपरम् उपवासकाले कपटिनो जना मानुषान् उपवासं ज्ञापयितुं स्वेषां वदनानि म्लानानि कुर्व्वन्ति, यूयं तद्वव विषण्णवदना मा भवत; अहं युष्मान् तथ्यं वदामि ते स्वकीयफलम्
१७ अलभन्त । यदा त्वम् उपवससि, तदा यथा लोकैस्त्वं उपवासीव न दृश्यसे, किन्तु तव योऽगोचरः पिता तेनैव दृश्यसे,
१८ तत्कृते निजशिरसि तैलं मर्द्दय वदनञ्च प्रक्षालय; तेन तव यः पिता गुप्तदर्शी स प्रकाश्य तुभ्यं फलं दास्यति ।

१९ अपरं यत्र स्थाने कीटाः कलङ्काश्च क्षयं नयन्ति, चौराश्च सन्धिं कर्त्तयित्वा चोरयितुं शक्नुवन्ति, तादृश्यां मेदिन्यां
२० स्वार्थं धनं मा संचिनुत । किन्तु यत्र स्थाने कीटाः कलङ्काश्च क्षयं न नयन्ति, चौराश्च सन्धिं कर्त्तयित्वा चोरयितुं न शक्नु-
२१ वन्ति, तादृशे स्वर्गे धनं सञ्चिनुत । यस्मात् यत्र स्थाने युष्माकं
२२ धनं तत्रैव स्थाने युष्माकं मनांसि । लोचनं देहस्य प्रदीपकं,

तस्मात् यदि तव लोचनं प्रसन्नं भवति, तर्हि तव कृत्स्नं वपु र्दीप्तियुक्तं भविष्यति। किन्तु लोचनेऽप्रसन्ने तव कृत्स्नं वपुः २३ तमिस्रयुक्तं भविष्यति। अतएव या दीप्तिस्त्वयि विद्यते, सा यदि तमिस्रयुक्ता भवति, तर्हि तत् तमिस्रं कियन् महत्। कोपि २४ मनुजो द्वौ प्रभू सेवितुं न शक्नोति, यस्माद् एकं संमन्य तदन्यं न सम्मन्यते, यद्वा एकत्र मनो निधाय तदन्यम् अवमन्यते; तथा यूयमपीश्वरं लक्ष्मीञ्चेत्युभे सेवितुं न शक्नुथ।

अपरम् अहं युष्मभ्यं तथ्यं कथयामि, किं भक्षिष्यामः? किं २५ पास्यामः? इति प्राणधारणाय मा चिन्तयत; किं परिधास्यामः? इति कायरक्षणाय न चिन्तयत; भक्ष्यात् प्राणा वसनाच्च वपूंषि किं श्रेष्ठाणि न हि? विहायसो विहङ्गमान् २६ विलोकयत; ते नोप्यते न कृत्यते भाण्डागारे न सञ्चीयतेऽपि; तथापि युष्माकं स्वर्गस्थः पिता तेभ्य आहारं वितरति। यूयं २७ तेभ्यः किं श्रेष्ठा न भवथ? युष्माकं कश्चित् मनुजः चिन्तयन् निजायुषः क्षणमपि वर्द्धयितुं शक्नोति? अपरं वसनाय कुत- २८ श्चिन्तयत? क्षेत्रोत्पन्नानि पुष्पाणि कथं वर्द्धन्ते तदालोचयत। तानि तन्तून् नोत्पादयन्ति किमपि कार्य्यं न कुर्व्वन्ति; २९ तथाप्यहं युष्मान् वदामि, सुलेमान् तादृग् ऐश्वर्य्यवानपि तत्पुष्पमिव विभूषितो नासीत्। तस्मात् अद्य विद्यमानं श्वः ३० चुल्ल्यां निक्षेप्स्यते तादृशं यत् क्षेत्रस्थितं कुसुमं तत् यदीश्वर इत्थं बिभूषयति, तर्हि हे स्तोकप्रत्ययिनो युष्मान् किं न परिधापयिष्यति? तस्मात् अस्माभिः किमत्स्यते? किञ्च पायि- ३१ ष्यते? किं वा परिधायिष्यते, इति न चिन्तयत। यस्मात् ३२ देवार्च्चका अपीति चेष्टन्ते; एतेषु द्रव्येषु प्रयोजनमस्तीति युष्माकं

३३ स्वर्गस्थः पिता जानाति। अतएव प्रथमत ईश्वरीयराज्यं
३४ धर्म्मञ्च चेष्टध्वं, तत एतानि वस्तूनि युष्मभ्यं प्रदायिष्यन्ते। श्वः
कृते मा चिन्तयत, श्वएव स्वयं स्वमुद्दिश्य चिन्तयिष्यति;
अद्यतनी या चिन्ता साद्यकृते प्रचुरतरा।

---

## ७ सप्तमोऽध्यायः।

१ दोषीकरणप्रतिषेधः ७ प्रार्थनाकरणोपदेशः १३ संकीर्णद्वारेण प्रवेशोपदेशः १५ मृषाभविष्यद्वादिभ्यः सावधानत्वोपदेशः २१ ईश्वरेष्टकर्म्मकरणावश्यकत्वं २४ ज्ञान्यज्ञानिनां दृष्टान्तः २८ ख्रीष्टोपदेशस्य समाप्तिश्च।

१ यथा यूयं दोषीकृता न भवथ, तत्कृतेऽन्यं दोषिणं मा
२ कुरुत। यतो यादृशेन दोषेण यूयं परान् दोषिणः कुरुथ,
तादृशेन दोषेण यूयमपि दोषीकृता भविष्यथ, अन्यच्च येन
परिमाणेन युष्माभिः परिमीयते, तेनैव परिमाणेन युष्म-
३ त्कृते परिमायिष्यते। अपरञ्च निजनयने या नासा विद्यते,
ताम् अनालोच्य तव सहजस्य लोचने यत् तृणम् आस्ते,
४ तदेव कुतो वीक्षसे? तव निजलोचने नासायां विद्यमानायां,
हे भ्रातः, तव नयनात् तृणं वहिष्कर्त्तुं अनुजानीहि, कथा-
५ मेतां निजसहजाय कथं कथयितुं शक्नोषि? हे कपटिन्,
आदौ निजनयनात् नासां वहिष्कुरु ततो निजदृष्टौ सुप्र-
सन्नायां तव भ्रातु र्लोचनात् तृणं वहिष्कर्त्तुं शक्ष्यसि।
६ अन्यच्च सारमेयेभ्यः पवित्रवस्तूनि मा वितरत, वराहाणां
समक्षञ्च मुक्ता मा निक्षिपत; निक्षेपणात् ते ताः सर्व्वाः पदै
र्दलयिष्यन्ति, परावृत्य युष्मानपि विदारयिष्यन्ति।
७ याचध्वं ततो युष्मभ्यं दायिष्यते; मृगयध्वं तत उद्देशं
लप्स्यध्वे; द्वारम् आहत, ततो युष्मत्कृते मुक्तं भविष्यति।

यस्माद् येन याच्यते, तेन लभ्यते; येन मृग्यते तेनोद्देशः ८ प्राप्यते; येन च द्वारम् आहन्यते, तत्कृते द्वारं मोच्यते। आत्मजेन पूपे प्रार्थिते तस्मै पाषाणं विश्राणयति, मीने याचिते ९ च तस्मै भुजगं वितरति, एतादृशः पिता युष्माकं मध्ये क आस्ते? १० तस्माद् यूयम् अभद्राः सन्तोऽपि यदि निजबालकेभ्य उत्तमं ११ द्रव्यं दातुं जानीथ, तर्हि युष्माकं स्वर्गस्थः पिता स्वीय-याचकेभ्यः किमुत्तमानि वस्तूनि न दास्यति? युष्मान् प्रती-तरेषां यादृशो व्यवहारो युष्माकं प्रियः, यूयं तान् प्रति १२ तादृशानेव व्यवहारान् विधत्त; यस्माद् व्यवस्थाभविष्य-द्वादिनां वचनानाम् इति सारम्।

सङ्कीर्णद्वारेण प्रविशत; यतो नरकगमनाय यद् द्वारं १३ तद् विस्तीर्णं यच्च वर्त्म तद् बृहत् तेन बहवः प्रविशन्ति। अपरं स्वर्गगमनाय यद् द्वारं तत् कीदृक् संकीर्णं। यच्च १४ वर्त्म तत् कीदृग् दुर्गमम्। तदुद्देष्टारः कियन्तोऽल्पाः। अप- १५ रञ्च ये जना मेषवेशेन युष्माकं समीपम् आगच्छन्ति, किन्त्वन्तर्दुरन्ता वृका एतादृशेभ्यो भविष्यद्वादिभ्यः सावधाना भवत, यूयं फलेन तान् परिचेतुं शक्नुथ। मनुजाः किं कण्ट- १६ किनो वृक्षाद् द्राक्षाफलानि शृगालकोलितश्च उडुम्बर-फलानि शातयन्ति? तद्वद् उत्तम एव पादप उत्तमफलानि १७ जनयति, अधमपादपएवाधमफलानि जनयति। किन्तूत्तम- १८ पादपः कदाप्यधमफलानि जनयितुं न शक्नोति, तथाधमोपि पादप उत्तमफलानि जनयितुं न शक्नोति। अपरं ये ये १९ पादपा अधमफलानि जनयन्ति, ते छिन्ना वह्नौ क्षिप्यन्ते। अतएव यूयं फलेन तान् परिचेष्यथ। २०

२१ ये जना मां प्रभुं वदन्ति, ते सर्व्वे स्वर्गराज्यं प्रवेक्ष्यन्ति तन्न, किन्तु यो मानवो मम स्वर्गस्थस्य पितुरिष्टं कर्म्म करोति
२२ स एव प्रवेक्ष्यति। तद् दिने बहवो मां वदिष्यन्ति, हे प्रभो हे प्रभो, तव नाम्ना किमस्माभि र्भविष्यद्वाक्यं न व्याहृतं? तव नाम्ना भूताः किं न त्याजिताः? तव नाम्ना किं नाना-
२३ द्भुतानि कर्म्माणि न कृतानि? तदाहं वदिष्यामि, हे कुकर्म्मकारिणो युष्मान् अहं न वेद्मि, यूयं मत्समीपाद् दूरीभवत।
२४ यः कश्चित् ममैताः कथाः श्रुत्वा पालयति, स पाषाणो-
२५ परि गृहनिर्म्मात्रा ज्ञानिना सह मयोपमीयते। यतो वृष्टौ सत्याम् आप्लाव आगते वायौ वाते च तेषु तद्गृहं लग्नेषु
२६ पाषाणोपरि तस्य भित्तेस्तन्न पतति। किन्तु यः कश्चित् ममैताः कथाः श्रुत्वा न पालयति स सैकते गेहनिर्म्मात्रा
२७ ऽज्ञानिना उपमीयते। यतो जलवृष्टौ सत्याम् आप्लाव आगते पवने वाते च तै र्गृहे समाघाते तत् पतति तत्पतनं महद् भवति।
२८ यीशुनैतेषु वाक्येषु समापितेषु मानवास्तदीयोपदेशम्
२९ आश्चर्य्यं मेनिरे। यस्मात् स उपाध्याया इव तान् नोपदिदेश किन्तु समर्थपुरुषइव समुपदिदेश।

---

## ८ अष्टमोऽध्यायः।

१ कुष्ठिनो निरामयत्वं ५ शतसेनापते र्दासस्य निरामयत्वं १४ पितरस्य श्वश्वा निरामयत्वं १६ बहुनराणां निरामयत्वं १८ ख्रीष्टस्य पश्चाद्गामित्वस्य व्यवस्थापनं २३ झञ्झानिवारणं २८ भूतत्याजनञ्च।

१ यदा स पर्व्वताद् अवारोहत् तदा बहवो मानवास्तत्प-
२ श्चाद् वव्रजुः। एकः कुष्ठवान् आगत्य तं प्रणम्य बभाषे, हे

प्रभो, यदि भवान् संमन्यते, तर्हि मां निरामयं कर्त्तुं शक्नोति। ततो यीशुः करं प्रसार्य्य तस्याङ्गं स्पृशन् व्याजहार, २ सम्मन्येऽहं त्वं निरामयो भव; तेन स तत्क्षणात् कुष्ठेनामोचि। ततो यीशुस्तं जगाद, अवधेहि कथामेतां कश्चिदपि मा ब्रूहि, ४ किन्तु याजकस्य सन्निधिं गत्वा स्वात्मानं दर्शय मनुजेभ्यो निज-निरामयत्वं प्रमाणयितुं मूसानिरूपितं द्रव्यम् उत्सृज च।

तदनन्तरं यीशुना कफर्नाहूम्नामनि नगरे प्रविष्टे कश्चित् ५ शतसेनापतिस्तत्समीपम् आगत्य विनीय बभाषे, हे प्रभो, ६ मदीय एको दासः पक्षाघातव्याधिना भृशं व्यथितः, सतु शयनीय आस्ते। तदानीं यीशुस्तस्मै कथितवान्, अहं गत्वा ७ तं निरामयं करिष्यामि। ततः स शतसेनापतिः प्रत्यवदत्, ८ हे प्रभो, भवान् यत् मम गेहमध्यं याति तद्योग्यभाजनं नाह-मस्मि; वाङ्मात्रम् आदिशतु, तेनैव मम दासो निरामयो भविष्यति। यतो मयि परनिघ्नेऽपि मम निदेशवश्याः कति ९ कति सेनाः सन्ति, तत एकस्मिन् याहीत्युक्ते स याति, तदन्य-स्मिन् एहीत्युक्ते स आयाति, तथा मम निजदासे कर्म्मैतत् कुर्व्वित्युक्ते स तत् करोति। तदानीं यीशुस्तस्यैतत् वचो १० निशम्य विस्मयापन्नोऽभूत्; निजपश्चाद्गामिनो मानवान् अवो-चच्च, युष्मान् तथ्यं वच्मि, इस्रायेलीयलोकानां मध्येऽपि नैतादृशो विश्वासो मया प्राप्तः। अन्यच्चाहं युष्मान् वदामि, ११ बहवः पूर्व्वस्याः पश्चिमायाश्च दिश आगत्य इब्राहीमा इस्हाका याकूवा च साकम् मिलित्वा समुपवेक्ष्यन्ति; किन्तु १२ यत्र स्थाने रोदनदन्तघर्षणे भवतस्तस्मिन् वहिर्भूततमिस्रे राज्यस्य सन्ताना निक्षेप्स्यन्ते। ततः परं यीशुस्तं शतसेनापतिं १३

जगाद, याहि, तव प्रतीत्यनुसारतो मङ्गलं भूयात्; तदा तस्मिन्नेव दण्डे तदीयदासो निरामयो बभूव।

१४ अनन्तरं यीशुः पितरस्य गेहमुपस्थाय ज्वरेण पीडितां १५ शयनीयस्थितां तस्य श्वश्रूं वीक्षाञ्चक्रे। ततस्तेन तस्याः करस्य स्पृष्टत्वात् ज्वरस्तां तत्याज, तदा सा समुत्थाय तान् सिषेवे।

१६ अनन्तरं सन्ध्यायां सत्यां बहुशो भूतग्रस्तमनुजान् तस्य समीपम् आनिन्युः स च वाक्येन भूतान् त्याजयामास, सर्व्व-१७ प्रकारपीडितजनांश्च निरामयान् चकार; तस्मात्,

सर्व्वा दुर्ब्बलतास्माकं तेनैव परिधारिता।
अस्माकं सकलं व्याधिं सएव संगृहीतवान्।

यदेतद्वचनं यिशयियभविष्यद्वादिनोक्तमासीत्, तत्तदा सफल-मभवत्।

१८ अनन्तरं यीशुश्चतुर्दिक्षु जननिवहं विलोक्य तटिन्याः पारं १९ यातुं शिष्यान् आदिदेश। तदानीम् एक उपाध्याय आगत्य कथितवान्, हे गुरो, भवान् यत्र यास्यति तत्राहमपि भवतः २० पश्चाद् यास्यामि। ततो यीशु र्जगाद, क्रोष्टुः स्थातुं स्थानं विद्यते, विहायसो विहङ्गमानां नीडानि च सन्ति; किन्तु २१ मनुष्यपुत्त्रस्य शिरः स्थापयितुं स्थानं न विद्यते। अनन्तरम् अपर एकः शिष्यस्तं बभाषे, हे प्रभो, प्रथमतो मम पितरं २२ श्मशाने निधातुं गमनार्थं माम् अनुमन्यस्व। ततो यीशुरु-क्तवान् मृता मृतान् श्मशाने निदधतु, त्वं मम पश्चाद् आगच्छ।

२३ अनन्तरं तस्मिन् नावमारूढे तस्य शिष्यास्तत्पश्चात् २४ जग्मुः। पश्चात् सागरस्य मध्यं तेषु गतेषु तादृशः प्रबलो झञ्भ्शानिल उदतिष्ठत्, येन महातरङ्ग उत्थाय तरणिं छादि-

तवान्, किन्तु स निद्रित आसीत्। तदा शिष्या आगत्य २५ तस्य निद्राभङ्गं कृत्वा कथयामासुः, हे प्रभो, वयं म्रियामहे, भवान् अस्माकं प्राणान् रक्षतु। तदा स तान् उक्तवान्, हे २६ अल्पविश्वासिनो यूयं कुतो विभीथ? ततः स उत्थाय वातं सागरञ्च तर्जयामास, ततो निर्व्वातमभवत्। अपरं मनुजा २७ विस्मयं विलोक्य कथयामासुः, अहो वातसरित्पती अस्य किमा-ज्ञाग्राहिणौ? कीदृशोऽयं मानवः।

अनन्तरं स पारं गत्वा गिदेरीयदेशम् उपस्थितवान्; २८ तदा द्वौ भूतग्रस्तमनुजौ श्मशानस्थानाद् वहि र्भूत्वा तं साक्षात् कृतवन्तौ, तावेतादृशौ प्रचण्डावास्तां यत् तेन स्थानेन कोपि यातुं नाशक्नोत्। तावुच्चैः कथयामासतुः, हे ईश्वरस्य २९ सूनो यीशो, त्वया साकम् आवयोः कः सम्बन्धः? निरूपि-तकालात् प्रागेव किमावाभ्यां यातनां दातुम् अत्रागतोसि? तदानीं ताभ्यां किञ्चिद् दूरे वराहाणाम् एको महाव्रजो ३० ऽचरत्। ततो भूतौ तौ तस्यान्तिके विनीय कथयामासतुः, ३१ यद्यावां त्याजयसि, तर्हि वराहाणां मध्येव्रजम् आवां प्रेरय। तदा यीशुरवदत् यातं, अनन्तरं तौ यदा मनुजौ विहाय ३२ वराहान् आश्रितवन्तौ, तदा ते सर्व्वे वराहा उच्चस्थानात् महाजवेन धावन्तः सागरीयतोये मज्जन्तो मम्रुः। ततो ३३ वराहरक्षकाः पलायमाना मध्येनगरं तौ भूतग्रस्तौ प्रति यद्यद् अघटत, ताः सर्व्ववार्त्ता अवदन्। ततो नागरिकाः ३४ सर्व्वे मनुजा यीशुं साक्षात् कर्त्तुं वहिरायाताः तञ्च विलोक्य प्रार्थयाञ्चक्रिरे भवान् अस्माकं सीमातो यातु।

## ९ नवमोऽध्यायः।

१ पक्षाघातिनः स्वास्थ्यं पापमर्षणं ९ मथ्याह्वानं १० तस्य गेहे भोजनं १४ उपवासा-करणार्थकथनं १८ प्रदररोगिण्याः स्वास्थ्यकथनं २३ अधिपते र्मृतकन्यायै जीवनदानं २७ द्वाभ्यामन्धाभ्यां नेत्रदानं ३२ भूतग्रस्तमूकस्य स्वास्थ्यकथनं ३५ दरिद्रान् प्रति ख्रीष्टस्य दयनञ्च।

१ अनन्तरं यीशु र्नौकामारुह्य पुनः पारमागत्य निजग्रा-
२ मम् आययौ। ततः कतिपया जना एकं पक्षाघातिनं खट्टोपरि शाययित्वा तत्समीपम् आनयन्; ततो यीशुस्तेषां प्रतीतिं विज्ञाय तं पक्षाघातिनं जगाद, हे पुत्र, सुस्थिरो भव,
३ तव कलुषस्य मर्षणं जातम्। तां कथां निशम्य कियन्त उपा-
४ ध्याया मनःसु चिन्तितवन्त एष मनुज ईश्वरं निन्दति। ततः स तेषाम् एतादृशीं चिन्तां विज्ञाय कथितवान्, यूयं मनःसु
५ कुत एतादृशीं कुचिन्तां कुरुथ? तव पापमर्षणं जातं, यद्वा त्वमुत्थाय गच्छ, द्वयोरनयो र्वाक्ययोः किं वाक्यं वक्तुं सुगमं?
६ किन्तु मेदिन्यां कलुषं क्षमितुं मनुजसुतस्य सामर्थ्यमस्तीति यूयं यथा जानीथ, तदर्थं स तं पक्षाघातिनं गदितवान्,
७ उत्तिष्ठ, निजशयनीयं आदाय गेहं गच्छ। ततः स तत्क्ष-
८ णाद् उत्थाय निजगेहं प्रस्थितवान्। मानवा इत्थं विलोक्य विस्मयं मेनिरे, ईश्वरेण मानवाय सामर्थ्यम् ईदृशं दत्तं इति कारणात् तं धन्यं बभाषिरे च।

९ अनन्तरं यीशुस्तत्स्थानाद् गच्छन् गच्छन् करसंग्रहस्थाने समुपविष्टं मथिनामानम् एकं मनुजं विलोक्य तं बभाषे, मम पश्चाद् आगच्छ, ततः स उत्थाय तस्य पश्चाद् वव्राज।

१० ततः परं यीशौ गृहे भोक्तुम् उपविष्टे बहवः करसंग्राहिणः कलुषिणश्च मानवा आगत्य तेन साकं तस्य शिष्यैश्च

साकम् उपविविशुः। फिरूशिनस्तद् दृष्ट्वा तस्य शिष्यान् ११ बभाषिरे, युष्माकं गुरुः किं निमित्तं करसंग्राहिभिः कलुषि-भिश्च साकं भुंक्ते? यीशुस्तत् श्रुत्वा तान् प्रत्यवदत्, निरा- १२ मयलोकानां चिकित्सकेन प्रयोजनं नास्ति, किन्तु सामय-लोकानां प्रयोजनमास्ते। अतो यूयं यात्वा वचनस्यास्यार्थं १३ शिक्षध्वम्,

दयायां मे यथा प्रीति र्न तथा यज्ञकर्म्मणि।

यतोऽहं धार्म्मिकान् आह्वातुं नागतोऽस्मि किन्तु मनः परिवर्त्त-यितुं पापिन आह्वातुम् आगतोऽस्मि।

अनन्तरं योहनः शिष्यास्तस्य समीपम् आगत्य कथया- १४ मासुः, फिरूशिनो वयञ्च पुनः पुनरुपवसामः, किन्तु तव शिष्या नोपवसन्ति, कुतः? तदा यीशुस्तान् अवोचत् यावत् १५ सखीनां सङ्गे कन्याया वरस्तिष्ठति, तावत् किं ते विलापं कर्त्तुं शक्नुवन्ति? किन्तु यदा तेषां सङ्गाद् वरं नयन्ति, तादृशः समय आगमिष्यति, तदा ते उपवत्स्यन्ति। पुरातनवसने १६ कोपि नवीनवस्त्रं न योजयति, यस्मात् तेन योजितेन पुरा-तनवसनं छिनत्ति तच्छिद्रञ्च बहुकुत्सितं दृश्यते। अन्यञ्च १७ पुरातनकुत्वां कोपि नवानगोस्तनीरसं न निदधाति, यस्मात् तथा कृते कुतू र्विदीर्य्यते तेन गोस्तनीरसः पतति कुतूश्च नश्यति; तस्मात् नवीनायां कुत्वां नवीनो गोस्तनीरसः स्थाप्यते, तेन द्वयोरवनं भवति।

अपरं तेनैतत्कथाकथनकाले एकोऽधिपतिस्तं प्रणम्य १८ बभाषे, मम दुहिता प्रायेणैतावत्काले मृता, तस्माद् भवाना-गत्य तस्या गात्रे हस्तमर्पयतु, तेन सा जीविष्यति। तदानीं १९

२० यीशुः शिष्यैः साकम् उत्थाय तस्य पश्चाद् वव्राज । इत्यन-
न्तरे द्वादशवत्सरान् यावत् प्रदरामयेन शीर्णैका नारी तस्य
२१ पश्चाद् आगत्य तस्य वसनस्य ग्रन्थिं पस्पर्श; यस्मात् मया
केवलं तस्य वसनं स्पृष्ट्वा स्वास्थ्यं प्राप्स्यते, सा नारीति मनसि
२२ निश्चितवती । ततो यीशुर्वदनं परावर्त्त्य तां जगाद, हे कन्ये,
त्वं सुस्थिरा भव, तव विश्वासस्त्वां स्वस्थामकार्षीत् । एतद्वाक्ये
गदितएव सा योषित् स्वस्थाभूत् ।

२३ 　अपरं यीशुस्तस्याध्यक्षस्य गेहं गत्वा वादकप्रभृतीन् बहून्
२४ लोकान् शब्दायमानान् विलोक्य तान् अवदत्, पन्थानं त्यज,
कन्येयं नाम्रियत निद्रितास्ते; कथामेतां श्रुत्वा ते तमुपजहसुः ।
२५ किन्तु सर्व्वेषु बहिष्कृतेषु सोऽभ्यन्तरं गत्वा कन्यायाः करं धृतवान्,
२६ तेन सोदतिष्ठत्; ततस्तत्कर्म्मणो यशः कृत्स्नं तं देशं व्याप्नवत् ।
२७ 　ततः परं यीशुस्तस्मात् स्थानाद् यात्रां चकार; तदा हे
दायूदः सन्तान, अस्मान् दयस्व, इति वदन्तौ द्वौ जनावन्धौ
२८ प्रोच्चैराह्वयन्तौ तत्पश्चाद् वव्रजतुः । ततो यीशौ गेहमध्यं
प्रविष्टे तावपि तस्य समीपम् उपस्थितवन्तौ, तदानीं स तौ पृष्ट-
वान् कर्म्मैतत् कर्त्तुं मम सामर्थ्यम् आस्ते, युवां किमिति प्रतीथः?
२९ तदा तौ प्रत्यूचतुः, सत्यं प्रभो । तदानीं स तयो र्लोचनानि
स्पृशन् बभाषे, युवयोः प्रतीत्यनुसाराद् युवयो र्मङ्गलं भूयात् ।
३० तेन तत्क्षणात् तयो र्नेत्राणि प्रसन्नान्यभवन्, पश्चाद् यीशुस्तौ
दृढमाज्ञाप्य जगाद, अवधत्तम् एतां कथां कोपि मनुजो न
३१ जानीयात् । किन्तु तौ प्रस्थाय तस्मिन् कृत्स्ने देशे तस्य कीर्त्तिं
प्रकाशयामासतुः ।

३२ 　अपरं तौ बहिर्यात एतस्मिन्नन्तरे मनुजा एकं भूतग्रस्त-

मूकं तस्य समीपम् आनीतवन्तः। तेन भूते त्याजिते स मूकः ३३ कथां कथयितुं प्रारभत, तेन जना विस्मयं विज्ञाय कथयामासुः, इस्रायेलो वंशे कदापि नेदृगदृश्यत; किन्तु फिरू- ३४ शिनः कथयाञ्चक्रुः भूताधिपतिना स भूतान् त्याजयति।

ततः परं यीशुस्तेषां भजनभवन उपदिशन् राज्यस्य ३५ सुसंवादं प्रचारयन् प्रचारयन् लोकानां यस्य य आमयो या च पीडासीत्, तान् शमयन् शमयंश्च सर्व्वाणि नगराणि ग्रामांश्च बभ्राम। अन्यच्च मनुजान् व्याकुलान् अरक्षक- ३६ मेषानिव च त्यक्तान् निरीक्ष्य तेषु कारुणिकः सन् शिष्यान् अवदत्, शस्यानि प्रचुराणि सन्ति, किन्तु छेत्तारः स्तोकाः। ३७ क्षेत्रं प्रत्यपरान् छेदकान् प्रहेतुं शस्यस्वामिनं प्रार्थयध्वम्। ३८

---

## १० दशमाऽध्यायः।

१ द्वादशशिष्याणां प्रेषणं १६ तेषां दुःखज्ञापनं २४ खीष्टोपदेशफलं ४० शिष्यान् प्रत्युपकारफलञ्च।

अनन्तरं यीशु र्द्वादशशिष्यान् आहूयामेध्यभूतान् त्याज- १ यितुं सर्व्वप्रकाररोगान् पीडाश्च शमयितुं तेभ्यः सामर्थ्यमदात्। तेषां द्वादशप्रेष्याणां नामान्येतानि। प्रथमं शिमोन् यं २ पितरं वदन्ति, ततः परं तस्य सहज आन्द्रियः, सिवदियस्य पुत्त्रो याकूब् तस्य सहजो योहन्; फिलिप् बर्थलमय् थोमाः करसं- ३ ग्राही मथिः, आल्फेयपुत्त्रो याकूब्, लिब्बेयो यं थद्देयं वदन्ति, किनानीयः शिमोन्, य ईष्करियोतीययिहूदाः खीष्टं परकरे- ४ ऽर्पयत्। एतान् द्वादशशिष्यान् यीशुः प्रेषयन् इत्याज्ञापयत्, ५ यूयम् अन्यदेशीयानां पदवीं शोमिरोणीयानां किमपि नगरञ्च न प्रविश्येस्रायेल्गोत्रस्य हारिता ये ये मेषास्तेषामेव ६

७ समीपं यात। गत्वा गत्वा स्वर्गस्य राजत्वं सविधमभवत्,
८ एतां कथां प्रचारयत। आमयग्रस्तान् स्वस्थान् कुरुत,
कुष्ठिनः परिष्कुरुत, मृतलोकान् जीवयत, भूतान् त्याज-
यत, विना मूल्यं यूयम् अलभध्वं, विनैव मूल्यं विश्राण-
९ यत। किन्तु स्वेषां कटिबन्धेषु स्वर्णरूप्यताम्राणां किमपि न
१० गृह्णीत। अन्यच्च यात्रायै चेलसम्पुटं वा द्वितीयवसनं वा
पादुके वा यष्टिः, एतान् मा गृह्णीत, यतः कार्य्यकृत् भर्त्तुं
११ योग्यो भवति। अपरं यूयं यत् पुरं यञ्च ग्रामं प्रविशथ, तत्र
यो जनो योग्यपात्रं तमवगत्य यानकालं यावत् तत्र तिष्ठत।
१२ यदा यूयं तद्गेहं प्रविशथ, तदा तमाशिषं वदत। यदि स
१३ योग्यपात्रं भवति, तर्हि तत्कल्याणं तस्मै भविष्यति, नोचेत्
१४ साशीर्युष्मभ्यमेव भविष्यति। किन्तु ये जना युष्माकमातिथ्यं न
विदधति युष्माकं कथाञ्च न शृण्वन्ति तेषां गेहात् पुराद्वा
१५ प्रस्थानकाले स्वपद धूलीः पातयत। युष्मानहं तथ्यं वच्मि,
विचारदिने तत्पुरस्य दशातः सिदोमअमोरापुरयोर्दशा सह्य-
तरा भविष्यति।

१६ पश्यत, वृकयूथमध्ये यथाविस्तथा युष्मान् प्रहिणोमि, तस्माद्
१७ यूयम् अहिरिव सतर्काः कपोताइवाहिंसका भवत। नृभ्यः
सावधाना भवत; यतस्तै र्यूयं राजसंसदि समर्पिष्यध्वे, तेषां
१८ भजनगेहे प्रहारिष्यध्वे। यूयं मन्नामहेतोः शास्तृणां राज्ञाञ्च
१९ समक्षं तानन्यदेशिनश्चाधि साक्षित्वार्थमानेष्यध्वे। किन्त्वित्थं
समर्पिता यूयं कथं किमुत्तरं वक्ष्यथ तत्र मा चिन्तयत, यत-
स्तदा युष्माभि र्यद् वक्तव्यं तत् तद्दण्डे युष्मन्मनःसु समुपस्था-
२० स्यति। यस्मात् तदा यो वक्ष्यति स न यूयं किन्तु युष्माकम-

न्तरस्थः पित्रात्मा । सहजः सहजं तातः सुतञ्च मृतौ समर्प- २१
यिष्यति, अपत्यानि स्वस्वपित्रो र्विपक्षीभूय तौ घातयिष्यन्ति ।
मन्नामहेतोः सर्व्वे जना युष्मान् ऋतीयिष्यन्ते, किन्तु यः शेषं २२
यावद् धैर्य्यं धृत्वा स्थास्यति, स त्रायिष्यते । तै र्यदा यूयमेक- २३
पुरे ताडिष्यध्वे, तदा यूयमन्यपुरं पलायध्वं, युष्मानहं तथ्यं
वच्मि, यावन्मनुजसुतो नैति तावद् इस्रायेल्देशीयसर्व्व-
नगरभ्रमणं समापयितुं न शक्ष्यथ । गुरोः शिष्यो न महान्, २४
प्रभोर्दासो न महान् । यदि शिष्यो निजगुरो र्दासश्च स्वप्रभोः २५
समानो भवति तर्हि तद् यथेष्टं । चेत्तैर्गृहपतिर्भूतराज २६
उच्यते, तर्हि परिवाराः किं तथा न वक्ष्यन्ते? किन्तु तेभ्यो
यूयं मा बिभीत, यतो यन्न प्रकाशिष्यते, तादृक् छादितं
किमपि नास्ति, यच्च न व्यञ्चिष्यते, तादृग् गुप्तं किमपि नास्ति ।
यदहं युष्मान् तमसि वच्मि तद् युष्माभिर्दीप्तौ कथ्यतां; २७
कर्णाभ्यां यत् श्रूयते, तद् गेहोपरि प्रचार्य्यतां । ये कायं हन्तुं २८
शक्नुवन्ति नात्मानं, तेभ्यो मा भैष्ट; यः कायात्मानौ निरये
नाशयितुं शक्नोति, ततो बिभीत । द्वौ चटकौ किमेकताम्र- २९
मुद्रया न विक्रीयेते? तथापि युष्मत्तातानुमतिं विना तेषामे-
कोपि भुवि न पतति । युष्मच्छिरसां सर्व्वकचा गणिताः सन्ति । ३०
अतो मा बिभीत, यूयं बहुचटकेभ्यो बहुमूल्याः । यो मनुज- ३१
साक्षान्मामङ्गीकुरुते, तमहं स्वर्गस्थतातसाक्षादङ्गीकरिष्ये । यो ३२
मनुजसाक्षान्मां नाङ्गीकुरुते तमहं स्वर्गस्थतातसाक्षान्नाङ्गीकरिष्ये ।

पृथिव्यामहं शान्तिं दातुमागतइति मानुभवत, शान्तिं दातुं ३४
न किन्त्वसिं । पितृमातृश्वश्रूभिः सार्कं सुतसुताबधू र्विरोध- ३५
यितुञ्चागतोस्मि । ततः स्वस्वपरिवारएव नृशत्रु र्भविता । यः ३६

३७ पितरि मातरि वा मत्तोऽधिकं प्रीयते, स न मदर्हः; यश्च
३८ सुते सुतायां वा मत्तोऽधिकं प्रीयते, सोऽपि न मदर्हः। यः
३९ स्वक्रुशं गृह्लन् मत्पश्चान्नैति, सोऽपि न मदर्हः। यः स्वप्राणान-
वति, स तान् हारयिष्यते, यस्तु मत्कृते स्वप्राणान् हारयति,
स तानवति।

४० यो युष्माकमातिथ्यं विदधाति, स ममातिथ्यं विदधाति,
यश्च ममातिथ्यं विदधाति, स मत्प्रेरकस्यातिथ्यं विदधाति।
४१ यो भविष्यद्वादीति ज्ञात्वा तस्यातिथ्यं विधत्ते, स भविष्यद्वा-
दिनः फलं लप्स्यते, यश्च धार्म्मिक इति विदित्वा तस्यातिथ्यं
४२ विधत्ते, स धार्म्मिकमानवस्य फलं प्राप्स्यति। यश्च कश्चित्
एतेषां क्षुद्रनराणाम् यं कञ्चनैकं शिष्य इति विदित्वा कंसैकं
शीतलसलिलं तस्मै दत्ते, युष्मानहं तथ्यं वदामि, स केनापि
प्रकारेण फलेन न वञ्चिष्यते।

---

## ११ एकादशोऽध्यायः।

१ सुसंवादं प्रचारयितुं ख्रीष्टस्य यात्रा २ ख्रीष्टं प्रति योहनः शिष्यप्रेरणं ७ योहनं प्रति ख्रीष्टस्य साक्षित्वं १६ योहनख्रीष्टावधि जनानां वितर्कः २० कोराසीनादि-पुराणि प्रति ख्रीष्टस्य विलपनं २५ तातपरमेश्वरं प्रति ख्रीष्टस्य धन्यवदनं २८ भाराक्रान्तजनाह्वानञ्च।

१ इत्थं यीशुः स्वद्वादशशिष्याणामाज्ञापनं समाप्य पुरे पुर
उपदेष्टुं सुसंवादं प्रचारयितुं तत्स्थानात् प्रतस्थे।

२ अनन्तरं योहन् कारायां तिष्ठन् ख्रीष्टस्य कर्म्मणां वार्त्तां
३ प्राप्य यस्यागमनवार्त्तासीत् स एव किं त्वं? वा वयमन्यम् अपे-
४ क्षिष्यामहे? एतत् प्रष्टुं निजौ द्वौ शिष्यौ प्राहिणोत्। यीशुः
प्रत्यवोचत्, अन्धा नेत्राणि लभन्ते, खञ्जा गच्छन्ति, कुष्ठिनः

खस्था भवन्ति, वधिराः शृण्वन्ति, मृता जीवन्त उत्तिष्ठन्ति, दरिद्राणां समीपे सुसंवादः प्रचार्य्यत, एतानि यद्यद् युवां ५ शृणुथः पश्यथश्च गत्वा तद्वार्त्तां योहनं गदतं। यस्याहं न विघ्नी- ६ भवामि, सएव धन्यः।

अनन्तरं तयोः प्रस्थितयो यीशु र्योहनम् उद्दिश्य जनान् ७ जगाद, यूयं किं द्रष्टुं वहिर्मध्येप्रान्तरम् अगच्छत? किं वातेन कम्पितं नलं? वा किं वीक्षितुं वहिर्गतवन्तः? किं परिहित- ८ सूक्ष्मवसनं मनुजमेकं? पश्यत, ये सूक्ष्मवसनानि परिदधति, ते राजधान्यां तिष्ठन्ति। तर्हि यूयं किं द्रष्टुं वहिरगमत, ९ किमेकं भविष्यद्वादिनं? तदेव सत्यं। युष्मानहं वदामि, स भविष्यद्वादिनोपि महान्; यतः, १०

पश्य स्वकीयदूतोयं त्वदग्रे प्रेष्यते मया।
स गत्वा तव पन्थानं सम्यक् परिष्करिष्यति॥

एतद्वचनं यमधि लिखितमास्ते सोऽयं योहन्। अपरं युष्मा- ११ नहं तथ्यं ब्रवीमि, मज्जयितृ र्योहनः श्रेष्ठः कोपि नारीतो नाजायत; तथापि स्वर्गराज्यमध्ये सर्व्वेभ्यो यः क्षुद्रः स योहनः श्रेष्ठः। अपरञ्च आ योहनोऽद्य यावत् स्वर्गराज्यं बलादाक्रान्तं १२ भवति आक्रमिनश्च जना बलेन तदधिकुर्व्वन्ति। यतो योहनं १३ यावत् सर्व्वभविष्यद्वादिभि र्व्यवस्थया च उपदेशः प्राकाश्यत। यदि यूयमिदं वाक्यं ग्रहीतुं शक्नुथ, तर्हि श्रेयः, यस्यागम- १४ नस्य वचनमास्ते सोऽयम् एलियः। यस्य श्रोतुं कर्णौ स्तः स १५ शृणोतु।

एते विद्यमानजनाः कै र्मयोपमीयन्ते? ये बालका हट्ट उप- १६ विश्य स्वं स्वं बन्धुमाहूय वदन्ति, वयं युष्माकं समीपे वंशीर- १७

वादयाम, किन्तु यूयं नानृत्यत; युष्माकं समीपे च वयमरोदिम, किन्तु यूयं न व्यलपत, तादृशै र्बालकैस्त उपमायिष्यन्ते।
१८ यतो योहन् आगत्य न भुक्तवान् न पीतवांश्च, तेन लोका
१९ वदन्ति, स भूतग्रस्त इति। मनुजसुत आगत्य भुक्तवान् पीतवांश्च, तेन लोका वदन्ति, पश्यत एष भोक्ता मद्यपाता चण्डालपापिनां बन्धश्च, किन्तु ज्ञानिनो ज्ञानव्यवहारं निर्दोषं जानन्ति।

२० स यत्र यत्र पुरे बह्वाश्चर्य्यं कर्म्म कृतवान्, तन्निवासिनां मनःपरावृत्त्यभावात् तानि नगराणि प्रति हन्तेत्युक्ता कथि-
२१ तवान्, हा कोरासीन्, हा बैत्सैदे, युष्मन्मध्ये यद्यदाश्चर्य्यं कर्म्म कृतं यदि तत् सोरसीदोन्नगर अकारिष्यत, तर्हि पूर्व्वमेव तन्निवासिनः शाणवसने भस्मनि चोपविशन्तो मनांसि परावः
२२ र्त्तिष्यन्त। तस्मादहं युष्मान् वदामि, विचारदिने युष्माकं
२३ दशातः सोरसीदोनो र्दशा सह्यतरा भविष्यति। अपरञ्च बत कफर्नाहूम्, त्वं स्वर्गं यावदुन्नतोसि, किन्तु नरके निक्षेप्स्यसे, यस्मात् त्वयि यान्याश्चर्य्याणि कर्म्माण्यकारिषत, यदि तानि सिदोम्नगर अकारिष्यन्त, तर्हि तदद्य यावदस्थास्यत्।
२४ किन्त्वहं युष्मान् वदामि, विचारदिने तव दण्डतः सिदोमो दण्डो सह्यतरो भविष्यति।

२५ एतस्मिन्नेव समये यीशुः पुनरुवाच, हे स्वर्गपृथिव्योरेकाधिपते पितस्त्वं ज्ञानवतो विदुषश्च लोकान् प्रत्येतानि न प्रकाश्य बालकान् प्रति प्रकाशितवान्, इति हेतोस्त्वां धन्यं वदामि।
२६ हे पितः, इत्थं भवेत् यत इदं त्वद्दृष्टावुत्तमं। पित्रा मयि
२७ सर्व्वाणि समर्पितानि, पितरं विना कोपि पु ं न जानाति,

यान् प्रति पुत्रेण पिता प्रकाश्यते तान् विना पुत्राद् अन्यः कोपि पितरं न जानाति।

हे परिश्रान्ता भाराक्रान्ताश्च लोका यूयं मत्सन्निधिम् २८ आगच्छत, अहं युष्मान् विश्रमयिष्यामि। अहं क्षमणशीलो नम्र- २९ मनाश्च, तस्मात् मम युगं स्वेषामुपरि धारयत मत्तः शिक्षध्वञ्च, तेन यूयं स्वे स्वे मनसि विश्रामं लप्स्यध्वे। यतो मम युगम् ३० अनायासं मम भारश्च लघुः।

---

## १२ द्वादशोऽध्यायः।

१ विश्रामवारमधि ख्रीष्टोपदेशः ९ शुष्ककरस्य स्वास्थ्यं १४ ख्रीष्टं प्रति फिरूशिनां कुमन्त्रणा तमधि भविष्यद्वाक्यसिद्धिः २२ भूतग्रस्तान्धमूकानां स्वास्थ्यं ३१ कथाकथोपदेशः ३८ यूनसो दक्षिणदेशीयराज्ञ्याश्च वाक्येन चिह्नं चेष्टमानान् प्रति भर्त्सनं ४३ अपवित्रभूतग्रस्तानां विवरणं ४६ मातृसहजानध्युपदेशनञ्च।

अनन्तरं यीशु र्विश्रामवारे शस्यमध्येन गच्छति, तदा १ तच्छिष्या बुभुक्षिताः सन्तः शस्यमञ्जरीश्छित्त्वा छित्त्वा खादितुमारभन्त। तद् विलोक्य फिरूशिनो यीशुं जगदुः, पश्य २ विश्रामवारे यत् कर्माकर्त्तव्यं तदेव तव शिष्याः कुर्व्वन्ति। स ३ तान् प्रत्यवदत्, दायूद् तत्सङ्गिनश्च बुभुक्षिताः सन्तो यत् कर्माकुर्व्वन् तत् किं युष्माभि र्नापाठि? ये दर्शनीयाः पूपाः ४ याजकान् विना तस्य तत्सङ्गिमनुजानाञ्चाभोजनीयास्त ईश्वरावासं प्रविष्टेन तेन भुक्ताः। अन्यच्च विश्रामवारे मध्येमन्दिरं ५ विश्रामवारीयं नियमं लङ्घन्तोपि याजका निर्दोषा भवन्ति, शास्त्रमध्ये किमिदमपि युष्माभि र्न पठितं? युष्मानहं वदामि, ६ अत्र स्थाने मन्दिरादपि गरीयान् एक आस्ते। किन्तु ७

दयायां मे यथा प्रीति र्न तथा यज्ञकर्म्मणि।

एतद्वचनस्यार्थं यदि यूयम् अज्ञासिष्ट तर्हि निर्दोषान् दोषिणो
८ नाकार्ष्ट। अन्यच्च मनुजसुतो विश्रामवारस्यापि पतिरास्ते।
९ अनन्तरं स तत्स्थानात् प्रस्थाय तेषां भजनभवनं प्रविष्टवान्,
१० तदानीम् एकः शुष्ककरामयवान् उपस्थितवान्। ततो यीशुम्
अपवदितुं मानुषाः पप्रच्छुः, विश्रामवारे निरामयत्वं करणीयं
११ न वा? तेन स प्रत्युवाच, विश्रामवारे यदि कस्यचिद् अवि र्गर्त्ते
पतति, तर्हि यस्तं धृत्वा न तोलयति, एतादृशो मनुजो युष्माकं
१२ मध्ये क आस्ते? अवे र्मानवः किं नहि श्रेयान्? अतो विश्राम-
१३ वारे हितकर्म्म कर्त्तव्यं। अनन्तरं स तं मानवं गदितवान्,
करं प्रसारय; तेन करे प्रसारिते सोन्यकरवत् स्वस्थोऽभवत्।
१४ तदा फिरूशिनो वहिर्भूय कथं तं हनिष्याम इति कुमन्त्रणां
१५ तत्प्रातिकूल्येन चक्रुः। ततो यीशुस्तद् विदित्वा स्थानान्तरं
गतवान्; अन्येषु बहुनरेषु तत्पश्चाद् गतेषु तान् स निराम-
१६ यान् कृत्वा इत्याज्ञापयत्, यूयं मां न परिचाययत। तस्मात्

१७ मम प्रियो मनोनीतो मनसस्तुष्टिकारकः।
मदीयः सेवको यस्तु विद्यते तं समीक्षतां।
तस्योपरि स्वकीयात्मा मया संस्थापयिष्यते।
१८ तेनान्यदेशजातेषु व्यवस्था संप्रकाश्यते।
केनापि न विरोधं स विवादञ्च करिष्यति।
न च राजपथे तेन वचनं श्रावयिष्यते।
१९ व्यवस्था चलिता यावत् नहि तेन करिष्यते।
तावत् नलो विदीर्णोऽपि भंक्ष्यते नहि तेन च।
तथा सधूमवर्त्तिञ्च न स निर्व्वापयिष्यते।
२० प्रत्याशाञ्च करिष्यन्ति तन्नाम्नि भिन्नदेशजाः।

यान्येतानि वचनानि यिशयियभविष्यद्वादिना प्रोक्तान्यासन्, २१ तानि सफलान्यभवन्।

अनन्तरं लोकै स्तत्समीपम् आनीतो भूतग्रस्तान्धमूकैकमनु- २२ जस्तेन स्वस्थीकृतः, ततः सोऽन्धो मूको द्रष्टुं वक्तुञ्चारब्धवान्। अनेन सर्व्वे विस्मिताः कथयाञ्चक्रुः, एषः किं दायूदः सन्तानो २३ नहि? किन्तु फिरूशिनस्तत् श्रुत्वा गदितवन्तः, बाल्सिबूब्नाम्नो २४ भूतराजस्य साहाय्यं विना नायं भूतान् त्याजयति। तदानीं २५ यीशुस्तेषाम् इति मानसं विज्ञाय तान् अवदत् किञ्चन राज्यं यदि स्वविपक्षाद् भिद्यते, तर्हि तद् उच्छिद्यते; यच्च किञ्चन नगरं वा गृहं स्वविपक्षाद् विभिद्यते, तत् स्थातुं न शक्नोति। तद्वत् शयतानो यदि शयतानं बहिः कृत्वा स्वविपक्षात् पृथक् २६ पृथक् भवति, तर्हि तस्य राज्यं केन प्रकारेण स्थास्यति? अहञ्च २७ यदि बाल्सिबूबा भूतान् त्याजयामि, तर्हि युष्माकं सन्तानाः केन भूतान् त्याजयन्ति? तस्माद् युष्माकम् एतद्विचारयितारस्त एव भविष्यन्ति। किन्त्वहं यदीश्वरात्मना भूतान् त्याजयामि, २८ तर्हीश्वरस्य राज्यं युष्माकं सन्निधिमागतवत्। अन्यच्च कोपि २९ बलवन्तं जनं प्रथमतो न बद्धा केन प्रकारेण तस्य गृहं प्रविश्य तद्द्रव्यादि लोठयितुं शक्नोति? किन्तु तत् कृत्वा तदीय- गृहस्य द्रव्यादि लोठयितुं शक्नोति। यः कश्चित् मम स्वप- ३० क्षीयो नहि स विपक्षीय आस्ते, यश्च मया सार्कं न संगृह्लाति, स विकिरति।

अतएव युष्मानहं वदामि, मनुजानां सर्व्वप्रकारपापानां ३१ निन्दायाश्च मर्षणं भवितुं शक्नोति, किन्तु पवित्रस्यात्मनो विरु- द्धनिन्दाया मर्षणं भवितुं न शक्नोति। यो मनुजसुतस्य विरुद्धां ३२

कथां कथयति, तस्यापराधस्य क्षमा भवितुं शक्नोति, किन्तु यः कश्चित् पवित्रस्यात्मनो विरुद्धां कथां कथयति नेहलोके न प्रेत्य
३३ तस्यापराधस्य क्षमा भवितुं शक्नोति। पादपं यदि भद्रं वदथ, तर्हि तस्य फलमपि साधु वक्तव्यं, यदि च पादपं असाधुं वदथ, तर्हि तस्य फलमप्यसाधु वक्तव्यं; यतः स्वीयस्वीयफलेन पादपः
३४ परिचीयते। रे भुजगवंशा यूयमसाधवः सन्तः कथं साधु वाक्यं वक्तुं शक्ष्यथ? यस्माद् अन्तःकरणस्य पूर्णभावानुसाराद् वद-
३५ नाद् वचो निर्गच्छति। तेन साधुर्मानवोऽन्तःकरणरूपात् साधुभाण्डागारात् साधु द्रव्यं निर्गमयति, असाधुर्मानुषस्त्वसाधु-
३६ भाण्डागाराद् असाधुवस्तूनि निर्गमयति। किन्त्वहं युष्मान् वदामि, मनुजा यावन्त्यालस्यवचांसि वदन्ति, विचारदिने
३७ तदुत्तरमवश्यं दातव्यं, यतस्त्वं स्वीयवचोभि र्निरपराधः स्वीयवचोभिश्च सापराधो गणिष्यसे।

३८　तदानीं कतिपया उपाध्यायाः फिरूशिनश्च जगदुः, हे गुरो
३९ वयं भवत्तः किञ्चन लक्ष्म दिदृक्षामः। तदा स प्रत्युक्तवान्, दुष्टो व्यभिचारी च वंशो लक्ष्म मृगयते, किन्तु भविष्यद्वादिनो यूनसो लक्ष्म विहायान्यत् किमपि लक्ष्म ते न प्रदर्शयिष्यन्ते।
४० यतो यूनस् यथा अहोरात्रं वृहन्मीनस्य कुक्षावासीत्, तथा
४१ मनुजपुत्रोपि अहोरात्रं मेदिन्या मध्ये स्थास्यति। अपरं नीनिवीया मानवा विचारदिन एतद्वंशीयानां प्रतिकूलम् उत्थाय तान् दोषिणः करिष्यन्ति; यस्मात्ते यूनस उपदेशात् मनांसि परावर्त्तयाञ्चक्रिरे, किन्त्वत्र यूनसोपि गुरुतर एक
४२ आस्ते। पुनश्च दक्षिणदेशीया राज्ञी विचारदिन एतद्वंशीयानां प्रतिकूलमुत्थाय तान् दोषिणः करिष्यति; यतः सा

राज्ञी सुलेमनो विद्यायाः कथां श्रोतुं मेदिन्याः सीम्न आगच्छत्, किन्तु सुलेमनोपि गुरुतर एको जनोऽत्र आस्ते।

अपरं मनुजाद् वहिर्गतो ऽपवित्रभूतः शुष्कस्थानेन गत्वा ४३ विश्रामं गवेषयति, किन्तु तदलभमानः स वक्ति, यस्मात् निकेतनाद् आगमं, तदेव वेश्म परावृत्य यामि। पश्चात् स तत् ४४ स्थानम् उपस्थाय तत् शून्यं मार्ज्जितं शोभितञ्च विलोक्य व्रजन् स्वतोपि दुष्टतरान् अन्यसप्तभूतान् सङ्गिनः करोति। ततस्ते तत् स्थानं प्रविश्य निवसन्ति, तेन तस्य मनुजस्य शेष- ४५ दशा पूर्व्वदशातोतीवाशुभा भवति, एतेषां दुष्टवंश्यानामपि तथैव घटिष्यते।

मानवेभ्य एतासां कथानां कथनकाले तस्य माता सहजाश्च ४६ तेन साकं काञ्चित् कथां कथयितुं वाञ्छन्तो वहिरेव स्थितवन्तः। ततः कश्चित् तस्मै कथितवान्, पश्य तव जननी सहजाश्च ४७ त्वया साकं काञ्चन कथां कथयितुं कामयमाना वहिस्तिष्ठन्ति। किन्त स तं प्रत्यवदत्, मम का जननी? के वा मम सहजाः? ४८ पश्चात् शिष्यान् प्रति करं प्रसार्य्य कथितवान्, पश्य मम ४९ जननी मम सहजाश्चैते; यः कश्चित् मम स्वर्गस्थस्य पितुरिष्टं ५० कर्म्म कुरुते, सएव मम भ्राता भगिनी जननी च।

---

## १३ त्रयोदशोऽध्यायः।

१ वीजवपनदृष्टान्तः १० शिष्यैः साकं संलापः १८ शिष्याणां दृष्टान्तार्थज्ञापनं २४ वन्ययवसदृष्टान्तः ३१ सर्षपदृष्टान्तः ३३ किण्वदृष्टान्तः ३४ खीष्टमधि भविष्यद्वचनसिद्धिः ३६ उक्तदृष्टान्तस्य व्याख्या ४४ गुप्तवित्तदृष्टान्तः ४५ मुक्तादृष्टान्तः ४७ आनायनिक्षेपदृष्टान्तः ५१ शिष्यान् प्रति कथनं ५७ स्वकीयलोकैः खीष्टस्य न सम्मानञ्च।

अपरञ्च तस्मिन् दिने यीशुः सद्मनो गत्वा सरित्पते रोधसि १ समुपविवेश। तत्र तत्सन्निधौ बहुजनानां निवहोपस्थितेः स २

तरणिमारुह्य समुपाविशत्, तेन मानवा रोधसि स्थितवन्तः।
३ तदानीं स दृष्टान्तैस्तान् इत्थं बहुश उपदिष्टवान्। पश्यत,
४ कश्चित् कृषीबलो बीजानि वप्तुं बहिर्जगाम, तस्य वपनकाले
कतिपयबीजेषु मार्गपार्श्वे पतितेषु विहगास्तानि भक्षितवन्तः।
५ अपरं कतिपयबीजेषु स्तोकमृद्युक्तपाषाणे पतितेषु मृदल्पत्वात्
६ तत्क्षणात् तान्यङ्कुरितानि, किन्तु रवावुदिते दग्धानि तेषां
७ मूलाप्रविष्टत्वात् शुष्कतां गतानि च। अपरं कतिपयबीजेषु
८ कण्टकानां मध्ये पतितेषु कण्टकान्येधित्वा तानि जग्रसुः। अप-
रञ्च कतिपयबीजानि उर्व्वरायां पतितानि; तेषां मध्ये कानि-
चित् शतगुणानि कानिचित् षष्टिगुणानि कानिचिच्च त्रिंशद्गुणानि
९ फलानि फलितवन्ति। श्रोतुं यस्य श्रुती आसाते स शृणुयात्।
१०　अनन्तरं शिष्यैरागत्य सोऽपृच्छ्यत, भवता तेभ्यः कुतो दृष्टा-
११ न्तकथा कथ्यते? ततः स प्रत्यवदत्, स्वर्गराज्यस्य निगूढां कथां
१२ वेदितुं युष्मभ्यं सामर्थ्यमदायि, किन्तु तेभ्यो नादायि। यस्माद्
यस्यान्तिके वर्द्धते, तस्मायेव दायिष्यते, तस्मात् तस्य बाहुल्यं
भविष्यति, किन्तु यस्यान्तिके न वर्द्धते, तस्य यत् किञ्चनास्ते,
१३ तदपि तस्माद् आदायिष्यते। ते पश्यन्तोपि न पश्यन्ति,
शृण्वन्तोपि न शृण्वन्ति, बुध्यमाना अपि न बुध्यन्ते च, तस्मात्
तेभ्यो दृष्टान्तकथा कथ्यते। यथा

१४　　कर्णैः श्रोष्यथ यूयं वै किन्तु यूयं न भोत्स्यथ।
　　नेत्रैर्द्रक्ष्यथ यूयञ्च परिज्ञातुं न शक्ष्यथ।
१५　　ते मानुषा यथा नैव परिपश्यन्ति लोचनैः।
　　कर्णैर्यथा न शृण्वन्ति न बुध्यन्ते च मानसैः।
　　व्यावर्त्तितेषु चित्तेषु काले कुत्रापि तैर्जनैः।

भक्तास्ते मनुजाः स्वस्था यथा नैव भवन्ति च।
तथा तेषां मनुष्याणां क्रियन्ते स्थूलबुद्धयः।
बधिरीभूतकर्णाश्च जाताश्च मुद्रिता दृशः।

यद्येतानि वचनानि यिशयियभविष्यद्वादिना प्रोक्तानि तेषु तानि फलन्ति। किन्तु युष्माकं नयनानि धन्यानि, यस्मात् तानि १६ वीक्षन्ते; धन्याश्च युष्माकं शब्दग्रहाः, यस्मात् तैराकर्ण्यते। मया १७ यूयं तथ्यमुच्यध्वे युष्माभि र्यद्यद् वीक्ष्यते, तद् बहवो भविष्यद्वादिनो धार्म्मिकाश्च मानवा दिदृक्षन्तोपि द्रष्टुं नालभन्त, पुनश्च यूयं यद्यत् शृणुथ, तत् ते शुश्रूषमाणा अपि श्रोतुं नालभन्त।

कृषीवलीयदृष्टान्तस्यार्थं शृणुत। मार्गपार्श्वे वीजान्युप्तानि १८ तस्यार्थ एषः, यदा कश्चित् राज्यस्य कथां निशम्य न बुध्यते, १९ तदा पापात्मागत्य तदीयमनस उप्तां कथां हरन् नयति। अपरं २० पाषाणस्थले वीजान्युप्तानि तस्यार्थ एषः; कश्चित् कथां श्रुत्वैव हर्षचित्तेन गृह्लाति, किन्तु तस्य मनसि मूलाप्रविष्टत्वात् स २१ किञ्चित्कालमात्रं स्थिरस्तिष्ठति; पश्चात् तत्कथाकारणात् कोपि क्लेशस्ताडना वा चेत् जायते, तर्हि स तत्क्षणाद् विघ्नमेति। अपरं कण्टकानां मध्ये वीजान्युप्तानि तदर्थ एषः; केनचित् २२ कथायां श्रुतायां सांसारिकचिन्ताभि र्भ्रान्तिभिश्च सा ग्रस्यते, तेन सा विफला भवति। अपरम् उर्व्वरायां वीजान्युप्तानि २३ तदर्थ एषः; ये तां कथां श्रुत्वा वुध्यन्ते, ते फलिताः सन्तः केचित् शतगुणानि केचित् षष्टिगुणानि केचिच्च त्रिंशद्गुणानि फलानि जनयन्ति।

अनन्तरं सोपरामेकां दृष्टान्तकथामुपस्थाप्य तेभ्यः कथया- २४ मास; स्वर्गीयराज्यं तादृशेन केनचिद् गृहस्थेनोपमीयते, येन

२५ क्षेत्रे प्रशस्तवीजान्यौप्यन्त। किन्तु क्षणदायां सकललोकेषु सुप्तेषु तस्य रिपुरागत्य तेषां गोधूमवीजानां मध्ये वन्ययवस-
२६ वीजान्युप्त्वा वव्राज। ततो यदा वीजेभ्योऽङ्कुरा जायमानाः कणिशानि धृतवन्तः; तदा वन्ययवसान्यपि दृश्यमानान्यभवन्।
२७ ततो गृहस्थस्य दासेया आगम्य तस्मै कथयाञ्चक्रुः, हे महेच्छ, भवता किं क्षेत्रे भद्रवीजानि नौप्यन्त? तथात्वे वन्ययवसानि
२८ कुत आयन्? तदानीं तेन ते प्रतिगदिताः, केनचित् रिपुणा कर्म्मेदमकारि। दासेयाः कथयामासुः, वयं गत्वा तान्युत्पाद्य
२९ क्षिपामो भवतः कीदृशीच्छा जायते? तेनावादि, नहि, शङ्केऽहं वन्ययवसोत्पाटनकाले युष्माभिस्तैः साकं गोधूमा अप्युत्पाटि-
३० ष्यन्ते। अतः शस्यकर्त्तनकालं यावद् उभयान्यपि सह वर्द्धन्तां, पश्चात् कर्त्तनकाले कर्त्तकान् वक्ष्यामि, यूयमादौ वन्ययवसानि संगृह्य दाहयितुं वीटिका बद्ध्वा स्थापयत; किन्तु सर्व्वे गोधूमा युष्माभि र्भाण्डागारं नीत्वा स्थाप्यन्ताम्।

३१ अनन्तरं सोपरामेकां दृष्टान्तकथामुत्थाप्य तेभ्यः कथित-
३२ वान् कश्चिन्मनुजः सर्षपवीजमेकं नीत्वा स्वक्षेत्र उवाप। सर्षप-वीजं सर्व्वस्माद् वीजात् क्षुद्रमपि तदङ्कुरितं सर्व्वस्मात् शाकात् वृहद् भवति; स तादृशस्तरु र्भवति, यस्य शाखासु नभसः खगा आगत्य निवसन्ति; स्वर्गीयराज्यं तादृशस्य सर्षपैकस्य समम्।

३३ पुनरपि स उपमाकथामेकां तेभ्यः कथयाञ्चकार; काचन योषित् यत् किण्वमादाय द्रोणत्रयमितगोधूमचूर्णानां मध्ये सर्व्वेषां मिश्रीभवनपर्य्यन्तं समाच्छाद्य निधत्तवती, तत्किण्व-मिव स्वर्गराज्यं।

३४ इत्थं यीशु र्मनुजनिवहानां सन्निधावुपमाकथाभिरेतान्या-

स्थानानि कथितवान् उपमां विना तेभ्यः कामपि कथां नाकथयत्। एतेन ३५

दृष्टान्तीयेन वाक्येन व्यादाय वदनं निजं।
अहं प्रकाशयिष्यामि गुप्तवाक्यं पुराभवं।

यदेतद्वचनं भविष्यद्वादिना प्रोक्तमासीत्, तत् सिद्धमभवत्।

सर्व्वान् मनुजान् विसृज्य यीशौ गृहं प्रविष्टे तच्छिष्या ३६ आगत्य यीशवे कथितवन्तः, क्षेत्रस्य वन्ययवसीयदृष्टान्तकथाम् भवान् अस्मान् स्पष्टीकृत्य वदतु। ततः स प्रत्युवाच, येन भद्र- ३७ बीजान्युप्यन्ते स मनुजपुत्त्रः, क्षेत्रं जगत्, भद्रबीजानि राज्यस्य ३८ सन्तानाः, वन्ययवसानि पापात्मनः सन्तानाः। येन रिपुणा ३९ तान्युप्तानि स शयतानः, कर्त्तनसमयश्च जगतः शेषः, कर्त्तकाः स्वर्गीयदूताः। यथा वन्ययवसानि संगृह्य दाह्यन्ते, तथा जगतः ४० शेषे भविष्यति; अर्थात् मनुजसुतः स्वीयदूतान् प्रेषयिष्यति, ४१ तेन ते च तस्य राज्यात् सर्व्वान् विघ्नकारिणोऽधार्म्मिकलोकांश्च संगृह्य यत्र रोदनं दन्तघर्षणञ्च भवति, तत्राग्निकुण्डे निक्षे- ४२ प्स्यन्ति। तदानीं धार्म्मिकलोकाः स्वेषां पितृ राज्ये भास्करइव ४३ तेजस्विनो भविष्यन्ति। श्रोतुं यस्य श्रुती आसाते, स शृणुयात्।

अपरञ्च क्षेत्रमध्ये निधिं पश्यन् यो गोपयति, ततः परं ४४ सानन्दो गत्वा स्वीयसर्व्वस्वं विक्रीय तत्क्षेत्रं क्रीणाति, स इव स्वर्गराज्यं।

अन्यच्च यो वणिक् उत्तमां मुक्तां गवेषयन् महार्घां मुक्तां ४५ विलोक्य निजसर्व्वस्वं विक्रीय तां क्रीणाति, स इव स्वर्गराज्यं। ४६

पुनश्च समुद्रे निक्षिप्तः सर्व्वप्रकारमीनसंग्राह्यानायइव ४७ स्वर्गराज्यं। तस्मिन् आनाये पूर्णे जना यथा रोधस्युत्तोल्य ४८

समुपविश्य प्रशस्तमीनान् संगृह्य भाजनेषु निदधते, कुत्सितान्
४९ निक्षिपन्ति; तथैव जगतः शेषे भविष्यति, फलतः स्वर्गीय-
५० दूता आगत्य पुण्यवज्जनानां मध्यात् पापिनः पृथक् कृत्वा वह्नि-
कुण्डे निक्षेप्स्यन्ति, तत्र रोदनं दन्तै र्दन्तघर्षणञ्च भविष्यतः।

५१ यीशुना ते पृष्टा युष्माभिः किमेतान्याख्यानान्यबुध्यन्त?
५२ तदा ते प्रत्यवदन्, सत्यं प्रभो। तदानीं स कथितवान्, निज-
भाण्डागारात् नवीनपुरातनानि वस्तूनि निर्गमयति यो गृह-
स्थः स इव स्वर्गराज्यमधि शिक्षिताः सर्व्वे उपदेष्टारः।

५३ अनन्तरं यीशुरेताः सर्व्वा दृष्टान्तकथाः समाप्य तस्मात्
५४ स्थानात् प्रतस्थे। अपरं स्वदेशमागत्य जनान् भजनभवन
उपदिष्टवान्; ते विस्मयं गत्वा कथितवन्त एतस्यैतादृशं ज्ञानम्
५५ आश्चर्य्यं कर्म्म च कस्माद् अजायत? किमयं सूत्रधारस्य पुत्रो
नहि? एतस्य मातु र्नाम च किं मरियम् नहि? याकुब्-
यूषफ्-शिमोन्-यिहूदाश्च किमेतस्य भ्रातरो नहि? एतस्य
५६ भगिन्यश्च किमस्माकं मध्ये न सन्ति? तर्हि कस्मादयमेतानि
५७ लब्धवान्? इत्थं स तेषां विघ्नरूपो बभूव; ततो यीशुना निग-
दितं, स्वदेशीयजनानां मध्यं विना भविष्यद्वादी कुत्राप्यन्यत्र
५८ नासम्मान्यो भवति। तेषामविश्वासहेतोः स तत्र स्थाने बह्वा-
श्चर्य्यकर्म्माणि न कृतवान्।

## १४ चतुर्दशोऽध्यायः।

१ मज्जयितु र्योहनो वधः १३ पञ्चपूपद्वयमीनैः पञ्चसहस्राणां पुंसां भोजनं २२ साग-
रोपरि ख्रीष्टस्य पद्भ्यां गमनं ३४ भूरिलोकानां निरामयत्वञ्च।

१ तदानीं राजा हेरोद् यीशो र्यशः श्रुत्वा निजदासेयान्

अगाद्, एष मज्जयिता योहन्, प्रमितेभ्यस्तस्योत्थानात् तेनेत्थ- २
मद्भुतं कर्म्म प्रकाश्यते। पुरा हेरोद् निजभ्रातुः फिलिपो ३
जायाया हेरोदीयाया अनुरोधाद् योहनं धारयित्वा बद्धा
कारायां स्थापितवान्। यतो योहन् उक्तवान्, एतस्याः संग्रहो ४
भवतो नोचितः। तस्मात् नृपतिस्तं हन्तुमिच्छन्नपि लोकेभ्यो ५
बिभयाञ्चकार; यतः सर्व्वे योहनं भविष्यद्वादिनं मेनिरे।
किन्तु हेरोदो जन्माहीयमह उपस्थिते हेरोदीयाया दुहिता ६
तेषां समक्षं नृतित्वा हेरोदमप्रीणयत्। तस्मात् भूपतिः शपथं ७
कुर्व्वन् इति प्रत्यज्ञासीत्, त्वया यद् याच्यते, तदेवाहं दास्यामि।
सा कुमारी स्वीयमातुः शिक्षां लब्धा बभाषे, मज्जयितुर्योहन ८
उत्तमाङ्गं भाजने समानीय मह्यं विश्राणय। ततो राजा ९
शुशोच, किन्तु भोजनायोपविशतां सङ्गिनां स्वकृतशपथस्य
चानुरोधात् तत् प्रदातुम् आदिदेश। पश्चात् कारां प्रति १०
नरं प्रहित्य योहन उत्तमाङ्गं छित्त्वा तत् भाजन आनाय्य ११
तस्यै कुमार्य्यै व्यश्राणयत्, ततः सा स्वजनन्याः समीपं तन्निनाय।
पश्चाद् योहनः शिष्या आगत्य कायं नीत्वा श्मशाने स्थापया- १२
मासुस्ततो यीशोः सन्निधिं व्रजित्वा तद्वार्त्तां बभाषिरे।

अनन्तरं यीशुरिति निशम्य नावा निर्जनस्थानम् एकाकी १३
गतवान्, पश्चात् मानवास्तत् श्रुत्वा नानानगरेभ्य आगत्य पदै-
स्तत्पश्चाद् ईयुः। तदानीं यीशु र्बहिरागत्य महान्तं जननि- १४
वहं निरीक्ष्य तेषु कारुणिकः सन् तेषां पीडितजनान् निराम-
यान् चकार। ततः परं सन्ध्यायां शिष्यास्तदन्तिकमागत्य कथ- १५
यामासुः, इदं निर्जनस्थानं वेलाप्यवसन्ना; तस्मात् मनुजान्
स्वस्वग्रामं गन्तुं स्वार्थं भक्ष्याणि क्रेतुञ्च भवान् तान् विसृजतु।

१६ किन्तु यीशुस्तानवादीत्, तेषां गमने प्रयोजनं नास्ति, यूयमेव
१७ तान् भोजयत। तदा ते प्रत्यवदन्, अस्माकमत्र पूपपञ्चकं
१८ मीनद्वयञ्चास्ते। तदानीं तेनोक्तं तानि मदन्तिकमानयत।
१९ अनन्तरं स मनुजान् यवसोपर्य्युपवेष्टुम् आज्ञापयामास; अपर
तत् पूपपञ्चकं मीनद्वयञ्च गृह्णन् स्वर्गं प्रति निरीक्ष्येश्वरीय-
गुणान् अनूद्य भंक्त्वा शिष्येभ्यो दत्तवान्, शिष्याश्च लोकेभ्यो
२० ददुः। ततः सर्व्वे भुक्त्वा परितृप्तवन्तः, ततस्तदवशिष्टभक्ष्यैः
२१ पूर्णान् द्वादशडल्लकान् गृहीतवन्तः। ते भोक्तारः स्त्रीर्बाल-
कांश्च विहाय प्रायेण पञ्च सहस्राणि पुमांस आसन्।

२२ तदनन्तरं यीशु र्लोकानां विसर्जनकाले शिष्यान् तरणि-
२३ मारोढुं स्वाग्रे पारं यातुञ्च गाढमादिष्टवान्। ततो लोकेषु
विसृष्टेषु स विविक्ते प्रार्थयितुं गिरिमेकं गत्वा सन्ध्यां यावत्
२४ तत्रैकाकी स्थितवान्। किन्तु तदानीं सम्मुखवातत्वात् सरित्पते
२५ र्मध्ये तरङ्गैस्तरणिर्दोलायमानाभवत्। तदा स यामिन्यास्तुर्थ-
२६ प्रहरे पद्भ्यां व्रजन् तेषामन्तिकं गतवान्। किन्तु शिष्यास्तं सा-
गरोपरि व्रजन्तं विलोक्य समुद्विग्ना जगदुः, एष भूत इति शङ्क-
२७ माना उच्चैः शब्दायाञ्चक्रिरे च। तदैव यीशुस्तानवदत्, सुस्थिरा
२८ भवत, मा भैष्ट, एषोऽहम्। ततः पितर इत्युक्तवान्, हे प्रभो,
२९ यदि भवानेव, तर्हि मां भवत्समीपं यातुमाज्ञापयतु। ततः
तेनादिष्टः पितरस्तरणितोऽवरुह्य यीशोरन्तिकं प्राप्तुं तोयो-
३० परि वव्राज। किन्तु प्रचण्डं पवनं विलोक्य भयात् तोये मंक्तुम्
आरेभे, तस्माद् उच्चैः शब्दायमानः कथितवान्, हे प्रभो,
३१ मामवतु। यीशुस्तत्क्षणात् करं प्रसार्य्य तं धरन् उक्तवान्, ह
३२ स्तोकप्रत्ययिन् त्वं कुतः समशेथाः? अनन्तरं तयोस्तरणिमारू-

ढयोः पवनो निववृते। तदानीं ये तरण्यामासन्, त आगत्य तं ३३ प्रणम्य कथितवन्तः, यथार्थस्त्वमेवेश्वरसुतः।

अनन्तरं पारं प्राप्य ते गिनेषरन्नामकं नगरमुपतस्थुः, तदा ३४ तत्रत्या जना यीशुं परिचीय तद्देशस्य चतुर्दिशो वार्त्तां ३५ प्रहित्य यत्र यावन्तः पीडिता आसन्, तावतएव तदन्तिकमा- नयामासुः। अपरं तदीयवसनस्य ग्रन्थिमात्रं स्प्रष्टुं विनीय ३६ यावन्तो जनास्तत् स्पर्शं चक्रिरे, ते सर्व्वएव निरामया बभूवुः।

---

## १५ पञ्चदशोऽध्यायः।

१ उपाध्यायान् फिरूशिनश्च प्रति भर्त्सनं १० मनुजानाममेध्यत्वहेतुनिर्णयः २१ कस्या० स्नन किनानीययोषितः कन्यायाः स्वास्थ्यं २९ बहुलोकानां स्वास्थ्यं ३२ सप्तपूपाल्प- मीनेन चतुःसहस्रपुंसां भोजनम्।

अपरं यिरूशालम्नगरीयाः कतिपया अध्यापकाः फिरू- १ शिनश्च यीशोः समीपमागत्य कथयामासुः, तव शिष्याः किमर्थम् २ अप्रक्षालितकरै र्भक्षित्वा परम्परागतं प्राचीनानां व्यवहारं लङ्घन्ते? ततो यीशुः प्रत्युवाच, यूयं परम्परागताचारेण कुत ३ ईश्वराज्ञां लङ्घध्वे। ईश्वर इत्याज्ञापयत्, त्वं निजपितरौ ४ संमन्येथाः, येन च निजपितरौ निन्द्येते, स निश्चितं म्रियेत; किन्तु यूयं वदथ, यः स्वजनकं स्वजननीं वा वाक्यमिदं वदति, ५ युवां मत्तो यल्लभेथे, तत् न्यविद्यत, स निजपितरौ पुन र्न ६ संमंस्यते। इत्थं यूयं परम्परागतेन स्वेषामाचारेणेश्वरीयाज्ञां लुम्पथ। रे कपटिनः सर्व्वे यिशयियो युष्मानधि भविष्यद्वचना- ७ न्येतानि सम्यग् उक्तवान्।

वदनै र्मनुजा एते समायान्ति मदन्तिकं। ८
तथाधरै र्मदीयञ्च मानं कुर्व्वन्ति ते नराः।

९　　किन्तु तेषां मनो मत्तो विदूरएव तिष्ठति।
　　शिक्षयन्तो विधीन् आज्ञा भजन्ते मां मुधैव ते।

१०　ततो यीशु र्लोकान् आहूय प्रोक्तवान्, यूयं श्रुत्वा बुध्यध्वं।
११ यन्मुखं प्रविशति, तत् मनुजम् अमेध्यं न करोति, किन्तु
१२ यदास्यात् निर्गच्छति, तदेव मानुषममेध्यी करोति। तदानीं
शिष्या आगत्य तस्मै कथयाञ्चक्रुः, एतां कथां श्रुत्वा फिरूशिनो
१३ व्यरज्यन्त, तत् किं भवता ज्ञायते? स प्रत्यवदत्, मम
१४ स्वर्गस्थः पिता यं कञ्चिदङ्कुरं नारोपयत्, स उत्पाव्यते। ते
तिष्ठन्तु, ते अन्धमनुजानाम् अन्धमार्गदर्शका एव; यद्यन्धोऽन्धं
१५ पन्थानं दर्शयति, तर्ह्युभौ गर्त्ते पततः। तदा पितरस्तं
१६ प्रत्यवदत्, दृष्टान्तमिममस्मान् बोधयतु। यीशुना प्रोक्तं,
१७ यूयमद्य यावत् किमबोधाः स्थ? कथामिमां किं न बुध्यध्वे?
१८ यदास्यं प्रविशति, तद् उदरे पतन् बहिर्निर्याति, किन्त्वास्याद्
यन्निर्याति, तद् अन्तःकरणात् निर्यातत्वात् मनुजममेध्यं
१९ करोति। यतोऽन्तःकरणात् कुचिन्ता बधः पारदारिकता
वेश्यागमनं चौर्य्यं मिथ्यासाक्ष्यम् ईश्वरनिन्दा चैतानि सर्व्वाणि
२० निर्य्यान्ति। एतानि मनुष्यमपवित्री कुर्व्वन्ति किन्त्वप्रक्षालित-
करेण भोजनं मनुजममेध्यं न करोति।

२१　अनन्तरं यीशुस्तस्मात् स्थानात् प्रस्थाय सोरसीदोन्नगरयोः
२२ सीमामुपतस्थौ। तदा तत्सीमातः काचित् किनानीया योषिद्
आगत्य तमुच्चैरुवाच, हे प्रभो दायूदः सन्तान, ममैका दुहि-
२३ तास्ते सा भूतग्रस्ता सती महाक्लेशं प्राप्नोति मम दयस्व। किन्तु
यीशुस्तां किमपि नोक्तवान्, ततः शिष्या आगत्य तं निवेदया-
मासुः, एषा योषिद् अस्माकं पश्चाद् उच्चैराहूयागच्छति,

एनां विसृजतु। तदा स प्रत्यवदत्, इस्रायेल्गोत्रस्य हारित- २४ मेषान् विना कस्याप्यन्यस्य समीपं नाहं प्रेषितोऽस्मि। ततः सा २५ नारी समागत्य तं प्रणम्य जगाद, हे प्रभो मामुपकुरु। स उक्तवान्, २६ बालकानां भक्ष्यमादाय सारमेयेभ्यो दानं नोचितं। तदा सा २७ बभाषे, हे प्रभो, तत् सत्यं, तथापि प्रभो र्भञ्चाद् यदुच्छिष्टं पतति, तत् सारमेयाः खादन्ति। ततो यीशुः प्रत्यवदत्, हे २८ योषित्, तव विश्वासो महान् तस्मात् तव मनोभिलषितं सिद्ध्यतु, तेन तस्याः कन्या तस्मिन्नेव दण्डे निरामयाभवत्।

अनन्तरं यीशुस्तस्मात् स्थानात् प्रस्थाय गालील्सागरस्य २९ सन्निधिमागत्य धराधरमारुह्य तत्रोपविवेश। पश्चात् जननि- ३० वहो बहून् खञ्जान्धमूकशुष्ककरमानुषान् आदाय यीशोः समीपमागत्य तच्चरणान्तिके स्थापयामासुः, ततः स तान् निरामयान् अकरोत्। इत्थं मूका वाक्यं वदन्ति, शुष्ककराः ३१ स्वास्थ्यमायान्ति, पङ्गवो गच्छन्ति, अन्धा वीक्षन्ते, इति वि- लोक्य लोका विस्मयं मन्यमाना इस्रायेल ईश्वरं धन्यं बभाषिरे।

तदानीं यीशुः स्वशिष्यान् आहूय गदितवान्, एतज्जन- ३२ निवहेषु मम दया जायते, एते दिनत्रयं मया साकं सन्ति, एषां भक्ष्यवस्तु च किञ्चिदपि नास्ति, तस्मादहमेतानकृता- हारान् न विस्रक्ष्यामि, तथात्वे ते वर्त्ममध्ये क्लाम्येयुः। तदा ३३ शिष्या ऊचुः, एतस्मिन् प्रान्तरमध्य एतावतो मर्त्यान् तर्पयितुं वयं कुत्र पूपान् प्राप्स्यामः? यीशुरपृच्छत्, युष्माकं निकटे कति ३४ पूपा आसते? त ऊचुः, सप्तपूपा अल्पाः क्षुद्रमीनाश्च सन्ति। तदानीं स लोकनिवहं भूमावुपवेष्टुम् आदिश्य तान् सप्तपूपान् ३५ मीनांश्च गृह्लन् ईश्वरीयगुणान् अनूद्य भंक्ता शिष्येभ्यो ददौ, ३६

३७ शिष्या लोकेभ्यो ददुः। ततः सर्व्वे भुक्ता तृप्तवन्तः; तदवशिष्ट-
३८ भक्ष्येण सप्तडल्लकान् परिपूर्य्य संजगृहुः। ते भोक्तारो योषितो
३९ बालकांश्च विहाय प्रायेण चतुःसहस्राणि पुरुषा आसन्। ततः
परं स जननिवहं विसृज्य तरिमारुह्य मग्दलाप्रदेशं गतवान्।

---

## १६ षोडशोऽध्यायः।

१ फिरूशिनामद्भुतचिह्नचेष्टनं ५ शिष्याकिण्वमधि सावधानतोपदेशः १३ अधिख्रीष्टं जनानामनुमितिः पितराङ्गीकारः २१ ख्रीष्टापनस्तुतिप्रकाशनं पितरम्प्रति तिरस्करणञ्च २४ स्वपश्चाद्गामिनामुपदेशनञ्च।

१　तदानीं फिरूशिनः सिदूकिनश्चागत्य तं परीक्षितुं नभसीयं
२ किञ्चन लक्ष्म दर्शयितुं तस्मै निवेदयामासुः। ततः स
उक्तवान्, सन्ध्यायां नभसो रक्तत्वाद् यूयं वदथ, श्वो निर्म्मलं
३ दिनं भविष्यति; प्रातःकाले च नभसो रक्तत्वात् मलिनत्वाच्च
वदथ, झञ्भ्काद्य भविष्यति। हे कपटिनो यदि यूयम् अन्त-
रीक्षस्य लक्ष्म बोद्धुं शक्नुथ, तर्हि कालस्यैतस्य लक्ष्म कथं बोद्धुं
४ न शक्नुथ? एतत्कालस्य दुष्टो व्यभिचारी च वंशो लक्ष्म गवेषय-
ति, किन्तु यूनसो भविष्यद्वादिनो लक्ष्म विनान्यत् किमपि
लक्ष्म तान् न दर्शयिष्यते। तदानीं स तान् विहाय प्रतस्थे।

५　अनन्तरमन्यपारगमनकाले तस्य शिष्याः पूपमानेतुं
६ विस्मृतवन्तः। यीशुस्तानवादीत्, यूयं फिरूशिनां सिदूकिनाञ्च
७ किण्वं प्रति सावधानाः सतर्काश्च भवत। तेन ते परस्परं
विविच्य कथयितुमारेभिरे, वयं पूपानानेतुं विस्मृतवन्त एत-
८ त्कारणाद् इति कथयति। किन्तु यीशुस्तद्विज्ञाय तानवोचत्,
हे स्तोकविश्वासिनो यूयं पूपानानयनमधि कुतः परस्परमेतद्

विविंक्थ? युष्माभिः किमद्यापि न ज्ञायते? पञ्चभिः पूपैः ९ पञ्चसहस्रपुरुषेषु भोजितेषु भक्ष्योच्छिष्टपूर्णान् कति डल्लकान् समगृह्णीत; तथा सप्तभिः पूपैश्चतुःसहस्रपुरुषेषु भोजितेषु कति १० डल्लकान् समगृह्णीत, तत् किं युष्माभिर्न स्मर्य्यते? तस्मात् ११ फिरूशिनां सिदूकिनाञ्च किण्वं प्रति सावधानास्तिष्ठत, कथामिमाम् अहं पूपानधि नाकथयं, एतद् यूयं कुतो न बुध्यध्वे? तदानीं पूपकिण्वं प्रति सावधानास्तिष्ठतेति नोक्ता फिरू- १२ शिनां सिदूकिनाञ्च उपदेशं प्रति सावधानास्तिष्ठतेति कथितवान्, इति तैरबोधि।

अपरञ्च यीशुः कैसरिया-फिलिपिप्रदेशमागत्य शिष्यान् १३ अपृच्छत्, योऽहं मनुजसुतः सोऽहं कः? लोकैरहं किमुच्ये? तदानीं ते कथितवन्तः, केचिद् वदन्ति त्वं मज्जयिता योहन्, १४ केचिद्वदन्ति, त्वम् एलियः, केचिच्च वदन्ति, त्वं यिरिमियो वा कश्चिद् भविष्यद्वादीति। पश्चात् स तान् पप्रच्छ, यूयं मां १५ कं वदथ? ततः शिमोन् पितर उवाच, त्वममरेश्वरस्याभि- १६ षिक्तपुत्त्रः। ततो यीशुः कथितवान्, हे यूनसः पुत्त्र शिमोन् १७ त्वं धन्यः; यतः कोपि मनुजस्त्वय्येतज्ज्ञानं नोदपादयत्, किन्तु मम स्वर्गस्थः पितोदपादयत्। अतोऽहं त्वां वदामि, त्वं पितरः १८ (प्रस्तरः) अहञ्च तस्य प्रस्तरस्योपरि स्वमण्डलीं निर्म्मास्यामि, तेन निरयो बलात् तां पराजेतुं न शक्ष्यति। अहं तुभ्यं १९ स्वर्गीयराज्यस्य कुञ्जिकां दास्यामि,तेन यत् किञ्चन त्वं पृथिव्यां भंत्स्यसि तत्स्वर्गे भंत्स्यते, यच्च किञ्चन मह्यां मोक्ष्यसि तत् स्वर्गे मोक्ष्यते। पश्चात् स शिष्यानादिशत्, अहमभिषिक्तो यीशुरिति २० कथां कस्मैचिदपि यूयं मा कथयत।

२१ अन्यच्च यिरूशालम्नगरं गत्वा प्राचीनलोकेभ्यः प्रधानयाजकेभ्य उपाध्यायेभ्यश्च बहुदुःखभोगस्तै र्हतत्वं तृतीयदिने पुनरुत्थानञ्च ममावश्यकम् एताः कथा यीशुस्तत्कालमारभ्य २२ शिष्यान् ज्ञापयितुम् आरब्धवान्। तदानीं पितरस्तस्य करं धृत्वा तर्जयित्वा कथयितुमारब्धवान्, हे प्रभो, तत् त्वत्तो २३ दूरं यातु, त्वां प्रति कदापि न घटिष्यते। किन्तु स वदनं परावर्त्त्य पितरं जगाद, हे विघ्नकारिन्, मत्सम्मुखाद् दूरीभव, त्वं मां बाधसे, ईश्वरीयकार्य्यात् मानुषीयकार्य्यं तुभ्यं रोचते।

२४ अनन्तरं यीशुः स्वीयशिष्यान् उक्तवान्, यः कश्चित् मम पश्चाद्गामी भवितुम् इच्छति, स स्वं दाम्यतु, तथा स्वक्रुशं २५ गृह्लन् मत्पश्चादायातु। यतो यः प्राणान् रक्षितुमिच्छति, स तान् हारयिष्यति, किन्तु यो मदर्थं निजप्राणान् हारयति, २६ स तान् प्राप्स्यति। मानुषो यदि सर्व्वं जगत् लभते निजप्राणान् हारयति, तर्हि तस्य को लाभः? मनुजो निज- २७ प्राणानां विनिमयेन वा किं दातुं शक्नोति? मनुजसुतः स्वदूतैः सार्कं पितुः प्रभावेणागमिष्यति; तदा प्रतिमनुजं स्वस्वकर्म्मानु- २८ सारात् फलं दास्यति। अहं युष्मान् तथ्यं वच्मि, सराज्यं मनुजसुतम् आगतं न पश्यन्तो मृत्युं न स्वादिष्यन्ति, एतादृशाः कतिपयजना अत्रापि दण्डायमानाः सन्ति।

---

## १७ सप्तदशोऽध्यायः।

१ खीष्टस्यान्यमूर्त्तिधारणं ९ एलियमधि कथनं १४ अपस्मारिणः स्वास्थ्यं २२ स्वमृत्युप्रकाशनं २४ करं दातुं चित्रकरणं।

१ अनन्तरं षड्दिनेभ्यः परं यीशुः पितरं याकूबं तत्सहजं योहनञ्च गृह्लन् उच्चाद्रे र्विविक्तस्थानम् आगत्य तेषां समक्षं

रूपमन्यत् दधार। तेन तदास्यं तेजस्वि, तदाभरणम् आलो- २
कवत् पाण्डरमभवत्। अन्यच्च तेन साकं संलपन्तौ मूसा ३
एलियश्च तेभ्यो दर्शनं ददतुः। तदानीं पितरो यीशुं जगाद, ४
हे प्रभो स्थितिरत्रास्माकं शुभा, यदि भवतानुमन्यते, तर्हि
भवदर्थमेकं मूसार्थमेकम् एलियार्थञ्चैकम् इति त्रीणि दूष्याणि
निर्म्माम। एतत्कथनकाल एक उज्ज्वलः पयोदस्तेषामुपरि ५
छायां कृतवान्, वारिदाद् एषा नभसीया वाग् बभूव, ममायं
प्रियः पुत्रः, अस्मिन् मम महासन्तोष एतस्य वाक्यं यूयं निशा-
मयत। किन्तु वाचमेतां शृण्वन्तएव शिष्या भृशं शङ्कमाना ६
न्युब्जा न्यपतन्। तदा यीशुरागत्य तेषां गात्राणि स्पृशन् ७
उवाच, उत्तिष्ठत, मा भैष्ट। तदानीं नेत्राण्युन्मील्य यीशुं विना ८
कमपि न ददृशुः।

ततः परम् अद्रेरवरोहणकाले यीशुस्तान् इत्यादिदेश, ९
मनुजसुतस्य मृतानां मध्यादुत्थानं यावन्न जायते, तावत्
युष्माभिरेतद्दर्शनं कस्मैचिदपि न कथयितव्यं। तदा शिष्यास्तं १०
पप्रच्छुः, प्रथमम् एलिय आयास्यतीति कुत उपाध्यायैरुच्यते?
ततो यीशुः प्रत्यवादीत्, एलियः प्रागेत्य सर्व्वाणि साधयिष्यतीति ११
सत्यं, किन्त्वहं युष्मान् वच्मि, एलिय एत्य गतः, ते तम- १२
परिचित्य तस्मिन् यथेच्छं व्यवजह्रुः; मनुजसुतेनापि तेषा-
मन्तिके तादृग् दुःखं भोक्तव्यं। तदानीं स मज्जयितारं योहन- १३
मधि कथामेतां व्याहृतवान्, इत्थं तच्छिष्या बुबुधिरे।

पश्चात् तेषु जननिवहस्यान्तिकमागतेषु कश्चित् मनुजस्त- १४
दन्तिकमेत्य जानूनी पातयित्वा कथितवान्, हे प्रभो, मत्पुत्रं १५
प्रति कृपां विदधातु, सोपस्मारामयेन भृशं व्यथितः सन् पुनः

१६ पुन र्वह्नौ मुहु र्जलमध्ये पतति। तस्माद् भवतः शिष्याणां
१७ समीपे तमानयं किन्तु ते तं स्वास्थं कर्त्तुं न शक्ताः। तदा यीशुः कथितवान् रे अविश्वासिनः, रे विपथगामिनः, पुनः कतिकालान् अहं युष्माकं सन्निधौ स्थास्यामि? कतिकालान् वा
१८ युष्मान् सहिष्ये? तमत्र ममान्तिकमानयत। पश्चाद् यीशुना तर्जितएव स भूतस्तं विहाय गतवान्, तद्दण्डएव स बालको
१९ निरामयोऽभूत्। ततः शिष्या गुप्तं यीशुमुपागत्य बभाषिरे,
२० कुतो वयं तं भूतं त्याजयितुं न शक्ताः? यीशुना ते प्रोक्ताः, युष्माकमप्रत्ययात्; युष्मानहं तथ्यं वच्मि यदि युष्माकं सर्षपैकमात्रोपि विश्वासो जायते, तर्हि युष्माभिरस्मिन् शैले त्वमितः स्थानात् तत् स्थानं याहीति ब्रूते स तदैव चलिष्यति, युष्माकं
२१ किमप्यसाध्यञ्च कर्म्म न स्थास्यति। किन्तु प्रार्थनोपवासौ विनैतादृशो भूतो न त्याज्येत।

२२ अपरं तेषां गालील्प्रदेशे भ्रमणकाले यीशुना ते गदिताः,
२३ मनुजसुतो जनानां करेषु समर्पयिष्यते तै र्हनिष्यते च, किन्तु तृतीयेऽह्नि स उत्थापिष्यते, तेन ते भृशं दुःखिता बभूवुः।

२४ तदनन्तरं तेषु कफर्नाहूम्नगरमागतेषु करसंग्राहिणः पितरान्तिकमागत्य पप्रच्छुः, युष्माकं गुरुः किं मन्दिरार्थं करं
२५ न ददाति? ततः पितरः कथितवान् ददाति। ततस्तस्मिन् गृहमध्यमागते तस्य कथाकथनात् पूर्व्वमेव यीशुरुवाच, हे शिमोन्, मेदिन्या राजानः स्वस्वापत्येभ्यः किं विदेशिभ्यः
२६ केभ्यः करं गृह्लन्ति? अत्र त्वं किं बुध्यसे? ततः पितर उक्तवान्, विदेशिभ्यः। तदा यीशुरुक्तवान्, तर्हि सन्ताना मुक्ताः
२७ सन्ति। तथापि यथास्माभिस्तेषामन्तरायो न जन्यते, तत्कृते

जलधेस्तीरं गत्वा बडिशं क्षिप, तेनादौ यो मीन उत्थास्यति, तं धृत्वा तन्मुखे मोचिते तोलकैकं रूप्यं प्राप्स्यसि, तद् गृहीत्वा तव मम च कृते तेभ्यो देहि।

---

## १८ अष्टादशोऽध्यायः।

१ नम्रत्वनिर्विघ्नत्वयोर्विवरणं १५ दोषिभ्रातरं प्रत्याचरणं २१ क्षमाकरणसंख्यानिर्णयः २३ क्षमाकरणदृष्टान्तः।

तदानीं शिष्या यीशोः समीपमागत्य पृष्टवन्तः स्वर्गराज्ये १ कः श्रेष्ठः? ततो यीशुः क्षुद्रमेकं बालकं स्वसमीपमानीय २ तेषां मध्ये निधाय जगाद, युष्मानहं सत्यं ब्रवीमि, यूयं ३ मनोविनिमयेन क्षुद्रबालवत् न सन्तः स्वर्गराज्यं प्रवेष्टुं न शक्नुथ। यः कश्चिद् एतस्य क्षुद्रबालकस्य सममात्मानं नम्रीक- ४ रोति, सएव स्वर्गराज्ये श्रेष्ठः। यः कश्चिद् एतादृशं क्षुद्रबा- ५ लकमेकं मम नाम्नि गृह्लाति, स मामेव गृह्लाति। किन्तु यो ६ जनो मयि कृतविश्वासानामेतेषां क्षुद्रप्राणिनाम् एकस्यापि विघ्नं जनयति, कण्ठबद्धपेषणीकस्य तस्य सागरागाधजले मज्जनं श्रेयः। विघ्नात् जगतः सन्तापो भविष्यति, विघ्नोऽवश्यं जन- ७ यिष्यते, किन्तु येन मनुजेन विघ्नो जनिष्यते तस्यैव सन्तापो भवि- ष्यति। तस्मात् तव करश्चरणो वा यदि त्वां बाधते, तर्हि तं ८ छित्त्वा निक्षिप, द्विकरस्य द्विपदस्य वा तवानन्तवह्नौ निक्षेपात्, खञ्जस्य वा छिन्नहस्तस्य तव जीवने प्रवेशो वरं। अपरं तव ९ नेत्रं यदि त्वां बाधते, तर्हि तदप्युत्पाट्य निक्षिप, द्विनेत्रस्य नरकाग्नौ निक्षेपात् काणस्य तव जीवने प्रवेशो वरं। तस्माद- १० वधद्धं, एतेषां क्षुद्रप्राणिनाम् एकमपि मा तुच्छीकुरुत, यतो

युष्मानहं तथ्यं ब्रवीमि, स्वर्गे तेषां दूता मम स्वर्गस्थस्य पितु-
११ रास्यं नित्यं पश्यन्ति। एवं ये ये हारितास्तान् रक्षितुं मनुज-
१२ पुत्र आगच्छत्। यूयमत्र किं विविंग्ध्वे? कस्यचिद् यदि शतं
मेषाः सन्ति, तेषामेको हार्य्यते च, तर्हि स एकोनशतं मेषान्
१३ विहाय पर्व्वतं गत्वा तं हारितमेकं किं न मृगयते? यदि
च कदाचित् तन्मेषोद्देशं लभते, तर्हि युष्मानहं सत्यं कथयामि,
सोऽविपथगामिभ्य एकोनशतमेषेभ्योऽपि तदेकहेतोरधिकम्
१४ आह्लादते। तद्वद् एतेषां क्षुद्रप्राणिनाम् एकोपि नश्यतीति
युष्माकं स्वर्गस्थपितु र्नाभिमतम्।

१५ यद्यपि तव भ्राता त्वयि किमप्यपराध्यति, तर्हि गत्वा
१६ युवयोर्द्वयोः स्थितयोस्तस्यापराधं तं ज्ञापय। तत्र स यदि
तव वाक्यं शृणोति, तर्हि त्वं स्वभ्रातरं प्राप्तवान्, किन्तु यदि
न शृणोति, तर्हि द्वाभ्यां त्रिभि र्वा साक्षिभिः सर्व्वं वाक्यं
यथा निश्चितं जायते, तदर्थम् एकं द्वौ वा साक्षिणौ गृहीत्वा
१७ याहि। तेन स यदि तयो र्वाक्यं न मान्यते, तर्हि समाजं
तज्ज्ञापय, किन्तु यदि समाजस्यापि वाक्यं न मान्यते, तर्हि
१८ स तव समीपे देवपूजकइव चण्डालइव च भविष्यति। अहं
युष्मान् सत्यं वदामि, युष्माभिः पृथिव्यां यद् बध्यते तत् स्वर्गे
१९ भंत्स्यते; मेदिन्यां यत् मोच्यते, स्वर्गेऽपि तत् मोक्ष्यते। पुन-
रहं युष्मान् वदामि, मेदिन्यां युष्माकं यदि द्वावेकवाक्यीभूय
किञ्चित् प्रार्थयेते, तर्हि मम स्वर्गस्थपित्रा तत् तयोः कृते
२० सम्पन्नं भविष्यति। यतो यत्र द्वौ त्रयो वा मम नाम्नि मिलन्ति,
तत्रैवाहं तेषां मध्येऽस्मि।

२१ तदानीं पितरस्तत्समीपमागत्य कथितवान् हे प्रभो,

मम भ्राता मम यद्यपराध्यति, तर्हि तं कतिकृत्वः क्षमिष्ये? किं सप्तकृत्वः? यीशुस्तं जगाद, त्वां केवलं सप्तकृत्वो यावत् २२ न वदामि, किन्तु सप्तत्या गुणितं सप्तकृत्वो यावत्।

अपरं निजदासैः सह जिगणयिषुः कश्चिद् राजेव स्वर्ग- २३ राज्यं। आरब्धे तस्मिन् गणने सार्द्धसहस्रमुद्रापूरितानां दश- २४ सहस्रपुटकानाम् एकोऽधमर्णस्तत्समक्षमानायि। तस्य परि- २५ शोधनाय द्रव्याभावात् परिशोधनार्थं स तदीयभार्य्यापुत्त्रादि- सर्व्वस्वञ्च विक्रीयतामिति तत्प्रभुरादिदेश। तेन स दासस्तस्य २६ पादयोः पतन् प्रणम्य कथितवान्, हे प्रभो भवता धैर्य्ये कृते मया सर्व्वं परिशोधिष्यते। तदानीं दासस्य प्रभुः सकरुणः २७ सन् सकलर्णं क्षमित्वा तं तत्याज। किन्तु तस्मिन् दासे बहि २८ र्याते, तस्य शतं मुद्राचतुर्थांशान् यो धारयति, तं सहदासं दृष्ट्वा तस्य कण्ठं निष्पीड्य गदितवान्, मम यत् प्राप्यं तत् परिशोधय। तदा तस्य सहदासस्तत्पादयोः पतित्वा विनीय २९ बभाषे, त्वया धैर्य्ये कृते मया सर्व्वं परिशोधिष्यते। तथापि ३० स तत् नाङ्गीकृत्य यावत् सर्व्वमृणं न परिशोधितवान् तावत् तं कारायां स्थापयामास। तदा तस्य सहदासास्तस्यैतादृग् ३१ आचरणं विलोक्य प्रभोः समीपं गत्वा सर्व्वं वृत्तान्तं निवे- दयामासुः। तदा तस्य प्रभुस्तमाहूय जगाद, रे दुष्ट दास, ३२ त्वया मत्सन्निधौ प्रार्थिते मया तव सर्व्वमृणं त्यक्तं; यथा चाहं ३३ त्वयि करुणां कृतवान्, तथैव त्वत्सहदासे करुणाकरणं किं तव नोचितं? इति कथयित्वा तस्य प्रभुः क्रुध्यन् निजप्राप्यं ३४ यावत् स न परिशोधितवान्, तावत् प्रहारकानां करेषु तं समर्पितवान्। यदि यूयं स्वान्तःकरणैः स्वस्वसहजानाम् ३५

अपराधान् न क्षमध्वे, तर्हि मम स्वर्गस्थः पितापि युष्मान् प्रतीत्थं करिष्यति।

---

## १९ ऊनविंशोऽध्यायः।

१ रोगिणां स्वास्थ्यं ३ विवाहकथनं १३ शिशूनां ग्रहणं १६ युवलोकोपदेशः २३ धनिनां त्राणदुःसाध्यत्वं २७ खीष्टशिष्याणां पारितोषिकञ्च।

१ अनन्तरम् एतासु कथासु समाप्तासु यीशु र्गालील-
२ प्रदेशात् प्रस्थाय यर्दन्तीरस्थं यिहूदाप्रदेशं प्राप्तः। तदा तत्पश्चात् जननिवहे गते स तत्र तान् निरामयान् अकरोत्।
३ तदनन्तरं फिरूशिनस्तत्समीपमागत्य परीक्षितुं तं पप्रच्छुः,
४ कस्मादपि कारणात् नरेण स्वजाया परित्याज्या न वा? स प्रत्युवाच, प्रथमम् ईश्वरो नरत्वेन नारीत्वेन च मनुजान् ससर्ज,
५ तस्मात् कथितवान्, मानुषः स्वपितरौ परित्यज्य स्वपत्याम् आसक्ष्यते, तौ द्वौ जनावेकाङ्गौ भविष्यतः, किमेतद् युष्माभि
६ र्न पठितम्? अतस्तौ पुन र्न द्वौ तयोरेकाङ्गत्वं जातं, ईश्वरेण
७ यच्च समयुज्यत, मनुजो न तद् भिन्द्यात्। तदानीं ते तं प्रत्यवदन्, तथात्वे त्याज्यपत्रं दत्त्वा स्वां स्वां जायां त्यक्तुं
८ व्यवस्थां मूसाः कथं लिलेख? ततः स कथितवान्, युष्माकं मनसां काठिन्याद् युष्मान् स्वां स्वां जायां त्यक्तुम् अन्वमन्यत
९ किन्तु प्रथमाद् एषो विधिर्नासीत्। अतो युष्मानहं वदामि, व्यभिचारं विना यो निजजायां त्यजेत् अन्याञ्च विवहेत्, स परदारान् गच्छति; यश्च त्यक्तां नारीं विवहति सोपि पर-
१० दारेषु रमते। तदा तस्य शिष्यास्तं बभाषिरे, यदि स्वजायया साकं पुंस एतादृक् सम्बन्धो जायते, तर्हि विवहनमेव

न भद्रं। ततः स उक्तवान्, येभ्यस्तत्सामर्थ्यम् अदायि, तान् ११ विनान्यः कोपि मनुज एतन्मतं ग्रहीतुं न शक्नोति। कतिपया १२ जननक्लीवाः कतिपया नरकृतक्लीवाः स्वर्गराज्याय कतिपयाः स्वकृतक्लीवाश्च सन्ति, ये ग्रहीतुं शक्नुवन्ति ते गृह्लन्तु।

अपरम् यथा स शिशूनां गात्रेषु हस्तं दत्त्वा प्रार्थयते, १३ तदर्थं तत्समीपं शिशव आनीयन्त, तत आनयितृन् शिष्यास्तिरस्कृतवन्तः। किन्तु यीशुरुवाच, शिशवो मदन्तिकम् आग- १४ च्छन्तु, तान् मा वारयत, एतादृशां शिशूनामेव स्वर्गराज्यं। ततः स तेषां गात्रेषु हस्तं दत्त्वा तस्मात् स्थानात् प्रतस्थे। १५

अपरम् एक आगत्य तं पप्रच्छ, हे परमगुरो, अनन्तायुः १६ प्राप्तुं मया किं किं सत्कर्म्म कर्त्तव्यं? ततः स उवाच, मां १७ परमं कुतो वदसि? विनेश्वरं न कोपि परमः, किन्तु यद्यनन्तायुः प्राप्तुं वाञ्छसि, तर्ह्याज्ञाः पालय। तदा स १८ पृष्टवान्, काः का आज्ञाः? ततो यीशुः कथितवान्, नरं मा हन्याः, परदारान् मा गच्छेः, मा चोरयेः, मृषासाक्ष्यं मा दद्याः, निजपितरौ संमन्यस्व, स्वसमीपवासिनि स्ववत् १९ प्रेम कुरु। स युवा कथितवान्, आ बाल्याद् एताः पाल- २० यामि, इदानीं किं न्यूनमास्ते? ततो यीशुरवदत्, यदि २१ सिद्धो भवितुं वाञ्छसि, तर्हि गत्वा निजसर्व्वस्वं विक्रीय दरिद्रेभ्यो वितर, ततः स्वर्गे वित्तं लप्स्यसे; आगच्छ, मत्पश्चाद्वर्त्ती च भव। एतां वाचं श्रुत्वा स युवा स्वीयबहुसम्पत्ते २२ र्विषण्णः सन् चलितवान्।

तदा यीशुः स्वशिष्यान् अवदत्, धनिनां स्वर्गराज्यप्रवेशो २३ महादुष्कर इति युष्मानहं तथ्यं वदामि। पुनरपि युष्मानहं २४

वदामि, धनिनां स्वर्गराज्यप्रवेशात् सूचीछिद्रेण महाङ्गगमनं
२५ सुकरं। इति वाक्यं निशम्य शिष्या अतिचमत्कृत्य कथयामासुः,
२६ तर्हि कस्य परित्राणं भवितुं शक्नोति? तदा स तान् दृष्ट्वा
कथयामास, तत् मानुषाणामशक्यं भवति, किन्त्वीश्वरस्य
सर्व्वं शक्यम्।

२७ तदा पितरस्तं गदितवान्, पश्य, वयं सर्व्वं परित्यज्य
२८ भवतः पश्चाद्वर्त्तिनो ऽभवाम; वयं किं प्राप्स्यामः? ततो
यीशुः कथितवान्, युष्मानहं तथ्यं वदामि, यूयं मम पश्चा-
द्वर्त्तिनो जाता इति कारणात् नवीनसृष्टिकाले यदा मनुज-
सुतः स्वीयैश्वर्य्यसिंहासन उपवेक्ष्यति, तदा यूयमपि द्वादश-
सिंहासनेषूपविश्य इस्रायेलीयद्वादशवंशानां विचारं करिष्यथ।
२९ अन्यच्च यः कश्चित् मम नामकारणात् गृहं वा भ्रातरं वा
भगिनीं वा पितरं वा मातरं वा जायां वा बालकं वा भूमिं
परित्यजति, स तेषां शतगुणं लप्स्यते, अनन्तायुषोऽधिकारित्वञ्च
३० प्राप्स्यति। किन्तु अग्रीया अनेके जनाः पश्चात्, पश्चातीयाश्चानेके
लोका अग्रे भविष्यन्ति।

---

## २० विंशोऽध्यायः।

१ कृषकानां दृष्टान्तः १७ ख्रीष्टस्य स्वमरणदुःखस्य प्रकाशनं २० शिष्यद्वयाय प्रत्युत्तरं दत्त्वा नम्रतोपदेशः २९ अन्धद्वयाय नेत्रदानं।

१ स्वर्गराज्यम् एतादृशा केनचिद् गृहस्थेन समं, योऽति-
२ प्रभाते निजद्राक्षाक्षेत्रे कृषकान् नियोक्तुं गतवान्। पश्चात्
तैः साकं दिनैकभृतिं मुद्राचतुर्थांशं निरूप्य तान् द्राक्षाक्षेत्रं
३ प्रेरयामास। अनन्तरं प्रहरैकवेलायां गत्वा हट्टे कतिपयान्
४ निष्कर्म्मकान् विलोक्य तानवदत्, यूयमपि मम द्राक्षाक्षेत्रं

यात, युष्मभ्यमहं योग्यभृतिं दास्यामि, ततस्ते वव्रजुः। पुनश्च ५
स द्वितीयतृतीययोः प्रहरयो र्वहि र्गत्वा तथैव कृतवान्।
ततो दण्डद्वयावशिष्टायां वेलायां वहि र्गत्वापरान् कति- ६
पयजनान् निष्कर्म्मकान् विलोक्य पृष्टवान्, यूयं किमर्थम्
अत्र सर्व्वं दिनं निष्कर्म्माणस्तिष्ठथ? ते प्रत्यवदन्, अस्मान् न ७
कोपि कर्म्मणि नियुंक्ते। तदानीं स कथितवान्, यूयमपि मम
द्राक्षाक्षेत्रं यात, तेन योग्यां भृतिं लप्स्यथ। तदनन्तरं सन्ध्यायां ८
सत्यां सएव द्राक्षाक्षेत्रपतिरध्यक्षं गदितवान्, कृषकान् आहूय
शेषजनमारभ्य प्रथमं यावत् तेभ्यो भृतिं देहि। तेन ये ९
दण्डद्वयावस्थिते समायातास्तेषाम् एकैको जनो मुद्राचतु-
र्थांशं प्राप्नोत्। तदानीं प्रथमनियुक्ता जना आगत्यानुमितवन्तो १०
वयमधिकं प्राप्स्यामः, किन्तु तैरपि मुद्राचतुर्थांशोऽलाभि।
ततस्ते तं गृहीत्वा तेन क्षेत्रपतिना साकं वाग्युद्धं कुर्व्वन्तः ११
कथयामासुः, वयं कृत्स्नं दिनं तापक्लेशौ सोढवन्तः, किन्तु १२
पश्चातीया ये जना दण्डद्वयमात्रं परिश्रान्तवन्तस्तेऽस्माभिः
समानांशाः कृताः। ततः स तेषामेकं प्रत्युवाच, हे वत्स, मया १३
त्वां प्रति कोप्यन्यायो न कृतः किं त्वया मत्समक्षं मुद्राचतु-
र्थांशो नाङ्गीकृतः? तस्मात् तव यत् प्राप्यं तदादाय याहि, १४
तुभ्यं यति, पश्चातीयनियुक्तलोकायापि तति दातुमिच्छामि।
स्वेच्छया निजद्रव्यव्यवहरणं किं मया न कर्त्तव्यं? मम दातृ- १५
त्वात् त्वया किम् ईर्ष्यादृष्टिः क्रियते? इत्थम् अग्रीयलोकाः १६
पश्चातीया भविष्यन्ति, पश्चातीयजनाश्चाग्रीया भविष्यन्ति,
आहूता बहवः किन्त्वल्पे मनोभिलषिताः।

तदनन्तरं यीशु र्यिरूशालम्नगरं गच्छन् मार्गमध्ये १७

१८ शिष्यान् एकान्ते बभाषे, पश्य वयं यिरूशालम्नगरं यामः, तत्र प्रधानयाजकाध्यापकानां करेषु मनुष्यपुत्त्रः समर्पिष्यते;
१९ ते च तं हन्तुमाज्ञाप्य तिरस्कृत्य वेत्रेण प्रहर्त्तुं क्रुशे घातयितुञ्चान्यदेशीयानां करेषु समर्पयिष्यन्ति, किन्तु स तृतीयदिवसे श्मशानाद् उत्थापिष्यते।

२० तदानीं सिवदीयस्य नारी स्वपुत्त्रावादाय यीशोः समीपम्
२१ एत्य प्रणम्य कञ्चनानुग्रहं तं ययाचे। तदा यीशुस्तां प्रोक्तवान्, त्वं किं याचसे? ततः सा बभाषे, भवतो राजत्वे समानयोः सुतयोरेकं भवद्दक्षिणपार्श्वे द्वितीयं वामपार्श्वे उपवेष्टुम् आज्ञा-
२२ पयतु। यीशुः प्रत्युवाच, युवाभ्यां यद् याच्यते, तन्न बुध्यते, अहं येन कंसेन पास्यामि युवाभ्यां किं तेन पातुं शक्यते? अहञ्च येन मज्जनेन मज्जिष्ये, युवाभ्यां किं तेन मज्जयितुं शक्यते? ते जगदुः
२३ शक्यते। तदा स उक्तवान्, युवां मम कंसेनावश्यं पास्यथः, मम मज्जनेन च युवामपि मज्जिष्येथे, किन्तु येषां कृते मत्-तातेन निरूपितम् इदं तान् विहायान्यं कमपि मद्दक्षिणपार्श्वे
२४ वामपार्श्वे च समुपवेशयितुं ममाधिकारो नास्ति। एतां कथां
२५ श्रुत्वान्ये दशशिष्यास्तौ भ्रातरौ प्रति चुकुपुः। किन्तु यीशुः स्वसमीपं तानाहूय जगाद, अन्यदेशीयलोकानां नरपतयस्तान् अधिकुर्व्वन्ति, ये तु महान्तस्ते तान् शासति, इति
२६ यूयं जानीथ। किन्तु युष्माकं मध्ये न तथा भवेत्, युष्माकं
२७ यः कश्चित् महान् बुभूषति, स युष्मान् सेवेत; यश्च युष्माकं
२८ मध्ये मुख्यो बुभूषति, स युष्माकं दासो भवेत्। इत्थं मनुजपुत्त्रः सेव्यो भवितुं नहि, किन्तु सेवितुं बहूनां परित्राणमूल्यार्थं स्वप्राणान् दातुञ्चागतः।

अनन्तरं यिरीहोनगरात् तेषां वहिर्गमनसमये तस्य २९ पश्चाद् बहवो लोका वव्रजुः। अपरं वर्त्मपार्श्व उपविशन्तौ ३० द्वावन्धौ तेन मार्गेण यीशो र्गमनं निशम्य प्रोच्चैः कथयामासतुः, हे प्रभो दायूदः सन्तान, आवयो र्दयां विधेहि। ततो लोकाः सर्व्वे तुष्णीम्भवतमित्युक्त्वा तौ तर्जयामासुः; तथापि ३१ तौ पुनरुच्चैः कथयामासतुः हे प्रभो दायूदः सन्तान, आवां दयस्व। तदानीं यीशुः स्थगितः सन् तावाहूय भाषितवान्, ३२ युवयोः कृते मया किं कर्त्तव्यं? युवां किं कामयेथे? तदा ३३ तावुक्तवन्तौ, प्रभो नेत्राणि नौ प्रसन्नानि भवेयुः। तदानीं ३४ यीशुस्तौ प्रति प्रसन्नः सन् तयो र्नेत्राणि पस्पर्श, तेनैव तौ सुवीक्षाञ्चक्राते तत्पश्चात् जग्मतुश्च।

---

## २१ एकविंशोऽध्यायः।

१ गर्द्दभीमारुह्य यीशो र्यिरूशालम्यानं १२ मन्दिराद् बणिजां दूरीकरणं १८ निष्फलोडुम्बरस्य शपनं २३ मुख्ययाजकानां निरुत्तरीकरणं २८ द्वयोः सुतयो र्दृष्टान्तकथनं ३३ दुष्टस्यक्षेत्रकृषकाणां दृष्टान्तश्च।

अनन्तरं तेषु यिरूशालम्नगरस्य समीपवर्त्तिनो जैतुन- १ नामकधराधरस्य समीपस्थितं वैत्फगिग्रामम् आगतेषु, यीशुः शिष्यद्वयं प्रेषयन् जगाद, युवां सम्मुखस्थग्रामं गत्वा बद्धां यां २ सवत्सां गर्द्दभीं हठात् प्राप्स्यथः, तां मोचयित्वा मदन्तिकम् आनयतं। तत्र यदि कश्चित् किञ्चिद् वक्ष्यति, तर्हि वदिष्यथः, ३ एतस्यां प्रभोः प्रयोजनमास्ते, तेन स तत्क्षणात् प्रहेष्यति।

सीयोनः कन्यकां यूयं भाषध्वमिति भारतीं। ४
पश्य ते नम्रशीलः सन् नृप आरुह्य गर्द्दभीं। ५
अर्थादारुह्य तद्वत्समायास्यति त्वदन्तिकं।

६ भविष्यद्वादिनोक्तं वचनमिदं तदा सफलमभूत्। अनन्तरं
७ तौ शिष्यौ यीशो र्यथानिदेशं तं ग्रामं गत्वा गर्दभीं तद्वत्सञ्च
समानीतवन्तौ, पश्चात् तदुपरि स्वीयवसनानि पातयित्वा
८ तमारोहयामासतुः। ततो बहवो लोका निजवसनानि पथि
प्रसारयितुमारेभिरे, कतिपया जनाश्च पादपपर्णादिकं
९ छित्वा पथि विस्तारयामासुः। अग्रगामिनः पश्चाद्गामिनश्च
मनुजा उच्चैर्जय जय दायूदः सन्तानेति जगदुः परमेश्वरस्य
१० नाम्ना य आयाति स धन्यः, सर्व्वोपरिस्थस्वर्गेपि जयति। इत्थं
तस्मिन् यिरूशालमं प्रविष्टे कोऽयमिति कथनात् कृत्स्नं
११ नगरं चञ्चलमभवत्। तत्र लोकाः कथयामासुः, एष गाली-
ल्प्रदेशीय-नासरतीय-भविष्यद्वादी यीशुः।

१२　अनन्तरं यीशुरीश्वरस्य मन्दिरं प्रविश्य तन्मध्यात् क्रय-
विक्रयिणो वहिश्चकार; वणिजां मुद्रासनानि कपोतविक्र-
१३ यिणाञ्चासनानि च न्युव्जयामास। अपरं तानुवाच, एषा
लिपिरास्ते, 'मम गृहं प्रार्थनागृहमिति विख्यास्यति,' किन्तु
१४ यूयं तद् दस्यूनां गह्वरं कृतवन्तः। तदनन्तरम् अन्धखञ्ज-
लोकास्तस्य समीपमागताः, स तान् निरामयान् कृतवान्।
१५ यदा प्रधानयाजका अध्यापकाश्च तेन कृतान्येतानि चित्र-
कर्म्माणि ददृशुः, जय जय दायूदः सन्तान, मन्दिरे बाल-
कानाम् एतादृशम् उच्चध्वनिं शुश्रुवुश्च, तदा महाक्रुद्धा बभूवुः,
१६ तं पप्रच्छुश्च, इमे यद् वदन्ति, तत् किं त्वं शृणोषि? ततो
यीशुस्तान् अवोचत्, सत्यम्;

स्तन्यपायिशिशूनाञ्च बालकानाञ्च वक्त्रतः।
स्वकीयं महिमानं त्वं संप्रकाशयसि स्वयं।

एतद्वाक्यं यूयं किं नापठत? ततस्तान् विहाय स नगराद् १७ वैथनियाग्रामं गत्वा तत्र रजनीं यापयामास।

अनन्तरं प्रभाते सति यीशुः पुनरपि नगरमागच्छन् १८ क्षुधार्त्तो बभूव। ततो मार्गपार्श्व उडुम्बरवृक्षमेकं विलोक्य १९ तत्समीपं गत्वा पत्राणि विना किमपि न प्राप्य तं पादपं प्रोवाच, अद्यारभ्य कदापि त्वयि फलं न भवतु; तेन तत्क्षणात् स उडुम्बरमहीरुहः शुष्कतां गतः। तद् दृष्ट्वा शिष्या आश्चर्य्यं २० विज्ञाय कथयामासुः, आः, उडुम्बरपादपोऽतितूर्णं शुष्कोऽभवत्। ततो यीशुस्तानुवाच, युष्मानहं सत्यं वदामि, यदि २१ यूयमसन्दिग्धाः प्रतीथ, तर्हि यूयमपि केवलोडुम्बरपादपं प्रतीत्थं कर्त्तुं शक्ष्यथ, तन्न, त्वं चलित्वा सागरे पतेति वाक्यं युष्माभिरस्मिन् शैले प्रोक्तेपि तदैव तद् घटिष्यते। तथा विश्वस्य २२ प्रार्थ्य युष्माभि र्यद् याचिष्यते, तदेव प्राप्स्यते।

अनन्तरं मन्दिरं प्रविश्योपदेशनसमये तत्समीपं प्रधान- २३ याजकाः प्राचीनलोकाश्चागत्य पप्रच्छुः, त्वया केन सामर्थ्येनैतानि कर्म्माणि क्रियन्ते? केन वा तुभ्यमेतानि सामर्थ्यानि दत्तानि? ततो यीशुः प्रत्यवदत्, अहमपि युष्मान् वाचमेकां २४ पृच्छामि, यदि यूयं तदुत्तरं दातुं शक्ष्यथ, तदा केन सामर्थ्येन कर्म्माण्येतानि करोमि, तदहं युष्मान् वक्ष्यामि। योहनो २५ मज्जनं कस्याज्ञयाभवत्? किमीश्वरस्य मनुष्यस्य वा? ततस्ते परस्परं विविच्य कथयामासुः, यदीश्वरस्येति वदामस्तर्हि यूयं तं कुतो न प्रत्यैत? वाचमेतां वक्ष्यति। मनुष्यस्येति २६ वक्तुमपि लोकेभ्यो बिभीमः, यतः सर्व्वैरपि योहन् भविष्यद्वादीति ज्ञायते। तस्मात् ते यीशुं प्रत्यवदन्, तद् वयं न २७

विघ्नः । तदा स तानुक्तवान्, तर्हि केन सामर्थ्येन कर्म्माण्येता-
न्यहं करोमि, तदप्यहं युष्मान् न वच्यामि ।

२८　कस्यचिज्जनस्य द्वौ सुतावास्तां स एकस्य सुतस्य समीपं
गत्वा जगाद, हे सुत, त्वमद्य मम द्राक्षाक्षेत्रे कर्म्म कर्त्तुं व्रज ।
२९ ततः स उक्तवान्, न यास्यामि, किन्तु शेषेऽनुतप्य जगाम ।
३० अनन्तरं सोन्यसुतस्य समीपं गत्वा तथैव कथितवान्; ततः
३१ स प्रत्युवाच, महेच्छ यामि, किन्तु न गतः । एतयोः पुत्त्रयो
र्मध्ये पितुरभिमतं केन पालितं? युष्माभिः किं बुध्यते?
ततस्ते प्रत्यूचुः, प्रथमेन पुत्त्रेण । तदानीं यीशुस्तानुवाच, अहं
युष्मान् तथ्यं वदामि, चण्डाला गणिकाश्च युष्माकमग्रत ईश्व-
३२ रस्य राज्यं प्रविशन्ति । यतो युष्माकं समीपं योहनि धर्म्म-
पथेनागते यूयं तं न प्रतीथ, किन्तु चण्डाला गणिकाश्च
तं प्रत्यायन्, तद् विलोक्यापि यूयं प्रत्येतुं नाखिद्यध्वं ।

३३　अपरमेकं दृष्टान्तं शृणुत, कश्चिद् गृहस्थः क्षेत्रे द्राक्षा-
लता रोपयित्वा तच्चतुर्दिक्षु वारणीं विधाय तन्मध्ये द्राक्षा-
यन्त्रं स्थापितवान्, मञ्चञ्च निर्म्मितवान्, ततः कृषकेषु तत् क्षेत्रं
३४ समर्प्य स्वयं दूरदेशं जगाम । तदनन्तरं फलसमय उपस्थिते
स फलानि प्राप्तुं कृषीबलानां समीपं निजदासान् प्रेषया-
३५ मास । किन्तु कृषीबलास्तस्य तान् दासेयान् धृत्वा कञ्चन
प्रहृतवन्तः, कञ्चन पाषाणैराहतवन्तः, कञ्चन च हतवन्तः ।
३६ पुनरपि स प्रभुः प्रथमतोऽधिकदासेयान् प्रेषयामास, किन्तु
३७ ते तान् प्रत्यपि तथैव चक्रुः । अनन्तरं मम सुते गते तं
समादरिष्यन्ते, इत्युक्त्वा शेषे स निजसुतं तेषां सन्निधिं प्रेषया-
३८ मास । किन्तु ते कृषीबलाः सुतं वीक्ष्य परस्परम् इति

मन्त्रयितुम् आरेभिरे, अयमुत्तराधिकारी वयमेनं निहत्या-
स्याधिकारं स्ववशीकरिष्यामः। पश्चात् ते तं धृत्वा द्राक्षा- ३९
क्षेत्राद् बहिः पातयित्वाबधिषुः। यदा स द्राक्षाक्षेत्रपतिरा- ४०
गमिष्यति, तदा तान् कृषीवलान् किं करिष्यति? ततस्ते ४१
प्रत्यवदन्, तान् कलुषिणो दारुणयातनाभिराहनिष्यति, ये
च समयानुक्रमात् फलानि दास्यन्ति, तादृशेषु कृषीवलेषु
क्षेत्रं समर्पयिष्यति। तदा यीशुना ते गदिताः, ४२

ग्रहणं न कृतं यस्य पाषाणस्य निचायकैः।
प्रधानप्रस्तरः कोणे सएव संभविष्यति।
एतत् परेशितुः कर्म्मास्मद्दृष्टावद्भुतं भवेत्।

धर्म्मग्रन्थे लिखितमेतद्वचनं युष्माभिः किं नापाठि? तस्मादहं ४३
युष्मान् वदामि, युष्मत्त ईश्वरीयराज्यमपनीय फलोत्पादयि-
त्रन्यजातये दायिष्यते। यो जन एतत्पाषाणोपरि पतिष्यति, ४४
स भंक्ष्यते, किन्त्वयं पाषाणो यस्योपरि पतिष्यति, तं स
धूलिवत् चूर्णीकरिष्यति। तदानीं प्रधानयाजकाः फिरूशि- ४५
नश्च तस्येमां दृष्टान्तकथां श्रुत्वा सोऽस्मानुद्दिश्य कथितवान्,
इति विज्ञाय तं धर्त्तुं चेष्टितवन्तः; किन्तु लोकेभ्यो बिभ्युः, ४६
यतो लोकैः स भविष्यद्वादीत्यज्ञायि।

---

## २२ द्वाविंशोऽध्यायः।

१ राजपुत्रस्य विवाहदृष्टान्तः १५ राजकरदानोपदेशः २३ श्मशानोत्थानोपदेशः ३४ प्रधानाज्ञानिर्णयः ४१ ख्रिष्टीयं फिरूशिनां निरुत्तरत्वं।

अनन्तरं यीशुः पुनरपि दृष्टान्तेन तान् अवादीत्, स्वर्गी- १
यराज्यम् एतादृशस्य नृपतेः समं, यो निजपुत्रं विवाहयन् २
सर्व्वान् निमन्त्रितान् आनेतुं दासेयान् प्रहितवान्, किन्तु

३ ते समागन्तुं नेष्टवन्तः। ततो राजा पुनरपि दासानन्यान्
४ इत्युक्त्वा प्रेषयामास, निमन्त्रितान् वदत, पश्यत, मम भोज्य-
मासादितमास्ते, निजवृषादिपुष्टजन्तून् मारयित्वा सर्व्वं
५ खाद्यद्रव्यमासादितवान्, यूयं विवाहमागच्छत। तथापि ते
तुच्छीकृत्य केचित् निजक्षेत्रं केचिद् वाणिज्यं प्रति स्वस्वमा-
६ र्गेण चलितवन्तः। अन्ये लोकास्तस्य दासेयान् धृत्वा दौरात्म्यं
७ व्यवहृत्य तानबधिषुः। अनन्तरं स नृपतिस्तां वार्त्तां श्रुत्वा
क्रुध्यन् सैन्यानि प्रहित्य तान् घातकान् हत्वा तेषां नगरं
८ दाहयामास। ततः स निजदासेयान् बभाषे, विवाहीयं भोज्य-
९ मासादितमास्ते, किन्तु निमन्त्रिता जना अयोग्याः। तस्माद्
यूयं राजमार्गं गत्वा यावतो मनुजान् पश्यत, तावतएव
१० विवाहीयभोज्याय निमन्त्रयत। तदा ते दासेया राजमार्गं
गत्वा भद्रान् अभद्रान् वा यावतो जनान् ददृशुः, तावतएव
संगृह्यानयन्; ततोऽभ्यागतमनुजै र्विवाहगृहम् अपूर्य्यत।
११ तदानीं स राजा सर्व्वानभ्यागतान् द्रष्टुम् अभ्यन्तरमागतवान्;
१२ तदा तत्र विवाहीयवसनहीनमेकं जनं वीक्ष्य तं जगाद्, हे
मित्र, त्वं विवाहीयवसनं विना कथमत्र प्रविष्टवान्? तेन स
१३ निरुत्तरो बभूव। तदा राजा निजानुचरान् अवदत्, एतस्य
करचरणान् बद्ध्वा यत्र रोदनं दन्तैर्दन्तघर्षणञ्च भवति,
१४ तत्र वहिर्भूततमिस्रे तं निक्षिपत। इत्थं बहव आहूता अल्पे
मनोभिमताः।

१५　अनन्तरं फिरूशिनः प्रगत्य यथा संलापेन तम् उन्माथे
१६ पातयेयुस्तथा मन्त्रयित्वा हेरोदीयमनुजैः साकं निजशिष्य-
गणेन तं प्रति कथयामासुः, हे गुरो, भवान् सत्यः सत्यमी-

ऐश्वरीयमार्गमुपदिशति, कमपि मानुषं नानुरुध्यते, कमपि नापेक्षते च, तद् वयं जानीमः। अतः कैसरभूपाय करो- १७ ऽस्माकं दातव्यो न वा? अत्र भवता किं बुध्यते? तद् अस्मान् वदतु। ततो यीशुस्तेषां खलतां विज्ञाय कथित- १८ वान्, रे कपटिनः, यूयं कुतो मां परीक्षध्वे? तत्करदानस्य १९ मुद्रां मां दर्शयत। तदानीं तैस्तस्य समीपं मुद्राचतुर्थभाग २० आनीते स तान् पप्रच्छ, अत्र कस्येयं मूर्त्ति र्नाम चास्ते? ते जगदुः, कैसरभूपस्य। ततः स उक्तवान्, कैसरस्य यत् तत् २१ कैसराय दत्त, ईश्वरस्य यत् तद् ईश्वराय दत्त। इति वाक्यं २२ निशम्य ते विस्मयं विज्ञाय तं विहाय चलितवन्तः।

तस्मिन्नहनि सिदूकिनोऽर्थात् श्मशानात् नोत्थास्यन्तीति २३ वाक्यं ये वदन्ति, ते यीशोरन्तिकम् आगत्य पप्रच्छुः, हे गुरो, २४ कश्चिन्मनुजश्चेत् निःसन्तानः सन् प्राणान् त्यजति, तर्हि तस्य भ्राता तस्य जायां व्यूह्य भ्रातुः सन्तानम् उत्पादयिष्यतीति मूसा आदिष्टवान्। किन्त्वस्माकमत्र केऽपि जनाः सप्तसहोदरा २५ आसन्, तेषां ज्येष्ठ एकां कन्यां व्यवहत्, अपरं प्राणत्यागकाले स्वयं निःसन्तानः सन् तां स्त्रियं स्वभ्रातरि समर्पितवान्, ततो द्वितीयादिसप्तमान्ताश्च तथैव चक्रुः। शेषे सापि नारी २६ ममार। मृतानाम् उत्थानसमये तेषां सप्तानां मध्ये सा नारी २८ कस्य भार्य्या भविष्यति? यस्मात् सर्व्वएव तां व्यवहन्। ततो २९ यीशुः प्रत्यवादीत्, यूयं धर्म्मपुस्तकम् ईश्वरीयां शक्तिञ्च न विज्ञाय भ्रान्तिमन्तः। उत्थानप्राप्ता लोका न विवहन्ति, ३० न च वाचा दीयन्ते, किन्त्वीश्वरस्य स्वर्गस्थदूतानां सदृशा भवन्ति। अपरं मृतानामुत्थानमधि युष्मान् प्रतीयमीश्वरोक्तिः, ३१

'अहमिब्राहीम ईश्वर इस्हाक ईश्वरो याकूब ईश्वर' इति
३२ किं युष्माभि र्नापाठि? किन्त्वीश्वरो जीवताम् ईश्वरः, स
३३ मृतानामीश्वरो नहि। इति श्रुत्वा सर्व्वे लोकास्तस्योपदेशाद्
विस्मयं गताः।

३४ अनन्तरं सिदूकिनाम् निरुत्तरत्ववार्त्तां निशम्य फिरूशिन
३५ एकत्र मिलितवन्तः, तेषामेको व्यवस्थापको यीशुं परीक्षितुं
३७ पप्रच्छ, हे गुरो व्यवस्थाशास्त्रमध्ये काज्ञा श्रेष्ठा? ततो यीशु-
रुवाच, त्वं सर्व्वान्तःकरणैः सर्व्वप्राणैः सर्व्वचित्तैश्च साकं प्रभौ
३८ परमेश्वरे प्रीयस्व, एषा प्रथममहाज्ञा। तस्याः सदृशी
३९ द्वितीयाज्ञैषा, तव समीपवासिनि स्वात्मनीव प्रेम कुरु।
४० अनयो र्द्वयोराज्ञयोः कृत्स्नव्यवस्थाया भविष्यद्वक्तृग्रन्थस्य च
भारस्तिष्ठति।

४१ अनन्तरं फिरूशिनाम् एकत्र स्थितिकाले यीशुस्तान्
४२ पप्रच्छ, ख्रीष्टमधि युष्माकं कीदृग्बोधो जायते? स कस्य
४३ सन्तानः? ततस्ते प्रत्यवदन्, दायूदः सन्तानः। तदा स उक्त-
वान्, तर्हि दायूद् कथम् आत्माधिष्ठानेन तं प्रभुं वदति? यथा

४४ मम प्रभुमिदं वाक्यमवदत् परमेश्वरः।
तवारीन् पादपीठं ते यावन्नहि करोम्यहं।
तावत् कालं मदीये त्वं दक्षपार्श्व उपाविश।

४५ अतो यदि दायूद् तं प्रभुं वदति, तर्हि स कथं तस्य सन्तानो
४६ भवति? तदानीं तेषां कोपि तद्वाक्यस्य किमप्युत्तरं दातुं
नाशक्नोत्; तद्दिनमारभ्य तं किमपि वाक्यं प्रष्टुं कस्यापि
साहसो नाभवत्।

---

# २३ त्रयोविंशोऽध्यायः।

१ फिरूशिनामध्यापकानाञ्च कथामाननाचारत्यजनयोरुपदेशः १३ तेषां सन्ताप॰ प्रकाशनं ३४ यिरूशालमो विनाशे भविष्यद्वाक्यम्।

अनन्तरं यीशु र्जननिवहं शिष्यांश्चावदत्, अध्यापकाः १
फिरूशिनश्च मूसासने उपविशन्ति, अतस्ते युष्मान् यद्यत् २
मन्तुम् आज्ञापयन्ति, तत् मन्यध्वं पालयध्वञ्च, किन्तु तेषां
कर्म्मानुरूपं कर्म्म न कुरुध्वं; यतस्तेषां वाक्यमात्रं सारं कार्य्ये
किमपि नास्ति। ते दुर्व्वहान् गुरुतरान् भारान् बद्ध्वा मनुष्याणां ४
स्कन्धोपरि समर्पयन्ति, किन्तु स्वयमङ्गुल्यैकयापि न चाल-
यन्ति। केवलं लोकदर्शनाय सर्व्वकर्म्माणि कुर्व्वन्ति; फलतः ५
पट्टबन्धान् प्रसार्य्य धारयन्ति, स्ववस्त्रेषु च दीर्घग्रन्थीन् धार- ६
यन्ति; भोजनभवन उच्चस्थानं, भजनभवने प्रधानमासनं, हट्टे ७
नमस्कारं गुरुरिति सम्बोधनञ्चैतानि सर्व्वाणि वाञ्छन्ति।
किन्तु यूयं गुरव इति सम्बोधनीया मा भवत, यतो युष्माकम् ८
एकः ख्रीष्टएव गुरु र्यूयं सर्व्वे मिथो भ्रातरश्च। पुनः पृथिव्यां ९
कमपि पितेति मा सम्बुध्यध्वं, यतो युष्माकमेकः स्वर्गस्थ-
एव पिता। यूयं गुरव इति सम्भाषिता मा भवत, यतो युष्माक- १०
मेकः ख्रीष्टएव गुरुः। अपरं युष्माकं मध्ये यः पुमान् श्रेष्ठः ११
स युष्मान् सेविष्यते। यतो यः स्वमुन्नमति, स नतः करिष्यते; १२
किन्तु यः कश्चित् स्वमवनतं करोति, स उन्नतः करिष्यते।

हन्त कपटिन उपाध्यायाः फिरूशिनश्च, यूयं मनुजानां १३
समक्षं स्वर्गद्वारं रुन्ध, यूयं स्वयं तेन न प्रविशथ, प्रवि-
विक्षूनपि वारयथ। वत कपटिन उपाध्यायाः फिरू- १४
शिनश्च यूयं छलाद् दीर्घं प्रार्थ्य विधवानां सर्व्वस्वं ग्रसथ,

१५ युष्माकं घोरतरदण्डो भविष्यति। हन्त कपटिन उपाध्याया:
फिरूशिनश्च, यूयमेकं स्वधर्म्मावलम्बिनं कर्त्तुं सागरं भूमण्ड-
लञ्च प्रदक्षिणीकुरुथ, कञ्चन प्राप्य स्वतो द्विगुणनरकभाजनं
१६ तं कुरुथ। वत अन्धपथदर्शकाः सर्व्वे, यूयं वदथ, मन्दिरस्य
शपथकरणात् किमपि न देयं; किन्तु मन्दिरस्थसुवर्णस्य
१७ शपथकरणाद् देयं। हे मूढा हे अन्धाः सुवर्णं तत्सुवर्ण-
१८ पावकमन्दिरम् एतयोरुभयो र्मध्ये किं श्रेयः? अन्यच्च
वदथ, यज्ञवेद्याः शपथकरणात् किमपि न देयं, किन्तु तदु-
१९ परिस्थितस्य नैवेद्यस्य शपथकरणाद् देयं। हे मूढा हे अन्धाः,
२० नैवेद्यं तन्नैवेद्यपावकवेदिरेतयोरुभयो र्मध्ये किं श्रेयः? अतः
केनचिद् यज्ञवेद्याः शपथे कृते तदुपरिस्थस्य सर्व्वस्य शपथः
२१ क्रियते। केनचित् मन्दिरस्य शपथे कृते मन्दिरतन्निवासिनोः
२२ शपथः क्रियते। केनचित् स्वर्गस्य शपथे कृते ईश्वरीयसिंहासन-
२३ तदुपर्य्युपविष्टयोः शपथः क्रियते। हन्त कपटिन उपाध्यायाः
फिरूशिनश्च, यूयं पोदिनायाः सितच्छत्राया जीरकस्य च
दशमांशान् दत्थ, किन्तु व्यवस्थाया गुरुतरान् न्यायदया-
विश्वासान् परित्यजथ; इमे युष्माभिराचरणीया अमी च
२४ न लंघनीयाः। हे अन्धपथदर्शका यूयं मशकान् अप-
२५ सारयथ, किन्तु महाङ्गान् ग्रसथ। हन्त कपटिन उपा-
ध्यायाः फिरूशिनश्च, यूयं पानपात्राणां भोजनपात्राणाञ्च
वहिः परिष्कुरुथ; किन्तु तदभ्यन्तरं दुरात्मतया कलुषेण च
२६ परिपूर्णमास्ते। हे अन्धाः फिरूशिलोका आदौ पानपात्राणां
भोजनपात्राणाञ्चाभ्यन्तरं परिष्कुरुत, तेन तेषां वहिरपि
२७ परिष्कारिष्यते। हन्त कपटिन उपाध्यायाः फिरूशिनश्च, यूयं

शुक्लीकृतश्मशानस्वरूपा भवथ, यथा श्मशानभवनस्य वहि-श्चारु, किन्त्वभ्यन्तरं मृतलोकानां कीकशैः सर्व्वप्रकारमलेन च परिपूर्णम्; तथैव यूयमपि लोकानां समक्षं वहिर्धार्म्मिकाः २८ किन्त्वन्तःकरणेषु केवलकापट्याधर्म्माभ्यां परिपूर्णाः। हा हा २९ कपटिन उपाध्यायाः फिरूशिनश्च, यूयं भविष्यद्वादिनां श्मशानगेहं निर्म्माथ, साधूनां श्मशाननिकेतनं शोभयथ वदथ ३० च यदि वयं स्वेषां पूर्व्वपुरुषाणां काल अस्थास्याम, तर्हि भविष्यद्वादिनां शोणितपातने तेषां सहभागिनो नाभवि-ष्याम। अतो यूयं भविष्यद्वादिघातकानां सन्ताना इति ३१ स्वयमेव स्वेषां साक्ष्यं दत्थ। अतो यूयं निजपूर्व्वपुरुषाणां ३२ परिमाणपात्रं परिपूरयत। रे भुजगाः कृष्णभुजगवंशाः, यूयं ३३ कथं नरकदण्डाद् रक्षिष्यध्वे।

पश्यत, युष्माकमन्तिकम् अहं भविष्यद्वादिनो बुद्धिमत ३४ उपाध्यायांश्च प्रेषयिष्यामि, किन्तु तेषां कतिपया युष्माभि र्घानिष्यन्ते, क्रुशे च घानिष्यन्ते, केचिद् भजनभवने कषाभि-राघानिष्यन्ते, नगरे नगरे ताडिष्यन्ते च; तेन सत्पुरुषस्य ३५ हाबिलो रक्तपातमारभ्य बेरिखियः पुत्रं यं सिखरियं यूयं मन्दिरयज्ञवेद्यो र्मध्ये हतवन्तः, तदीयशोणितपातं यावद् अस्मिन् देशे यावतां साधुपुरुषाणां शोणितपातो ऽभवत् तत् सर्व्वेषामागसां दण्डा युष्मासु वर्त्तिष्यन्ते। अहं युष्मान् तथ्यं ३६ वदामि, विद्यमानेऽस्मिन् पुरुषे ते सर्व्वे वर्त्तिष्यन्ते। हे यिरू- ३७ शालम् हे यिरूशालम् नगरि त्वं भविष्यद्वादिनो हतवती, तव समीपं प्रेरितांश्च पाषाणैराहतवती, यथा कुक्कुटी शावकान् पक्षाधः संगृह्लाति, तथा तव सन्तानान् संग्रहीतुं अहं वक्र-

३८ वारम् ऐच्छं; किन्तु त्वं न सममन्यथाः। पश्यत युष्माकं वास-
३९ स्थानम् उच्छिन्नं त्यक्ष्यते। अहं युष्मान् तथ्यं वदामि,
यः परमेश्वरस्य नाम्नागच्छति, स धन्य इति वाणीं यावन्न
वदिष्यथ, तावत् मां पुन र्न द्रक्ष्यथ।

---

## २४ चतुर्विंशोऽध्यायः।

१ मन्दिरविनाशस्य भविष्यद्वाक्यं ३ विनाशकालस्य घटना ९ शिष्याणां दुःखं
लोकानां पलायनं २३ भाक्तख्रीष्टानामुपस्थितिः २९ यिहूदीयदेशस्य दुर्दशा ३२
उडुम्बरवृक्षस्य दृष्टान्तः ३६ प्रलयकालसदृशी दुर्दशा ४२ सचेतनत्वोपदेशः
४५ विश्वास्याविश्वास्यदासयो र्दृष्टान्तः।

१ अनन्तरं यीशु र्यदा मन्दिराद् वहि र्गच्छति, तदानीं
२ शिष्यास्तं मन्दिरनिर्म्माणं दर्शयितुमागताः। ततो यीशुस्ता-
नुवाच, यूयं किमेतानि न पश्यथ? युष्मानहं सत्यं वदामि,
एतन्निचयनस्य पाषाणैकमप्यन्यपाषाणोपरि न स्थास्यति
सर्व्वाणि भूमिसात् कारिष्यन्ते।
३ अनन्तरं तस्मिन् जैतुनपर्व्वतोपरि समुपविष्टे शिष्यास्तस्य
समीपमागत्य गुप्तं पप्रच्छुः, एता घटनाः कदा भविष्यन्ति?
भवत आगमनस्य युगान्तस्य च किं लक्ष्म? तदस्मान् वदतु।
४ तदानीं यीशुस्तानवोचत्, अवधद्ध्वं, कोपि युष्मान् न भ्रम-
५ येत्। वहवो मम नाम गृह्लन्त आगमिष्यन्ति, ख्रीष्टोऽहमे-
६ वेति वाचं वदन्तो वहून् भ्रमयिष्यन्ति। यूयञ्च संग्रामस्य
रणस्य चाडम्बरं श्रोष्यथ, अवधद्ध्वं तेन चञ्चला मा भवत, एता-
७ न्यवश्यं घटिष्यन्ते, किन्तु तदा युगान्तो नहि। अपरं देशस्य
विपक्षो देशो राज्यस्य विपक्षो राज्यं भविष्यति, स्थाने
८ स्थाने च दुर्भिक्षं महामारी भूकम्पश्च भविष्यन्ति, एतानि
दुःखोपक्रमाः।

तदानीं लोका दुःखं भोजयितुं युष्मान् परकरेषु समर्प- ९ यिष्यन्ति हनिष्यन्ति च, तथा मम नामकारणाद् यूयं सर्व्व-देशीयमनुजानां समीपे घृणार्हा भविष्यथ। बहुषु विघ्नं १० प्राप्तवत्सु परस्परम् ऋतीयां कृतवत्सु च एकोऽपरं परकरेषु समर्पयिष्यति। तथा बहवो मृषाभविष्यद्वादिन उपस्थाय ११ बहून् भ्रमयिष्यन्ति। दुष्कर्म्मणां बाहुल्याच्च बहूनां प्रेम १२ शीतलं भविष्यति। किन्तु यः कश्चित् शेषं यावद् धैर्य्यमाश्र- १३ यते, सएव परित्रायिष्यते। अपरं सर्व्वदेशीयलोकान् प्रति १४ साक्षी भवितुं राज्यस्य शुभसमाचारः सर्व्वजगति प्रचारिष्यते, एतादृशि सति युगान्त उपस्थास्यति।

अतो यत् सर्व्वनाशकृद्घृणार्हं वस्तु दानियेल्भविष्यद्वा- १५ दिना प्रोक्तं तद् यदा पुण्यस्थाने स्थापितं द्रक्ष्यथ, (यः पठति, स बुध्यतां) तदानीं ये यिहूदीयदेशे तिष्ठन्ति, ते पर्व्वतेषु १६ पलायन्तां। यः कश्चिद् गृहपृष्ठे तिष्ठति, स गृहात् किमपि १७ वस्त्वानेतुम् अधो नावरोहेत्। यश्च क्षेत्रे तिष्ठति, सोपि वस्त्र- १८ मानेतुं परावृत्य न यायात्। तदानीं गर्भिणीस्तन्यपाययि- १९ त्रीणां दुर्गति र्भविष्यति। अतो युष्माकं पलायनं शीतकाले २० विश्रामवारे वा यन्न भवेत्, तदर्थं प्रार्थयध्वम्। आ जगदा- २१ रम्भाद् एतत्कालपर्य्यन्तं यादृशः कदापि नाभवत् न च भविष्यति तादृशो महाक्लेशस्तदानीम् उपस्थास्यति। तस्य २२ क्लेशस्य समयो यदि ह्रस्वो न क्रियेत, तर्हि कस्यापि प्राणिनो रक्षणं भवितुं न शक्नुयात्, किन्तु मनोनीतमनुजानां कृते स कालो ह्रस्वीकरिष्यते।

अपरञ्च पश्यत, ख्रीष्टोऽत्र विद्यते, वा तत्र विद्यते, तदानीं २३

यदि कश्चिद् युष्मान इति वाक्यं वदति, तथापि तत् न
२४ प्रतीत। यतो भाक्तख्रीष्टा भाक्तभविष्यद्वादिनश्च उपस्थाय
यानि महन्ति लक्ष्माणि चित्रकर्म्माणि च प्रकाशयिष्यन्ति, तै
२५ र्यदि सम्भवेत् तर्हि मनोनीतमानवा अपि भ्रामिष्यन्ते। पश्यत,
२६ घटनातः पूर्व्वं युष्मान् वार्त्ताम् अवादिषम्। अतः पश्यत, स
प्रान्तरे विद्यत इति वाक्ये केनचित् कथितेपि वहि र्मा गच्छत,
वा पश्यत, सोन्तःपुरे विद्यते, एतद्वाक्य उक्तेपि मा प्रतीत।
२७ यतो यथा विद्युत् पूर्व्वदिशो निर्गत्य पश्चिमदिशं यावत्
२८ प्रकाशते, तथा मानुषपुत्त्रस्याप्यागमनं भविष्यति। यत्र शव-
स्तिष्ठति, तत्रैव गृध्रा मिलन्ति।

२९ अपरं तस्य क्लेशसमयस्याव्यवहितपरत्र सूर्य्यस्य तेजो
लोप्स्यते, चन्द्रमा ज्योत्स्नां न करिष्यति, नभसो नक्षत्राणि पति-
३० ष्यन्ति, गगणीया ग्रहाश्च विचलिष्यन्ति। तदानीम् आका-
शमध्ये मनुजसुतस्य लक्ष्म दर्शिष्यते, ततो निजपराक्रमेण
महातेजसा च मेघारूढं मनुजसुतं नभसागच्छन्तं विलोक्य
३१ पृथिव्याः सर्व्ववंशीया विलपिष्यन्ति। तदानीं स महाशब्दा-
यमानतूर्य्या वादकान् निजदूतान् प्रहेष्यति, ते व्योम्न एक-
सीमातोऽपरसीमां यावत् चतुर्दिशस्तस्य मनोनीतजनान्
आनीय मेलयिष्यन्ति।

३२ उडुम्बरपादपस्य दृष्टान्तं शिक्षध्वं; यदा तस्य नवीनाः
शाखा जायन्ते, पल्लवादिश्च निर्गच्छति, तदा निदाघ-
३३ कालः सविधो भवतीति यूयं जानीथ; तद्वद् एता घटना
३४ दृष्ट्वा स समयो द्वार उपास्थाद् इति जानीत। युष्मानहं
तथ्यं वदामि, इदानीन्तनजनानां गमनात् पूर्व्वमेव तानि

सर्व्वाणि घटिष्यन्ते। नभोमेदिन्यो र्लुप्तयोरपि मम वाक् ३५
कदापि न लोप्स्यते।

अपरं मम तातं विना मानुषः स्वर्गस्थो दूतो वा कोपि ३६
तद्दिनं तद्दण्डञ्च न ज्ञापयति। अपरं नोहे विद्यमाने ३७
यादृशमभवत् तादृशं मनुजसुतस्यागमनकालेपि भविष्यति।
फलतो जलाप्लावनात् पूर्व्वं यद्दिनं यावत् नोहः पोतं नारो- ३८
हत्, तावत्कालं यथा मनुष्या भोजने पाने विवहने विवा-
हने च प्रवृत्ता आसन्; अपरम् आप्लावितोयमागत्य यावत् ३९
सकलमनुजान् प्लावयित्वा नानयत्, तावत् ते यथा न
विदामासुः, तथा मनुजसुतागमनेपि भविष्यति। तदा क्षेत्र- ४०
स्थितयोर्द्वयोरेको धारिष्यते, अपरस्त्याजिष्यते। तथा पेषण्या ४१
पिंषत्योरुभयो र्योषितोरेका धारिष्यतेऽपरा त्याजिष्यते।

युष्माकं प्रभुः कस्मिन् दण्ड आगमिष्यति, तद् युष्माभि ४२
र्नावगम्यते, तस्मात् जाग्रतः सन्तस्तिष्ठत। कुत्र यामे स्तेन ४३
आगमिष्यतीति चेद् गृहस्थो ज्ञातुम् अशक्ष्यत, तर्हि जाग-
रित्वा तं सन्धिं कर्त्तितुम् अवारयिष्यत् तद् जानीत। युष्मा- ४४
भिरवधीयतां, यतो युष्माभि र्यत्र न बुध्यते, तत्रैव दण्डे
मनुजसुत आयास्यति।

प्रभु र्निजपरिवारान् यथाकालं भोजयितुं यं दासम् ४५
अध्यक्षीकृत्य स्थापयति, तादृशो विश्वास्यो धीमान् दासः कः?
प्रभुरागत्य यं दासं तथाचरन्तं वीक्षते, सएव धन्यः। युष्मा- ४६
नहं सत्यं वदामि, स तं निजसर्व्वस्वस्याधिपं करिष्यति। ४७
किन्तु प्रभुरागन्तुं विलम्बत इति मनसि चिन्तयित्वा यो ४८
दुष्टो दासोऽपरदासान् प्रहर्त्तुं मत्तानां सङ्गे भोक्तुं पातुञ्च ४९

५० प्रवर्त्तते, स दासो यदा नापेक्षते, यच्च दण्डं न जानाति,
५१ तत्कालएव तत्प्रभुरुपस्थास्यति। तदा तं दण्डयित्वा यत्र स्थाने रोदनं दन्तघर्षणञ्चासाते, तत्र कपटिभिः साकं तद्दशां निरूपयिष्यति।

## २५ पञ्चविंशोऽध्यायः।

१ दशकन्यानां दृष्टान्तकथनं १४ दूरदेशगामिन उत्तमर्णस्य तदीयदासानाञ्च कथनं ३१ विचारदिनविवरणञ्च।

१ या दश कन्याः प्रदीपान् गृह्लत्यो वरं साक्षात् कर्त्तुं वहिरिताः, ताभिस्तदा स्वर्गीयराज्यस्य सादृश्यं भविष्यति।
२ तासां कन्यानां मध्ये पञ्च सुधियः पञ्च दुर्धिय आसन्। या
४ दुर्धियस्ताः प्रदीपान् सङ्गे गृहीत्वा तैलं न जगृहुः, किन्तु
५ सुधियः प्रदीपान् पात्रेण तैलञ्च जगृहुः। अनन्तरं वरे
६ विलम्बिते ताः सर्व्वा निद्राविष्टा निद्रां जग्मुः। अनन्तरम् अर्द्धरात्रे पश्यत वर आगच्छति, तं साक्षात् कर्त्तुं वहिर्याते
७ तेति जनरवात् ताः सर्व्वाः कन्या उत्थाय प्रदीपान् आसा-
८ दयितुं आरभन्त। ततो दुर्धियः सुधिय ऊचुः, किञ्चित्
९ तैलं दत्त, प्रदीपा अस्माकं निर्व्वाणाः। किन्तु सुधियः प्रत्यवदन्, दत्ते युष्मानस्मांश्च प्रति तैलं न्यूनीभवेत्, तस्माद्
१० विक्रेतृणां समीपं गत्वा स्वार्थं तैलं क्रीणीत। तदा तासु क्रेतुं गतासु वर आजगाम, ततो याः सज्जिता आसन्, तास्तेन
११ साकं विवाहीयं वेश्म प्रविविशुः। अनन्तरं द्वारे रुद्धे अपराः कन्या आगत्य जगदुः, हे प्रभो, हे प्रभो, अस्मान् प्रति द्वारं
१२ मोचय। किन्तु स उक्तवान्, तथ्यं वदामि, युष्मानहं न

वेद्मि। अतो जाग्रतः सन्तस्तिष्ठत, मनुजसुतः कस्मिन् दिने १३ कस्मिन् दण्डे वागमिष्यति, तद् युष्माभि र्न ज्ञायते।

अपरं स एतादृशः कस्यचित् पुंसस्तुल्यः, यो दूरदेशं १४ प्रति यात्राकाले निजदासान् आहूय तेषां स्वस्वसामर्थ्यानु- १५ रूपम् एकस्मिन् मुद्राणां पञ्च पोटलिकाः अन्यस्मिंश्च द्वे पोटलिके अपरस्मिंश्च पोटलिकैकाम् इत्थं प्रतिजनं समर्प्य स्वयं प्रवासं गतवान्। अनन्तरं यो दासः पञ्च पोट- १६ लिकाः लब्धवान्, स गत्वा बाणिज्यं विधाय ता द्विगुणीच- कार। यश्च दासो द्वे पोटलिके अलभत, सोपि ता मुद्रा १७ द्विगुणीचकार। किन्तु यो दास एकां पोटलिकां लब्धवान्, १८ स गत्वा भूमिं खनित्वा तन्मध्ये निजप्रभोस्ता मुद्रा गोपया- ञ्चकार। तदनन्तरं बहुतिथे काले गते तेषां दासानां १९ प्रभुरागत्य तैर्दासैः समं गणयाञ्चकार। तदानीं यः पञ्च २० पोटलिकाः प्राप्तवान् स ता द्विगुणीकृतमुद्रा आनीय जगाद; हे प्रभो, भवता मयि पञ्च पोटलिकाः समर्पिताः, पश्यतु, ता मया द्विगुणीकृताः। तदानीं तस्य प्रभुस्तमुवाच, हे उत्तम २१ विश्वास्य दास, त्वं धन्योसि, स्तोकेन विश्वास्यो जातः, तस्मात् त्वां बहुवित्ताधिपं करोमि, त्वं स्वप्रभोः सुखस्य भागी भव। ततो येन द्वे पोटलिके लब्धे सोप्यागत्य जगाद, हे प्रभो, २२ भवता मयि द्वे पोटलिके समर्पिते, पश्यतु ते मया द्विगुणी- कृते। तेन तस्य प्रभुस्तमवोचत्, हे उत्तम विश्वास्य दास, त्वं २३ धन्योसि, स्तोकेन विश्वास्यो जातः, तस्मात् त्वां बहुद्रविणाधिपं करोमि, त्वं निजप्रभोः सुखस्य भागी भव। अनन्तरं य २४ एकां पोटलिकां लब्धवान्, स एत्य कथितवान्, हे प्रभो, त्वां

कठिननरं ज्ञातवान्, त्वया यत्र नोप्तं, तत्रैव कृत्यते, यत्र
२५ च न कीर्णं, तत्रैव संगृह्यते । अतोहं सशङ्कः सन् गत्वा तव
मुद्रा भूमध्ये संगोप्य स्थापितवान्, पश्य, तव यत् तदेव
२६ गृहाण। तदा तस्य प्रभुः प्रत्यवदत् रे दुष्टालस दास, यत्राहं
न वपामि, तत्र छिनद्मि, यत्र च न किरामि, तत्रैव संगृ-
२७ ह्णामीति चेदजानास्तर्हि वणिक्षु मम वित्तार्पणं तवोचित-
२८ मासीत्, येनाहमागत्य वृद्ध्या साकं मूलमुद्राः प्राप्स्यम्। अतो-
स्मात् तां पोटलिकाम् आदाय यस्य दश पोटलिकाः सन्ति
२९ तस्मिन्नर्पयत। येन वर्द्धते तस्मिन्नेवार्पिष्यते, तस्यैव च बाहुल्यं
भविष्यति, किन्तु येन न वर्द्धते, तस्यान्तिके यत्किञ्चन
३० तिष्ठति, तदपि पुनर्नेष्यते। अपरं यूयं तमकर्म्मण्यं दासं नीत्वा
यत्र स्थाने क्रन्दनं दन्तघर्षणञ्च विद्येते, तस्मिन् वहिर्भूत-
तमसि निक्षिपत।

३१　यदा मनुजसुतः पवित्रदूतान् सङ्गिनः कृत्वा निजप्रभा-
वेनागत्य निजतेजोमये सिंहासने निवेक्ष्यति, तदा तत्सम्मुखे
३२ सर्व्वजातीया जना संमेलिष्यन्ति। ततो मेषपालको यथा
छागेभ्योऽवीन् पृथक् करोति तथा सोप्येकस्मादन्यम् इत्थं
३३ तान् पृथक् कृत्वावीन् दक्षिणे छागांश्च वामे स्थापयिष्यति।
३४ ततः परं राजा दक्षिणस्थितान् मानवान् वदिष्यति, आग-
च्छत मत्तातस्यानुग्रहभाजनानि, युष्मत्कृत आ जगदारम्भात्
३५ यद् राज्यम् आसादितं तदधिकुरुत। यतो बुभुक्षिताय मह्यं
भोज्यम् अदत्त, पिपासिताय पेयमदत्त, विदेशिनं मां
३६ स्वस्थानमनयत, वस्त्रहीनं मां वसनं पर्य्यधापयत, पीडितं मां
३७ द्रष्टुमागच्छत, कारास्थञ्च मां वीक्षितुम आगच्छत। तदा

धार्म्मिकाः प्रतिवदिष्यन्ति, हे प्रभो, कदा त्वां क्षुधितं वीक्ष्य वयमभोजयाम? वा पिपासितं वीक्ष्य अपाययाम? कदा वा ३८ त्वां विदेशिनं विलोक्य स्वस्थानमानयाम? कदा वा त्वां नग्नं वीक्ष्य वसनं पर्य्यधापयाम? कदा वा त्वां पीडितं कारा- ३९ स्थञ्च वीक्ष्य त्वदन्तिकमगच्छाम,? तदानीं राजा तान् ४० प्रतिवदिष्यति, युष्मानहं सत्यं वदामि, ममैतेषां भ्रातृणां मध्ये कञ्चनैकं क्षुद्रतमं प्रति यद् अकुरुत, तन्मां प्रत्यकुरुत। पश्चात् स वामस्थितान् जनान् वदिष्यति, रे शापग्रस्ताः सर्व्वे, ४१ शैताने तस्य दूतेभ्यश्च योऽनन्तवह्निरासादित आस्ते, यूयं मदन्तिकात् तमग्निं गच्छत। यतो क्षुधिताय मह्यमाहारं ४२ नादत्त, पिपासिताय मह्यं पेयं नादत्त, विदेशिनं मां स्वस्थानं ४३ नानयत, वसनहीनं मां वसनं न पर्य्यधापयत, पीडितं कारास्थञ्च मां वीक्षितुं नागच्छत। तदा ते प्रतिवदिष्यन्ति, ४४ हे प्रभो, कदा त्वां क्षुधितं वा पिपासितं वा विदेशिनं वा नग्नं वा पीडितं वा कारास्थं वीक्ष्य त्वां नासेवामहि? तदा स ४५ तान् वदिष्यति, तथ्यमहं युष्मान् ब्रवीमि, युष्माभिरेषां कञ्चन क्षोदिष्ठं प्रति यन्नाकारि, तन्मां प्रत्येव नाकारि। पश्चादम्य- ४६ नन्तशास्तिं किन्तु धार्म्मिका अनन्तायुषं भोक्तुं यास्यन्ति।

---

## २६ षड्विंशोऽध्यायः।

१ ख्रीष्टस्य विरुद्धं प्रधानयाजकाध्यापकानां कुमन्त्रणं ६ योषया ख्रीष्टाभिषिक्तत्वं १४ यिहूदाविश्वासघातित्वं १७ निस्तारपर्व्वीयभोज्यं २६ प्रभो र्भोज्यनिरूपणं ३१ पितरस्य ख्रीष्टानङ्गीकरणभविष्यद्वाः ३६ उद्याने ख्रीष्टकष्टं ४७ तत्परकरार्पणं ५७ महायाजकसमक्षं तन्नयनं ५९ तद्विचारत्वं ६९ पितरानङ्गीकरणञ्च।

यीशुरेतान् प्रस्तावान् समाप्य शिष्यानूचे, युष्माभि र्ज्ञातं १ दिनद्वयात् परं निस्तारमह उपस्थास्यति, तत्र मनुजसुतः २

३ कुशेन हन्तुं परकरेषु समर्पयिष्यते। ततःपरं प्रधानया-
४ जकाध्यापकप्राञ्चः कियफानाम्नो महायाजकस्याट्टालिकायां
मिलित्वा केनोपायेन यीशुं धृत्वा हन्तुं शक्नुयुरिति मन्त्र-
५ याञ्चक्रुः। किन्तु तैरुक्तं महकाले न धर्त्तव्यः, धृते प्रजानां
कलहेन भवितुं शक्यते।

६ ततो बैथनियापुरे शिमोनाख्यस्य कुष्ठिनो वेश्मनि यीशौ
७ तिष्ठति काचन योषा श्वेतोपलभाजनेन महार्घं सुगन्धि
८ तैलमानीय भोजनायोपविशतस्तस्य शिरोऽभ्यषेचत्। किन्तु
९ तदालोक्य तच्छिष्यैः कुपितैरुक्तं, कुत इत्थमपव्ययते? चेदिदं
व्यक्रेष्यत, तर्हि भूरिमूल्यं प्राप्य दरिद्रेभ्यो व्यतारिष्यत।
१० यीशुना तदवगत्य ते समुदिताः, योषामेनां कुतो दुःखिनीं
११ कुरुथ, सा मां प्रति साधु कर्म्माकार्षीत्। युष्माकं समीपे
दरिद्राः सततमेवासते, किन्तु युष्माकमन्तिकेऽहं नासे सततं।
१२ सा मम कायोपरि सुगन्धितैलं सिक्त्वा मम श्मशानदान-
१३ कर्म्माकार्षीत्। अतोऽहं युष्मान् तथ्यं वदामि सर्व्वस्मिन् जगति
यत्र यत्रैष सुसमाचारः प्रचारिष्यते, तत्र तत्रैतस्या नार्य्याः
स्मरणार्थम् कर्म्मेदं प्रचारिष्यते।

१४ ततो द्वादशशिष्याणाम् ईष्करियोतीयियिहूदानामक एकः
१५ शिष्यः प्रधानयाजकानामन्तिकं गत्वा कथितवान्, यदि युष्माकं
करेषु यीशुं समर्पयामि, तर्हि किं दास्यथ? तदानीं ते
१६ तस्मै त्रिंशन्मुद्रा दातुं स्थिरीकृतवन्तः। स तदारभ्य तं पर-
करेषु समर्पयितुं सुयोगं चेष्टितवान्।

१७ अनन्तरं किण्वशून्यपूपपर्व्वणः प्रथमेऽह्नि शिष्या यीशुम् उप-
गत्य पप्रच्छुः, भवत्कृते कुत्र वयं निस्तारमहभोज्यम् आयो-

जयिष्यामः? भवतः केच्छा? तदा स गदितवान्, मध्येनगर- १८
ममुकपुंसः समीपं व्रजित्वा वदत, गुरु र्गदितवान्, मत्कालः
सविधः, सह शिष्यैस्त्वदालये निस्तारमहभोज्यं भोक्ष्ये। तदा १९
शिष्या यीशोस्तादृशनिदेशानुरूपकर्म्म विधाय तत्र निस्तारमह-
भोज्यमासादयामासुः। ततः सन्ध्यायां सत्यां द्वादशभिः शिष्यैः २०
साकं स न्यविशत्। अपरं भुञ्जान उक्तवान् युष्मान् तथ्यं गदामि,
युष्माकमेको मां परकरेषु समर्पयिष्यति। तदा तेऽतीव २१
दुःखिता एकैकशो वक्तुमारेभिरे, हे प्रभो, स किमहं? ततः २२
स जगाद, मया साकं यो जनो भोजनपात्रे करं संक्षिपति, स २३
एव मां परकरेषु समर्पयिष्यति। मनुजसुतमधि यादृशं लिखि- २४
तमास्ते, तदनुरूपा तद्गति र्भविष्यति; किन्तु येन पुंसा स
परकरेषु समर्पयिष्यते, हा हा चेत् स नाजनिष्यत, तदा तस्य
क्षेममभविष्यत्। तदा यिहूदानामा यो जनस्तं परकरेषु २५
समर्पयिष्यति, स उक्तवान्, हे गुरो, स किमहं? ततः स प्रत्यु-
क्तवान्, त्वया सत्यं गदितम्।

अनन्तरं तेषामशनकाले यीशुः पूपमादायेश्वरीयगुणा- २६
ननूद्य भंक्त्वा शिष्येभ्यः प्रदाय जगाद, मद्वपुःस्वरूपमिमं गृहीत्वा
खादत। पश्चात् स कंसं गृह्लन् ईश्वरीयगुणाननूद्य तेभ्यः २७
प्रदाय कथितवान्, सर्व्वै र्युष्माभिरनेन पातव्यं, यस्मादनेकेषां २८
पापमर्षणाय पातितं यन्मन्नूत्ननियमरूपशोणितं तदेतत्।
अपरमहं युष्मभ्यं कथयामि, यावत् स्वतातराज्ये युष्माभिः २९
साकं नूत्नगोस्तनीरसं न पास्यामि, तावत् गोस्तनीफलरसं
पुनः कदापि न पास्यामि। पश्चात् ते गीतमेकं संगीय जैतु- ३०
नाख्यगिरिं गतवन्तः।

३१ तदानीं यीशुस्तानवोचत्, अस्यां रजन्यामहं युष्माकं सर्व्वेषां विघ्नरूपो भविष्यामि, यतो लिखितमास्ते,

'मेषाणां रक्षको यस्तं प्रहरिष्याम्यहं ततः।
मेषाणां निवहो नूनं प्रविकीर्णो भविष्यति' ॥

३२ किन्तु श्मशानात् समुत्थाय युष्माकमग्रेऽहं गालीलं गमि-
३३ ष्यामि। पितरस्तं प्रोवाच, भवांश्चेत् सर्व्वेषां विघ्नरूपो भवति,
३४ तथापि मम न भविष्यति। ततो यीशुना स उक्तः, तुभ्यमहं तथ्यं कथयामि, यामिन्यामस्यां चरणायुधस्य रवात् पूर्व्वं
३५ त्वं मां त्रि र्नाङ्गीकरिष्यसि। ततः पितर उदितवान्, यद्यपि त्वया समं मर्त्तव्यं, तथापि कदापि त्वां न नाङ्गीकरिष्यामि; तथैव सर्व्वे शिष्याश्चोचुः।

३६ अनन्तरं यीशुः शिष्यैः साकं गेत्शिमानीनामकं स्थानं प्रस्थाय तेभ्यः कथितवान्, अदः स्थानं गत्वा यावदहं प्रार्थ-
३७ यिष्ये तावद् यूयमत्रोपविशत। पश्चात् स पितरं सिवदिय-सुतौ च सङ्गिनः कृत्वा गतवान्, शोकाकुलोऽतीव व्यथितश्च
३८ बभूव। तानवादीच्च मृतियातनेव मत्प्राणानां यातना जायते,
३९ यूयमत्र मया सार्द्धं जागृत। ततः स किञ्चिद्दूरं गत्वाधो-मुखः पतन् प्रार्थयाञ्चक्रे, हे मत्पितर्यदि भवितुं शक्नोति, तर्हि कंसोऽयं मत्तो दूरं यातु; किन्तु मदिच्छावत् न भवतु,
४० त्वदिच्छावद् भवतु। ततः स शिष्यानुपेत्य तान् निद्रतो निरीक्ष्य पितराय कथयामास, यूयं मया साकं दण्डमेक-
४१ मपि जागरितुं नाशक्नुत? परीक्षायां न पतितुं जागृत
४२ प्रार्थयध्वञ्च; आत्मा समुद्यतोऽस्ति, किन्तु वपु र्दुर्ब्बलं। स द्वितीयवारं प्रार्थयाञ्चक्रे, हे मत्तात, न पीते यदि कंसमिदं

मक्षो दूरं यातुं न शक्नोति, तर्हि त्वदिच्छावद् भवतु। स ४३ पुनरेत्य तान् निद्रतो ददर्श, यतस्तेषां नेत्राणि निद्रया पूर्णान्यासन्। पश्चात् स तान् विहाय व्रजित्वा तृतीयवारं ४४ पूर्व्ववत् कथयन् प्रार्थितवान्। ततः शिष्यानुपागत्य गदि- ४५ तवान्, साम्प्रतं शयानाः किं विश्राम्यथ? पश्यत, समय उपास्थात्, मनुजसुतः पापिनां करेषु समर्प्यते। उत्तिष्ठत, ४६ वयं यामः, यो मां परकरेषु समर्पयिष्यति, पश्यत, स समीपमायाति।

एतत्कथाकथनकाले द्वादशशिष्याणामेको यिहूदानामको ४७ मुख्ययाजकलोकप्राचीनैः प्रहितान् असिधारियष्टिधारिणो मनुजान् गृहीत्वा तत्समीपमुपतस्थौ। असौ परकरेष्वर्प- ४८ यिता पूर्व्वं तान् इत्थं सङ्केतयामास, यमहं चुम्बिष्ये, सोऽसौ मनुजः, सएव युष्माभि र्धार्य्यतां। तदा स सपदि यीशुमुपा- ४९ गत्य हे गुरो, प्रणमामीत्युक्त्वा तं चुचुम्बे। तदा यीशुस्तमु- ५० वाच, हे मित्र, किमर्थमागतोसि? तदा तैरागत्य यीशुरा- क्रम्य दध्रे। ततो यीशोः सङ्गिनामेकः करं प्रसार्य्य कोषादसिं ५१ वहिष्कृत्य महायाजकस्य दासमेकमाहत्य तस्य कर्णं चिच्छेद। ततो यीशुस्तं जगाद, खड्गं स्वस्थाने निधेहि यतो ये ये जना ५२ असिं धारयन्ति, तएवासिना विनश्यन्ति। अपरं पिता यथा ५३ मदन्तिकं स्वर्गीयदूतानां द्वादशवाहिनीतोऽधिकं प्रहिणुयात् मया तमुद्दिश्येदानीमेव तथा प्रार्थयितुं न शक्यते, त्वया किमित्थं ज्ञायते? तथा सतीत्थं घटिष्यते धर्म्मपुस्तकस्य ५४ यदिदं वाक्यं तत् कथं सिध्येत्? तदानीं यीशु र्जननिवहं ५५ जगाद, यूयं खड्गयष्टीन् आदाय मां किं चौरं धर्त्तुमायाताः?

अहं प्रत्यहं युष्माभिः साकमुपविश्य समुपादिशं, तदा मां
५६ नाधरत; किन्तु भविष्यद्वादिनां वाक्यानां संसिद्धये सर्व्वमे-
तदभूत्। तदा सर्व्वे शिष्यास्तं विहाय पलायन्त।

५७ अनन्तरं ते मनुजा यीशुं धृत्वा यत्राध्यापकप्राञ्चः परि-
षदं कुर्व्वन्त उपाविशन् तत्र कियफानामकमहायाजकस्या-
५८ न्तिकं निन्युः। किन्तु शेषे किं भविष्यतीति वेत्तुं पितरो
दूरे तत्पश्चाद् व्रजित्वा महायाजकस्याट्टालिकां प्रविश्य
दासैः सहित उपाविशत्।

५९ तदानीं प्रधानयाजकप्राचीनमन्त्रिणः सर्व्वे यीशुं हन्तुं
६० मृषासाक्ष्यम् अलिप्सन्त, किन्तु न लेभिरे। अनेकेषु
मृषासाक्षिष्वागतेष्वपि तन्न प्रापुः। शेषे द्वौ मृषासाक्षिणावा-
६१ गत्य जगदतुः, पुमानयमकथयत्, अहमीश्वरमन्दिरं भंक्त्वा
६२ दिनत्रयमध्ये तन्निर्म्मातुं शक्नोमि। तदा महायाजक उत्थाय
यीशुम् अवादीत्। त्वं किमपि न प्रतिवदसि? त्वामधि
६३ किमेते साक्ष्यं वदन्ति? किन्तु यीशु र्मौनीभूय तस्थौ। ततो
महायाजक उक्तवान्, त्वाम् अमरेश्वरनाम्ना शपयामि, त्वमी-
६४ श्वरस्य पुत्रोऽभिषिक्तो भवसि नवेति वद। यीशुः प्रत्यवदत्,
त्वं सत्यमुक्तवान्; अहं युष्मान् तथ्यं वदामि, इतःपरं
मनुजसुतं सर्व्वशक्तिमतो दक्षिणपार्श्वे स्थातुं गगणस्थं जल-
६५ धरानारुह्यायान्तं वीक्षध्वे। तदा महायाजको निजवसनं
छित्त्वा जगाद, एष ईश्वरं निन्दितवान्, अस्माकमपरसा-
६६ क्ष्येण किं प्रयोजनं? पश्यत, यूयमेवास्यास्याद् ईश्वरनिन्दां
श्रुतवन्तः, युष्माभिः किं विविच्यते? ते प्रत्यूचुः, वधार्होऽयं।
६७ ततो लोकैस्तदास्ये निष्ठीवितं केचित् प्रतलमाहत्य केचिच्च

चपेटमाहत्य बभाषिरे, हे ख्रीष्ट त्वां कश्चपेटमाहतवान्? ६८ इति गणयित्वा वदास्मान्।

पितरो वहिरङ्गन उपविशति, तदानीमेका दासी ६९ तमुपागत्य बभाषे, त्वं गालीलीययीशोः सहचरएकः। किन्तु ७० स सर्व्वेषां समक्षम् अनङ्गीकृत्यावादीत्, त्वया यदुच्यते, तदर्थमहं न वेद्मि। तदा तस्मिन् वहिर्द्वारं गते ऽन्या दासी तं नि- ७१ रीक्ष्य तत्रत्यजनानवदत्, अयमपि नासरतीययीशुना सार्द्धम् आसीत्। ततः स शपथेन पुनरनङ्गीकृत्य कथितवान्, तं नरं ७२ न परिचिनोमि। क्षणात् परं तिष्ठन्तो जना एत्य पितरम् ७३ अवदन्, त्वमवश्यं तेषामेक इति त्वदुच्चारणमेव द्योतयति। किन्तु सोऽभिशप्य कथितवान्, तं जनं नाहं परिचिनोमि, ७४ तदा सपदि कुक्कुटो रुराव। कुक्कुटरवात् प्राक् त्वं मां ७५ त्रिरपह्नोष्यसे, येषा वाग् यीशुनावादि तां पितरः संस्मृत्य वहिरित्वा खेदाद् भृशं चक्रन्द।

## २७ सप्तविंशोऽध्यायः।

१ पीलातस्य करे ख्रीष्टार्पणं ७ यिहूदा अनुतापमरणे ११ पीलातस्य समक्षं ख्रीष्टसाध्यमाने १५ तद्देशीया रीतिः १९ पीलातस्याचरणं २७ हन्तुं ख्रीष्टनयनं ३२ तस्य क्रुशारोहणं ३९ निन्दोक्तिः ४५ क्रुशे आर्त्तरवः ५० प्राणत्यागाद्भुतलक्षणे ५५ योषितामुपस्थितिः ५७ ख्रीष्टश्मशानं ६२ रक्षिभिः श्मशानरक्षणञ्च।

प्रभाते जाते प्रधानयाजकलोकप्राचीना यीशुं हन्तुं तत्- १ प्रतिकूलं मन्त्रयित्वा तं बद्ध्वा नीत्वा पन्तीयपीलाताख्याधिपे २ समर्पयामासुः।

ततो यीशोः परकरेष्वर्पयिता यिहूदास्तत्प्राणदण्डाज्ञां ३ विदित्वा सन्तप्तमनाः प्रधानयाजकलोकप्राचीनानां समक्षं तास्त्रिंशन्मुद्राः प्रतिदायावादीत्, एतन्निरागोनरप्राणपरकरा- ४

र्पणात् कलुषं कृतवानहं। तदा त उदितवन्तः, तेनास्माकं
५ किं? त्वया तद् बुध्यताम्। ततो यिहूदा मन्दिरमध्ये ता
मुद्रा निक्षिप्य प्रस्थितवान् इत्वा च स्वयमात्मानमुद्बबन्ध।
६ पश्चात् प्रधानयाजकास्ता मुद्रा आदाय कथितवन्तः, एता
७ मुद्राः शोणितमूल्यं तस्माद् भाण्डागारे न निधातव्याः। अनन्तरं
ते मन्त्रयित्वा विदेशिनां श्मशानस्थानाय ताभिः कुलालस्य
८ क्षेत्रमक्रीणन्। अतोऽद्यापि तत्स्थानं रक्तक्षेत्रं वदन्ति। इत्थं
९ सति इस्रायेलीयसन्तानै र्यस्य मूल्यं निरूपितं, तस्य त्रिंशन्मुद्रा-
१० मानं मूल्यं मां प्रति परमेश्वरस्यादेशात् तेभ्य आदीयत, तेन च
कुलालस्य क्षेत्रं क्रीतमिति यद्वचनं यिरिमियभविष्यद्वादिना
प्रोक्तं तत् तदासिध्यत्।

११　अनन्तरं यीशौ तदधिपतेः सम्मुख उपतिष्ठति स तं पप्रच्छ,
त्वं किं यिहूदीयानां राजा? तदा यीशुस्तमवदत्, त्वं
१२ सत्यमुक्तवान्। किन्तु प्रधानयाजकप्राचीनैरभियुक्तेन तेन
१३ किमपि न प्रत्यवादि। ततः पीलातेन स उदितः, इमे त्वत्-
प्रतिकूलतः कति कति साक्ष्यं ददति, तत् त्वं न शृणोषि?
१४ तथापि स तेषामेकस्यापि वचस उत्तरं नोदितवान्; तेन
सोऽधिपति र्महाचित्रं विदामास।

१५　अन्यच्च तन्महकालेऽधिपतेरेतादृशी रातिरासीत्, प्रजा
१६ यं कञ्चन बन्धिनं याचन्ते, तमेव स मोचयतीति। तदानीं
१७ बरब्बानामा कश्चित् ख्यातबन्ध्यासीत्। ततः पीलातस्तत्र
मिलितान् लोकान् अपृच्छत्, एष बरब्बा बन्धी ख्रीष्ट-
विख्यातो यीशुश्चैतयोः कं मोचयिष्यामि? युष्माकं किमीप्सितं?
१८ तैरीर्ष्यया स समर्पित इति स ज्ञातवान्।

अपरं विचारासनोपवेशनकाले पीलातस्य पत्नी भृत्यं प्रहित्य १९ तस्मै कथयामास, तं धार्म्मिकमनुजं प्रति त्वया किमपि न कर्त्तव्यं; यस्मात् तत्कृतेऽद्याहं स्वप्ने प्रभूतकष्टमलभे। अनन्तरं प्रधान- २० याजकप्राचीना बरब्बां याचित्वादातुं यीशुञ्च हन्तुं सकल- लोकान् प्रावर्त्तयन्। ततोऽधिपतिस्तान् पृष्टवान्, एतयोः २१ कमहं मोचयिष्यामि? युष्माकं केच्छा? ते प्रोचु र्बरब्बां। तदा पीलातः पप्रच्छ, तर्हि यं ख्रीष्टं वदन्ति, तं यीशुं किं २२ करिष्यामि? सर्व्वे कथयामासुः, स क्रुशेन विध्यतां। ततो- २३ ऽधिपतिरवादीत्, कुतः? किं तेनापराद्धं? किन्तु ते पुनरुच्चै र्जगदुः, स क्रुशेन विध्यतां। तदा निजवाक्यमग्राह्यमभूत्, २४ कलहश्चाप्यभूत्, पीलात इति विलोक्य लोकानां समक्षं तोय- मादाय करौ प्रक्षाल्यावोचत्, एतस्य धार्म्मिकमनुष्यस्य शोणितपाते निर्दोषोऽहं, युष्माभिरेव तद् बुध्यतां। तदा सर्व्वाः २५ प्रजाः प्रत्यवोचन्, तस्य शोणितपातापराधोऽस्माकम् अस्मत्- सन्तानानाञ्चोपरि भवतु। ततः स तेषां समीपे बरब्बां मोच- २६ यामास यीशुन्तु कषाभिराहत्य क्रुशेन वेधितुं समर्पयामास।

अनन्तरम् अधिपतेः सेना अधिपते र्गृहं यीशुमानीय २७ तस्य समीपे सेनासमूहं संजगृहुः। ततस्ते तस्य वसनं मोच- २८ यित्वा कृष्णलोहितवर्णवसनं परिधापयामासुः कण्टकानां २९ मुकुटं निर्म्माय तच्छिरसि ददुः, तस्य दक्षिणकरे वेत्रमेकं दत्त्वा तस्य सम्मुखे जानूनि पातयित्वा, हे यिहूदीयानां राजन्, तुभ्यं नम इत्युक्त्वा तं तिरश्चक्रुः, ततस्तस्य गात्रे निष्ठीवं ३० दत्त्वा तेन वेत्रेण शिर आजघ्नुः। इत्थं तं तिरस्कृत्य तद् वसनं ३१ मोचयित्वा पुनर्निजवसनं परिधापयाञ्चक्रुः, तं क्रुशेन वेधितुं

३२ नीतवन्तः। पश्चात्ते वहिर्भूय कुरीणीयं शिमोन्नामकमेकं विलोक्य क्रुशं वोढुं तमाददिरे।

३३ अनन्तरं गुल्गल्ताम् अर्थात् शिरस्कपालनामकस्थानम्
३४ पश्चाय ते यीशवे पित्तमिश्रिताम्लरसं पातुं ददुः, किन्तु स
३५ तमास्वाद्य न पपौ। तदानीं ते तं क्रुशेन संविध्य तस्य वसनानि गुटिकापातेन विभज्य जगृहुः, तस्मात्,

विभजन्तेऽधरीयं मे ते मनुष्याः परस्परं।
मदुत्तरीयवस्त्रार्थं गुटिकां पातयन्ति च॥

यदेतद्वचनं भविष्यद्वादिभिरुक्तमासीत्, तदा तद् असिध्यत्,
३६ पश्चात् ते तत्रोपविश्य तद्रक्षणकर्म्मणि नियुक्तास्तस्थुः। अपरम्
३७ एष यिहूदीयानां राजा यीशुरित्यपवादलिपिपत्रं तच्छिरस
३८ ऊर्द्ध्वे योजयामासुः। ततस्तस्य वामे दक्षिणे च द्वौ चौरौ तेन साकं क्रुशेन विविधुः।

३९ तदा पान्था निजशिरो लाडयित्वा तं निन्दन्तो जगदुः,
४० हे ईश्वरमन्दिरभञ्जक दिनत्रये तन्निर्म्मातः, स्वं रक्ष, चेत्त्व-
४१ मीश्वरसुतस्तर्हि क्रुशादवरोह। प्रधानयाजकाध्यापकप्राची-
४२ नाश्च तथा तिरस्कृत्य जगदुः, सोऽन्यजनानावत्, किन्तु स्वमवितुं न शक्नोति। यदीस्रायेलो राजा भवेत्, तर्हीदा-
४३ नीमेव क्रुशादवरोहतु, तेन तं वयं प्रत्येष्यामः। स ईश्वरे प्रत्याशामकरोत्, यदीश्वरस्तस्मिन् सन्तुष्टस्तर्हीदानीमेव तम-
४४ वेत्, यतः स उक्तवान् अहमीश्वरसुतः। यौ स्तेनौ साकं तेन क्रुशेन विद्धौ तौ तद्वदेव तं निनिन्दतुः।

४५ तदा द्वितीययामात् तृतीययामं यावत् सर्व्वदेशे तिमिरं
४६ बभूव, तृतीययामे 'एली एली लामा शिवक्तनी,' अर्थात्

मदीश्वर मदीश्वर कुतो मामत्याक्षीः? यीशुरुच्चैरिति जगाद।
तदा तत्र स्थिताः केचित् तत् श्रुत्वा बभाषिरे, अयम् एलि- ४७
यमाह्वयति। तेषां मध्याद् एकः शीघ्रं गत्वा स्पञ्जं गृहीत्वा ४८
तत्राम्लरसं दत्त्वा नलेन पातुं तस्मै ददौ। इतरेऽकथयन् तिष्ठत, ४९
तं रक्षितुम् एलिय आयाति नवेति पश्यामः।

यीशुः पुनरुच्चैराहूय प्राणान् जहौ। ततो मन्दिरस्य ५०
विच्छेदवसनम् ऊर्द्ध्वादधो यावत् छिद्यमानं द्विधाभवत्, भूमि- ५१
श्चकम्पे भूधरोव्यदीर्य्यत च। श्मशाने मुक्ते भूरिपुण्यवतां ५२
सुप्तदेहा उदतिष्ठन्, श्मशानाद् वहिर्भूय तदुत्थानात् परं ५३
पुण्यपुरं गत्वा बहुजनान् दर्शयामासुः। यीशुरक्षणाय ५४
नियुक्तः शतसेनापतिस्तत्सङ्गिनश्च तादृशीं भूकम्पादिघटनां
दृष्ट्वा भीता अवदन्, एष ईश्वरपुत्रो भवति।

या बहुयोषितो यीशुं सेवमाना गालीलस्तत्पश्चादागता- ५५
स्तासां मध्ये मग्दलीनी मरियम् याकूब्योश्योर्माता या ५६
मरियम् सिबदियपुत्रयोर्माता च योषित एता दूरे तिष्ठन्त्यो
ददृशुः।

सन्ध्यायां सत्याम् अरिमथियानगरस्य यूषफ्नामा धनी ५७
मनुजो यीशोः शिष्यत्वात् पीलातस्य समीपं गत्वा यीशोः कायं ५८
ययाचे, तेन पीलातः कायं दातुम् आदिदेश। यूषफ् ५९
तत्कायं नीत्वा शुचिवस्त्रेणाच्छाद्य स्वार्थं शैले यत् श्मशानं ६०
चखान, तन्मध्ये तत्कायं निधाय तस्य द्वारि वृहत्पाषाणं
ददौ। किन्तु मग्दलीनी मरियम् अन्यमरियम् एते स्त्रियौ ६१
तत्र श्मशानसम्मुख उपविविशतुः।

तदनन्तरं निस्तारोत्सवस्यायोजनदिनात् परेऽहनि प्रधा- ६२

नयाजकाः फिरूशिनश्च मिलित्वा पीलातमुपागत्याकथयन्,
६३ हे महेच्छ स प्रतारको जीवन् अकथयत्, दिनत्रयात् परं
६४ श्मशानादुत्थास्यामि तद्वाक्यं स्मरामो वयं; तस्मात् तृतीय-
दिनं यावत् तत् श्मशानं रक्षितुमादिशतु, नोचेत् तच्छिष्या
यामिन्यामागत्य तं हृत्वा लोकान् वदिष्यन्ति, स श्मशाना-
दुदतिष्ठत्, तथा सति प्रथमभ्रान्तेः शेषीयभ्रान्ति र्महती
६५ भविष्यति। तदा पीलात अवादीत्, युष्माकं समीपे रक्षिगण
६६ आस्ते, यूयं गत्वा यथा साध्यं रक्षयत। ततस्ते गत्वा
तद्द्वारपाषाणं मुद्राङ्कितं कृत्वा रक्षिगणं नियोज्य श्मशानं
रक्षयामासुः।

---

## २८ अष्टाविंशोऽध्यायः।

१ खीष्टोत्थानं ११ रक्षिभ्यः फिरूशिनामुत्कोचदानं १६ खीष्टस्य शिष्येे दर्शनम्
आदेशश्च।

१ ततः परं विश्रामवारस्य शेषे सप्ताहप्रथमदिनस्य प्रभाते
जाते मग्दलीनी मरियम् अन्यमरियम् च श्मशानं द्रष्टु-
२ मागता। तदा महान् भूकम्पोऽभवत्; परमेश्वरीयदूतः
स्वर्गादवरुह्य श्मशानद्वारात् पाषाणमपसार्य्य तदुपर्य्युपविवेश।
३ तद्वदनं विद्युद्वत् तेजोमयं वसनं हिमशुभ्रञ्च। तदानीं रक्षि-
५ णस्तद्भयात् कम्पिता मृतवद् बभूवुः। स दूतो योषितो जगाद,
६ यूयं मा भैष्ट, क्रुशहतयीशुं मृगयध्वे तदहं वेद्मि। सोऽत्र
नास्ति, यथावदत् तथोत्थितवान्; एतत् प्रभोः शयन-
७ स्थानं पश्यत। तूर्णं गत्वा तच्छिष्यान् इति वदत, स श्मशानाद्
उदतिष्ठत्, युष्माकमग्रे गालीलं यास्यति यूयं तत्र तं वीक्षि-
८ ष्यध्वे, पश्यताहं वार्त्तामिमां युष्मानवादिषं। ततस्ता भयात्

महानन्दाञ्च श्मशानात् तूर्णं वहिर्भूय तच्छिष्यान् वार्त्तां वक्तुं धावितवत्यः। किन्तु शिष्यान् वार्त्तां वक्तुं यान्ति, तदा ९ यीशु र्दर्शनं दत्त्वा ता जगाद, युष्माकं कल्याणं भूयात्, ततस्ता आगत्य तत्पादयोः पतित्वा प्रणेमुः। यीशुस्ता अवा- १० दीत्, मा बिभीत, यूयं गत्वा मम भ्रातॄन् गालीलं यातुं वदत, तत्र ते मां द्रक्ष्यन्ति।

स्त्रियो गच्छन्ति, तदा रक्षिणां केचित् पुरं गत्वा यद्यद् ११ घटितं तत्सर्व्वं प्रधानयाजकान् ज्ञापितवन्तः। ते प्राचीनैः १२ समं संसदं कृत्वा मन्त्रयन्तो बहुमुद्राः सेनाभ्यो दत्त्वावदन्, अस्मासु निद्रितेषु तच्छिष्या यामिन्यामागत्य तं हृत्वानयन्, १३ इति यूयं प्रचारयत। यद्येतदधिपतेः श्रोत्रगोचरीभवेत्, १४ तर्हि तं बोधयित्वा युष्मानविष्यामः। ततस्ते मुद्रा गृहीत्वा १५ शिक्षानुरूपं कर्म्म चक्रुः, यिहूदीयानां मध्ये तस्याद्यापि किंवदन्ती विद्यते।

एकादश शिष्या यीशुनिरूपितगालीलस्याद्रिं गत्वा तत्र १६ तं संवीक्ष्य प्रणेमुः, किन्तु केचित् सन्दिग्धवन्तः। यीशुस्तेषां १८ समीपमागत्य व्याहृतवान्, स्वर्गमेदिन्योः सर्व्वाधिपतित्वभारो मय्यर्पित आस्ते। अतो यूयं प्रयाय सर्व्वदेशीयान् शिष्यान् १९ कृत्वा पितुः पुत्त्रस्य पवित्रस्यात्मनश्च नाम्ना तानवगाहयत; अहं युष्मान् यद्यदादिशं तदपि पालयितुं तानुपादिशत। २० पश्यत, जगदन्तं यावत् सदाहं युष्माभिः साकं तिष्ठामि। इति।

---

# मार्कलिखित सुसंवादोऽयं।

---

## १ प्रथमोऽध्यायः।

१ मज्जकस्य योहनो वृत्तान्तः ९ ख्रीष्टस्य मज्जनं १२ तस्य परीक्षा १४ तस्य सुसंवाद-प्रचारः १६ शिमोन आन्द्रियादीनाञ्चाह्वानं २१ भूतग्रस्ताद् भूतबहिष्करणं २९ पितरस्य श्वश्र्वा आरोग्यकरणं ३२ बहूनां लोकानामारोग्यकरणं निर्जन-प्रार्थनं ४० कुष्ठिन आरोग्यकरणञ्च।

१ ईश्वरपुत्त्रस्य यीशुख्रीष्टस्य सुसंवादारम्भः। भविष्यद्वादिनां
२ ग्रन्थेषु लिपिरित्थमास्ते,

पश्य स्वकीयदूतन्तु तवाग्रे प्रेषयाम्यहम्।
गत्वा त्वदीयपन्थानं स हि परिष्करिष्यति।
३ 'परमेशस्य पन्थानं परिष्कुरुत सर्व्वतः।
तस्य राजपथञ्चैव समानं कुरुताधुना।'
इत्येतत् प्रान्तरे वाक्यं वदतः कस्यचिद्रवः॥

४ सएव योहन् प्रान्तरे मज्जितवान् तथा पापमार्जननिमित्तं
५ मनोव्यावर्त्तकमज्जनस्य कथाञ्च प्रचारितवान्। ततो यिहू-दादेशयिरूशालम्नगरनिवासिनः सर्व्वे लोका बहि र्भूत्वा तस्य समीपमागत्य स्वानि स्वानि पापान्यङ्गीकृत्य यर्द्दननद्यां
६ तेन मज्जिता बभूवुः। अस्य योहनः परिधेयानि क्रमेलकलोम-जानि, तस्य कटिबन्धनं चर्म्मजातम्, तस्य भक्ष्याणि च शूक-
७ कीटा वन्यमधूनि चासन्। स प्रचारयन् कथयाञ्चक्रे, अहं नम्री-भूय यस्य पादुकाबन्धनं मोचयितुमपि न योग्योस्मि, तादृशो
८ मत्तो गुरुतर एकः पुरुषो मत्पश्चादागच्छति। अहं युष्मान् जले मज्जितवान् किन्तु स पवित्र आत्मनि संमज्जयिष्यति।

अपरञ्च तस्मिन्नेव काले गालील्प्रदेशस्य नासरद्ग्रामाद् ९ यीशुरागत्य योहना यर्द्दननद्यां मज्जितोऽभूत्। स जला- १० दुत्थितमात्रो मेघद्वारं मुक्तं कपोतवत् स्वस्योपरि अवरो- हन्तमात्मानञ्च दृष्टवान्। त्वं मम प्रियः पुत्रस्त्वय्येव मम ११ महासन्तोष इयमाकाशीया वाणी बभूव।

तस्मिन् काले आत्मा तं प्रान्तरमध्यं निनाय। अथ स १२ चत्वारिंशद्दिनानि तस्मिन् स्थाने वन्यपशुभिः सह तिष्ठन् १३ शैताना परीक्षितः; पश्चात् स्वर्गीयदूतास्तं सिषेविरे।

अनन्तरं योहनि बन्धनालये बद्धे सति यीशु र्गालील्- १४ प्रदेशमागत्य ईश्वरराज्यस्य सुसंवादं प्रचारयन् कथयामास, १५ कालः सम्पूर्ण ईश्वरराज्यञ्च समीपमागतं; अतोहेतो र्यूयं मनांसि व्यावर्त्तयध्वं सुसंवादे च विश्वसित।

तदनन्तरं स गालीलीयसमुद्रस्य तीरे गच्छन् शिमोन् १६ तस्य भ्राता अन्द्रियनामा च इमौ द्वौ जनौ मत्स्यधारिणौ सागरमध्ये जालं प्रक्षिपन्तौ दृष्ट्वा ताववदत्, युवां मम १७ पश्चादागच्छतं, युवामहं मनुष्यधारिणौ करिष्यामि। ततस्तौ १८ तत्क्षणमेव जालानि परित्यज्य तस्य पश्चात् जग्मतुः। ततः १९ परं तत्स्थानात् किञ्चिद् दूरं गत्वा स सिवदीपुत्रयाकूब् तद्भ्रातृयोहन् च इमौ नौकायां जालानां जीर्णमुद्धारयन्तौ दृष्ट्वा तावाह्वयत्। ततस्तौ नौकायां वेतनभुग्भिः सहितं २० स्वपितरं विहाय तत्पश्चादीयतुः।

ततः परं कफर्नाहूम्नामकं नगरमुपस्थाय स विश्राम- २१ दिवसे भजनगृहं प्रविश्य समुपदिदेश। तस्योपदेशाल्लोका २२ आश्चर्य्यं मेनिरे यतः सोऽध्यापकाइव नोपदिशन् प्रभाववानिव

२३ प्रोपदिदेश। अपरञ्च तस्मिन् भजनगृहे अपवित्रभूतेन ग्रस्त
२४ एको मानुष आसीत्। स चीत्शब्दं कृत्वा कथयाञ्चक्रे भो
नासरतीय यीशो त्वमस्मान् त्यज, त्वया सहास्माकं कः
सम्बन्धः ? त्वं किमस्मान् नाशयितुं समागतः ? त्वमीश्वरस्य
२५ पवित्रलोक इत्यहं जानामि। तदा यीशुस्तं तर्जयित्वा जगाद
२६ तूष्णीं भव इतो वहिर्भव च। ततः सोऽपवित्रभूतस्तं सम्पीड्य
२७ अत्युच्चैश्चीत्कृत्य निर्जगाम। तेनैव सर्व्वे चमत्कृत्य परस्परं
कथयाञ्चक्रिरे, अहो किमिदं? कीदृशोऽयं नव्य उप-
देशः ? अनेन प्रभावेनापवित्रभूतेष्वाज्ञापितेषु ते तदाज्ञानुव-
२८ र्त्तिनो भवन्ति। तदा तस्य यशो गालीलश्चतुर्दिक्स्थसर्व्व-
देशान् व्याप्नोत्।

२९ अपरञ्च ते भजनगृहाद् वहि र्भूत्वा याकूब्योहन्भ्यां सह
३० शिमोन आन्द्रियस्य च निवेशनं प्रविविशुः। तदा पितरस्य
श्वश्रूर्ज्वरपीडिता शय्यायामास्त इति ते तं झटिति विज्ञाप-
३१ याञ्चक्रुः। ततः स आगत्य तस्या हस्तं धृत्वा तामुदस्थापयत्;
तदैव तां ज्वरोऽत्याचीत् ततः परं सा तान् सिषेवे।

३२ अथास्तं गते रवौ सन्ध्याकाले सति लोकास्तत्समीपं
३३ सर्व्वान् रोगिणो भूतधृतांश्च समानिन्युः। सर्व्वे नागरिका लोका
३४ द्वारि संमिलिताश्च। ततः स नानाविधरोगिणो बहून्
मनुजानरोगिणश्चकार तथा बहून् भूतान् त्याजयाञ्चकार
तान् भूतान् किमपि वाक्यं वक्तुं निषिषेध च यतोहेतोस्ते
३५ तमजानन्। अपरञ्च सोऽतिप्रत्यूषे वस्तुतस्तु रात्रिशेषे
समुत्थाय वहिर्भूय निर्जनं स्थानं गत्वा तत्र प्रार्थया-
३६ ञ्चक्रे। अनन्तरं शिमोन् तत्सङ्गिनश्च तस्य पश्चाद् गतवन्तः।

तदुद्देशं प्राप्य तमवदन् सर्व्वे लोकास्त्वां मृगयन्ते। तदा ३७
सोऽकथयत् आगच्छत वयं समीपस्थानि नगराणि यामः, ३८
यतोऽहं तत्र कथां प्रचारयितुं वहिरागमम्। अथ स तेषां ३९
गालील्प्रदेशस्य सर्व्वेषु भजनगृहेषु कथाः प्रचारयाञ्चक्रे
भूतानत्याजयच्च।

अनन्तरमेकः कुष्ठी समागत्य तत्सम्मुखे जानुपातं विन- ४०
यञ्च कृत्वा कथितवान् यदि भवान् इच्छति तर्हि मां
परिष्कर्त्तुं शक्नोति। ततः कृपालु र्यीशुः करौ प्रसार्य्य तं ४१
स्पृष्ट्वा कथयामास ममेच्छा विद्यते त्वं परिष्कृतो भव। एत- ४२
त्कथायाः कथनमात्रात् स कुष्ठी रोगान्मुक्तः परिष्कृतोऽभवत्।
तदा स तं विसृजन् गाढमादिश्य जगाद सावधानो भव ४३
कथामिमां कमपि मा वद; स्वात्मानं याजकं दर्शय, लोकेभ्यः ४४
स्वपरिष्कृतेः प्रमाणदानाय मूसानिर्णीतं यद्दानं तदु-
त्सृजस्व च। किन्तु स गत्वा तत् कर्म्म इत्थं विस्तार्य्य प्रचार- ४५
यितुं प्रारेभे तेनैव यीशुः पुनः सप्रकाशं नगरं प्रवेष्टुं
नाशक्नोत् ततोहेतोर्वहिः काननस्थाने तस्थौ; तथापि चतुर्द्दि-
ग्भ्यो लोकास्तस्य समीपमाययुः।

---

## २ द्वितीयोऽध्यायः।

१ बहुलोकानां ख्रीष्टसमीपागमनं ३ पक्षाघातिन आरोग्यकरणं पापमार्जनञ्च २३ मथिनाम्न आह्वानं पापिभिः सह भोजनञ्च १८ योहनः शिष्याणां फिरूशीनाञ्चोपवासे निरुत्तरताकरणं २३ विश्रामवासरे कणिशं छित्वा तद्भोजनं स्वशिष्याणां निर्दोषकरणञ्च।

तदनन्तरं यीशौ कतिपयदिनानि विलम्ब्य पुनः कफ- १
र्नाहूम्नगरं प्रविष्टे स गृह आस्त इति किंवदन्त्या तत्क्षणं २

तत्समीपं बहवो लोका आगत्य समुपतस्थुः, तस्माद् गृहमध्ये सर्व्वेषां कृते स्थानं नाभवद् द्वारस्य चतुर्दिक्ष्वपि नाभवत्, तत्काले स तान् प्रति कथां प्रचारयाञ्चक्रे।

३ ततः परं लोकाश्चतुर्भि र्मानवैरेकं पक्षाघातिनं वाहयित्वा ४ तत्समीपम् आनिन्युः। किन्तु जनानां बहुत्वात् तं यीशोः सम्मुखमानेतुं न शक्नुवन्तो यस्मिन् स्थाने स आस्ते तदुपरि-गृहपृष्ठं खनित्वा छिद्रं कृत्वा तेन मार्गेण सशय्यं पक्षाघातिनम् ५ अवरोहयामासुः। ततो यीशुस्तेषां विश्वासं दृष्ट्वा तं पक्षा-६ घातिनं बभाषे हे वत्स तव पापानां मार्जनं भवतु। तदा ७ कियन्तोऽध्यापकास्तत्रोपविशन्तो मनोभि र्वितर्कयाञ्चक्रुः, एष मनुष्य एतादृशीमीश्वरनिन्दां कथां कुतः कथयति? ईश्वरं ८ विना पापानि मार्ष्टुं कस्य सामर्थ्यम् आस्ते? इत्थं ते वितर्कयन्ति यीशुस्तत्क्षणं मनसा तद् बुद्ध्वा तानवदद् यूयमन्तः-९ करणैः कुत एतानि वितर्कयथ? तव पापानां मार्जनं भवतु यद्वा त्वमुत्तिष्ठ शय्यां गृहीत्वा गतिञ्च कुरु, एतयो र्द्वयो १० र्मध्ये तं पक्षाघातिनं वक्तुं का कथा सुवाच्या? किन्तु पृथिव्यां पापानि मार्ष्टुं मनुष्यपुत्रस्य सामर्थ्यमस्ति, एतद् युष्मान् ११ ज्ञापयितुं (स तस्मै पक्षाघातिने कथयामास) उत्तिष्ठ तव शय्यां १२ गृहीत्वा स्वगृहं याहि, अहं त्वामिदम् आज्ञापयामि। ततः स तत्क्षणम् उत्थाय शय्यां गृहीत्वा सर्व्वेषां साक्षात् जगाम; सर्व्वे विस्मिता एतादृशं कर्म्म वयम् कदापि नापश्याम, इमां कथां कथयित्वेश्वरं धन्यमब्रुवन्।

१३ तदनन्तरं यीशुस्तत्स्थानात् पुनः समुद्रतटं ययौ; लोक-१४ निवहे तत्समीपमागते स तान् समुपदिदेश। अथ गच्छन्

करसञ्चयगृहे उपविष्टम् आल्फीयपुत्त्रं लेविं दृष्ट्वा तमाहूय कथितवान् मत्पश्चात् त्वमागच्छ ततः स उत्थाय तत्पश्चाद् ययौ। अनन्तरं यीशौ तस्य गृहे भोक्तुम् उपविष्टे बहवः १५ करसञ्चायिनः पापिनश्च तेन तच्छिष्यैश्च सहोपविविशुः, यतो बहवस्तत्पश्चादाजग्मुः। तदा स करसञ्चायिभिः पापि- १६ भिश्च सह खादति, तद् दृष्ट्वाध्यापकाः फिरूशिनश्च तस्य शिष्यानूचुः करसञ्चायिभिः पापिभिश्च सहायं कुतो भुंक्ते पिवति च? तद्वाक्यं श्रुत्वा यीशुः प्रत्युवाच, अरोगिलोकानां चिकि- १७ त्सकेन प्रयोजनं नास्ति, किन्तु रोगिणामेव; अहं धार्म्मि-कानाह्वातुं नागतः किन्तु मनो व्यावर्त्तयितुं पापिन एव।

ततः परं योहनः फिरूशिनाञ्चोपवासाचारिशिष्या यीशोः १८ समीपम् आगत्य कथयामासुः, योहनः फिरूशिनाञ्च शिष्या उपवसन्ति किन्तु भवतः शिष्या नोपवसन्ति किं कारणमस्य? तदा यीशुस्तान् बभाषे यावत् कालं सखिभिः सह कन्याया १९ वरस्तिष्ठति तावत्कालं ते किमुपवस्तुं शक्नुवन्ति? यावत्कालं वरस्तैः सह तिष्ठति तावत्कालं त उपवस्तुं न शक्नुवन्ति। यस्मिन् काले तेभ्यः सकाशाद् वरो नेष्यते स काल आगच्छति, २० तस्मिन् काले ते जना उपवत्स्यन्ति। कोपि जनः पुरातनवस्त्रे २१ नूतनवस्त्रं न सीव्यति, यतो नूतनवस्त्रेण सह सेवने कृते जीर्णं वस्त्रं छिद्यते तस्मात् पुन र्महत् छिद्रं जायते। कोपि जनः २२ पुरातनकुतूषु नूतनं द्राक्षारसं न स्थापयति, यतो नूतनद्राक्षारसस्य तेजसा ताः कुत्वो विदीर्य्यन्ते ततो द्राक्षारसश्च पतति कुत्वश्च नश्यन्ति, अतएव नूतनद्राक्षारसो नूतन-कुतूषु स्थापनीयः।

२३ तदनन्तरं यीशु र्यदा विश्रामवारे शस्यक्षेत्रेण गच्छति २४ तदा तस्य शिष्या गच्छन्तः शस्यमञ्जरीश्छेत्तुं प्रवृत्ताः। अतः फिरूशिनो यीशवे कथयामासुः पश्यतु विश्रामवासरे यत् २५ कर्म्म न कर्त्तव्यं तद् इमे कुतः कुर्व्वन्ति? तदा स तेभ्योऽकथयत् दायूद् तत्सङ्गिनश्च भक्ष्याभावात् क्षुधिताः सन्तो २६ यत् कर्म्म कृतवन्तस्तत् किं युष्माभि र्न पठितम्? अबियाथर्नामके महायाजकतां कुर्व्वति स कथमीश्वरस्यावासं प्रविश्य ये दर्शनीयपूपा याजकान् विनान्यस्य कस्यापि न भक्ष्यास्तानेव २७ बुभुजे सङ्गिलोकेभ्योऽपि ददौ। सोऽपरमपि जगाद, विश्रामवारो मनुष्यार्थमेव निरूपितोऽस्ति किन्तु मनुष्यो विश्राम-२८ वारार्थं नैव। मनुष्यपुत्रो विश्रामवारस्यापि प्रभुरास्ते।

---

## ३ तृतीयोऽध्यायः।

१ शुष्कहस्तलोकस्य तद्न्येषाञ्चारोग्यकरणं १३ द्वादशशिष्याणां मनोनीतकरणं २० अध्यापकानां निरुत्तरकरणं ३१ कुटुम्बनिर्णयश्च।

१ अनन्तरं यीशुः पुन र्भजनगृहं प्रविष्टस्तस्मिन् स्थाने शुष्क-२ हस्त एको मानव आसीत्। स विश्रामवारे तमरोगिणं करिष्यति नवेत्यत्र बहवस्तम् अपवदितुं छिद्रमपेक्षितवन्तः। ३ तदा स तं शुष्कहस्तं मनुष्यं जगाद मध्यस्थाने त्वमुत्तिष्ठ। ४ ततः परं स तान् पप्रच्छ विश्रामवारे हितमहितं तथा हि प्राणरक्षा वा प्राणनाश एषां मध्ये किं करणीयं? किन्तु ते ५ निःशब्दास्तस्थुः। तदा स तेषामन्तःकरणानां काठिन्याद्धेतो र्दुःखितः क्रोधात् चतुर्दिशो दृष्टवान् तं मानुषं गदितवान् तं हस्तं विस्तारय, ततस्तेन हस्ते विस्तृते तद्धस्तोऽन्यहस्तवद् ६ अरोगो जातः। अथ फिरूशिनः प्रस्थाय तं नाशयितुं हेरो-

दीयैः सह मन्त्रयितुमारेभिरे। अतएव यीशुस्तत्स्थानं ७
परित्यज्य शिष्यैः सह पुनः सागरसमीपं गतः; ततो गालील्-
यिहूदा-यिरूशालम्-इदोम्-यर्दन्नदीपारस्थानेभ्यो लोक- ८
समूहस्तस्य पश्चाद् गतः; तदन्यः सोरसीदनोः समीपवासि-
लोकसमूहश्च तस्य महाकर्म्मणां वार्त्तां श्रुत्वा तस्य सन्निधि-
मागतः। तदा लोकसमूहश्चेत् तस्योपरि पतति इत्याशङ्क्य ९
स नावमेकां निकटे स्थापयितुं शिष्यानादिष्टवान्। यतोऽने- १०
कमनुष्याणामारोग्यकरणाद् व्याधिग्रस्ताः सर्व्वे तं स्प्रष्टुं पर-
स्परं बलेन यत्नवन्तः। अपरञ्च अपवित्रभूतास्तं दृष्ट्वा ११
तच्चरणयोः पतित्वा प्रोच्चैः प्रोचुः, त्वमीश्वरस्य पुत्रः। किन्तु स १२
तान् दृढम् आज्ञाप्य स्वं परिचाययितुं निषिद्धवान्।

अनन्तरं स पर्व्वतमारुह्य यं यं प्रतीच्छा तं तमाहूतवान् १३
ततस्ते तत्समीपमागताः। तदा स द्वादशजनान् स्वेन सह १४
स्थातुं सुसंवादप्रचाराय प्रेरिता भवितुं सर्व्वप्रकारव्याधीनां १५
शमनकरणाय प्रभावं प्राप्तुं भूतान् त्याजयितुञ्च नियुक्तवान्।
तेषां नामानीमानि, शिमोन् सिवदिपुत्रो याकूब् तस्य भ्राता १६
योहन् च आन्द्रियः फिलिपो वर्थलमयः, मथी थोमा च १७
आल्फीयपुत्रो याकूब् थद्दीयः किनानीयः शिमोन् यस्तं १८
परहस्तेष्वर्पयिष्यति स ईष्करियोतीययिहूदाश्च। स शिमोने १९
पितर इत्युपनाम ददौ याकूब्योहन्भ्यां च बिनेरिगिश्
अर्थतो मेघनादपुत्रावित्युपनाम ददौ।

अनन्तरं ते निवेशनं गताः, किन्तु तत्रापि पुनर्महान् २०
जनसमागमो ऽभवत् तस्मात्ते भोक्तुमप्यवकाशं न प्राप्ताः।
ततस्तस्य सुहृल्लोका इमां वार्त्तां प्राप्य स हतज्ञानोभूद् इति २१

२२ कथां कथयित्वा तं धृत्वानेतुं गताः। अपरञ्च यिरूशालम आगता ये येऽध्यापकास्ते जगदुरयं पुरुषो भूतपत्याविष्ट-
२३ स्तेन भूतपतिना भूतान् त्याजयति। ततस्तानाहूय यीशु र्दृष्टान्तैः कथां कथितवान् शैतान् कथं शैतानं त्याजयितुं
२४ शक्नोति? किञ्चन राज्यं यदि स्वविरोधेन पृथग् भवति तर्हि
२५ तद् राज्यं स्थिरं स्थातुं न शक्नोति। तथा कस्यापि परिवारो यदि परस्परं विरोधी भवति तर्हि सोपि परिवारः स्थिरं
२६ स्थातुं न शक्नोति। तद्वत् शैतान् यदि स्वविपक्षतया उत्ति-ष्ठन् भिन्नो भवति तर्हि सोपि स्थिरं स्थातुं न शक्नोति किन्तू-
२७ च्छिन्नो भवति। अपरञ्च प्रबलं जनं प्रथमं न बद्ध्वा कोपि तस्य गृहं प्रविश्य द्रव्याणि लुण्ठयितुं न शक्नोति, तं बद्ध्वैव
२८ तस्य गृहस्य द्रव्याणि लुण्ठयितुं शक्नोति। अतोहेतो र्युष्मभ्यमहं सत्यं कथयामि मनुष्याणां सन्ताना यानि यानि पापानी-श्वरनिन्दाञ्च कुर्व्वन्ति तेषां तत्सर्व्वेषामपराधानां क्षमा भवितुं
२९ शक्नोति, किन्तु यः कश्चित् पवित्रमात्मानं निन्दति तस्यापरा-धस्य क्षमा कदापि न भविष्यति सोनन्तदण्डस्यार्हो भविष्यति।
३० तस्यापवित्रभूतोऽस्ति तेषामेतत्कथाहेतोः स इत्थं कथितवान्।

३१ अथ तस्य माता भ्रातृगणश्चागत्य बहिस्तिष्ठन्तो लोकान्
३२ प्रेष्य तमाहूतवन्तः। ततस्तत्सन्निधौ समुपविष्टा लोकास्तं बभा-षिरे पश्य बहिस्तव माता भ्रातरश्च त्वाम् अन्विच्छन्ति।
३३ तदा स तान् प्रत्युवाच मम माता का भ्रातरो वा के? ततः
३४ परं स स्वमीपोपविष्टान् शिष्यान् प्रति अवलोकनं कृत्वा कथ-
३५ यामास पश्यतैते मम माता भ्रातरश्च। यः कश्चिद् ईश्वरस्येष्टां क्रियां करोति स एव मम भ्राता भगिनी माता च।

# ४ चतुर्थोऽध्यायः।

१ वीजवापकस्य दृष्टान्तः १० तस्य तात्पर्य्यं २१ प्रदीपस्य दृष्टान्तः २४ सावधानभवनादेशः २६ वीजवर्द्धनस्य दृष्टान्तः ३० सर्षपस्य दृष्टान्तः ३३ अन्यास्व दृष्टान्तकथाः ३५ तर्जनेन समुद्रस्य निस्तरङ्गकरणं।

अनन्तरं स समुद्रतटे पुनरुपदेष्टुं प्रारेभे, ततस्तत्र बहु- १
जनानां समागमात् स सागरोपरि नौकामारुह्य समुपविष्टः;
सर्व्वे लोकाः समुद्रकूले तस्थुः। तदा स दृष्टान्तकथाभि २
र्बहूपदिष्टवान् उपदिशंश्च कथितवान्, अवधानं कुरुत, एको ३
वीजवप्ता वीजानि वप्तुं गतः; वपनकाले कियन्ति वीजानि ४
मार्गपार्श्वे पतितानि, तत आकाशीयपक्षिण एत्य तानि
चखादुः। कियन्ति वीजानि स्वल्पमृत्तिकावत्पाषाणभूमौ ५
पतितानि तानि मृदोल्पत्वात् शीघ्रमङ्कुरितानि; किन्तूदिते ६
सूर्य्ये दग्धानि तथा मूलानां नाधोगतत्वात् शुष्काणि च।
कियन्ति वीजानि कण्टकिवनमध्ये पतितानि ततः कण्टकानि ७
संवृद्ध्य तानि जग्रसुस्तानि न च फलितानि। तथा कियन्ति ८
वीजान्युत्तमभूमौ पतितानि तानि संवृद्ध्य फलान्युत्पादितानि
कियन्ति वीजानि त्रिंशद्गुणानि कियन्ति षष्टिगुणानि कियन्ति
शतगुणानि फलानि फलितवन्ति। अथ स तानवदत् यस्य ९
श्रोतुं कर्णौ स्तः स शृणोतु।

तदनन्तरं निर्जनसमये तत्सङ्गिनो द्वादशशिष्याश्च तं तद्- १०
दृष्टान्तवाक्यस्यार्थं पप्रच्छुः। तदा स तानुदितवान् ईश्वर- ११
राज्यस्य निगूढवाक्यं बोद्धुं युष्माकमधिकारोऽस्ति; किन्तु ये १२
वहिर्भूताः 'ते पश्यन्तः पश्यन्ति किन्तु न जानन्ति, शृण्वन्तः
शृण्वन्ति किन्तु न बुध्यन्ते, चेत्तै र्मनःसु कदापि परिवर्त्तितेषु
तेषां पापान्यमोचयिष्यन्त,' अतोहेतोस्तान् प्रति दृष्टान्तैरेव

१३ तानि मया कथितानि। अथ स कथितवान् यूयं किमेतद् दृष्टान्तवाक्यं न बुध्यध्वे? तर्हि कथं सर्व्वान् दृष्टान्तान
१४ भोत्स्यध्वे? वीजवप्ता वाक्यरूपाणि वीजानि वपति; तत्र ये ये
१५ लोका वाक्यं शृण्वन्ति, किन्तु श्रुतमात्रात् शैतान् शीघ्रमागत्य तेषां मनःसूप्तानि तानि वाक्यरूपाणि वीजान्यपनयति
१६ तएव उप्तवीजमार्गपार्श्वस्वरूपाः। ये जना वाक्यं श्रुत्वा सहसा
१७ परमानन्देन गृह्लन्ति, किन्तु हृदि स्थैर्य्याभावात् किञ्चित् कालमात्रं तिष्ठन्ति तत्पश्चात् तद्वाक्यहेतोः कुत्रचित् क्लेशे उपद्रवे वा समुपस्थिते तदैव विघ्नं प्राप्नुवन्ति तएव उप्तवीज-
१८ पाषाणभूमिस्वरूपाः। ये जनाः कथां शृण्वन्ति किन्तु सांसा-
१९ रिकी चिन्ता धनभ्रान्ति र्विषयलोभश्च एते सर्व्वे उपस्थाय तां कथां ग्रसन्ति ततः सा विफला भवति तएव उप्तवीज-
२० सकण्टकभूमिस्वरूपाः। ये जना वाक्यं श्रुत्वा गृह्लन्ति तेषां कस्य वा त्रिंशद्गुणानि कस्य वा षष्टिगुणानि कस्य वा शतगुणानि फलानि भवन्ति तएव उप्तवीजोर्व्वरभूमिस्वरूपाः।

२१ तदा सोऽपरमपि कथितवान् कोपि जनो दीपाधारं परित्यज्य द्रोणस्याधः खट्वाया अधो वा स्थापयितुं दीपमा-
२२ नयति किं? अतोहेतो र्यन्न प्रकाशयिष्यते तादृग् लुक्कायितं किमपि वस्तु नास्ति; यद् व्यक्तं न भविष्यति तादृशं गुप्तं
२३ किमपि वस्तु नास्ति। यस्य श्रोतुं कर्णौ स्तः स शृणोतु।

२४ अपरमपि कथितवान् यूयं यद् यद् वाक्यं शृणुथ तत्र सावधाना भवत, यतो यूयं येन परिमाणेन परिमाथ तेनैव परिमाणेन युष्मदर्थमपि परिमास्यते; श्रोतारो यूयं युष्मभ्य-
२५ मधिकं दास्यते। यस्याश्रये वर्द्धते तस्मै अपरमपि दास्यते,

किन्तु यस्याश्रये न वर्द्धते तस्य यत् किञ्चिदस्ति तदपि तस्मान् नेष्यते।

अनन्तरं स कथितवान् एको लोकः क्षेत्रे वीजान्युप्त्वा जाग- २६ रणनिद्राभ्यां दिवानिशं गमयति, परन्तु तद्वीजं तस्याज्ञा- २७ तरूपेणाङ्कुरयति वर्द्धते च; यतोहेतोः प्रथमतः पत्राणि २८ ततः परं कणिशानि तत्पश्चात् कणिशपूर्णानि शस्यानि भूमिः स्वयमुत्पादयति; किन्तु फलेषु पक्केषु शस्यच्छेदनकालं ज्ञात्वा २९ स तत्क्षणं शस्यानि छिनत्ति, अनेन तुल्यमीश्वरराज्यं।

पुनः सोऽकथयद् ईश्वरराज्यं केन समं? केन वस्तुना सह ३० वा तदुपमास्यामि? तत् सर्षपैकेन तुल्यं यतो मृदि वपन- ३१ काले सर्षपवीजं सर्व्वपृथिवीस्थवीजात् क्षुद्रं किन्तु वपनात् ३२ परम् अङ्कुरयित्वा सर्व्वशाकाद् बृहद् भवति, तस्य बृहत्यः शाखाश्च जायन्ते ततस्तच्छायां पक्षिण आश्रयन्ते।

इत्थं तेषां बोधानुरूपं सोऽनेकदृष्टान्तैस्तानुपदिष्टवान्, ३३ दृष्टान्तं विना कामपि कथां तेभ्यो न कथितवान् पश्चान् निर्जने ३४ स शिष्यान् सर्व्वदृष्टान्तार्थं बोधितवान्।

तद्दिनस्य सन्ध्यायां स तेभ्योऽकथयद् आगच्छत वयं पारं ३५ याम। तदा ते लोकान् विसृज्य तमविलम्बं गृहीत्वा नौकया ३६ प्रतस्थिरे; अपरा अपि नावस्तया सह स्थिताः। ततः परं ३७ महाझञ्झ्रागमात् नौ र्दोलायमाना तरङ्गेण जलैः पूर्णाभ- वच्च। तदा स नौकापश्चाद्भागे उपधाने शिरो निधाय ३८ निद्रित आसीत् ततस्ते तं जागरयित्वा जगदुः, हे प्रभो, अस्माकं प्राणा यान्ति किमत्र भवतश्चिन्ता नास्ति? तदा स ३९ उत्थाय वायुं तर्जितवान् समुद्रञ्चोक्तवान् शान्तः सुस्थिरश्च

४० भव; ततो वायौ निवृत्तेऽब्धिर्निस्तरङ्गोऽभूत्। तदा स तानु-
वाच यूयं कुत एतादृक्शङ्काकुला भवत? किं वो विश्वासो
४१ नास्ति? तस्मात्तेऽतीवभीताः परस्परं वक्तुमारेभिरे, अहो
वायुः सिन्धुश्चास्य निदेशग्राहिणौ कीदृगयं मनुजः।

---

## ५ पञ्चमोऽध्यायः।

१ अनेकभूतग्रस्तारोग्यकरणं २१ अध्यापककन्यारोग्यकरणार्थगमनं २५ प्रदररोग्या-
रोग्यकरणं ३५ अध्यापककन्यायै जीवनदानञ्च।

१ अथ ते सिन्धुपारं गत्वा गिदेरीयप्रदेश उपतस्थुः। नौकातो
२ निर्गतमात्राद् अपवित्रभूतग्रस्त एकः श्मशानादेत्य तं साक्षाच्
३ चकार। स श्मशानेऽवात्सीत् कोपि तं शृङ्खलेन बद्ध्वा स्थाप-
४ यितुं नाशक्नोत्। जनैर्वारं वारं निगडैः शृङ्खलैश्च स बद्धोपि
शृङ्खलान्याकृष्य मोचितवान् निगडानि च भंक्त्वा खण्डं खण्डं
५ कृतवान् कोपि तं वशीकर्त्तुं न शशाक। दिवानिशं सदा
पर्व्वतं श्मशानञ्च भ्रमित्वा चीत्शब्दं कृतवान् ग्रावभिश्च स्वयं
६ स्वं कृत्तवान्। स यीशुं दूरात् पश्यन्नेव धावन् तं प्रणनाम
७ उच्चैरुवंश्चोवाच, हे सर्व्वोपरिस्थेश्वरपुत्र यीशो भवता सह
मे कः सम्बन्धः? अहं त्वामीश्वरेण शापये मां मा यातय।
८ यतो यीशुस्तं कथितवान् रे अपवित्रभूत, अस्मान्नराद् बहि-
९ र्निर्गच्छ। अथ स तं पृष्टवान् किन्ते नाम? तेन प्रत्युक्तं वय-
१० मनेके ऽस्मस्ततोऽस्मन्नाम वाहिनी। ततोस्मान् देशान्न प्रेषयेति
११ ते तं प्रार्थयन्त। तदानीं पर्व्वतं निकषा वृहन् वराहव्रजश्च-
१२ रन्नासीत्। तस्माद् भूता विनयेन जगदुः, अमुं वराहव्रजम्
१३ आश्रयितुम् अस्मान् प्रहिणु। यीशुनानुज्ञातास्तेऽपवित्रभूता
बहिर्निर्याय वराहव्रजं प्राविशन् ततः सर्व्वे वराहा वस्तुतस्तु

प्रायोदिसहस्रसंख्यकाः कटकेन महाजवाद् धावन्तः सिन्धौ प्राणान् जहुः। तस्माद् वराहपालकाः पलायमानाः पुरे १४ ग्रामे च तद्वार्त्तां कथयाञ्चक्रुः। तदा लोका घटितं तत्कार्य्यं १५ द्रष्टुं वहिर्जग्मुः यीशोः सन्निधिं गत्वा तं भूतग्रस्तम् अर्थाद् वाहिनीभूतग्रस्तं नरं सवस्त्रं सचेतनं समुपविष्टञ्च दृष्ट्वा बिभ्युः। ततो दृष्टतत्कार्य्यलोकास्तस्य भूतग्रस्तनरस्य वराहव्रजस्यापि १६ तां घटनां वर्णयामासुः। ततस्ते स्वसीमातो वहिर्गन्तुं यीशुं १७ विनेतुमारेभिरे। अथ तस्य नौकारोहणकाले स भूतमुक्तो ना १८ यीशुना सह स्थातुं प्रार्थयते; किन्तु स तमननुमत्य कथित- १९ वान् त्वं निजात्मीयानां समीपं गृहञ्च गच्छ प्रभुस्त्वयि कृपां कृत्वा यानि कर्म्माणि कृतवान् तानि तान् ज्ञापय। अतः स २० प्रस्थाय यीशुना कृतं तत्सर्व्वाश्चर्य्यं कर्म्म दिकापलिदेशे प्रचार- यितुं प्रारब्धवान् ततः सर्व्वे लोका आश्चर्य्यं मेनिरे।

अनन्तरं यीशौ नावा पुनरन्यपार उत्तीर्णे सिन्धुतटे च २१ तिष्ठति सति तत्समीपे बहुलोकानां समागमोऽभूत्। अपरं २२ यायीर् नाम्ना कश्चिद् भजनगृहस्याधिप आगत्य तं दृष्ट्वैव चरणयोः पतित्वा बहु निवेद्य कथितवान्; मम कन्या मृत- २३ प्राया‌भूद् अतो भवानेत्य तदारोग्याय तस्या गात्रे हस्तम् अर्पयतु तेनैव सा जीविष्यति। तदा यीशुस्तेन सह चलितः २४ किन्तु तत्पश्चाद् बहुलोकाश्चलित्वा तद्गात्रे पतिताः।

अथ द्वादशवर्षाणि प्रदररोगेण शीर्णा चिकित्सकानां २५ नानाचिकित्साभिश्च दुःखं भुक्तवती च सर्व्वस्वं व्ययित्वापि २६ नारोग्यं प्राप्ता च पुनरपि पीडितासीच्च या स्त्री सा यीशो २७ र्वार्त्तां प्राप्य मनसाकथयत् यद्यहं तस्य वस्त्रमात्र स्प्रष्टुं लभेयं

२८ तदा रोगहीना भविष्यामि। अतोहेतोः सा लोकारण्यमध्ये
२९ तत्पश्चादागत्य तस्य वस्त्रं पस्पर्श। तेनैव तत्क्षणं तस्या रक्त-
स्रोतः शुष्कं स्वयं तस्माद् रोगान्मुक्ता इत्यपि देहेऽनुभूता।
३० अथ स्वस्मात् शक्ति र्निर्गता यीशुरेतन्मनसा ज्ञात्वा लोक-
३१ निवहं प्रति मुखं व्यावृत्य पृष्टवान् केन मद्वस्त्रं स्पृष्टं? ततस्तस्य
शिष्या ऊचुः भवतो वपुषि लोकाः संघर्षन्ति तद् दृष्ट्वा केन
३२ मद्वस्त्रं स्पृष्टमिति कुतः कथयसि? किन्तु केन तत् कर्म्म कृतं
३३ तद् द्रष्टुं यीशुश्चतुर्दिशो दृष्टवान्। ततः सा स्त्री भीता
कम्पिता च सती स्वस्या रुक्प्रतिक्रिया जातेति ज्ञात्वागत्य
३४ तत्सम्मुखे पतित्वा सर्व्ववृत्तान्तं सत्यं तस्मै कथयामास। तदानीं
यीशुस्तां गदितवान्, हे कन्ये तव प्रतीतिस्त्वाम् अरोगा-
मकरोत् त्वं क्षेमेण व्रज स्वरोगान्मुक्ता च तिष्ठ।

३५ इतिवाक्यवदनकाले भजनगृहाधिपस्य निवेशनाल् लोका
एत्याधिपं बभाषिरे तव कन्या मृता तस्माद् गुरुं पुनः कुतः
३६ क्लिश्नासि? किन्तु यीशुस्तद् वाक्यं श्रुत्वैव भजनगृहाधिपं
३७ गदितवान् मा भैषीः केवलं विश्वसिहि। अथ पितरो याकूब्
तद्भ्राता योहन् च एतान् विना कमपि स्वपश्चाद् यातुं
३८ नान्वमन्यत। तस्य भजनगृहाधिपस्य निवेशनसमीपम् आगत्य
३९ कलहं बहुरोदनं विलापञ्च कुर्व्वतो लोकान् ददर्श। तस्मान्
निवेशनं प्रविश्य प्रोक्तवान् यूयं कुत इत्थं कलहं रोदनञ्च
४० कुरुथ? कन्या न मृता निद्राति। तस्मात्ते तमुपजहसुः किन्तु
यीशुः सर्व्वान् वहिष्कृत्य कन्यायाः पितरौ स्वसङ्गिनश्च
४१ गृहीत्वा यत्र कन्यासीत् तत् स्थानं प्रविष्टवान्। अथ स तस्याः
कन्याया हस्तौ धृत्वा तां बभाषे टालीथा कूमी, अर्थतो हे

कन्ये, त्वमुत्तिष्ठ इत्याज्ञापयामि। तेनैव तत्क्षणं सा द्वादश- ४२
वर्षवयस्का कन्या प्रोत्थाय चलितुमारेभे, इतः सर्व्वे महा-
विस्मयं गताः। तत एतस्यै किञ्चित् खाद्यं दत्तेति कथयित्वा ४३
एतत्कर्म्म कमपि न ज्ञापयतेति दृढमादिष्टवान्।

---

## ६ षष्ठोऽध्यायः।

१ खीष्टस्यावज्ञानं ७ शिष्येभ्यः शक्तिदानं १४ योहन्मज्जकस्य वधः ३० खीष्टस्य विजनगमनम् ३५ पञ्चपूपद्विमत्स्यैः पञ्चसहस्रलोकभोजनम् ४५ सिन्धौ पद्भ्यां गमनं ५३ बहुलोकारोग्यकरणञ्च।

अनन्तरं स तत्स्थानात् प्रस्थाय स्वप्रदेशमागतः शिष्याश्च १
तत्पश्चाद् गताः। अथ विश्रामवारे सति स भजनगृहे उपदेष्टु- २
मारब्धवान् ततोऽनेके लोकास्तत्कथां श्रुत्वा विस्मित्य जगदुः,
अस्य मनुजस्य ईदृशी आश्चर्य्यक्रिया कस्माज् जाता? तथा
स्वकराभ्याम् इत्थमद्भुतं कर्म्म कर्त्तुम् एतस्मै कथं ज्ञानं दत्तम्?
किमयं मरियमः पुत्त्रस्तच्चा नो? किमयं याकूब्-योसि-यिहू- ३
दा-शिमोनां भ्राता नो? अस्य भगिन्यः किमिहास्माभिः सह
नो? इत्थं ते तदर्थे प्रत्यूहं गताः। तदा यीशुस्तेभ्योऽकथयत् ४
स्वदेशं स्वकुटुम्बान् स्वपरिजनांश्च विना कुत्रापि भविष्यद्वादी
असत्कृतो न भवति। अपरञ्च तेषामप्रत्ययात् स विस्मितः ५
कियतां रोगिणां वपुःषु हस्तम् अर्पयित्वा केवलं तेषामारोग्य- ६
करणाद् अन्यत् किमपि चित्रकार्य्यं कर्त्तुं न शक्तः।

अथ स चतुर्दिक्स्थ ग्रामान् भ्रमित्वा उपदिष्टवान् द्वादश- ७
शिष्यान् आहूय अमेध्यभूतान् वशीकर्त्तुं शक्तिं दत्त्वा तेषां द्वौ
द्वौ जनौ प्रेषितवान्। पुनरित्यादिशद् यूयम् एकैकां यष्टिं ८
विना वस्त्रसंपुटः पूपः कटिबन्धे ताम्रखण्डञ्च एषां किमपि

९ मा गृह्णीत, मार्गयात्रायै पादेषूपानहौ दत्त्वा द्वे उत्तरीये
१० मा परिधद्ध्वं। अपरमप्युक्तं तेन यूयं यस्यां पुर्य्यां यस्य निवेशनं प्रवेक्ष्यथ तां पुरीं यावन्न त्यक्ष्यथ तावत् तन्निवेशने
११ स्थास्यथ। तत्र यदि केपि युष्माकमातिथ्यं न विदधति युष्माकं कथाश्च न शृण्वन्ति तर्हि तत्स्थानात् प्रस्थानसमये तेषां विरुद्धं साक्ष्यं दातुं स्वपादानास्फाल्य रजः सम्पातयत; अहं युष्मान् यथार्थं वच्मि विचारदिने तन्नगरस्यावस्थातः
१२ सिदोमामोरयो र्नगरयोरवस्था सह्यतरा भविष्यति। अथ ते गत्वा लोकानां मनःपरावर्त्तनीः कथा प्रचारितवन्तः।
१३ एवमनेकान् भूतांश्च त्याजितवन्तस्तथा तैलेन मर्द्दयित्वा बहून् जनानरोगानकार्षुः।

१४ इत्थं तस्य सुख्यातिश्चतुर्दिशो व्याप्ता तदा हेरोद् राजा तन्निशम्य कथितवान्, योहन् मज्जकः श्मशानाद् उत्थित अतो-
१५ हेतोस्तेन सर्व्वा एता अद्भुतक्रियाः प्रकाशन्ते। अन्येऽकथयन् अयम् एलियः, केपि कथितवन्त एष भविष्यद्वादी यद्वा भवि-
१६ ष्यद्वादिनां सदृश एकोयम्। किन्तु हेरोद् इत्याकर्ण्य भाषितवान् यस्याहं शिरश्छिन्नवान् स एव योहनयं स श्मशानादुद-
१७ तिष्ठत्। पूर्व्वं स्वभ्रातुः फिलिपस्य पत्न्या उद्वाहं कृतवन्तं हेरोदं
१८ योहनवादीत् स्वभ्रातृवधू र्न विवाह्या। अतः कारणात् हेरोद्
१९ लोकं प्रहित्य योहनं धृत्वा बन्धनालये बद्धवान्। हेरोदिया
२० तस्मै योहने प्रकुप्य तं हन्तुम् ऐच्छत् किन्तु न शक्ता, यस्माद् हेरोद् तं धार्म्मिकं सत्पुरुषञ्च ज्ञात्वा सम्मन्य रक्षितवान्; तत्कथां श्रुत्वा तदनुसारेण बहूनि कर्म्माणि कृतवान् हृष्टम-
२१ नास्तदुपदेशं श्रुतवांश्च। किन्तु हेरोद् यदा स्वजन्मदिने

प्रधानलोकेभ्यः सेनानीभ्यश्च गालील्प्रदेशीयश्रेष्ठलोकेभ्यश्च रात्रौ भोज्यमेकं कृतवान् तस्मिन् शुभदिने हेरोदियायाः २२ कन्या समेत्य तेषां समक्षं संनृत्य हेरोदस्तेन सहोपविष्टानाञ्च तोषमजीजनत् ततो नृपः कन्यामाह मत्तो यद् याचसे तदेव तुभ्यं दास्ये। शपथं कृत्वाकथयत् चेद् राज्यार्द्धमपि याचसे २३ तदपि तुभ्यं दास्ये। ततः सा बहि र्गत्वा स्वमातरं पप्रच्छ २४ किमहं याचिष्ये? तदा साकथयत् योहनो मज्जकस्य शिरः। अथ तूर्णं भूपसमीपम् एत्य याचमानावदत् क्षणेस्मिन् योहनो २५ मज्जकस्य शिरः पात्रे निधाय देहि, एतद् याचेऽहं। तस्मात् २६ भूपोऽतिदुःखितः, तथापि स्वशपथस्य सहभोजिनाञ्चानुरोधात् तदनङ्गीकर्त्तुं न शक्तः। तत्क्षणं राजा घातकं प्रेष्य तस्य शिर २७ आनेतुमादिष्टवान्। ततः स कारागारं गत्वा तच्छिरश्छित्वा २८ पात्रे निधायानीय तस्यै कन्यायै दत्तवान् कन्या च स्वमात्रे ददौ। अनन्तरं योहनः शिष्यास्तद्वार्त्तां प्राप्यागत्य तस्य कुणपं २९ श्मशानेऽस्थापयन्।

अथ प्रेषिता यीशोः सन्निधौ मिलिता यद् यच् चक्रुः शिक्ष- ३० यामासुश्च तत्सर्व्ववार्त्तास्तस्मै कथितवन्तः। स तानुवाच यूयं ३१ विजनस्थानं गत्वा विश्राम्यत यतस्तत्सन्निधौ बहुलोकानां समा- गमात् ते भोक्तुं नावकाशं प्राप्ताः। ततस्ते नावा विजनस्थानं ३२ गुप्तं गग्मुः। ततो लोकनिवहस्तेषां स्थानान्तरयानं ददर्श, ३३ अनेके तं परिचित्य नानापुरेभ्यः पदैर्व्रजित्वा जवेन तेषामग्रे यीशोः समीप उपतस्थुः। तदा यीशु र्नावो बहिर्गत्य लोका- ३४ रण्यानीं दृष्ट्वा तेषु करुणां कृतवान् यतस्तेऽरक्षकमेषा इवासन् तदा स तान नानाप्रसङ्गान् उपदिष्टवान्।

३५　अथ दिवान्ते सति शिष्या एत्य यीशुमूचिरे, इदं विजन-
३६ स्थानं दिनञ्चावसन्नं। लोकानां किमपि खाद्यं नास्ति, अत-
स्तुर्दिक्षु ग्रामान् गन्तुं भोज्यद्रव्याणि क्रेतुञ्च भवान् तान्
३७ विसृजतु। तदा स तानुवाच यूयमेव तान् भोजयत; ततस्ते
जगदु र्वयं गत्वा द्विशतसंख्यकै र्मुद्रापादैः पूपान् क्रीत्वा किं
३८ तान् भोजयिष्यामः? तदा स तान् पृष्ठवान् युष्माकं सन्निधौ
कति पूपा आसते? गत्वा पश्यत; ततस्ते दृष्ट्वा तमवदन्
३९ पञ्च पूपा द्वौ मत्स्यौ च सन्ति। तदा स लोकान् शस्योपरि
४० पंक्तिभिरुपवेशयितुम् आदिष्टवान्, ततस्ते शतं शतं जनाः
पञ्चाशत् पञ्चाशज्जनाश्च पंक्तिभि र्भुवि समुपविविशुः।
४१ अथ स तान् पञ्चपूपान् मत्स्यद्वयञ्च धृत्वा स्वर्गं पश्यन् ईश्वर-
गुणान् अन्वकीर्त्तयत् तान् पूपान् भंक्त्वा लोकेभ्यः परि-
वेषयितुं शिष्येभ्यो दत्तवान् द्वौ मत्स्यौ च विभज्य सर्व्वेभ्यो
४२ दत्तवान्। ततः सर्व्वे भुक्त्वातृप्यन्। अनन्तरं शिष्या अवशिष्टैः
४३ पूपै र्मत्स्यैश्च पूर्णान् द्वादश डल्लकान् जगृहुः। ते भोक्तारः
४४ प्रायः पञ्च सहस्राणि पुरुषा आसन्।

४५　अथ स लोकान् विसृजन्नेव नावमारोढुं स्वस्मादग्रे पारे
४६ वैत्सैदापुरं यातुञ्च शिष्यान् वाढमादिष्टवान्। तदा स सर्व्वान्
४७ विसृज्य प्रार्थयितुं पर्व्वतं गतः। ततः सन्ध्यायां सत्यां नौः
४८ सिन्धुमध्य उपस्थिता किन्तु स एकाकी स्थले स्थितः। अथ
सम्मुखवातवहनात् शिष्या नावं वाहयित्वा परिश्रान्ता इति
ज्ञात्वा स निशाचतुर्थयामे सिन्धूपरि पद्भ्यां व्रजन् तेषां समी-
४९ पमेत्य तेषामग्रे यातुम् उद्यतः। किन्तु शिष्याः सिन्धूपरि
तं व्रजन्तं दृष्ट्वा भूतमनुमाय रुरुवुः, यतः सर्व्वे तं दृष्ट्वा

व्याकुलिताः। अतएव यीशुस्तत्क्षणं तैः सहालप्य कथितवान्, ५०
सुस्थिरा भूत, अयमहं मा भैष्ट। अथ नौकामारुह्य तस्मिन् ५१
तेषां सन्निधिं गते वातो निवृत्तः; तस्मात्ते मनःसु विस्मिता
आश्चर्यं मेनिरे। यतस्ते मनसां काठिन्यात् तत् पूपीयम् ५२
आश्चर्यं कर्म्म न विविक्तवन्तः।

अथ ते पारं गत्वा गिनेषरत्प्रदेशमेत्य तट उपस्थिताः। ५३
तेषु नौकातो बहिर्गतेषु तत्प्रदेशीया लोकास्तं परिचित्य ५४
चतुर्दिक्षु धावन्तो यत्र यत्र रोगिणो नरा आसन् तान् ५५
सर्व्वान् खट्वोपरि निधाय यत्र कुत्रचित् तद्वार्त्तां प्रापुः तत्
स्थानम् आनेतुम् आरेभिरे। तथा यत्र यत्र ग्रामे यत्र ५६
यत्र पुरे यत्र यत्र पल्ल्यां च तेन प्रवेशः कृतस्तद्वर्त्ममध्ये लोकाः
पीडितान् स्थापयित्वा तस्य चेलग्रन्थिमात्रं स्प्रष्टुम् तेषामर्थे
तदनुज्ञां प्रार्थयन्तः यावन्तो लोकाः पस्पृशुस्तावन्त एव
गदान्मुक्ताः।

---

## ७ सप्तमोऽध्यायः।

१ अप्रक्षालितहस्तैर्भोजनकथा १४ मनुष्याशुचिकरणकारणनिर्णयः २४ सुरफैनिकीयस्त्रियाः कन्यारोग्यकरणं ३१ बधिरकह्वदनारोग्यकरणञ्च।

अनन्तरं यिरूशालम आगताः फिरूशिनोऽध्यापकाश्च १
यीशोः समीपम् आगताः। ते तस्य कियतः शिष्यान् अशुचि- २
करैरर्थाद् अप्रक्षालितहस्तै र्भुञ्जतो दृष्ट्वा तानदूषयन्। यतः ३
फिरूशिनः सर्व्वयिहूदीयाश्च प्राचां परम्परागतवाक्यं सम्मन्य
प्रयत्नेन हस्तान् अप्रक्षाल्य न भुञ्जते। आपनादागत्य मज्जनं ४
विना न खादन्ति; तथा पानपात्राणां जलपात्राणां पित्तल-
पात्राणाम् आसनानाञ्च जले मज्जनम् इत्यादयोन्येपि बहव-

५ स्तेषामाचाराः सन्ति। ते फिरूशिनोऽध्यापकाश्च यीशुं पप्रच्छुः, तव शिष्याः प्राचां परम्परागतवाक्यानुसारेण नाचरन्तोऽप्रक्षा-
६ लितकरैः कुतो भुञ्जते? ततः स प्रत्युवाच कपटिनो युष्मान् उद्दिश्य यिशयियभविष्यद्वादी युक्तमवादीत्। यथा

स्वकीयैरधरैरेते सम्मन्यन्ते सदैव मां।
७ किन्तु मत्तो विप्रकर्षे सन्ति तेषां मनांसि च।
शिक्षयन्तो विधीन् न्राज्ञा भजन्ते मां मुधैव ते।

८ यूयं जलपात्रपानपात्रादीनि मज्जयन्तो मनुजपरम्परागत-वाक्यं रक्षथ किन्तु ईश्वराज्ञां लङ्घध्वे; अपरा ईदृशोऽनेकाः
९ क्रिया अपि कुरुध्वे। अन्यच्चाकथयत् यूयं स्वपरम्परागतवाक्यस्य
१० रक्षार्थं स्पष्टरूपेण ईश्वराज्ञां लोपयथ। यतो मूसाद्वारा प्रोक्त-मस्ति स्वपितरौ सम्मन्यध्वं यस्तु मातरं पितरं वा दुर्व्वाक्यं
११ वक्ति स नितान्तं हन्यतां। किन्तु मदीयेन येन द्रव्येण तवो-पकारोभवत् तत् कर्ब्बाणमर्थाद् ईश्वराय निवेदितम् इदं
१२ वाक्यं यदि कोपि पितरं मातरं वा वक्ति तर्हि यूयं मातुः पितु
१३ र्वोपकारं कर्त्तुं तं वारयथ। इत्थं स्वप्रचारितपरम्परागत-वाक्येन यूयम् ईश्वराज्ञां मुधा विधद्ध्वे, ईदृशान्यन्यान्यनेकानि कर्म्माणि कुरुध्वे।

१४ अथ स लोकानाहूय बभाषे यूयं सर्व्वे मद्वाक्यं शृणुत
१५ बुध्यध्वञ्च। बाह्यादन्तरं प्रविश्य नरममेध्यं कर्त्तुं शक्नोति ईदृशं किमपि वस्तु नास्ति, वरम् अन्तराद् बहिर्गतं यद्वस्तु तन्मनु-
१६ जम् अमेध्यं करोति। यस्य श्रोतुं श्रोत्रे स्तः स शृणोतु। ततः
१७ स लोकान् हित्वा गृहमध्यं प्रविष्टस्तदा शिष्यास्तद्दृष्टान्तवाक्यार्थं
१८ पप्रच्छुः। तस्मात् स तान् जगाद यूयमपि किमेतादृगबोधाः?

किमपि द्रव्यं वाह्यादन्तरं प्रविश्य नरममेध्यं कर्त्तुं न शक्नोति कथामिमां किं न बुध्यध्वे? तत् तदन्तर्न प्रविशति किन्तु कुक्षि- १९ मध्यं प्रविशति शेषे सर्व्वभुक्तवस्तुग्राहिणि वहिर्देशे निर्याति। अपरमप्यवादीद् यन्नरान्निरेति तदेव नरममेध्यं करोति। २० यतोऽन्तराद् अर्थान् मानवानां मनोभ्यः कुचिन्ता परस्त्री- २१ वेश्यागमनं नरबधश्चौर्य्यं लोभो दुष्टता प्रवञ्चना कामुकता २२ कुदृष्टिरीश्वरनिन्दा गर्व्वस्तम इत्यादीनि निर्गच्छन्ति। एतानि २३ सर्व्वाणि दुरितान्यन्तरादेत्य नरममेध्यं कुर्व्वन्ति।

अथ स उत्थाय तत्स्थानात् सोरसीदोन्पुरप्रदेशं जगाम २४ तत्र किमपि निवेशनं प्रविश्य सर्व्वैरज्ञातः स्थातुं मतिञ्चक्रे किन्तु गुप्तः स्थातुं न शशाक। यतः सुरफैनिकीदेशीययूनानी- २५ वंशोद्भवस्त्रियाः कन्या भूतग्रस्तासीत्। सा स्त्री तद्वार्त्तां प्राप्य २६ तत्समीपमागत्य तच्चरणयोः पतित्वा स्वकन्यातो भूतं निराकर्त्तुं तस्मिन् विनयं कृतवती। किन्तु यीशुस्तामवदत् प्रथमं बाल- २७ कास्तृप्यन्तु यतो बालकानां खाद्यं गृहीत्वा कुक्कुरेभ्यो निक्षेपो-ऽनुचितः। तदा सा स्त्री तमवादीत् भोः प्रभो तत् सत्यं तथापि २८ मञ्चाधःस्थाः कुक्कुरा बालानां करपतितानि खाद्यखण्डानि खादन्ति। ततः सोऽकथयद् एतत्कथाहेतोः सकुशला याहि २९ तव कन्यां त्यक्त्वा भूतो गतः। अथ सा स्त्री गृहं गत्वा कन्यां ३० भूतत्यक्तां शय्यास्थितां ददर्श।

पुनश्च स सोरसीदोन्पुरप्रदेशात् प्रस्थाय दिकापलि- ३१ देशस्य प्रान्तरभागेन गालील्जलधेः समीपं गतवान्। तदा ३२ लोकैरेकं वधिरं कद्वदञ्च नरं तन्निकटमानीय तस्य गात्रे हस्तमर्पयितुं बिनयः कृतः। ततो यीशु र्लोकारण्यात् तं ३३

निर्जनमानीय तस्य कर्णयोरङ्गुली ददौ निष्ठीवं दत्त्वा च
३४ तज्जिह्वां पस्पर्श। अनन्तरं स्वर्गं निरीक्ष्य दीर्घं निश्वस्य
३५ तमवदत् इतफतः अर्थात् मुक्तो भूयात्। ततस्तत्क्षणं तस्य
कर्णौ मुक्तौ जिह्वायाश्च जाड्यापगमात् स सुस्पष्टवाक्यमकथ-
३६ यत्। अथ स तान् वाढमित्यादिदेश यूयमिमां कथां कस्मै-
चिदपि मा कथयत, किन्तु स यति न्यषेधत् ते तति बाहु-
३७ ल्येन प्राचारयन्; तेऽतिचमत्कृत्य परस्परं कथयामासुः स
बधिराय श्रवणशक्तिं मूकाय च कथनशक्तिं दत्त्वा सर्व्वं
कर्म्मोत्तमरूपेण चकार।

---

## ८ अष्टमोऽध्यायः।

१ सप्तपूपकियन्मत्स्यैश्चतुःसहस्रपुरुषभोजनं १० गगणीयचिह्नदर्शयितुम् अनङ्गी-
कारः १४ शिक्षारूपकिण्वकथा २२ अन्धाय नेत्रदानं २७ ख्रीष्टनिर्णयः ३१ ख्रीष्टस्य
स्वमृत्युभोगीयभविष्यद्वाक्यं ३४ अनुगामिलोकान् प्रत्युपदेशः ३९ भविष्यद्वाक्यञ्च।

१ तदा तत्समीपं बहवो लोका आयाता अतस्तेषां भोज्य-
२ द्रव्याभावाद् यीशुः शिष्यानाहूय जगाद, लोकनिवहे मम कृपा
जायते ते दिनत्रयं मया सार्द्धं सन्ति तेषां भोज्यं किमपि
३ नास्ति। तेषां मध्येऽनेके दूराद् आगताः, अभुक्तेषु तेषु
४ मया स्वगृहमभिप्रहितेषु ते पथि क्लमिष्यन्ति। शिष्या अवा-
दिषुः, एतावतो लोकान् तर्पयितुम् अत्र प्रान्तरे पूपान्
५ प्राप्तुं केन शक्यते? ततः स तान् पप्रच्छ युष्माकं कति पूपाः
६ सन्ति? तेऽकथयन् सप्त। ततः स तांल्लोकान् भुवि समुपवेष्टुम्
आदिश्य तान् सप्त पूपान् धृत्वा ईश्वरगुणान् अनुकीर्त्तया-
मास, भंक्त्वा परिवेषयितुं शिष्यान् प्रति ददौ, ततस्ते लोकेभ्यः
७ परिवेषयामासुः। तथा तेषां समीपे ये क्षुद्रमत्स्या आसन्

तानप्यादाय ईश्वरगुणान् संकीर्त्य परिवेषयितुम् आदिष्ट-
वान्। ततो लोका भुक्त्वा तृप्तिं गता अवशिष्टखाद्यैः पूर्णाः ८
सप्तडल्लका गृहीताश्च। एते भोक्तारः प्रायश्चतुःसहस्रपुरुषा ९
आसन् ततः स तान् विससर्ज।

अथ स शिष्यैः सह नावमारुह्य दल्मानूथासीमामागतः। १०
ततः परं फिरूशिन आगत्य तेन सह विवदमानास्तस्य परी- ११
क्षार्थम् आकाशीयचिह्नं द्रष्टुं याचितवन्तः। तदा सोऽन्तर्दीर्घं १२
निश्वस्याकथयत्, एते विद्यमाननराः कुतश्चिह्नं मृगयन्ते? युष्मा-
नहं यथार्थं ब्रवीमि लोकानेतान् किमपि चिह्नं न दर्शयि-
ष्यते। अथ तान् हित्वा पुन र्नावम् आरुह्य पारमगात्। १३

एतर्हि शिष्यैः पूपेषु विस्मृतेषु नावि तेषां सन्निधौ पूप १४
एकएव स्थितः। तदानीं यीशुस्तान् आदिष्टवान् फिरूशिनां १५
हेरोदश्च किण्वं प्रति सतर्काः सावधानाश्च भवत। ततस्ते- १६
ऽन्योन्यं विवेचनं कर्त्तुम् आरेभिरे, अस्माकं सन्निधौ पूपो
नास्तीति हेतोरिदं कथयति। तद् बुद्ध्वा यीशुस्तेभ्योऽक- १७
थयत् युष्माकं स्थाने पूपाभावात् कुत इत्थं वितर्कयथ? यूयं
किमद्यापि किमपि न जानीथ? बोद्धुञ्च न शक्नुथ? यावदद्य किं
युष्माकं मनांसि कठिनानि सन्ति? सत्सु नेत्रेषु किं न पश्यथ? १८
सत्सु कर्णेषु किं न शृणुथ? न स्मरथ च? यदाहं पञ्चपूपान् १९
पञ्चसहस्राणां पुरुषाणां मध्ये भंक्त्वा दत्तवान् तदानीं
यूयम् अवशिष्टपूपैः पूर्णान् कति डल्लकान् गृहीतवन्तः?
तेऽकथयन् द्वादशडल्लकान्। अपरञ्च यदा चतुःसहस्राणां २०
पुरुषाणां मध्ये पूपान् भंक्त्वादद्दां तदा यूयम् अतिरिक्त-
पूपानां कतिडल्लकान् गृहीतवन्तः? ते कथयामासुः सप्तडल्ल-

२१ कान्। तदा स कथितवान् तर्हि यूयम् अधुनापि कुतो बोद्धुं
न शक्नुथ?

२२　अनन्तरं तस्मिन् बैत्सैदानगरे प्राप्ते लोका अन्धमेकं नरं
२३ तत्समीपमानीय तं स्प्रष्टुं तं प्रार्थयाञ्चक्रिरे। तदा तस्यान्धस्य
करौ गृहीत्वा नगराद् बहिर्देशं तं नीतवान्; तन्नेत्रे निष्ठीवं
२४ दत्त्वा तद्गात्रे हस्तावर्पयित्वा तं पप्रच्छ, किमपि पश्यसि? स
नेत्रे उन्मील्य जगाद, वृक्षवत् मनुजान् गच्छतो निरीक्षे।
२५ ततो यीशुः पुनस्तस्य नयनयो र्हस्तावर्पयित्वा तस्य नेत्रे उन्मी-
लयामास; तस्मात् स स्वस्थो भूत्वा स्पष्टरूपं सर्व्वलोकान्
२६ ददर्श। ततः परं त्वं ग्रामं मा गच्छ ग्रामस्थं कमपि च किम-
प्यनुक्त्वा निजगृहं याहीत्यादिश्य यीशुस्तं निजगृहं प्रहितवान्।

२७　अनन्तरं शिष्यैः सहितो यीशुः कैसरीयाफिलिपिपुरं
जगाम, पथि गच्छन् तानपृच्छत् कोऽहम् अत्र लोकाः किं
२८ वदन्ति? ते प्रत्यूचुः त्वां योहनं मज्जकं वदन्ति किन्तु केपि
केपि एलियं वदन्ति; अपरे केपि केपि भविष्यद्वादिनाम्
२९ एको जन इति वदन्ति। अथ स तानपृच्छत् किन्तु कोहम्?
इत्यत्र यूयं किं वदथ? तदा पितरः प्रत्यवदत् भवान् अभि-
३० षिक्तस्त्राता। ततः स तान् गाढमादिशद् यूयं मम कथा
कस्मैचिदपि मा कथयत।

३१　मनुष्यपुत्त्रेणावश्यं बहवो यातना भोक्तव्याः प्राचीनलोकैः
प्रधानयाजकैरध्यापकैश्च स निन्दितः सन् घातयिष्यते तृतीय-
दिने उत्थास्यति च, यीशुः शिष्यानुपदेष्टुमारभ्य कथामिमां
३२ स्पष्टमाचष्ट। तस्मात् पितरस्तस्य हस्तौ धृत्वा तं तर्ज्जित-
३३ वान्। किन्तु स मुखं परावर्त्य शिष्यगणं निरीक्ष्य पितरं

तर्जयित्वावादीद् दूरीभव विघ्नकारिन् ईश्वरीयकार्य्यादपि मनुष्यकार्य्यं तुभ्यं रोचततरां।

अथ स लोकान् शिष्यांश्चाहूय जगाद यः कश्चिन् मामनुगन्तुम् इच्छति स आत्मानं दाम्यतु, स्वक्रुशं गृहीत्वा मत्पश्चाद् आयातु। यतो यः कश्चित् स्वप्राणं रक्षितुमिच्छति स तं हारयिष्यति, किन्तु यः कश्चिन् मदर्थं सुसंवादार्थञ्च प्राणं हारयति स तं रक्षिष्यति। अपरञ्च मनुजः सर्व्वं जगत् प्राप्य यदि स्वप्राणं हारयति तर्हि तस्य को लाभः? नरः स्वप्राणविनिमयेन किं दातुं शक्नोति? एतेषां व्यभिचारिणां पापिनाञ्च लोकानां साक्षाद् यदि कोपि मां मत्कथाञ्च लज्जास्पदं जानाति तर्हि मनुजपुत्रो यदा धर्म्मदूतैः सह पितुः प्रभावेणागमिष्यति तदा सोपि तं लज्जास्पदं ज्ञास्यति। ३४ ३५ ३६ ३७ ३८

अथ स तानवादीत् युष्मभ्यमहं यथार्थं कथयामि, ईश्वरराज्यं पराक्रमेणोपस्थितं न दृष्ट्वा मृत्युं नास्वादिष्यन्ते, अत्र दण्डायमानानां मध्येपि तादृशा लोकाः सन्ति। ३९

---

## ९ नवमोऽध्यायः।

१ ख्रीष्टस्यान्यमूर्त्तिधारणम् एलियनिर्णयश्च १४ एकमूकबधिरभूतग्रस्तस्य स्वास्थ्यकरणं २० स्वमृत्योः श्मशानोत्थानस्य च कथा ३२ श्रेष्ठत्वनिर्णयः ३८ ख्रीष्टस्य नानोपदेशश्च।

अथ षड्दिनेभ्यः परं यीशुः पितरं याकूबं योहनञ्च गृहीत्वा गिरेरुच्चस्य निर्जनस्थानं गत्वा तेषां प्रत्यक्षे मूर्त्त्यन्तरं दधार। ततस्तस्य परिधेयम् ईदृशम् उज्ज्वलहिमपाण्डरं जातं यद् जगति कोपि रजको न तादृक् पाण्डरं कर्त्तुं शक्नोति। अपरञ्च एलियो मूसाश्च तेभ्यो दर्शनं दत्त्वा यीशुना सह कथनं कर्त्तुमारेभाते। तदा पितरो यीशुमवादीत् हे १ २ ३ ४ ५

गुरोऽस्माकमत्र स्थितिरुत्तमा, ततएव वयं त्वत्कृते एकां मूसा-
६ कृते एकाम् एलियकृते चैकां, एतास्तिस्रः कुटी र्निर्म्मास। किन्तु
स यदुक्तवान् तत् स्वयं न बुबुधे ततः सर्व्वे बिभयाञ्चक्रुः।
७ एतर्हि पयोदस्तान् छादयामास, ममायं प्रियः पुत्त्रः कथासु
८ तस्य मनांसि निवेशयतेति नभोवाणी तन्मेघान्निर्ययौ। अथ
हठात्ते चतुर्दिशो दृष्ट्वा यीशुं विना स्वैः सहितं कमपि न
९ ददृशुः। ततः परं गिरेरवरोहणकाले स तान् गाढम् इत्या-
दिदेश यावन्नरसूनोः श्मशानादुत्थानं न भवति, तावत्
१० दर्शनस्यास्य वार्त्ता युष्माभिः कस्मैचिदपि न वक्तव्या। तदा
श्मशानादुत्थानस्य कोभिप्राय इति विचार्य्य ते तद्वाक्यं स्वेषु
११ गोपायाञ्चक्रिरे। अथ ते यीशुं पप्रच्छुः प्रथमत एलिये-
१२ नागन्तव्यम् इति वाक्यं कुत उपाध्याया आहुः? तदा स
प्रत्युवाच, एलियः प्रथममेत्य सर्व्वकार्य्याणि साधयिष्यति;
नरपुत्त्रे च लिपि र्यथास्ते तथैव सोपि बहुदुःखं प्राप्या-
१३ वज्ञास्यते। किन्त्वहं युष्मान् वदामि, एलियार्थे लिपि
र्यथास्ते तथैव स एत्य ययौ, लोकाः स्वेच्छानुरूपं तमभि-
व्यवहरन्ति स्म।

१४ अनन्तरं स शिष्यसमीपमेत्य तेषां चतुःपार्श्वे तैः सह बहु-
१५ जनान् विवदमानान् अध्यापकांश्च दृष्टवान्; किन्तु सर्व्वलो-
१६ कास्तं दृष्ट्वैव चमत्कृत्य तदासन्नं धावन्तस्तं प्रणेमुः। तदा यीशु-
१७ रध्यापकानप्राक्षीद् एतैः सह यूयं किं विवदध्वे? ततो लोकानां
कश्चिदेकः प्रत्यवादीत् हे गुरो मम सूनुं मूकं भूतधृतञ्च
१८ भवदासन्नम् आनयं। यदासौ भूतस्तमाक्रमते तदैव पातयति
तथा स फेणायते, दन्तैर्दन्तान् घर्षति क्षीणो भवति च; ततो

हेतोस्तं भूतं त्याजयितुं भवच्छिष्यान् निकषा निवेदितवान् किन्तु ते न शेकुः। तदा स तमवादीत्, रे अविश्वासिनः १९ सन्ताना युष्माभिः सह कति कालानहं स्थास्यामि? अपरान् कति कालान् वा व आचारान् सहिष्ये? तं मदासन्नमानयत। ततस्तत्सन्निधिं स आनीयत किन्तु तं दृष्ट्वैव भूतो बालकं धृत- २० वान्; स च भूमौ पतित्वा फेणायमानो लुलोठ। तदा स २१ तत्पितरं पप्रच्छ, अस्येदृशी दशा कति दिनानि भूता? ततः सोवादीत् बाल्यकालात्। भूतोयं तं नाशयितुं बहुवारान् २२ वह्नौ जले च न्यक्षिपत् किन्तु यदि भवान् किमपि कर्त्तुं शक्नोति तर्हि दयां कृत्वास्मान् उपकरोतु। तदा यीशुस्तमवदत् २३ यदि प्रत्येतुं शक्नोषि तर्हि प्रत्ययिने जनाय सर्व्वं साध्यम्। तत- २४ स्तत्क्षणं तद्बालकस्य पिता प्रोच्चै रुवन् साश्रुनेत्रः प्रोवाच, प्रभो प्रत्येमि ममाप्रत्ययं प्रतिकुरु। अथ यीशु र्लोकसङ्घं २५ धावित्वायान्तं दृष्ट्वा तमपूतभूतं तर्जयित्वा जगाद, रे बधिर मूक भूत त्वमेतस्माद् वहिर्भव पुनः कदापि माश्रयैनं त्वामहम् इत्यादिशामि। तदा स भूतश्चीत्शब्दं कृत्वा तमापीड्य वहि- २६ र्जगाम, ततो बालको मृतकल्पो बभूव तस्मादयं मृतइत्यनेके कथयामासुः। किन्तु करं धृत्वा यीशुनोत्थापितः स उत्तस्थौ। २७ अथ यीशौ गृहं प्रविष्टे शिष्या गुप्तं तं पप्रच्छुः, वयमेनं भूतं २८ त्याजयितुं कुतो न शक्ताः? स उवाच, प्रार्थनोपवासौ विना २९ केनाप्यन्येन कर्म्मणा भूतमीदृशं त्याजयितुं न शक्यं।

अनन्तरं स तत्स्थानादित्वा गालील्मध्येन ययौ, किन्तु ३० तत् कोपि जानीयादिति स नैच्छत्। अपरञ्च स शिष्यानुप- ३१ दिशन् बभाषे, नरपुत्त्रो नरहस्तेषु समर्पयिष्यते ते च तं हनि-

३२ ष्यन्ति तैस्तस्मिन् हते तृतीयदिने स उत्थास्यतीति। किन्तु
तत्कथां ते नाबुध्यन्त प्रष्टुञ्च बिभ्युः।

३३ अथ यीशुः कफर्नाहूम्पुरमागत्य मध्येगृहञ्चेत्य तानपृच्छद्
३४ वर्त्ममध्ये यूयमन्योन्यं किं विवदध्वे स्म? किन्तु ते निरुत्तरास्तस्थु
३५ र्यस्मात्तेषां को मुख्य इति वर्त्मनि तेऽन्योन्यं व्यवदन्त। ततः स
उपविश्य द्वादशशिष्यान् आहूय बभाषे यः कश्चित् मुख्यो
३६ भवितुमिच्छति स सर्व्वेभ्यो गौणः सर्व्वेषां सेवकश्च भवतु। तदा
स बालकमेकं गृहीत्वा मध्ये समुपावेशयत् ततस्तं क्रोडे कृत्वा
३७ तानवादीत् यः कश्चिदीदृशस्य कस्यापि बालस्यातिथ्यं करोति
स ममातिथ्यं करोति; यः कश्चिन्ममातिथ्यं करोति स केवलम्
ममातिथ्यं करोति तन्न मत्प्रेरकस्याप्यातिथ्यं करोति।

३८ अथ योहन् तमब्रवीत् हे गुरो, अस्माकमननुगामिनम् एकं
त्वन्नाम्ना भूतान् त्याजयन्तं वयं दृष्टवन्तः, अस्माकमपश्चाद्गा-
३९ मित्वाच्च तं न्यषेधाम। किन्तु यीशुरवदत् तं मा निषेधत, यतो
यः कश्चिन् मन्नाम्ना चित्रं कर्म्म करोति स सहसा मां निन्दितुं
४० न शक्नोति। तथा यः कश्चिद् युष्माकं विपक्षतां न करोति स
४१ युष्माकमेव सपक्षः। यः कश्चिद् युष्मान् ख्रीष्टशिष्यान् ज्ञात्वा
मन्नाम्ना कंसैकेन पानीयं पातुं ददाति, युष्मानहं यथार्थं
४२ वच्मि, स फलेन वञ्चितो न भविष्यति। किन्तु यदि कश्चिन्
मयि विश्वासिनामेषां क्षुद्रप्राणिनाम् एकस्यापि विघ्नं जनयति,
तर्हि तस्यैतत्कर्म्म करणात् कण्ठबद्धपेषणीकस्य तस्य सागरा-
४३ गाधजले मज्जनं भद्रं। अतः स्वकरो यदि त्वां बाधते तर्हि तं
४४ छिन्धि; यस्मात् यत्र कीटा न म्रियन्ते वह्निश्च न निर्व्वाति,
तस्मिन् अनिर्व्वाणानलनरके करद्वयवस्तव गमनात् करही-

नस्य स्वर्गप्रवेशस्तव क्षेमं। यदि तव पादौ विघ्नं जनयति तर्हि ४५
तं छिन्धि, यतो यत्र कीटा न म्रियन्ते वह्निश्च न निर्व्वाति, ४६
तस्मिन ऽनिर्व्वाणवह्नौ नरके द्विपादवतस्तव निक्षेपात् पादहीनस्य स्वर्गप्रवेशस्तव क्षेमं। स्वनेत्रं यदि त्वां बाधते तर्हि तद- ४७
प्युत्पाटय, यतो यत्र कीटा न म्रियन्ते वह्निश्च न निर्व्वाति, ४८
तस्मिन ऽनिर्व्वाणवह्नौ नरके द्विनेत्रस्य तव निक्षेपाद् एकनेत्रवत ईश्वरराज्ये प्रवेशस्तव क्षेमं। यथा सर्व्वो बलि र्लवणाक्तः ४९
क्रियते तथा सर्व्वो जनो वह्निरूपेण लवणेन लवणाक्तः कारिष्यते। लवणं भद्रं किन्तु यदि लवणे स्वादुता न तिष्ठति, ५०
तर्हि कथम् आस्वादयुक्तं करिष्यथ? यूयं लवणयुक्ता भवत परस्परं प्रेम कुरुत।

---

## १० दशमोऽध्यायः।

१ स्त्रीत्यागकथा १३ शिशूनां ग्राह्यत्वं १७ धनियुवलोकायोपदेशः २८ शिष्याणां सत्कारनिर्णयः ३२ स्त्रीष्टस्त्योर्भविष्यद्वाक्यं ३५ याकूब्योहनोः प्रार्थनस्याग्राह्यत्वं ४६ अन्धाय चक्षुर्दानञ्च।

अनन्तरं स तत्स्थानात् प्रस्थाय यर्द्दननद्याः पारे यिहूदाप्रदेश उपस्थितवान्, तत्र तदन्तिके लोकानां समागमे जाते १
स निजरीत्यनुसारेण पुनस्तान् उपदिदेश। तदा फिरूशिनस्तत्समीपम् एत्य तं परीक्षितुं पप्रच्छः स्वजाया मनुजानां त्यज्या २
न वेति? ततः स प्रत्यवादीत्, अत्र कार्य्ये मूसा युष्मान् प्रति ३
किमाज्ञापयत्? त ऊचुः त्यागपत्रं लेखितुं स्वपत्नीं त्यक्तुञ्च ४
मूसाऽनुमन्यते। तदा यीशुः प्रत्युवाच, युष्माकं मनसां काठि- ५
न्याद्धेतो र्मूसा निदेशमिमम् अलिखत्। किन्तु सृष्टेरादौ ६
ईश्वरो नरान् पुंरूपेण स्त्रीरूपेण च ससर्ज। 'ततः कारणात् ७

पुमान् पितरं मातरञ्च त्यक्का स्वजायायाम् आसक्तो भवि-
८ ष्यति, तौ द्वाव् एकाङ्गौ भविष्यतः।' तस्मात् तत्कालमारभ्य
९ तौ न द्वाव् एकाङ्गौ। अतः कारणाद् ईश्वरो यदयोजयत्
१० कोपि नरस्तन्न वियोजयेत्। अथ यीशु र्गेहं प्रविष्टस्तदा
११ शिष्याः पुनस्तत्कथां तं पप्रच्छुः। ततः सोवदत् कश्चिद् यदि
स्वभार्य्यां त्यक्कान्याम् उद्वहति तर्हि स स्वभार्य्यायाः प्राति-
१२ कूल्येन व्यभिचारी भवति। काचिन्नारी यदि स्वपतिं हित्वान्य-
पुंसा विवाहिता भवति तर्हि सापि व्यभिचारिणी भवति।

१३　अथ स यथा शिशून् स्पृशेत्, तदर्थं लोकैस्तदन्तिकं शिशव
१४ आनीयन्त, किन्तु शिष्यास्तानानीतवतस्तर्जयामासुः। यीशुस्तद्
दृष्ट्वा क्रुध्यन् जगाद, मन्निकटम् आगन्तुं शिशून् मा वारयत,
१५ यत एतादृशा ईश्वरराज्याधिकारिणः। युष्मानहं यथार्थं
वच्मि, यः कश्चित् शिशुवद् भूत्वा राज्यमीश्वरस्य न गृह्लीयात्
१६ स कदापि तद्राज्यं प्रवेष्टुं न शक्नोति। अनन्तरं स शिशूनङ्के
निधाय तेषां गात्रेषु हस्तौ दत्त्वाशिषं बभाषे।

१७　अथ स वर्त्मना याति, एतर्हि जन एको धावन् आगत्य
तत्सम्मुखे जानुनी पातयित्वा पृष्टवान्, भोः परमगुरो, अन-
१८ न्तायुः प्राप्तये मया किं कर्त्तव्यं? तदा यीशुरुवाच, मां
परमं कुतो वदसि? विनेश्वरं कोपि परमो न भवति।
१९ परस्त्रीं नाभिगच्छ; नरं मा घातय; स्तेयं मा कुरु; मृषा-
साक्ष्यं मा देहि; हिंसाञ्च मा कुरु; पितरौ सम्मन्यस्व; निदेशा
२० एते त्वया ज्ञाताः। ततस्तेन प्रत्युक्तं, हे गुरो बाल्यकालादहं
२१ सर्व्वानेतान् आचरामि। तदा यीशुस्तं विलोक्य स्नेहेन बभाषे,
तवैकस्याभाव आस्ते; त्वं गत्वा सर्व्वस्वं विक्रीय दरिद्रेभ्यो विश्रा-

एय, ततः स्वर्गे धनं प्राप्स्यसि; ततः परम् एत्य क्रुशं वहन् मदनुवर्त्ती भव। किन्तु तस्य बहुसम्पद्विद्यमानत्वात् स इमां २२ कथामाकर्ण्य विषणो दुःखितश्च सन् जगाम। अथ यीशुश्च- २३ तुर्दिशो निरीक्ष्य शिष्यान् अवादीत्, धनिलोकानाम् ईश्वर-राज्यप्रवेशः कीदृग् दुष्करः। तस्य कथातः शिष्याश्चमच्चक्रुः, २४ किन्तु स पुनरवदत्, हे बालका ये धने विश्वसन्ति तेषाम् ईश्वरराज्यप्रवेशः कीदृग् दुष्करः। ईश्वरराज्ये धनिनां प्रवेशात् २५ सूचिरन्ध्रेण महाङ्गस्य गमनागमनं सुकरं। तदा शिष्या २६ अतीव विस्मिताः परस्परं प्रोचुः, तर्हि कः परित्राणं प्राप्तुं शक्नोति? ततो यीशुस्तान् विलोक्य बभाषे, तन् नरस्यासाध्यं २७ किन्तु नेश्वरस्य, यतो हेतोरीश्वरस्य सर्व्वं साध्यम्।

तदा पितर उवाच, पश्य वयं सर्व्वं परित्यज्य भवतोनुगा- २८ मिनो जाताः। ततो यीशुः प्रत्यवदत्, युष्मानहं यथार्थं वदामि, २९ मदर्थं सुसंवादार्थं वा यो जनः सदनं भ्रातरं भगिनीं पितरं मातरं जायां सन्तानान् भूमिं वा त्यक्त्वा गृहभ्रातृभगिनी- ३० पितृमातृपत्नीसन्तानभूमीनामिह शतगुणान् प्रेत्यानन्तायुश्च न प्राप्नोति तादृशः कोपि नास्ति। किन्त्वग्रीया अनेके लोकाः ३१ शेषाः, शेषीया अनेके लोकाश्चाग्रा भविष्यन्ति।

अथ यिरूशालम्यानकाले यीशुस्तेषाम् अग्रगामी बभूव, ३२ तस्मात्ते चित्रं ज्ञात्वा पश्चाद्गामिनो भूत्वा बिभ्युः। तदा स पुन र्द्वादशशिष्यान् गृहीत्वा स्वीयं यद्यद् घटिष्यते तत्तत् तेभ्यः कथयितुं प्रारेभे; पश्यत वयं यिरूशालम्पुरं यामः, तत्र ३३ मनुष्यपुत्त्रः प्रधानयाजकानाम् उपाध्यायानाञ्च करेषु समर्प-यिष्यते; ते च बधदण्डाज्ञां दापयित्वा परदेशीयानां करेषु

३४ तं समर्पयिष्यन्ति। ते तमुपहस्य कशया प्रहृत्य तद्वपुषि निष्ठीवं निक्षिप्य तं हनिष्यन्ति, ततः स तृतीयदिने प्रोत्थास्यति।

३५ ततः सिवदेः पुत्रौ याकूब्योहनौ तदन्तिकम् एत्य प्रोचतुः, हे गुरो यद् आवाभ्यां याचिष्यते तदस्मदर्थं भवान् करोतु
३६ निवेदनमिदमावयोः। ततः स कथितवान्, युवां किमिच्छथः?
३७ किं मया युष्मदर्थं करणीयं? तदा तौ प्रोचतुः, आवयोरेकं दक्षिणपार्श्वे वामपार्श्वे चैकं तवैश्वर्य्यपदे समुपवेष्टुम् आज्ञापय।
३८ किन्तु यीशुः प्रत्युवाच युवामज्ञात्वेदं प्रार्थयेथे, येन कंसेनाहं पास्यामि तेन युवाभ्यां किं पातुं शक्ष्यते? यस्मिन् मज्ज-
३९ नेनाहं मज्जिष्ये तन्मज्जने मज्जयितुं किं युवाभ्यां शक्ष्यते? तौ प्रत्यूचतुः शक्ष्यते। तदा यीशुरवदत् येन कंसेनाहं पास्यामि तेनावश्यं युवामपि पास्यथः, येन मज्जनेन चाहं मज्जिष्ये तत्र
४० युवामपि मज्जिष्येथे। किन्तु येषामर्थम् इदं निरूपितं, तान् विहायान्यं कमपि मम दक्षिणपार्श्वे वामपार्श्वे वा समुपवेश-
४१ यितुं ममाधिकारो नास्ति। अथान्यदशशिष्या इमां कथां
४२ श्रुत्वा याकूब्योहन्भ्यां चुकुपुः। किन्तु यीशुस्तान् समाहूय बभाषे, अन्यदेशीयानां राजत्वं ये कुर्व्वन्ति ते तेषामेव प्रभुत्वं कुर्व्वन्ति, तथा ये महालोकास्ते तेषाम् अधिपतित्वं कुर्व्वन्तीति
४३ यूयं जानीथ। किन्तु युष्माकं मध्ये न तथा भविष्यति, युष्माकं मध्ये यः प्राधान्यं वाञ्छति स युष्माकं सेवको
४४ भविष्यति, युष्माकं यो महान् भवितुमिच्छति स सर्व्वेषां
४५ किङ्करो भविष्यति। यतो मनुष्यपुत्रः सेव्यो भवितुं नागतः सेवां कर्त्तुं तथानेकेषां परित्राणस्य मूल्यरूपस्वप्राणं दातुञ्चागतः।

४६ अथ ते यिरीहोनगरं प्राप्तास्तस्मात् शिष्यै र्लोकैश्च सह

यीशो र्गमनकाले टीमयस्य पुत्त्रो बर्टीमयनामा अन्धस्तन्मार्ग-
पार्श्वे भिक्षार्थम् उपविष्टः। स नासरतीयस्य यीशोरागमन- ४७
वार्त्तां प्राप्य प्रोच्चै र्वक्तुमारेभे, हे यीशो दायूदः सन्तान मां
दयस्व। ततोनेके लोका मौनीभवेति तं तर्जयामासुः, किन्तु ४८
स पुनरधिकमुच्चै र्जगाद, हे यीशो दायूदः सन्तान मां दयस्व।
तदा यीशुः स्थित्वा तमाह्वातुं समादिदेश, ततो लोकास्तमन्ध- ४९
माहूय बभाषिरे, हे नर, स्थिरो भव, उत्तिष्ठ, स त्वामाह्व-
यति। तदा स उत्तरीयवस्त्रं निक्षिप्य प्रोत्थाय यीशोः समीपं ५०
गतः। ततो यीशुस्तमवदत् त्वया किं प्रार्थ्यते? तुभ्यमहं किं ५१
करिष्यामि? तदा सोन्धस्तमुवाच, हे गुरो मदीया दृष्टि-
र्भवेत्। ततो यीशुस्तमुवाच याहि तव विश्वासस्त्वां स्वस्थम- ५२
कार्षीत्, तस्मात् तत्क्षणं स दृष्टिं प्राप्य पथा यीशोः पश्चाद् ययौ।

---

## ११ एकादशोऽध्यायः।

१ ख्रीष्टस्य यिरूशालम्पुरयानं १२ उडुम्बरतरौ शापः १५ मन्दिराद् बणिजां वहि-
ष्कृतिः २० प्रत्ययस्य प्राबल्यकथनं २८ प्रधानयाजकादीनां निरुत्तरताकरणञ्च।

अनन्तरं तेषु यिरूशालमः समीपस्थयो र्बैत्फगीबैथनीय- १
पुरयोरन्तिकस्थं जैतुननामाद्रिमागतेषु यीशुः प्रेषणकाले द्वौ
शिष्याविदं वाक्यं जगाद, युवाममुं सम्मुखस्थं ग्रामं यातं, तत्र २
प्रविश्य यो नरं नावहत् तं गर्द्दभशावकं द्रक्ष्यथस्तं मोचयि-
त्वानयतं। किन्तु युवां कर्म्मेदं कुतः कुरुथः? कथामिमां यदि ३
कोपि पृच्छति तर्हि प्रभोरत्र प्रयोजनमस्तीति कथिते स शीघ्रं
तमत्र प्रेषयिष्यति। ततस्तौ गत्वा द्विमार्गमेलने कस्यचिद् द्वा- ४
रस्य पार्श्वे तं गर्द्दभशावकं प्राप्य मोचयतः, एतर्हि तत्रोपस्थित- ५
लोकानां कश्चिद् अपृच्छत्, गर्द्दभशिशुं कुतो मोचयथः? तदा ६

यीशोराज्ञानुसारेण तेभ्यः प्रत्युदिते तत्क्षणं तस्मादातुं तेऽनु-
७ जज्ञुः। अथ तौ यीशोः सन्निधिं गर्द्दभशिशुम् आनीय तदुपरि
स्ववस्त्राणि पातयामासतुः; ततः स तदुपरि समुपविष्टः।
८ तदानेके पथि स्ववासांसि पातयामासुः, परैश्च तरुशाखा-
९ श्छित्वा मार्गे विकीर्णाः। अपरञ्च पश्चाद्गामिनोऽग्रगामिनश्च
सर्व्वे जना उच्चैःस्वरेण वक्तुमारेभिरे, जय जय यः परमेश्वरस्य
१० नाम्नागच्छति स धन्य इति। तथास्माकं पूर्व्वपुरुषस्य दायूदो
यद्राज्यं परमेश्वरनाम्नायाति तदपि धन्यं, सर्व्वस्मादुच्छ्राये स्वर्गे
११ ईश्वरस्य जयो भवेत्। इत्थं यीशु र्यिरूशालमि मन्दिरं प्रविश्य
चतुर्दिक्स्थानि सर्व्वाणि वस्तूनि दृष्टवान्; अथ सायंकाल
उपस्थिते द्वादशशिष्यसहितो वैथनियं जगाम।

१२ अपरेहनि वैथनियाद् आगमनसमये क्षुधार्त्तो बभूव। ततो
१३ दूरे सपत्रमुडुम्बरपादपं विलोक्य तत्र किञ्चित् फलं प्राप्तुं तस्य
सन्निकृष्टं ययौ, तदानीं फलपातनस्य समयो नागच्छति।
ततस्तत्रोपस्थितः पत्राणि विना किमप्यपरं न प्राप्य स कथित-
१४ वान्, अद्यारभ्य कोपि मानवस्त्वत्तः फलं न भुञ्जीत; इमां
कथां तस्य शिष्याः शुश्रुवुः।

१५ तदनन्तरं तेषु यिरूशालममायातेषु यीशु र्मन्दिरं गत्वा
तत्रस्थानां बणिजां मुद्रासनानि पारावतविक्रेतॄणाम् आस-
नानि च न्युब्जयाञ्चकार सर्व्वान् क्रेतॄन् विक्रेतॄंश्च वहिश्चकार।
१६ अपरं मन्दिरमध्येन किमपि पात्रं वोढुं सर्व्वजनं निवारया-
१७ मास। लोकानुपदिशन् जगाद, मम गृहं सर्व्वजातीयानां
प्रार्थनागृहम् इति नाम्ना प्रथितं भविष्यति एतत् किं शास्त्रे
लिखितं नास्ति? किन्तु यूयं तदेव चोराणां गह्वरं कुरुथ।

इमां वाणीं श्रुत्वाध्यापकाः प्रधानयाजकाश्च तं यथा नाश- १८
यितुं शक्नुवन्ति तथोपायं मृगयामासुः, किन्तु तस्योपदेशात्
सर्व्वे लोका विस्मयं गता अतस्ते तस्माद् बिभ्युः। अथ सायं- १९
समय उपस्थिते यीशुर्नगराद् वहिर्वव्राज।

अनन्तरं प्रातःकाले ते तेन मार्गेण गच्छन्तस्तमुडुम्बर- २०
महीरुहं समूलं शुष्कं ददृशुः। ततः पितरः पूर्व्ववाक्यं स्मरन् २१
यीशुं बभाषे, हे गुरो पश्यतु य उडुम्बरविटपी भवता शप्तः
स शुष्को बभूव। ततो यीशुः प्रत्यवादीत्, यूयमीश्वरे विश्व- २२
सित। युष्मानहं यथार्थं वदामि कोपि यद्येतद्गिरिं वदति, २३
त्वमुत्थाय गत्वा जलधौ पत, प्रोक्तमिदं वाक्यमवश्यं घटिष्यते,
मनसा किमपि न सन्दिह्य चेदिदं विश्वसेत् तर्हि तस्य वाक्या-
नुसारेण तद् घटिष्यते। अतो हेतोरहं युष्मान् वच्मि, प्रार्थना- २४
काले यद्यदाकांक्षिष्यध्वे तत्तदवश्यं प्राप्स्यथ, इत्थं विश्वसित,
ततः प्राप्स्यथ। अपरञ्च युष्मासु प्रार्थयितुं समुत्थितेषु यदि २५
कोपि युष्माकम् अपराधी तिष्ठति, तर्हि तं क्षमध्वं, तथा कृते
युष्माकं स्वर्गस्थः पितापि युष्माकमागांसि क्षमिष्यते। किन्तु यदि २६
न क्षमध्वे तर्हि वः स्वर्गस्थः पितापि युष्माकमागांसि न क्षमिष्यते।

अनन्तरं ते पुन र्यिरूशालमं प्रविविशुः, यीशु र्यदा मध्ये- २७
मन्दिरम् इतस्ततो गच्छति, तदानीं प्रधानयाजका उपा-
ध्यायाः प्राञ्चश्च तदन्तिकमेत्य कथामिमां पप्रच्छुः, त्वं केना- २८
देशेन कर्म्माण्येतानि करोषि? तथैतानि कर्म्माणि कर्त्तुं केना-
दिष्टोसि? ततो यीशुः प्रतिगदितवान् अहमपि युष्मान् एककथां २९
पृच्छामि, यदि यूयं तस्या उत्तरं कुरुथ, तर्हि कयाज्ञयाहं कर्म्मा-
ण्येतानि करोमि तद् युष्मभ्यं कथयिष्यामि। योहनो मज्जनम् ३०

३१ ईश्वरात् जातं किं मानवात्? तन्मह्यं कथयत। ते परस्परं विवेक्तुं प्रारेभिरे, तद् ईश्वराद् बभूवेति चेद् वदामस्तर्हि ३२ कुतस्तं न प्रत्यैत? कथामेतां कथयिष्यति। मानवाद् अभवदिति चेद् वदामस्तर्हि लोकेभ्यो भयमस्ति यतो हेतोः सर्व्वे योहनं ३३ सत्यं भविष्यद्वादिनं मन्यन्ते। अतएव ते यीशुं प्रत्यवादिषु र्वयं तद् वक्तुं न शक्नुमः। यीशुरुवाच, तर्हि येनादेशेन कर्म्माण्येतानि करोमि, अहमपि युष्मभ्यं तन्न कथयिष्यामि।

---

## १२ द्वादशोऽध्यायः।

१ द्राक्षाक्षेत्रस्य दृष्टान्तः १३ करदाने फिरूशिनां निरुत्तरताकरणं १८ श्मशानोत्थाने सिदूकिनां निरुत्तरताकरणं २८ प्रधानाज्ञाया निर्णयः ३५ अध्यापकानां निरुत्तरताकरणं ३८ तेषां दोषप्रकटनं ४१ विधवाया दातृत्वञ्च।

१ अनन्तरं यीशु र्दृष्टान्तेन तेभ्यः कथयितुमारेभे, कश्चिदेको द्राक्षाक्षेत्रं विधाय तच्चतुर्दिक्षु वारणीं कृत्वा तन्मध्ये द्राक्षापेषणकुण्डम् अखनत्, तथा तस्य गडमपि निर्म्मितवान् ततस्तत्- २ क्षेत्रं कृषीवलेषु समर्प्य दूरदेशं जगाम। तदनन्तरं फलकाले कृषीवलेभ्यो द्राक्षाक्षेत्रफलानि प्राप्तुं तेषां सविधे भृत्यम् एकं ३ प्राहिणोत्। किन्तु कृषीवलास्तं धृत्वा प्रहृत्य रिक्तहस्तं विस- ४ सृजुः। ततः स पुनरन्यमेकं भृत्यं प्रेषयामास, किन्तु ते कृषीवलाः पाषाणाघातैस्तस्य शिरो भङ्क्त्वा सापमानं तं व्यसर्जन्। ५ ततः परं सोपरं दासं प्राहिणोत् तदा ते तं जघ्नुः, एवम् अने- ६ केषां कस्यचित् प्रहारः कस्यचिद् बधश्च तैः कृतः। ततः परं मया स्वपुत्रे प्रहिते ते तमवश्यं सम्मंस्यन्ते, इत्युक्त्वावशेषे तेषां ७ सन्निधौ निजप्रियम् अद्वितीयं पुत्रं प्रेषयामास। किन्तु कृषीवलाः परस्परं जगदुः, एष उत्तराधिकारी, आगच्छत वयमेनं

हन्मस्तथा कृते ऽधिकारोयम् अस्माकं भविष्यति। ततस्तं धृत्वा ८
हत्वा द्राक्षाक्षेत्राद् वहिः प्राक्षिपन्। अनेनासौ द्राक्षाक्षेत्रपतिः ९
किं करिष्यति? स एत्य तान् कृषीबलान् संहत्य तत्क्षेत्रम्
अन्येषु कृषीबलेषु समर्पयिष्यति। अपरञ्च, १०

'स्थपतयः करिष्यन्ति ग्रावाणं यन्तु तुच्छकं।
प्रधानप्रस्तरः कोणे स एव संभविष्यति।
एतत् कर्म परेशस्याद्भुतं नो दृष्टितो भवेत्॥ ११

इमां शास्त्रीयां लिपिं यूयं किं नापाठिष्ट? तदानीं स तानु- १२
द्दिश्य तां दृष्टान्तकथां कथितवान्, त इत्थं बुद्ध्वा तं धर्त्तु-
मुद्यताः, किन्तु लोकेभ्यो बिभ्युः, तदनन्तरं ते तं विहाय वव्रजुः।

अपरञ्च ते तस्य वाक्यदोषं धर्त्तुं कतिपयान् फिरूशिनो १३
हेरोदीयांश्च लोकान् तदन्तिकं प्रेषयामासुः। त आगत्य तम- १४
वदन्, हे गुरो भवान् तथ्यभाषी कस्याप्यनुरोधं न मन्यते,
पक्षपातञ्च न करोति, यथार्थत ईश्वरीयं मार्गं दर्शयति वय-
मेतत् प्रजानीमः, कैसराय करो देयो न वा? वयं दास्यामो १५
न वा? किन्तु स तेषां कपटं ज्ञात्वा जगाद, कुतो मां परी-
क्षध्वे? एकं मुद्रापादं समानीय मां दर्शयत। तदा तैरेकस्मिन् १६
मुद्रापादे समानीते स तान् पप्रच्छ, अत्र लिखितं नाम मूर्त्ति-
र्वा कस्य? ते प्रत्यूचुः, कैसरस्य। तदा यीशुरवदत् तर्हि कैसरस्य १७
द्रव्याणि कैसराय दत्त, ईश्वरस्य द्रव्याणि तु ईश्वराय दत्त;
ततस्ते विस्मयं मेनिरे।

अथ मृतानामुत्थानं ये न मन्यन्ते ते सिदूकिनो यीशोः समी- १८
पमागत्य तं पप्रच्छुः; हे गुरो कश्चिज्जनो यदि निःसन्ततिः सन् १९
भार्य्यायां सत्यां म्रियते तर्हि तस्य भ्राता तस्य भार्य्यां गृहीत्वा

भ्रातु र्वंशोत्पत्तिं करिष्यति, व्यवस्थामिमां मूसा अस्मान्
२० प्रति व्यलिखत्। किन्तु केचित् सप्त भ्रातर आसन्, ततस्तेषां
२१ ज्येष्ठभ्राता विवह्य निःसन्ततिः सन् अम्रियत। ततो द्वितीयो
भ्राता तां स्त्रियमगृह्णात् किन्तु सोपि निःसन्ततिः सन्
२२ अम्रियत; अथ तृतीयोपि भ्राता तादृशोभवत्। इत्थं सप्तैव
भ्रातरस्तां स्त्रियं गृहीत्वा निःसन्तानाः सन्तोऽम्रियन्त, सर्व्वशेषे
२३ सापि स्त्री म्रियते स्म। अथ मृतानामुत्थानकाले यदा त उत्था-
स्यन्ति तदा तेषां कस्य भार्य्या सा भविष्यति? यतस्ते सप्तैव तां
२४ व्यवहन्। ततो यीशुः प्रत्युवाच शास्त्रम् ईश्वरशक्तिञ्च यूयमज्ञात्वा
२५ किमभ्राम्यत न? मृतलोकानामुत्थाने सति ते न विवहन्ति
वाग्दत्ता अपि न भवन्ति, किन्तु स्वर्गीयदूतानां सदृशा भवन्ति।
२६ पुनश्च 'अहम् इब्राहीम ईश्वर इस्हाक ईश्वरो याकूबश्चेश्वरः'
यामिमां कथां स्तम्बमध्ये तिष्ठन् ईश्वरो मूसामवादीत् मृता-
नामुत्थानार्थे सा कथा मूसालिखिते पुस्तके किं युष्माभि
२७ र्नापाठि? ईश्वरो जीवतां प्रभुः किन्तु मृतानां प्रभु र्न भवति,
तस्माद्धेतो र्यूयं महाभ्रमेण तिष्ठथ।

२८ एतर्हि एकोध्यापक एत्य तेषामित्थं विचारं शुश्राव;
यीशुस्तेषां वाक्यस्य सदुत्तरं दत्तवान् इति बुद्धा तं पृष्टवान्
२९ सर्व्वासाम् आज्ञानां का श्रेष्ठा? ततो यीशुः प्रत्युवाच, 'हे
३० इस्रायेल्लोका अवधत्त, अस्माकं प्रभुः परमेश्वर एक एव, यूयं
सर्व्वान्तःकरणैः सर्व्वप्राणैः सर्व्वचित्तैः सर्व्वशक्तिभिश्च तस्मिन्
३१ प्रभौ परमेश्वरे प्रीयध्वं,' इत्याज्ञा श्रेष्ठा। तथा 'स्वप्रति-
वासिनि स्ववत् प्रेम कुरुध्वं,' एषा या द्वितीयाज्ञा सा
तादृशी; एताभ्यां द्वाभ्याम् आज्ञाभ्याम् अन्या काप्याज्ञा

श्रेष्ठा नास्ति। तदा सोऽध्यापकस्तमवदत्, हे गुरो सत्यं भवान् ३२ यथार्थं प्रोक्तवान् यत एकस्माद् ईश्वराद् अन्यो द्वितीय ईश्वरो नास्ति; अपरं सर्व्वान्तःकरणैः सर्व्वप्राणैः सर्व्वचित्तैः ३३ सर्व्वशक्तिभिश्च ईश्वरे प्रेमकरणं तथा स्वसमीपवासिनि स्ववत् प्रेमकरणञ्च सर्व्वेभ्यो होमबलिदानादिभ्यः श्रेष्ठं भवति। ततो यीशुः सुबुद्धेरिव तस्येदम् उत्तरं श्रुत्वा तं भाषितवान् ३४ त्वमीश्वरस्य राज्यान्न दूरोसि। इतः परं तेन सह कस्यापि वाक्यस्य विचारं कर्त्तुं कस्यापि प्रगल्भता न जाता।

अनन्तरं मध्येमन्दिरम् उपदिशन् यीशुरिमं प्रश्नं चकार, ३५ अध्यापका अभिषिक्तं (तारकं) कुतो दायूदः सन्तानं वदन्ति? स्वयं दायूद् पवित्रस्यात्मन आवेशेनेदं कथयामास। यथा। ३६

'मम प्रभुमिदं वाक्यमवदत् परमेश्वरः।
तव शत्रूनहं यावत् पादपीठं करोमि न।
तावत् कालं मदीये त्वं दक्षपार्श्व उपाविश।'

यदि दायूद् तं प्रभुं वदति तर्हि कथं स तस्य सन्तानो भवितु- ३७ मर्हति? इतरे लोकास्तत्कथां श्रुत्वानन्दुः।

तदानीं स तानुपदिश्य कथितवान् ये नरा दीर्घपरि- ३८ धेयानि हट्टे विपणौ च लोककृतनमस्कारान् भजनगृहे प्रधाना- ३९ सनानि भोजनकाले प्रधानस्थानानि च काङ्क्षन्ते; विधवानां ४० सर्व्वस्वं ग्रसित्वा छलाद् दीर्घकालं प्रार्थयन्ते तेभ्य उपाध्यायेभ्यः सावधाना भवत; तेऽधिकतरान् दण्डान् प्राप्स्यन्ति।

तदनन्तरं लोका भाण्डागारे मुद्रा यथा निक्षिपन्ति ४१ भाण्डागारस्य सम्मुखे समुपविश्य यीशुस्तदवलुलोक; तदानीं बहवो धनिनस्तस्य मध्ये बहूनि धनानि निरक्षिपन्। पश्चाद् ४२

एका दरिद्रा विधवा समागत्य द्विपणमूल्यां मुद्रैकां तत्र निर-
४३ क्षिपत्। तदा यीशुः शिष्यान् आहूय कथितवान् युष्मानहं
यथार्थं वदामि ये ये भाण्डागारेऽस्मिन् धनानि निःक्षिपन्ति
स्म तेभ्यः सर्व्वेभ्य इयं विधवा दरिद्राधिकम् निःक्षिपति स्म।
४४ यतस्ते प्रभूतधनस्य किञ्चित् निरक्षिपन् किन्तु दीनेयं स्वदिन-
यापनयोग्यं किञ्चिदपि न स्थापयित्वा सर्व्वस्वं निरक्षिपत्।

---

## १३ त्रयोदशोऽध्यायः।

१ मन्दिरविनाशशिष्यदुःखयो र्भविष्यद्वाक्यं १४ यिहूदीयानां दुःखकथनम् २१ मृषाभविष्यद्वादिकथनम् २४ यिहूदीयानां राज्यविनाशकथनम् २८ उडुम्बर-तरुदृष्टान्तः सावधानत्वस्यावश्यकत्वञ्च।

१ अनन्तरं मन्दिराद् वहिर्गमनकाले तस्य शिष्याणामेकस्तं
व्याहृतवान् हे गुरो पश्यतु कीदृशाः पाषाणाः कीदृक् च
२ निचयनं। तदा यीशुस्तम् अवदत् त्वं किमेतद् वृहन्नि-
चयनं पश्यसि? अस्यैकपाषाणोपि द्वितीयपाषाणोपरि न
३ स्थास्यति सर्व्वं ऽधःक्षेप्स्यन्ते। अथ यस्मिन् काले जैतुन्गिरौ
मन्दिरस्य सम्मुखे स समुपविष्टस्तस्मिन् काले पितरो याकूब्
योहन् आन्द्रियश्चैते तं रहसि पप्रच्छुः, एता घटनाः कदा
४ भविष्यन्ति? तथैतत्सर्व्वासां सिद्ध्युपक्रमस्य वा किं चिह्नं?
५ तदस्मभ्यं कथयतु भवान्। ततो यीशुस्तान् वक्तुमारेभे, कोपि
यथा युष्मान् न भ्रामयति तथात्र यूयं सावधाना भवत।
६ यतः ख्रीष्टोहमिति कथयित्वा मम नाम्नानेके समागत्य
७ लोकानां भ्रमं जनयिष्यन्ति; किन्तु यूयं रणस्य वार्त्तां रणा-
डम्बरञ्च श्रुत्वा मा व्याकुला भवत, घटना एता अवश्यम्भा-
८ विन्यः; किन्त्वापाततो न युगान्तो भविष्यति। देशस्य
विपक्षतया देशो राज्यस्य विपक्षतया च राज्यमुत्थास्यति, तथा

स्थाने स्थाने भूमिकम्पो दुर्भिक्षं महाक्लेशाश्च समुपस्थास्यन्ति, सर्व्वे एते दुःखस्यारम्भाः। किन्तु यूयम् आत्मार्थे सावधाना- ९ स्तिष्ठत, यतो लोका राजसभायां युष्मान् समर्पयिष्यन्ति, तथा भजनगृहे प्रहरिष्यन्ति; यूयं मदर्थे देशाधिपान् भूपांश्च प्रति साक्ष्यदानाय तेषां सम्मुखे उपस्थापयिष्यध्वे। शेषीभवनात् पूर्व्वं सर्व्वान् देशीयान् प्रति सुसंवादः प्रचा- १० रयिष्यते। किन्तु यदा ते युष्मान् धृत्वा समर्पयिष्यन्ति तदा ११ यूयं यद्यद् उत्तरं दास्यथ, तदग्रे तस्य विवेचनं मा कुरुत तदर्थं किञ्चिदपि मा चिन्तयत च, तदानीं युष्माकं मनःसु यद्यद् वाक्यम् उपस्थापयिष्यते तदेव वदिष्यथ, यतो यूयं न तद्वक्तारः किन्तु पवित्र आत्मा तस्य वक्ता। तदा भ्राता १२ भ्रातरं पिता पुत्रं घातनार्थं परहस्तेषु समर्पयिष्यते, तथा- पत्यानि मातापित्रो र्विपक्षतया तौ घातयिष्यन्ति। मम १३ नामहेतोः सर्व्वेषां सविधे यूयं जुगुप्सिता भविष्यथ, किन्तु यः कश्चित् शेषपर्य्यन्तं धैर्य्यम् आलम्बिष्यते सएव परित्रास्यते।

दानियेल्भविष्यद्वादिना प्रोक्तं सर्व्वनाशि जुगुप्सितञ्च १४ वस्तु यदा त्वयोग्यस्थाने विद्यमानं द्रक्षथ (यो जनः पठति स बुध्यतां) तदा ये यिहूदीयदेशे तिष्ठन्ति ते महीध्रं प्रति पलायन्तां; तथा यो नरो गृहोपरि तिष्ठति स गृहमध्यं १५ नावरोहतु, तथा किमपि वस्तु ग्रहीतुं मध्येगृहं न प्रविशतु; तथा च यो नरः क्षेत्रे तिष्ठति सोपि स्ववस्त्रं ग्रहीतुं परा- १६ वृत्य न व्रजतु। तदानीं गर्ब्भवतीनां स्तन्यदात्रीणाञ्च योषितां १७ दुर्गति र्भविष्यति। युष्माकं पलायनं शीतकाले यथा न १८ भवति तदर्थं प्रार्थयध्वं। यतस्तदा यादृशी दुर्घटना घटि- १९

ष्यते तादृशी दुर्घटना ईश्वरसृष्टेः प्रथममारभ्याद्य यावत्
२० कदापि न जाता न जनिष्यते च। अपरञ्च परमेश्वरो यदि
तस्य समयस्य संक्षेपं न करोति तर्हि कस्यापि प्राणभृतो रक्षा
भवितुं न शक्ष्यति, किन्तु यान् जनान् मनोनीतान् अकरोत्
तेषां स्वमनोनीतानां हेतोः स तदनेहसं संक्षेप्स्यति।

२१ अन्यच्च पश्यत ख्रीष्टोत्र स्थाने वा तत्र स्थाने विद्यते,
तस्मिन् काले यदि कश्चिद् युष्मान् एतादृशं वाक्यं व्याहरति,
२२ तर्हि तस्मिन् वाक्ये मैव विश्वसित। यतोनेके मिथ्याख्रीष्टा
मिथ्याभविष्यद्वादिनश्च समुपस्थाय बहूनि चिह्नान्यद्भुतानि
कर्म्माणि च दर्शयिष्यन्ति; तथा यदि सम्भवति तर्हि मनोनीत-
२३ लोकानामपि मिथ्यामतिं जनयिष्यन्ति। पश्यत घटनातः पूर्व्वं
सर्व्वकार्य्यस्य वार्त्तां युष्मभ्यमदाम्, यूयं सावधानास्तिष्ठत।

२४ अपरञ्च तस्य क्लेशकालस्याव्यवहिते परकाले भास्करः
सान्धकारो भविष्यति तथैव चन्द्रश्चन्द्रिकां न दास्यति।
२५ नभःस्थानि नक्षत्राणि पतिष्यन्ति, व्योममण्डलस्था ग्रहाश्च
२६ विचलिष्यन्ति। तदानीं महापराक्रमेण महैश्वर्य्येण च मेघ-
२७ मारुह्य समायान्तं मानवसुतं मानवाः समीक्षिष्यन्ते। अन्यच्च
स निजदूतान् प्रहित्य नभोभूम्योः सीमां यावद् जगतश्चतु-
र्दिग्भ्यः स्वमनोनीतलोकान् संग्रहीष्यति।

२८ उडुम्बरतरो दृष्टान्तं शिक्षध्वं यदोडुम्बरस्य तरो र्नवीनाः
शाखा जायन्ते पल्लवादीनि च र्निगच्छन्ति, तदा निदाघ-
२९ कालः सविधो भवतीति यूयं ज्ञातुं शक्नुथ। तद्वद् एता
३० घटना दृष्ट्वा स कालो द्वार्य्युपस्थित इति जानीत। युष्मानहं
यथार्थं वदामि, आधुनिकलोकानां गमनात् पूर्व्वं तानि

सर्व्वाणि घटिष्यन्ते। द्यावापृथिव्यो र्विचलितयोः सत्यो र्मदीया ३१
वाणी न विचलिष्यति। अपरञ्च स्वर्गस्थदूतगणो वा पुत्रो वा ३२
तातादन्यः कोपि तं दिवसं तं दण्डं वा न ज्ञापयति। अतः स ३३
समयः कदा भविष्यति, एतज्ज्ञानाभावाद् यूयं सावधानास्ति-
ष्ठत, सतर्काश्च भूत्वा प्रार्थयध्वं; यद्वत् कश्चित् पुमान् स्वनिवेश- ३४
नाद् दूरदेशं प्रति यात्राकरणकाले दासेषु स्वकार्य्यस्य भारमर्प-
यित्वा सर्व्वान् स्वे स्वे कर्म्मणि नियोजयति; अपरं दौवारिकं
जागरितुं समादिश्य याति, तद्वन् नरपुत्रः। गृहपतिः ३५
सायंकाले निशीथे वा तृतीययामे वा प्रातःकाले वा कदा-
गमिष्यति तद् यूयं न जानीथ; स हठादागत्य यथा युष्मान् ३६
निद्रितान् न पश्यति, तदर्थं जागरितास्तिष्ठत। युष्मानहं यद् ३७
वदामि तदेव सर्व्वान् वदामि, जागरितास्तिष्ठतेति।

---

## १४ चतुर्दशोऽध्यायः।

१ ख्रीष्टविरुद्धा कुमन्त्रणा ३ स्त्रिया सुगन्धितैलेन तदभिषेको यिहूदाविश्वासघातित्वम् १२ निस्तारोत्सवे भोज्यासादनाय शिष्यप्रेषणम् १७ तैः सह भोजनम् २२ रात्रिभोज्य-निरूपणम् २७ पितरस्यानङ्गीकारे भविष्यद्वाक्यम् ३२ उद्याने ख्रीष्टस्य चित्तामितापः ४३ ख्रीष्टस्य परैराक्रमणम् ५३ तस्य विचारो दण्डाज्ञा च ६६ पितरेणानङ्गीकरणञ्च।

तदा निस्तारोत्सवकिण्वहीनपूपोत्सवयोरारम्भस्य दिनद्वये १
ऽवशिष्टे प्रधानयाजका अध्यापकाश्च केनापि छलेन यीशुं
धर्त्तुं हन्तुञ्च मृगयाञ्चक्रिरे; किन्तु लोकानां कलहभयादू- २
चिरे, नचोत्सवकाल उचितमेतदिति।

अनन्तरं बैथनियापुरे शिमोनकुष्ठिनो गृहे यीशौ भोक्तु- ३
मुपविष्टे सति काचिद् योषित् पाण्डरपाषाणस्य सम्पुटकेन
महार्घ्योत्तमतैलम् आनीय सम्पुटकं भंक्त्वा तस्योत्तमाङ्गे
तैलधारां पातयाञ्चक्रे। तस्मात् केचित् स्वान्ते कुप्यन्तः कथि- ४

५ तवन्तः कुतोयं तैलापव्ययः? यद्येतत् तैलं व्यक्रेष्यत तर्हि मुद्रापादशतत्रयादप्यधिकं तस्य प्राप्तमूल्यं दरिद्रलोकेभ्यो दातुमशक्ष्यत, कथामेतां कथयित्वा तया योषिता साकं
६ वाचायुध्यन्। किन्तु यीशुरुवाच, कुत एतस्यै कृच्छ्रं ददासि?
७ मह्यमियं कर्म्मोत्तमं कृतवती। दरिद्राः सर्व्वदा युष्माभिः सह तिष्ठन्ति, तस्माद् यूयं यदेच्छथ तदैव तानुपकर्त्तुं शक्नुथ,
८ किन्त्वहं युष्माभिः सह निरन्तरं न तिष्ठामि। अस्या यथा-साध्यं तथैवाकरोदियं, श्मशानयापनात् पूर्व्वं समेत्य मद्वपुषि
९ तैलम् अमर्द्दयत्। अहं युष्मभ्यं यथार्थं कथयामि, जगतां मध्ये यत्र यत्र सुसंवादोयं प्रचारयिष्यते तत्र तत्र योषित
१० एतस्याः स्मरणार्थं तत्कृतकर्म्मैतत् प्रचारयिष्यते। ततः परं द्वादशानां शिष्याणामेक ईष्करियोतीययिहूदाख्यो यीशुं
११ परकरेषु समर्पयितुं प्रधानयाजकानां समीपमियाय। ते तस्य वाक्यं समाकर्ण्य सन्तुष्टाः सन्तस्तस्मै मुद्रा दातुं प्रत्यजानत; तस्मात् स तं तेषां करेषु समर्पणायोपायं मृगयामास।

१२ अनन्तरं किण्वशून्यपूपोत्सवस्य प्रथमेऽहनि निस्तारोत्सवार्थं मेषमारणसमये शिष्यास्तं पप्रच्छुः कुत्र गत्वा वयं निस्तारोत्सवस्य
१३ भोज्यमासादयिष्यामः? किमिच्छति भवान्? तदानीं स तेषां द्वयं प्रेरयन् बभाषे युवयोः पुरमध्यं गतयोः सतो र्यो जनः सजलकुम्भं वहन् युवां साक्षात् करिष्यति तस्यैव पश्चाद् यातं;
१४ स यत् सदनं प्रवेक्ष्यति तद्भवनपतिं वदतं, गुरुराह यत्र सशिष्योहं निस्तारोत्सवीयं भोजनं करिष्यामि, सा भोजनशाला
१५ कुत्रास्ति? ततः स परिष्कृतां सुसज्जितां बृहतीञ्च यां शालां
१६ दर्शयिष्यति तस्यामस्मदर्थं भोज्यद्रव्याण्यासादयतं। ततः शिष्यौ

प्रस्थाय पुरं प्रविश्य स यथोक्तवान् तथैव प्राप्य निस्तारोत्सवस्य भोज्यद्रव्याणि समासादयेताम्।

अनन्तरं यीशुः सायंकाले द्वादशभिः शिष्यैः सार्द्धं १७ जगाम; सर्व्वेषु भोजनाय प्रोपविष्टेषु स तानुदितवान् युष्मा- १८ नहं यथार्थं व्याहरामि, अत्र युष्माकमेको जनो यो मया सह भुंक्ते मां परकरेषु समर्पयिष्यते। तदानीं ते दुःखिताः १९ सन्त एकैकशस्तं प्रष्टुमारब्धवन्तः स किमहं? पश्चाद् अन्य एकोभिदधे स किमहं? ततः स प्रत्यवदद् एतेषां द्वादशानां २० यो जनो मया समं भोजनपात्रे पाणिं मज्जयिष्यति स एव। मनुजतनयमधि यादृशं लिखितमास्ते तदनुरूपा गतिस्तस्य २१ भविष्यति, किन्तु यो जनो मानवसुतं परपाणिषु समर्पयि- ष्यते हन्त तस्य जन्माभावे सति भद्रमभविष्यत्।

अपरञ्च तेषां भोजनसमये यीशुः पूपं गृहीत्वेश्वरगुणान् २२ अनुकीर्त्त्य भङ्क्त्वा तेभ्यो दत्त्वा बभाषे, एतद् गृहीत्वा भुञ्जीध्वम् एतन्मम विग्रहरूपं। अनन्तरं स कंसं गृहीत्वेश्वरस्य गुणान् २३ कीर्त्तयित्वा तेभ्यो ददौ, ततस्ते सर्व्वे पपुः। अपरं स तानवादीद् २४ बहूनां निमित्तं पातितं मम नवीननियमरूपं शोणितमेतत्। युष्मानहं यथार्थं वदामि, ईश्वरस्य राज्ये यावत् सद्योजातं द्रा- २५ क्षारसं न पास्यामि, तावदहं द्राक्षाफलरसं पुन र्न पास्यामि। तदनन्तरं ते गीतमेकं संगीय बहि र्जैतुनं शिखरिणं ययुः। २६

अथ यीशुस्तानुवाच निशायामस्यां मयि युष्माकं सर्व्वेषां २७ प्रत्यूहो भविष्यति यतो लिखितमास्ते यथा,

मेषाणां रक्षकञ्चाहं प्रहरिष्यामि वै ततः।
मेषाणां निवहो नूनं प्रविकीर्णो भविष्यति।

२८ किन्तु मदुत्थाने जाते युष्माकमग्रेऽहं गालीलं व्रजिष्यामि। तदा
२९ पितरः प्रतिबभाषे, यद्यपि सर्व्वेषां प्रत्यूहो भवति तथापि
३० मम नैव भविष्यति। ततो यीशुरुक्तवान् अहं तुभ्यं तथ्यं
कथयामि, क्षणदायामद्य कुक्कुटस्य द्वितीयवाररवणात् पूर्व्वं
३१ त्वं वारत्रयं मामपह्नोष्यसे। किन्तु स गाढं व्याहरद् यद्यपि
त्वया सार्द्धं मम प्राणो याति तथापि कथमपि त्वां नापह्नोष्ये;
सर्व्वेऽपीतरे तथैव बभाषिरे।

३२ अपरञ्च तेषु गेत्शिमानीनामकं स्थानं गतेषु स शिष्यान्
३३ जगाद, यावदहं प्रार्थये तावदत्र स्थाने यूयं समुपविशत। अथ
स पितरं याकूबं योहनञ्च गृहीत्वा वव्राज; अत्यन्तं त्रासितो
३४ व्याकुलितश्च तेभ्यः कथयामास, निधनकालवत् प्राणो मेऽतीव
३५ दुःखमेति, यूयं जाग्रतोऽत्र स्थाने तिष्ठत। ततः स किञ्चिद्दूरं
गत्वा भूमावधोमुखः पतित्वा प्रार्थितवानेतत्, यदि भवितुं शक्यं
३६ तर्हि दुःसमयोयं मत्तो दूरीभवतु। अपरमुदितवान् हे पित
र्हे पितः सर्व्वं त्वया साध्यं, ततो हेतोरिमं कंसं मत्तो दूरीकुरु,
३७ किन्तु तन् ममेच्छातो न तवेच्छातो भवतु। ततः परं स एत्य
तान् निद्रितान् निरीक्ष्य पितरं प्रोवाच, हे शिमोन् त्वं किं
३८ निद्रासि? घटिकामेकाम् अपि जागरितुं न शक्नोषि? परी-
क्षायां यथा न पतथ तदर्थं सचेतनाः सन्तः प्रार्थयध्वं; मन
३९ उद्युक्तमिति सत्यं किन्तु वपुरशक्तिकं। अथ स पुनर्व्रजित्वा
४० पूर्व्ववत् प्रार्थयाञ्चक्रे। परावृत्यागत्य पुनरपि तान् निद्रितान्
ददर्श तदा तेषां लोचनानि निद्रया पूर्णानि, तस्मात्तस्मै का
४१ कथा कथयितव्या त एतद् बोद्धुं न शेकुः। ततः परं तृतीय-
वारं स आगत्य तेभ्यो ऽकथयद् इदानीमपि शयित्वा विश्रा-

ऽथ? यथेष्टं जातं, समयश्चोपस्थितः पश्यत मानवतनयः पापि- ४२
लोकानां पाणिषु समर्प्यते। उत्तिष्ठत, वयं व्रजामो यो जनो
मां परपाणिषु समर्पयिष्यते पश्यत स समीपमायातः।

इमां कथां कथयति स, एतर्हि द्वादशानामेको यिहूदा- ४३
नामा शिष्यः प्रधानयाजकानाम् उपाध्यायानां प्राचीन-
लोकानाञ्च सन्निधेः खड्गलगुडधारिणो बहुलोकान् गृहीत्वा
तस्य समीप उपस्थितवान्। अपरञ्चासौ परपाणिषु समर्प- ४४
यिता पूर्व्वमिति सङ्केतं कृतवान् यमहं चुम्बिष्यामि स एवासौ
तमेव धृत्वा सावधानं नयत। अतो हेतोः स आगत्यैव यीशोः ४५
सविधं गत्वा हे गुरो हे गुरो, इत्युक्त्वा तं चुचुम्ब। तदा ते ४६
तदुपरि पाणीनर्पयित्वा तं दध्रुः। ततस्तस्य पार्श्वस्थानां लोका- ४७
नामेकः खड्गं निष्कोषयन् महायाजकस्य दासमेकं प्रहृत्य
तस्य कर्णं चिच्छेद। पश्चाद् यीशुस्तान् व्याजहार, खड्गान् ४८
लगुडांश्च गृहीत्वा मां किं चौरं धर्त्तुं समायाताः? मध्ये- ४९
मन्दिरं समुपदिशन् प्रत्यहं युष्माभिः सह स्थितवानहं,
तस्मिन् काले यूयं मां नादीधरत, किन्त्वनेन शास्त्रीयं वचनं
सेधनीयं। तदा सर्व्वे शिष्यास्तं परित्यज्य पलायाञ्चक्रिरे। ५०
अथैको युवा मानवो नग्नकाये वस्त्रमेकं निधाय तस्य पश्चाद् ५१
व्रजन् युवलोकैर्धृतो वस्त्रं विहाय नग्नः पलायाञ्चक्रे। ५२

अपरञ्च यस्मिन् स्थाने प्रधानयाजका उपाध्यायाः प्राची- ५३
नलोकाश्च महायाजकेन सह सदसि स्थितास्तस्मिन् स्थाने
महायाजकस्य समीपं यीशुं निन्युः। पितरो दूरे तत्पश्चाद् ५४
इत्वा महायाजकस्याट्टालिकां प्रविश्य किङ्करैः सहोपविश्य
वह्नितापं जग्राह। तदानीं प्रधानयाजका मन्त्रिणश्च यीशुं ५५

घातयितुं तत्प्रातिकूल्येन साक्षिणो मृगयाञ्चक्रिरे, किन्तु न
५६ प्राप्ताः। अनेकैस्तद्विरुद्धं मृषासाक्ष्ये दत्तेपि तेषां वाक्यानि
५७ न समगच्छन्त। सर्व्वशेषे कियन्त उत्थाय तस्य प्रातिकूल्येन
५८ मृषासाक्ष्यं दत्त्वा कथयामासुः, इदं करकृतमन्दिरं विनाश्य
दिनत्रयमध्ये पुनरपरम् अकरकृतं मन्दिरं निर्म्मास्यामि, इति
५९ वाक्यम् अस्य मुखात् श्रुतमस्माभिरिति। किन्तु तत्रापि तेषां
६० साक्ष्यकथा न सङ्गताः। अथ महायाजको मध्येसभम् उत्थाय
यीशुं व्याजहार, एते जनास्त्वयि यत् साक्ष्यमदुः त्वमेतस्य
६१ किमप्युत्तरं किं न दास्यसि? किन्तु स किमप्युत्तरं न दत्त्वा
मौनीभूय तस्थौ; ततो महायाजकः पुनरपि तं पृष्टवान् त्वं
६२ सच्चिदानन्दस्य तनयो ऽभिषिक्तस्त्राता? तदा यीशुस्तं प्रोवाच
भवाम्यहम् यूयञ्च सर्व्वशक्तिमतो दक्षिणपार्श्वे समुपविशन्तं मेघ-
६३ मारुह्य समायान्तञ्च मनुष्यपुत्रं सन्द्रक्ष्यथ। तदा महायाजकः
स्वं वसनं छित्वा व्याहरत् किमस्माकं साक्षिभिः प्रयोजनम्?
६४ ईश्वरनिन्दावाक्यं युष्माभिरश्रावि किं विचारयथ? तदानीं
६५ सर्व्वे जगदुरयं निधनदण्डमर्हति। ततः कश्चित् कश्चित्
तद्वपुषि निष्ठीवं निचिक्षेप तथा तन्मुखमाच्छाद्य चपेटेन हत्वा
गदितवान् गणयित्वा वद, अनुचराश्च चपेटैस्तमाजघ्नुः।

६६ ततः परं पितरेऽट्टालिकाधःकोष्ठे तिष्ठति महायाजकस्यैका
६७ दासी समेत्य तं वह्नितापं गृह्णन्तं विलोक्य तं सुनिरीक्ष्य बभाषे
६८ त्वमपि नासरतीययीशोः सङ्गिनाम् एको जन आसीः। किन्तु
सोपह्नुत्य जगाद तमहं न वेद्मि त्वं यत् कथयसि तदप्यहं न
६९ बुध्ये। तदानीं पितरे चत्वरं गतवति कुक्कुटो रुराव। अथान्या
दासी पितरं दृष्ट्वा समीपस्थान् जनान् जगाद अयं तेषामेको

जनः। ततः स द्वितीयवारम् अपह्नुतवान् पश्चात् तत्रस्था ७०
लोकाः पितरं प्रोचुस्त्वमवश्यं तेषामेको जनः यतस्त्वं गाली-
लीयो नर इति तवोच्चारणं प्रकाशयति। तदा स शपथाभि- ७१
शापौ कृत्वा प्रोवाच यूयं यस्य कथां कथयथ तं नरं न जानेऽहं।
तदानीं द्वितीयवारं कुक्कुटो ऽरावीत्। कुक्कुटस्य द्वितीयरवात् ७२
पूर्व्वं त्वं मां वारत्रयम् अपह्नोष्यसि, इति यद्वाक्यं यीशुना
समुदितं तत् तदा संस्मृत्य पितरो रोदितुम् आरभत।

---

## १५ पञ्चदशोऽध्यायः।

१ ख्रीष्टस्य पीलातसमीपानयनम् ६ पीलाते समर्पणम् १६ ख्रीष्टस्योपहासः २१ तस्य क्रुशे वेधनम् २९ तस्य निर्भर्त्सनम् ३३ तस्यार्त्तरावः ३७ तस्य प्राणत्यागः ४० तन्म-रणात् परम् स्त्रीणामुपस्थितिः ४२ तस्य श्मशाने स्थापनञ्च।

अथ प्रभाते सति प्रधानयाजकाः प्राञ्च उपाध्यायाः सर्व्वे १
मन्त्रिणश्च सभां कृत्वा यीशुं बन्धयित्वा पीलाताख्यस्य
देशाधिपतेः सविधं नीत्वा समर्पयामासुः। तदा पीलातस्तं २
पृष्टवान् त्वं किं यिहूदीयलोकानां राजा? ततः स प्रत्युक्त-
वान् सत्यं वदसि। अपरं प्रधानयाजकास्तस्य बहुषु वाक्येषु ३
दोषमारोपयाञ्चक्रुः किन्तु स किमपि न प्रत्युवाच। तदानीं ४
पीलातस्तं पुनः पप्रच्छ त्वं किं नोत्तरयसि? पश्यैते त्वद्विरुद्धं
कतिषु साक्ष्येषु साक्ष्यं ददति। किन्तु यीशुस्तदापि नोत्तरं ५
ददौ ततः पीलात आश्चर्य्यं जगाम।

अपरञ्च काराबद्धे कस्मिंश्चित् जने तन्महोत्सवकाले लोकै ६
र्याचिते देशाधिपतिस्तं मोचयति। ये च पूर्व्वमुपप्लवमकार्षुरुप- ७
प्लवे वधमपि कृतवन्तस्तेषां मध्ये तदानीं बरब्बानामक एको
बद्ध आसीत्। अतो हेतोः पूर्व्वापरीयां रीतिकथां कथयित्वा ८
लोका उच्चैरवन्तः पीलातस्य समक्षं निवेदयामासुः। तदा ९

पीलातस्तानाचख्यौ तर्हि किं यिहूदीयानां राजानं मोचयि-
१० ष्यामि? युष्माभिः किमिष्यते? यतः प्रधानयाजका ईर्ष्यात एव
११ यीशुं समार्पयन्निति स विवेद। किन्तु यथा बरब्बां मोचयति
१२ तथा प्रार्थयितुं प्रधानयाजका लोकान् प्रवर्त्तयामासुः। अथ
पीलातः पुनः पृष्टवान् तर्हि यं यिहूदीयानां राजेति वदथ
१३ तस्य किं करिष्यामि युष्माभिः किमिष्यते? तदा ते पुनरपि
१४ प्रोच्चैः प्रोचुस्तं क्रुशे वेधय। तस्मात् पीलातः कथितवान् कुतः?
स किं कुकर्म्म कृतवान्? किन्तु ते पुनश्च रुवन्तो व्याजह्रुस्तं क्रुशे
१५ वेधय। तदा पीलातः सर्व्वाल्लोकान् तोषयितुमिच्छन् बरब्बां
मोचयित्वा यीशुं कशाभिः प्रहृत्य क्रुशे वेद्धुं तं समर्पयाम्बभूव।
१६ 　अनन्तरं सैन्यगणोऽट्टालिकाम् अर्थाद् अधिपतेर्गृहं यीशुं
१७ नीत्वा सेनानिवहं समाह्वयत्। पश्चात् ते तं धूमलवर्णवस्त्रं
१८ परिधाप्य कण्टकमुकुटं रचयित्वा शिरसि समारोप्य हे
यिहूदीयानां राजन् नमस्कार इत्युक्त्वा तं नमस्कर्त्तुमारेभिरे।
१९ तस्योत्तमाङ्गे वेत्राघातं चक्रुस्तद्गात्रे निष्ठीवञ्च निचिक्षिपुः, तथा
२० तस्य सम्मुखे जानुपातं प्रणेमुः, इत्थमुपहस्य धूम्रवर्णवस्त्रम् उत्तार्य्य
तस्य वस्त्रं तं पर्य्यधापयन् क्रुशे वेद्धुं वहिर्निन्युश्च।
२१ 　ततः परं सेकन्दरस्य रुफस्य च पिता शिमोन्नामा कुरी-
णीयलोक एकः कुतश्चिद् ग्रामादेत्य पथि याति तं ते यीशोः
२२ क्रुशं वोढुं बलाद् दध्रुः। अथ गुल्गलता अर्थात् शिरःकपा-
लनामकं स्थानं यीशुमानीय ते गन्धरसमिश्रितं द्राक्षारसं
२३ पातुं तस्मै ददुः किन्तु स न जग्राह। पश्चात् प्रहरैकवेलायां
२४ ते तं क्रुशे विविधुः। तस्मिन् क्रुशे विद्धे सति तेषामेकैकशः
२५ किं प्राप्स्यतीति निर्णयाय तस्य परिधेयानां विभागार्थं गुटि-

कापातं चक्रुः। अपरम् एष यिहूदीयानां राजेति लिखितं २६ दोषपत्रं तस्य शिरऊर्द्ध्वम् आरोपयाञ्चक्रुः। तस्य वामदक्षि- २७ णयो र्द्वौ चौरौ क्रुशयो र्विविधाते। तेनैव 'अपराधिजनैः सार्द्धं २८ स गणितो भविष्यति,' इति शास्त्रोक्तं वचनं सिद्धमभूत्।

अनन्तरं मार्गे ये ये लोका गमनागमने चक्रुस्ते सर्व्व एव २९ शिरांस्यान्दोल्य निन्दन्तो जगदुः, रे मन्दिरनाशक रे दिन- त्रयमध्ये तन्निर्म्मायक, अधुनात्मानम् अवित्वा क्रुशादवरोह। ३० किञ्च प्रधानयाजका अध्यापकाश्च तद्वत् तिरस्कृत्य परस्परं ३१ चचक्षिरे एष परानावत् किन्तु स्वमवितुं न शक्नोति। यदी- ३२ स्रायेलो राजाभिषिक्तस्त्राता भवति तर्ह्यधुनैव क्रुशादवरो- हतु वयं तद् दृष्ट्वा विश्वसिष्यामः; किञ्च यौ लोकौ तेन सार्द्धं क्रुशेऽविध्येतां तावपि तं निर्भर्त्सयामासतुः।

अथ द्वितीययामात् तृतीययामं यावत् सर्व्वो देशः सान्धका- ३३ रोभूत्। ततस्तृतीयप्रहरे यीशुरुच्चैरवदत् एली एली लामा ३४ शिवक्तनी अर्थाद् 'हे मदीश मदीश त्वं पर्य्यत्याक्षीः कुतो हि मां?' तदा समीपस्थलोकानां केचित् तद्वाक्यं निशम्याचख्युः ३५ पश्यैष एलियम् आह्वयति। तत एको जनो धावित्वागत्य स्पञ्जे ३६ ऽम्लरसं पूरयित्वा तं नडाग्रे निधाय पातुं तस्मै दत्त्वावदत् तिष्ठ एलिय एनमवरोहयितुम् एति न वेति पश्यामि।

अथ यीशुरुच्चैः समाहूय प्राणान् जहौ। तदा मन्दिरस्य ३७ जवनिकोर्द्ध्वादधःपर्य्यन्ता विदीर्णा द्विखण्डाभूत्। किञ्च इत्य- ३८ मुच्चैराहूय प्राणान् त्यजन्तं तं दृष्ट्वा तद्रक्षणाय नियुक्तो यः सेनापतिरासीत् सोवदत् नरोयम् ईश्वरपुत्त्र इति सत्यम्।

तदानीं मग्दलीनी मरियम् कनिष्ठयाकूबो योसेश्च माताऽन्य- ४०

मरियम् शालोमी च याः स्त्रियो गालील्प्रदेशे यीशुं सेवि-
४१ त्वा तदनुगामिन्यो जाता इमास्तदन्याश्च या अनेका नार्य्यो यी-
शुना सार्द्धं यिरूशालममायातास्ताश्च दूरात् तानि ददृशुः।
४२ 　अथासादनदिनस्यार्थाद् विश्रामवारात् पूर्व्वदिनस्य सायं-
४३ काल आगत ईश्वरराज्यापेक्ष्यरिमथीययूषफनामा मान्यमन्त्री
४४ समेत्य पीलातसविधं निर्भयो गत्वा यीशोर्देहं ययाचे। किन्तु स
इदानीं मृतः पीलात इत्यसम्भवं मत्वा शतसेनापतिमाहूय
४५ स कदा मृत इति पप्रच्छ। शतसेनापतिमुखात् तज्ज्ञात्वा यूषफे
४६ यीशोर्देहं ददौ। पश्चात् स सूक्ष्मं वासः क्रीत्वा यीशोः काय-
मवरोह्य तेन वाससा वेष्टयित्वा गिरौ खातश्मशाने स्थापितवान्
४७ पाषाणं लोठयित्वा द्वारि निदधे। किन्तु यत्र सोऽस्थाप्यत तत
मग्दलीनी मरियम् योसिमातृमरियम् च ददृशतुः।

## १६ षोडशोऽध्यायः।

१ स्वर्गीयदूतेन ख्रीष्टोत्थानप्रकाशः ९ मग्दलीनीमरियमे शिष्यद्वयाय च दर्शन-
दानं १४ एकादशशिष्येभ्यो दर्शनदानं आदेशश्च १९ स्वर्गारोहणञ्च।

१ 　अथ विश्रामवारे गते मग्दलीनी मरियम् याकूबमाता म-
रियम् शालोमी चेमास्तं मर्द्दयितुं सुगन्धिद्रव्याणि क्रीत्वा सप्ता-
२ हप्रथमदिनेऽतिप्रत्यूषे सूर्य्योदयकाले श्मशानमुपगताः। किन्तु
३ श्मशानद्वारपाषाणोऽतिवृहन् तं कोऽपसारयिष्यतीति ताः
४ परस्परं गदन्ति। एतर्हि निरीक्ष्य पाषाणो द्वारो ऽपसारित
५ इति ददृशुः। पश्चात्ताः श्मशानं प्रविश्य शुक्लवर्णदीर्घपरिच्छ-
दावृतमेकं युवानं श्मशानदक्षिणपार्श्वे उपविष्टं दृष्ट्वा चमच्चक्रुः।
६ सोऽवदत्, माभैष्ट यूयं क्रुशे हतं नासरतीययीशुं गवेषयथ सोऽत्र
नास्ति श्मशानादुदस्थात्; तै र्यत्र स स्थापितः स्थानं तदिदं
७ पश्यत। किन्तु तेन यथोक्तं तथा युष्माकमग्रे गालीलं यास्यते

तत्र स युष्मान् साक्षात् करिष्यते यूयं गत्वा तस्य शिष्येभ्यः पित-
राय च वार्त्तामिमां कथयत। ताः कम्पिता विस्मिताश्च तूर्णं ८
श्मशानाद् वहि र्गत्वा पलायन्त भयात् कमपि किमपि नावदंश्च।

अपरं यीशुः सप्ताहप्रथमदिने प्रत्यूषे श्मशानादुत्थाय ९
यस्याः सप्तभूतास्त्याजितास्तस्यै मग्दलीनीमरियमे प्रथमं दर्शनं
ददौ। ततः सा गत्वा शोकरोदनकृद्भ्योऽनुगतलोकेभ्यस्तां वार्त्तां १०
कथयामास। किन्तु यीशुः पुनर्जीवन् तस्यै दर्शनं दत्तवानिति ११
श्रुत्वा ते न प्रत्ययन्। पश्चात् तेषां द्वयो र्ग्रामयानकाले यीशु- १२
रन्यवेशं धृत्वा ताभ्यां दर्शनं ददौ। तावपि गत्वान्यशिष्येभ्यस्तां १३
कथां कथयाञ्चक्रतुः किन्तु तयोः कथामपि ते न प्रत्ययन्।

शेषत एकादशशिष्येषु भोजनोपविष्टेषु यीशुस्तेभ्यो दर्शनं ददौ १४
तथोत्थानात् परं तद्दर्शनप्राप्तलोकानां कथायामविश्वासकर-
णात् तेषामविश्वासमनःकाठिन्याभ्यां हेतुभ्यां स तांस्तर्जित-
वान्। अथ तानाचख्यौ यूयं सर्व्वजगद् गत्वा सर्व्वजनान् प्रति १५
सुसंवादं प्रचारयत। तत्र यः कश्चिद् विश्वस्य मज्जितो भवेत् स १६
परित्रास्यते किन्तु यो न विश्वसिष्यति स दण्डयिष्यते। किञ्च १७
ये प्रत्येष्यन्ति तैरीदृग् आश्चर्य्यं कर्म्म प्रकाशयिष्यते ते मन्नाम्ना
भूतान् त्याजयिष्यन्ति भाषा अन्याश्च वदिष्यन्ति। अपरं तैः १८
सर्पेषु धृतेषु प्राणनाशकवस्तुनि पीते च तेषां कापि क्षति र्न
भविष्यति; रोगिणां गात्रेषु करार्पिते तेऽरोगा भविष्यन्ति च।

अथ प्रभुस्तानित्यादिश्य स्वर्गं नीतः सन् परमेश्वरस्य दक्षिण १९
उपविवेश। ततस्ते प्रस्थाय सर्व्वत्र सुसंवादीयकथां प्रचार- २०
यितुमारेभिरे प्रभुस्तु तेषां सहायः सन् प्रकाशिताश्चर्य्यक्रि-
याभिस्तां कथां प्रमाणवतीं चकार। इति।

# लूकलिखितसुसंवादः।

## १ प्रथमोऽध्यायः।

१ आभाषः ५ इलीशेवाया गर्भधारणकथनं २६ मरियमो गर्भधारणकथनं ३९ तयो-र्द्वयोः साक्षात्करणं ४६ मरियमो गीतं ५७ योहनो जन्मकथनं ६७ तत्पितुः सिखरियस्य भविष्यद्वाक्यं ८० योहनो वृद्धिश्च।

१ प्रथमतो ये साक्षिणो वाक्यप्रचारकाश्चासन् तेऽस्माकं मध्ये २ यद्यत् सप्रमाणं वाक्यमर्पयन्ति स्म तदनुसारतोऽन्येपि बहव- ३ स्तद्वृत्तान्तं रचयितुं प्रवृत्ताः। अतएव हे महामहिमथियफिल् त्वं या याः कथा अशिक्ष्यथास्तासां दृढप्रमाणानि यथा ४ प्राप्नोषि तदर्थं प्रथममारभ्य तानि सर्व्वाणि ज्ञात्वाहमपि अनुक्रमात् सर्व्ववृत्तान्तान् तुभ्यं लेखितुं मतिमकार्षम्।

५ यिहूदादेशीयहेरोद्नामके राजत्वं कुर्व्वति अबीययाजकस्य पर्य्यायाधिकारी सिखरियनामक एको याजको हारो- ६ णवंशोद्भवा इलीशेवाख्या तस्य जाया द्वाविमौ निर्दोषौ प्रभोः ७ सर्व्वाज्ञा व्यवस्थाश्च संमन्य ईश्वरदृष्टौ धार्म्मिकावास्ताम्। तयोः सन्तान एकोपि नासीत्, यत इलीशेवा बन्ध्या तौ द्वावेव ८ वृद्धावभवताम्। यदा स्वपर्य्यानुक्रमेण सिखरिय ईश्वरस्य ९ समक्षं याजकीयं कर्म्म करोति तदा यज्ञस्य दिनपरिपाट्या परमेश्वरस्य मन्दिरे प्रवेशकाले धूपज्वालनं कर्म्म तस्य कर- १० णीयमासीत्। तद्धूपज्वालनकाले लोकनिवहे प्रार्थनां कर्त्तुं ११ बहिस्तिष्ठति सति सिखरियो यस्यां वेद्यां धूपं ज्वालयति तद्द- १२ क्षिणपार्श्वे परमेश्वरस्य दूत एक उपस्थितो दर्शनं ददौ। तं १३ दृष्ट्वा सिखरिय उद्विविजे शशङ्के च। तदा स दूतस्तं बभाषे

हे सिखरिय मा भैस्तव प्रार्थना ग्राह्या जाता तव भार्य्या
इलीशेवा पुत्त्रं प्रसोष्यते तस्य नाम योहन् इति करिष्यसि।
किञ्च त्वं सानन्दः सहर्षश्च भविष्यसि तस्य जन्मनि बहव १४
आनन्दिष्यन्ति च। यतो हेतोः स परमेश्वरस्य गोचरे महान् १५
भविष्यति तथा द्राक्षारसं सुरां वा किमपि न पास्यति, अपरं
जन्मारभ्य पवित्रेणात्मना परिपूर्णः सन् इस्रायेल्वंशीयान् १६
अनेकान् प्रभोः परमेश्वरस्य मार्गमानेष्यति। सन्तानान् प्रति १७
पितॄणां मनांसि धर्म्मज्ञानं प्रत्यनाज्ञाग्राहिणश्च परावर्त्तयितुं,
प्रभोः परमश्वरस्य सेवार्थम् एकां सज्जितजातिं विधातुञ्च स
एलियरूपात्मशक्तिप्राप्तस्तस्याग्रे गमिष्यति। तदा सिखरियो १८
दूतमवादीत् कथमेतद् वेत्स्यामि? यतोहं वृद्धो मम भार्य्या
च वृद्धा। ततो दूतः प्रत्युवाच पश्मेश्वरस्य साक्षाद्वर्त्ती जिब्रा- १९
येल्नामा दूतोहं त्वया सह कथां गदितुं तुभ्यमिमां शुभ-
वार्त्तां दातुञ्च प्रेषितः। किन्तु मदीयं वाक्यं काले फलिष्यति २०
तत् त्वया न प्रतीतम् अतः कारणाद् यावदेव तानि न
सेत्स्यन्ति तावत् त्वं वक्तुमशक्तो मूको भव। तदानीं ये ये २१
लोकाः सिखरियमपैचन्त ते मध्येमन्दिरं तस्य बहुविलम्बाद्
आश्चर्य्यं मेनिरे। स वहिरागतो यदा किमपि वाक्यं २२
वक्तुमशक्तः सङ्केतं कृत्वा निःशब्दस्तस्थौ तदा मध्येमन्दिरं
कस्यचिद् दर्शनं तेन प्राप्तम् इति सर्व्वे बुबुधिरे। अनन्तरं २३
तस्य सेवनपर्य्याये सम्पूर्णे सति स निजगेहं जगाम। कतिपय- २४
दिनेषु गतेषु तस्य भार्य्या इलीशेवा गर्ब्भवती बभूव पश्चात्
सा पञ्चमासान् संगोप्याकथयत् लोकानां समक्षं ममापमानं २५
खण्डयितुं परमेश्वरो मयि दृष्टिं पातयित्वा कर्म्मेदृशं कृतवान्।

२६　अपरञ्च तस्या गर्भस्य षष्ठे मासे जाते गालील्प्रदेशी-
२७ यनासरत्पुरे दायूदो वंशीयाय यूषफ्नाम्ने पुरुषाय या
मरियम्नामकुमारी वाग्दत्तासीत् तस्याः समीपं जिब्रायेल्
२८ दूत ईश्वरेण प्रहितः। स गत्वा जगाद हे ईश्वरानुगृहीतकन्ये
तव शुभं भूयात् प्रभुः परमेश्वरस्तव सहायोस्ति नारीणां
२९ मध्ये त्वमेव धन्या। तदानीं सा तं दृष्ट्वा तस्य वाक्यत उद्विज्य
३० कीदृशं भाषणमिदम् इति मनसा चिन्तयामास। ततो
दूतोऽवदत् हे मरियम् भयं माकार्षीः, त्वयि परमेश्वरस्यानु-
३१ ग्रहोस्ति। पश्य त्वं गर्भं धृत्वा पुत्रं प्रसोष्यसे तस्य नाम
३२ यीशुरिति करिष्यसि। स महान् भविष्यति तथा सर्व्वेभ्यः
श्रेष्ठस्य पुत्र इति ख्यास्यति; अपरं प्रभुः परमेश्वरस्तस्य पितु-
३३ र्दायूदः सिंहासनं तस्मै दास्यति; तथा स याकूबो वंशोपरि
सर्व्वदा राजत्वं करिष्यति, तस्य राजत्वस्यान्तो न भविष्यति।
३४ तदा मरियम् तं दूतं बभाषे नाहं पुरुषसङ्गं करोमि तर्हि
३५ कथमेतत् सम्भविष्यति? ततो दूतोऽकथयत् पवित्र आत्मा
त्वामाश्रयिष्यति तथा सर्व्वश्रेष्ठस्य शक्तिस्तवोपरि छायां करि-
ष्यति ततो हेतोस्तव गर्भाद् यः पवित्रबालको जनिष्यते स
३६ ईश्वरपुत्र इति ख्यातिं प्राप्स्यति। अपरञ्च पश्य तव ज्ञातिरि-
लीशेवा यां सर्व्वे बन्ध्यामवदन् इदानीं सा वार्द्धक्ये सन्तानमेकं
३७ गर्भेऽधारयत् तस्य षष्ठमासोभूत्। किमपि कर्म्म नासाध्यम्
३८ ईश्वरस्य। तदा मरियम् जगाद, पश्य प्रभोरहं दासी मह्यं
तव वाक्यानुसारेण सर्व्वमेतद् घटताम्; अनन्तरं दूतस्तस्याः
समीपात् प्रतस्थे।

३९　अथ कतिपयदिनात् परं मरियम् तस्मात् पर्व्वतमयप्रदे-

शीर्यिहूदाया नगरमेकं शीघ्रं गत्वा सिखरिययाजकस्य गृहं ४० प्रविश्य तस्य जायाम् इलीशेवां सम्बोध्यावदत्। ततो मरि- ४१ यमः सम्बोधनवाक्ये इलीशेवायाः कर्णयोः प्रविष्टमात्रे सति तस्या गर्भस्थबालको ननर्त्त। तत इलीशेवा पवित्रेणात्मना ४२ परिपूर्णा सती प्रोच्चैर्गदितुमारेभे, योषितां मध्ये त्वमेव धन्या, तव गर्भस्थः शिशुश्च धन्यः। त्वं प्रभोर्माता, मम ४३ निवेशने त्वया चरणावर्पितौ, ममाद्य सौभाग्यमेतत्। पश्य तव ४४ वाक्ये मम कर्णयोः प्रविष्टमात्रे सति ममोदरस्थः शिशुरा- नन्दान् ननर्त्त। या स्त्री व्यश्वसीत् सा धन्या, यतो हेतोस्तां ४५ प्रति परमेश्वरोक्तं वाक्यं सर्व्वं सिद्धं भविष्यति। तदानीं मरियम् जगाद।

धन्यवादं परेशस्य करोति मामकं मनः। ४६
ममात्मा तारकेशे च समुल्लासं प्रगच्छति। ४७
अकरोत् स प्रभु र्दृष्टिं स्वदास्या दुर्गतिं प्रति। ४८
पश्चाद्यारभ्य मां धन्यां वक्ष्यन्ति पुरुषाः सदा।
यः सर्व्वशक्तिमान् यस्य नामापि च पवित्रकं। ४९
स एव सुमहत्कर्म्म कृतवान् मन्निमित्तकं।
ये बिभ्यति जनास्तस्मात् तेषां सन्तानपंक्तिषु। ५०
अनुकम्पा तदीया च सर्व्वदैव सुतिष्ठति।
स्वबाहुबलतस्तेन प्राकाश्यत पराक्रमः। ५१
मनःकुमन्त्रणासार्द्धं विकीर्य्यन्तेऽभिमानिनः।
सिंहासनगताल्लोकान् बलिनश्चावरोह्य सः। ५२
पदेषूच्चेषु लोकांस्तु क्षुद्रान् संस्थापयत्यपि।
क्षुधितान् मानवान् द्रव्यैरुत्तमैः परितर्प्य सः। ५३

सकलान् धनिनो लोकान् विसृजेद् रिक्तहस्तकान्।
५४ इब्राहीमि च तद्वंशे या दयास्ति सदैव तां।
स्मृत्वा पुरा पितृणां नो यथा साक्षात् प्रतिश्रुतं।
५५ इस्रायेल्सेवकस्तेन तथोपक्रियते स्वयं॥

५६ अनन्तरं मरियम् प्रायेण मासत्रयम् इलीशेवया सहोषित्वा व्याघुट्य निजनिवेशनं ययौ।

५७ तदनन्तरम् इलीशेवायाः प्रसवकाल उपस्थिते सति सा ५८ पुत्रं प्रासोष्ट। ततः परमेश्वरस्तस्यां महानुग्रहं कृतवान् एतत् श्रुत्वा समीपवासिनः कुटुम्बाश्चागत्य तया सह मुमुदिरे। ५९ तथाष्टमे दिने ते बालकस्य त्वचं छेत्तुम् एत्य तस्य पितृना- ६० मानुरूपं तन्नाम सिखरिय इति कर्त्तुमीषुः। किन्तु तस्य ६१ माताकथयत् तन्न, नामास्य योहन् इति कर्त्तव्यम्। तदा ते ६२ व्याहरन् तव वंशमध्ये नामेदृशं कस्यापि नास्ति। ततः परं तस्य पितरं सिखरियं प्रति सङ्केत्य पप्रच्छुः शिशोः किं नाम ६३ कारिष्यते? ततः स फलकमेकं याचित्वा लिलेख तस्य नाम ६४ योहन् भविष्यति। तस्मात् सर्व्वे आश्चर्य्यं मेनिरे। तत्क्षणं सिखरियस्य जिह्वाजाड्येऽपगते स मुखं व्यादाय स्पष्टवर्णमुच्चार्य्य ६५ ईश्वरस्य गुणानुवादं चकार। तस्माच्चतुर्दिक्स्थाः समीपवासि-लोका भीता एवमेताः सर्व्वाः कथा यिहूदायाः पर्व्वतमयप्रदे- ६६ शस्य सर्व्वत्र प्रचारिताः। तस्मात् श्रोतारो मनःसु स्थापयित्वा कथयाम्बभूवुः कीदृशोयं बालो भविष्यति? अथ परमेश्वर-स्तस्य सहायोभूत्।

६७ तदा योहनः पिता सिखरियः पवित्रेणात्मना परिपूर्णः सन् एतादृशं भविष्यद्वाक्यं कथयामास।

इस्रायेलः प्रभु र्यस्तु स धन्यः परमेश्वरः। ६८
अनुगृह्य निजाल्लोकान् स एव परिमोचयेत्।
विपक्षजनहस्तेभ्यो यथा मोच्यामहे वयं। ६९
यावज्जीवञ्च धर्म्मेण सारल्येन च निर्भयाः।
सेवामहै तमेवैकम् एतत्कारणमेव च। ७०
स्वकीयं सुपवित्रञ्च संस्मृत्य नियमं सदा।
कृपया पुरुषान् पूर्व्वान् निकषार्थात्तु नः पितुः। ७१
इब्राहीमः समीपे यं शपथं कृतवान् पुरा।
तमेव सफलं कर्त्तुं तथा शत्रुगणस्य च। ७२
ऋतीयाकारिणश्चैव करेभ्यो रक्षणाय नः।
सृष्टेः प्रथमतः स्वीयैः पवित्रै र्भाविवादिभिः। ७३
यथोक्तवान् तथा स्वस्य दायूदः सेवकस्य तु। ७४
वंशे त्रातारमेकं स समुत्पादितवान् स्वयम्। ७५
अतो हे बालक त्वन्तु सर्व्वेभ्यः श्रेष्ठ एव यः। ७६
तस्यैव भाविवादीति प्रविख्यातो भविष्यसि।
अस्माकं चरणान् क्षेमे मार्गे चालयितुं सदा।
एवं ध्वान्तेऽर्थतो मृत्योश्छायायां ये तु मानवाः।
उपविष्टास्तु तानेव प्रकाशयितुमेव हि। ७७
कृत्वा महानुकम्पां हि यामेव परमेश्वरः।
ऊर्द्धात् सूर्य्यमुदाय्यैवास्मभ्यं प्रादात्तु दर्शनं। ७८
तयानुकम्पया स्वस्य लोकानां पापमोचने।
परित्राणस्य तेभ्यो हि ज्ञानविश्राणनाय च। ७९
प्रभो र्मार्गं परिष्कर्त्तुं तस्याग्रगामी भविष्यसि॥

अथ बालकः शरीरेण बुद्ध्या च वर्द्धितुमारेभे; अपरञ्च ८०

स इस्रायेलो वंशीयलोकानां समीपे यावन्न प्रकटीभूतस्तावत् प्रान्तरे न्यवसत्।

---

## २ द्वितीयोऽध्यायः।

१ यूषफो बैत्लेहमपुरयानं ख्रीष्टजन्म ८ स्वर्गीयदूतै र्मेषपालानां समीपे तज्जन्माख्यानं १५ मेषपालकैरन्येभ्यस्तस्य व्यक्तीकरणं २१ ख्रीष्टस्य त्वक्छेदनं २२ मरियमः शुचिता २५ शिमियोनः कथा ३६ हन्नाचरित्रं ४० ख्रीष्टस्य बर्द्धनं ४१ बाल्ये बयसि पण्डितैः सह ख्रीष्टस्य प्रश्नोत्तरे च।

१ अपरञ्च तस्मिन् काले राज्यस्य सर्व्वेषां लोकानां नामानि २ लेखयितुम् अगस्तकैसर आज्ञापयामास। तदनुसारेण कुरीणियनामनि सुरियादेशस्य शासके सति नामलेखनं प्रारेभे। ३ अतो हेतो र्नाम लेखितुं सर्व्वे जनाः स्वीयं स्वीयं नगरं ४ जग्मुः। तदानीं यूषफ् नाम लेखितुं वाग्दत्तया स्वभार्य्यया ५ गर्ब्भवत्या मरियमा सह स्वयं दायूदः सजातिवंश इति कारणाद् गालील्प्रदेशस्य नासरत्नगराद् यिहूदाप्रदेशस्य बैत्- ६ लेहमाख्यं दायूद्नगरं जगाम। अन्यच्च तत्र स्थाने तयो- ७ स्तिष्ठतोः सतो र्मरियमः प्रसूतिकाल उपस्थिते सा तं प्रथमसुतं प्रासोष्ट किन्तु तस्मिन् वासगृहे स्थानाभावाद् बालकं वस्त्रेण वेष्टयित्वा गोशालायां स्थापयामास।

८ अनन्तरं ये कियन्तो मेषपालकाः स्वमेषव्रजरक्षायै तत्- ९ प्रदेशे स्थित्वा रजन्यां प्रान्तरे प्रहरिणः कर्म्म कुर्व्वन्ति, तेषां समीपं परमेश्वरस्य दूत आगत्योपतस्थौ; तदा चतुष्पार्श्वे १० परमेश्वरस्य तेजसः प्रकाशितत्वात् तेऽतिशशङ्किरे। तदा स दूत उवाच मा भैष्ट पश्यताद्य दायूदः पुरे युष्मन्निमित्तं ११ त्राता प्रभुः ख्रीष्टोऽजनिष्ट, सर्व्वेषां लोकानां महानन्दजनकम् १२ इमं मङ्गलवृत्तान्तं युष्मान् ज्ञापयामि। यूयं (तत्स्थानं गत्वा)

वस्त्रवेष्टितं तं बालकं गोशालायां शयानं द्रक्ष्यथ युष्मान् प्रतीदं चिह्नं भविष्यति। इत मां कथां कथितवति तत्रा-१३ कस्मात् स्वर्गीयाः पृतना आगत्य कथाम् इमां कथयित्वेश्वरस्य गुणानन्ववादिषुः, यथा,

सर्व्वोर्द्ध्वस्थैरीश्वरस्य महिमा सम्प्रकाश्यतां। १४
शान्तिर्भूयात् पृथिव्यास्तु सन्तोषश्च नरान् प्रति॥

ततः परं तेषां सन्निधे र्दूतगणे स्वर्गं गते मेषपालकाः १५ परस्परम् अवोचन् आगच्छत प्रभुः परमेश्वरो यां घटनां ज्ञापितवान् तस्या याथार्थ्यं ज्ञातुं वयमधुना बैत्लेहम्पुरं यामः। पश्चात् ते तूर्णं व्रजित्वा मरियमं यूषफं गोशालायां १६ शयानं बालकञ्च ददृशुः। इत्थं दृष्ट्वा बालकस्यार्थे प्रोक्तां १७ सर्व्वकथां ते प्रचारयाञ्चक्रुः। ततो ये लोका मेषरक्षकाणां १८ वदनेभ्यस्तां वार्त्तां शुश्रुवुस्ते महाश्चर्य्यं मेनिरे। किन्तु मरियम् १९ एतत्सर्व्वघटनानां तात्पर्य्यं विविच्य मनसि स्थापयामास। तत्पश्चाद् दूतविज्ञप्तानुरूपं श्रुत्वा दृष्ट्वा च मेषपालका ईश्वरस्य २० गुणानुवादं धन्यवादञ्च कुर्व्वाणाः परावृत्य ययुः।

अथ बालकस्य त्वक्छेदनकालेऽष्टमदिवसे समुपस्थिते तस्य २१ गर्भस्थितेः पूर्व्वं स्वर्गीयदूतो यथाज्ञापयत् तदनुरूपं ते तन्नाम-धेयं यीशुरिति चक्रिरे।

ततः परं मूसालिखितव्यवस्थाया अनुसारेण मरियमः २२ शुचित्वकाल उपस्थिते, 'प्रथमजः सर्व्वः पुरुषसन्तानः परमेश्वरे समर्प्यतां,' इति परमेश्वरस्य व्यवस्थया यीशुं परमेश्वरे २३ समर्पयितुम् शास्त्रीयविध्युक्तं कपोतद्वयं पारावतशावकद्वयं वा २४ बलिं दातुं ते तं गृहीत्वा यिरूशालमम् आययुः।

२५ यिरूशालम्पुरनिवासी शिमियोन्नामा धार्म्मिक एक आसीत् स इस्रायेलः सान्त्वनामपेक्ष्य तस्थौ किञ्च पवित्र
२६ आत्मा तस्मिन्नाविर्भूतः । अपरं प्रभुणा परमेश्वरेणाभिषिक्ते त्रातरि त्वया न दृष्टे त्वं न मरिष्यसीति वाक्यं पवित्रेण
२७ आत्मना तस्मै प्राकथ्यत । अपरञ्च यदा यीशोः पिता माता च तदर्थं व्यवस्थानुरूपं कर्म्म कर्त्तुं तं मन्दिरम् आनिन्यतु-
२८ स्तदा शिमियोन् आत्मन आकर्षणेन मन्दिरमागत्य तं क्रोडे निधाय ईश्वरस्य धन्यवादं कृत्वा कथयामास, यथा,

२९ हे प्रभो तव दासोयं निजवाक्यानुसारतः ।
इदानीन्तु सकल्याणो भवता संविसृज्यताम् ।
३० यतः सकलदेशस्य दीप्तये दीप्तिरूपकं ।
३१ इस्रायेलीयलोकस्य महागौरवरूपकं ।
३२ यं त्रायकं जनानान्तु सम्मुखे त्वमजीजनः ।
सएव विद्यतेऽस्माकं ध्रुवं नयनगोचरे ॥

३३ तदानीं तेनोक्ता एताः सकलाः कथाः श्रुत्वा तस्य माता
३४ यूषफ् च विस्मयं मेनाते । ततः परं शिमियोन् तेभ्य आशिषं दत्त्वा तन्मातरं मरियमम् उवाच, पश्य इस्रायेलो वंशमध्ये बहूनां पातनायोत्थापनाय च तथा विरोधपात्रं भवितुं,
३५ बहूनां गुप्तमनोगतानां प्रकटीकरणाय बालकोयं नियुक्तोस्ति । तस्मात् तवापि प्राणाः शूलेन व्यत्स्यन्ते ।

३६ अपरञ्च आशेरस्य वंशीयफिनूयेलो दुहिता हन्नाख्या अतिजरती भविष्यद्वादिन्येका या विवाहात् परं सप्त वत्सरान् पत्या
३७ सह न्यवसत् ततो विधवा भूत्वा चतुरशीतिवर्षवयःपर्य्यन्तं मन्दिरे स्थित्वा प्रार्थनोपवासैर्दिवानिशम् ईश्वरम् असेवत

सापि स्त्री तस्मिन् समये मन्दिरमागत्य परमेश्वरस्य धन्यवादं ३८
चकार, यिरूशालम्पुरवासिनो यावन्तो लोका मुक्तिमपेक्ष्य
स्थितास्तान् यीशोर्वृत्तान्तं ज्ञापयामास । इत्थं परमेश्वरस्य ३९
व्यवस्थानुसारेण सर्व्वेषु कर्म्मसु कृतेषु तौ पुनश्च गालीलो
नासरत्नामकं निजनगरं प्रतस्थाते ।

तत्पश्चाद् बालकः शरीरेण वृद्धिमेत्य ज्ञानेन परिपूर्ण ४०
आत्मना शक्तिमांश्च भवितुमारेभे तथा तस्मिन् ईश्वरानुग्रहो
बभूव ।

तस्य पिता माता च प्रतिवर्षं निस्तारोत्सवसमये यिरूशाल- ४१
मम् अगच्छताम् । अपरञ्च यीशौ द्वादशवर्षवयस्के सति तौ पर्व्व- ४२
समयस्य रीत्यनुसारेण यिरूशालमं गत्वा पार्व्वणं सम्पाद्य पुन- ४३
रपि व्याघुट्य यातः किन्तु यीशुर्बालको यिरूशालमि तिष्ठति ।
यूषफ् तन्माता च तद् अविदित्वा स सङ्गिभिः सह विद्यत एतच्च ४४
बुद्ध्वा दिनैकगम्यमार्गं जग्मतुः । किन्तु शेषे ज्ञातिबन्धूनां समीपे
मृगयित्वा तदुद्देशमप्राप्य तौ पुनरपि यिरूशालमम् परावृत्या- ४५
गत्य तं मृगयाञ्चक्रतुः । अथ दिनत्रयात् परं पण्डितानां मध्ये ४६
तेषां कथाः शृण्वन् तत्त्वं पृच्छंश्च मन्दिरे समुपविष्टः स ताभ्यां
दृष्टः । तदा तस्य बुद्ध्या प्रत्युत्तरैश्च सर्व्वे श्रोतारो विस्मय- ४७
मापद्यन्ते । तादृशं दृष्ट्वा तस्य जनको जननी च चमच्चक्रतुः ४८
किञ्च तस्य माता तमवदत्, हे पुत्र, कथमावां प्रतीत्थं समा-
चरस्त्वम्? पश्य तव पिताहञ्च शोकाकुलौ सन्तौ त्वामन्विच्छावः
स्म । ततः सोवदत् कुतो माम् अन्वैच्छतं? पितुर्गृहे मया ४९
स्थातव्यम् एतत् किं युवाभ्यां न ज्ञायते? किन्तु तौ तस्यैत- ५०
द्वाक्यस्य तात्पर्य्यं बोद्धुं नाशक्नुतां । ततः परं स ताभ्यां सह ५१

नासरतं गत्वा तयोर्वशीभूतस्तस्थौ किन्तु सर्व्वा एताः कथा-
५२ स्तस्य माता मनसि स्थापयामास। अथ यीशो र्बुद्धिः शरीरञ्च
तथा तस्मिन् ईश्वरस्य मानवानाञ्चानुग्रहो वर्द्धितुम् आरेभे।

---

## ३ तृतीयोऽध्यायः।

१ योहन्द्वारा प्रचारो मज्जनञ्च १५ ख्रीष्टार्थे तस्य साक्ष्यदानं १९ योहनः कारा-बन्धनं २१ ख्रीष्टस्य मज्जनं २३ ख्रीष्टस्य वंशश्रेणी च।

१　अनन्तरं तिबिरियकैसरस्य राजत्वस्य पञ्चदशे वत्सरे सति यदा पन्तीयपीलातो यिहूदादेशाधिपति र्हेरोद् तु गालील्-प्रदेशस्य राजा फिलिपनामा तस्य भ्राता तु यितूरियायास्त्रा-खोनीतियाप्रदेशस्य च राजासीत् लुषानीयनामा अबिलीनी-
२ देशस्य राजासीत् हानन् कियफाश्चैमौ प्रधानयाजकावास्तां तदानीं सिखरियस्य पुत्राय योहने मध्येप्रान्तरम् ईश्वरस्य
३ वाक्ये प्रकाशिते सति स यर्द्दन उभयतटप्रदेशान् समेत्य पाप-मोचनार्थं मनःपरावर्त्तनस्य चिह्नरूपं यन्मज्जनं तदीयाः कथाः
४ सर्व्वत्र प्रचारयितुमारेभे। यिशयियभविष्यद्वक्तृग्रन्थे यादृशी लिपिरास्ते यथा,

　　परमेशस्य पन्थानं परिष्कुरुत सर्व्वतः।
　　तस्य राजपथञ्चैव समानं कुरुताधुना।
५　　कारिष्यन्ते समुच्छ्रायाः सकला निम्नभूमयः।
　　कारिष्यन्ते नताः सर्व्वे पर्व्वताश्चोपपर्व्वताः।
　　कारिष्यन्ते च या वक्रास्ताः सर्व्वाः सरला भुवः।
　　कारिष्यन्ते समानास्ता या उच्चनीचभूमयः।
६　　ईश्वरेण कृतं त्राणं द्रक्ष्यन्ति सर्व्वमानवाः।
　　इत्येतत् प्रान्तरे वाक्यं वदतः कस्यचिद् रवः॥

ये ये लोका मज्जनार्थं वहिराययुस्तान् सोवदत् रे रे ७ सर्पवंशा आगामिनः कोपात् पलायितुं युष्मान् कश्चेतयामास? तस्माद् इब्राहीम् अस्माकं पिता कथामीदृशीं मनोभि र्न ८ कथयित्वा यूयं मनःपरिवर्त्तनयोग्यं फलं फलत; युष्मानहं यथार्थं वदामि पाषाणेभ्य एतेभ्य ईश्वर इब्राहीमः सन्तानोत्पादने समर्थः। अपरञ्च तरुमूलेऽधुनापि परशुः संलग्नोस्ति ९ यस्तरुरुत्तमं फलं न फलति स छिद्यतेऽग्नौ निचिप्यते च। तदानीं १० लोकास्तं पप्रच्छुस्तर्हि किं कर्त्तव्यमस्माभिः? ततः सोवादीत् ११ यस्य द्वे वसने विद्येते स वस्त्रहीनायैकं वितरतु किञ्च यस्य खाद्यद्रव्यं विद्यते सोपि तथैव करोतु। ततः परं करसञ्चायिनो १२ मज्जनार्थम् आगत्य पप्रच्छुः हे गुरो किं कर्त्तव्यमस्माभिः? ततः सोकथयत् निरूपितादधिकं न गृह्णीत। अनन्तरं सेना- १३ गण एत्य पप्रच्छ किमस्माभि र्वा कर्त्तव्यम्? ततः सोभिदधे १४ कस्य कामपि हानिं मा कार्ष्ट तथा मृषापवादं मा कुरुत निजवेतनेन च सन्तुष्य तिष्ठत।

अपरञ्च लोका अपेक्षया स्थित्वा सर्व्वेपीति मनोभि र्वितर्क- १५ याञ्चक्रुः, योहनयम् अभिषिक्तस्त्राता न वेति? तदा योहन् १६ सर्व्वान् व्याजहार, जलेऽहं युष्मान् मज्जयामि सत्यं किन्तु यस्य पादुकाबन्धनं मोचयितुमपि न योग्योस्मि तादृश एको मत्तो गुरुतरः पुमान् एति, स युष्मान् वह्निरूपे पवित्र आत्मनि मज्जयिष्यति। अपरञ्च तस्य हस्ते शूर्प आस्ते स स्वशस्यानि शुद्ध- १७ रूपं प्रस्फोट्य गोधूमान् सर्व्वान् भाण्डागारे संग्रहीष्यति किन्तु वूषाणि सर्व्वाण्यनिर्व्वाणवह्निना दाहयिष्यति। योहन् उप- १८ देशेनेत्थं नानाकथा लोकानां समक्षं प्रचारयामास।

१९　अपरञ्च हेरोद् राजा फिलिप्नाम्नः सहोदरस्य भार्य्यां हेरोदियामधि तथान्यानि यानि यानि कुकर्म्माणि कृतवान्
२० तदधि च योहना तिरस्कृतो भूत्वा कारागारे तस्य बन्धनाद् अपरमपि कुकर्म्म चकार।

२१　इतः पूर्व्वं यस्मिन् समये सर्व्वे योहना मज्जितास्तदानीं यीशु-
२२ रप्यागत्य मज्जितः। तदनन्तरं तेन प्रार्थिते मेघद्वारं मुक्तं तस्माच्च पवित्र आत्मा मूर्त्तिमान् भूत्वा कपोतवत् तदुपर्य्यव-रुरोह; तदा त्वं मम प्रियः पुत्रस्त्वयि मम परमः सन्तोष
२३ इत्याकाशवाणी बभूव। तदानीं यीशुः प्रायेण त्रिंशद्वर्षवयस्क
२४ आसीत्। लौकिकज्ञाने तु स यूषफः पुत्रः, यूषफ् एलेः पुत्रः, एलिर्मत्ततः पुत्रः, मत्तत् लेवेः पुत्रः, लेवि र्मल्केः पुत्रः, मल्कि-
२५ र्यान्नस्य पुत्रः; यान्नो यूषफः पुत्रः। यूषफ् मत्तथियस्य पुत्रः, मत्तथिय आमोसः पुत्रः, आमोस् नहूमः पुत्रः, नहूम् इष्लेः
२६ पुत्र, इष्लिर्नगेः पुत्रः।नगिर्माटः पुत्रः, माट् मत्तथियस्य पुत्रः, मत्तथियः शिमियेः पुत्रः,शिमियिर्यूषफः पुत्रः,यूषफ् यिहूदाः
२७ पुत्रः। यिहूदा योहानाः पुत्रः, योहाना रीषाः पुत्रः, रीषाः सिरुब्बाविलः पुत्रः, सिरुब्बाविल् शल्तीयेलः पुत्रः, शल्ती-
२८ येल् नेरेः पुत्रः। नेरिर्मल्केः पुत्रः, मल्किः अद्यः पुत्रः, अद्दी कोषमः पुत्रः, कोषम् इल्मोददः पुत्रः, इल्मोदद् एरः
२९ पुत्रः। एर् योशेः पुत्रः, योशिः इलीयेषरः पुत्रः, इलीयेषर् योरीमः पुत्रः, योरीम् मत्ततः पुत्रः, मत्तत् लेवेः पुत्रः।
३० लेविः शिमियोनः पुत्रः, शिमियोन् यिहूदाः पुत्रः, यिहूदा यूषफः पुत्रः, यूषफ् योननः पुत्रः, योनन् इलीयाकीमः पुत्रः।
३१ इलियाकीम् मिलेयाः पुत्रः, मिलेया मैननः पुत्रः, मैनन्

मत्तत्तस्य पुत्रः, मत्तत्तो नाथनः पुत्रः, नाथन् दायूदः पुत्रः। दायूद् यिशयः पुत्रः, यिशय ओवेदः पुत्र, ओवेद् ३२ बोयसः पुत्रः, बोयस् सल्मोनः पुत्रः, सल्मोन् नहशोनः पुत्रः। नहशोन् अम्मीनादवः पुत्रः, अम्मीनादव् अरामः पुत्रः, अराम् ३३ हिष्रोण. पुत्रः, हिष्रोण् पेरसः पुत्रः, पेरस् यिहूदाः पुत्रः। यिहूदा याकूवः पुत्रः, याकूव् इस्हाकः पुत्रः, इस्हाक् इब्रा- ३४ हीमः पुत्रः, इब्राहीम् तेरहः पुत्रः, तेरह् नाहोरः पुत्रः। नाहोर् सिरूगः पुत्रः, सिरूग् रियूः पुत्रः, रियूः पेलगः पुत्रः, ३५ पेलग् एवरः पुत्रः, एवर् शेलहः पुत्रः। शेलह् कैननः पुत्रः, ३६ कैनन् अर्फक्षदः पुत्रः, अर्फक्षद् शामः पुत्रः, शाम् नोहः पुत्रः, नोहो लेमकः पुत्रः। लेमक् मिथूशेलहः पुत्रः, मिथू- ३७ शेलह् हनोकः पुत्रः, हनोक् येरदः पुत्रः, येरद् महललेलः पुत्रः, महललेल् कैननः पुत्रः। कैनन् इनोशः पुत्रः, इनोश् ३८ शेतः पुत्रः, शेत् आदमः पुत्र, आदम् ईश्वरस्य पुत्रः।

---

## ४ चतुर्थोऽध्यायः।

१ शैतानद्वारा ख्रीष्टस्य परीक्षा १४ तेन प्रचारारम्भनं १६ अशुचिभूतत्याजनं ३८ पितरस्य श्वश्रूारोग्यकरणं ४० नानाविधरोग्यारोग्यकरणञ्च।

ततः परं यीशुः पवित्रेणात्मना पूर्णः सन् यर्द्दनन्द्याः १ परावृत्यात्मना प्रान्तरं नीतः सन् चत्वारिंशद्दिनानि यावत् २ शैताना परीक्षितोऽभूत्, किञ्च तानि सर्व्वदिनानि भोजनं विना स्थितत्वात् काले पूर्णे स क्षुधितवान्। ततः शैतानागत्य ३ तमवदत् त्वं चेदीश्वरस्य पुत्रस्तर्हि प्रस्तरानेतान् आज्ञया पूपान् कुरु। तदा यीशुरुवाच, लिपिरीदृशी विद्यते मनुजः केवलेन ४ पूपेन न जीवति किन्त्वीश्वरस्य सर्व्वाभिराज्ञाभि र्जीवति।

५ तदा शैतान् तमुच्चं पर्व्वतं नीत्वा निमिषैकमध्ये जगतः सर्व्व-
६ राज्यानि दर्शितवान्। पश्चात् तमवादीत् सर्व्वम् एतद् विभवं प्रतापञ्च तुभ्यं दास्यामि तन् मयि समर्पितमास्ते यं प्रति
७ ममेच्छा जायते तस्मै दातुं शक्नोमि, त्वं चेन्मां भजसे तर्हि
८ सर्व्वमेतत् तवैव भविष्यति। तदा यीशुस्तं प्रत्युक्तवान् दूरी भव शैतान् लिपिरास्ते, निजं प्रभुं परमेश्वरं भजस्व केवलं तमेव
९ सेवस्व च। अथ शैतान् तं यिरूशालमं नीत्वा मन्दिरस्य चूडाया उपरि समुपवेश्य जगाद त्वं चेदीश्वरस्य पुत्रस्तर्हि स्थानादितो
१० लम्फित्वाधः पत यतो लिपिरास्ते,

आज्ञापयिष्यति स्वीयान् दूतान् स परमेश्वरः ।
११ रक्षितुं सर्व्वमार्गे त्वां तेन त्वच्चरणे यथा ।
न लगेत् प्रस्तराघातस्त्वां धरिष्यन्ति ते तथा ।

१२ तदा यीशुना प्रत्युक्तम् इदमप्युक्तमस्ति त्वं स्वप्रभुं परेशं मा परी-
१३ क्षस्व। पश्चात् शैतान् सर्व्वपरीक्षां समाप्य क्षणात्तं त्यक्त्वा ययौ।
१४ तदा यीशुरात्मप्रभावात् पुनर्गालील्प्रदेशं गतस्तदा तत्सु-
१५ ख्यातिश्चतुर्दिशं व्यानशे। स तेषां भजनगृहेषु उपदिश्य सर्व्वैः प्रशंसितो बभूव।

१६ अथ स स्वपालनस्थानं नासरत्पुरमेत्य विश्रामवारे स्वाचा-
१७ राद् भजनगेहं प्रविश्य पठितुमुत्तस्थौ। ततो यिशयियभविष्यद्वादिनः पुस्तके तस्य करदत्ते सति स तत् पुस्तकं विस्तार्य्य यत्र वक्ष्यमाणानि वचनानि सन्ति तत् स्थानं प्राप्य पपाठ।

१८ आत्मा तु परमेशस्य मदीयोपरि विद्यते ।
दरिद्रेषु सुसंवादं वक्तुं मां सोभिषिक्तवान्।
भग्नान्तःकरणाल्लोकान् सुस्वस्थान् कर्त्तुमेव च ।

वन्दीकृतेषु लोकेषु मुक्तिं घोषयितुं वचः ।
नेत्राणि दातुमन्धेभ्यस्त्रातुं बद्धजनानपि ।
परेशानुग्रहे कालं प्रचारयितुमेव च । १९
सर्व्वैतत्करणार्थाय मामेव प्रहिणोति सः ॥

ततः पुस्तकं बद्ध्वा परिचारकस्य हस्ते समर्प्य चासने समुपविष्टः, २० ततो भजनगृहे यावन्तो लोका आसन् ते सर्व्वेऽनन्यदृष्ट्या तं विलुलोकिरे। अनन्तरम् अद्यैतानि सर्व्वाणि लिखितवचनानि २१ युष्माकं मध्ये सिद्धानि स इमां कथां तेभ्यः कथयितुमारेभे । ततः सर्व्वे तस्मिन् अन्वरज्यन्त, किञ्च तस्य मुखान्निर्गताभिर- २२ नुग्रहस्य कथाभिश्चमत्कृत्य कथयामासुः किमयं यूषफः पुत्रो न? तदा सोऽवादीद् हे चिकित्सक स्वमेव स्वस्थं कुरु कफर्ना- २३ हूमि यद्यत् कृतवान् तदश्रौष्म ताः सर्वाः क्रिया अत्र स्वदेशे कुरु कथामेतां यूयमेवावश्यं मां वदिष्यथ । पुनः सोवादीद् २४ युष्मानहं यथार्थं वदामि, कोपि भविष्यद्वादी स्वदेशे सत्कारं न प्राप्नोति । अपरञ्च यथार्थं वच्मि, एलियस्य जीवनकाले २५ यदा सार्द्धत्रितयवर्षाणि यावत् जलदप्रतिबन्धात् सर्व्वस्मिन् देशे महादुर्भिक्षम् अजनिष्ट तदानीम् इस्रायेलो देशस्य मध्ये बह्व्यो विधवा आसन्, किन्तु सीदोन्प्रदेशीयसारिफत्पुरनिवा-२६ सिनीम् एकां विधवां विना कस्याश्चिदपि समीपे एलियः प्रेरितो नाभूत् । अपरञ्च इलीशायभविष्यद्वादिविद्यमानता- २७ काले इस्रायेल्देशे बहवः कुष्ठिन आसन् किन्तु सुरीयदेशीयं नामान्कुष्ठिनं विना कोप्यन्यः परिष्कृतो नाभूत् । इमां कथां २८ श्रुत्वा भजनगेहस्थिता लोकाः सक्रोधम् उत्थाय नगरात्तं २९ वहिष्कृत्य यस्य शिखरिण उपरि तेषां नगरं स्थापितमास्ते

२० तस्मान्निचेतुं तस्य शिखरं तं निन्युः किन्तु स तेषां मध्यादपसृत्य स्थानान्तरं जगाम।

२१ ततः परं यीशुर्गालीलप्रदेशीयकफर्नाहूम्नगर उपस्थाय २२ विश्रामवारे लोकानुपदेष्टुम् आरब्धवान्। तदुपदेशात् सर्व्वे २३ चमच्चक्रुर्यतस्तस्य कथा गुरुतरा आसन्। तदानीं तद्भजन-२४ गेहस्थितोऽमेध्यभूतग्रस्त एको जन उच्चैः कथयामास, हे नासरतीययीशोऽस्मान् त्यज, त्वया सहास्माकं कः सम्बन्धः? किमस्मान् विनाशयितुमायासि? त्वमीश्वरस्य पवित्रो जन एतदहं २५ जानामि। तदा यीशुस्तं तर्जयित्वावदत् मौनी भव इतो वहिर्भव; ततः सोऽमेध्यभूतस्तं मध्यस्थाने पातयित्वा किञ्चिदप्य-२६ हिंसित्वा तस्माद् वहिर्गतवान्। ततः सर्व्वे लोकाश्चमत्कृत्य परस्परं वक्तुमारेभिरे कोऽयं चमत्कारः। एष प्रभावेण पराक्रमेण चामेध्यभूतान् आज्ञापयति तेनैव ते वहिर्गच्छन्ति। २७ अनन्तरं चतुर्दिक्स्थदेशान् तस्य सुख्यातिर्व्याप्नोत्।

२८ तदनन्तरं स भजनगेहाद् वहिरागत्य शिमोनो निवेशनं प्रविवेश तदा तस्य श्वश्रूर्ज्वरेणात्यन्तं पीडितासीत् शिष्यास्तदर्थं २९ तस्मिन् विनयं चक्रुः। ततः स तस्याः समीपे स्थित्वा ज्वरं तर्जयामास तेनैव तां ज्वरोऽत्याक्षीत् ततः सा तत्क्षणम् उत्थाय तान् सिषेवे।

३० अथ सूर्य्यास्तकाले सति यस्य ये जना नानारोगैः पीडिता आसन् लोकास्तान् यीशोः समीपम् आनिन्युः; तदा स एकै-३१ कस्य गात्रे करमर्पयित्वा तानरोगान् चकार। ततो भूता बहुभ्यो निर्गत्य चीत्शब्दं कृत्वा च बभाषिरे त्वमीश्वरस्य पुत्रोऽभिषिक्तत्राता; किन्तु सोऽभिषिक्तत्रातेति ते विविदुरेतस्मात्

कारणात् तान् तर्जयित्वा तद्वक्तुं निषिषेध। अपरञ्च प्रभाते ४२ सति स विजनस्थानं प्रतस्थे पश्चात् जनास्तमन्विच्छन्तस्तन्निकटं गत्वा स्थानान्तरगमनार्थं तमन्वरुन्धन्। किन्तु स तान् जगाद, ४३ ईश्वरीयराज्यस्य सुसंवादं प्रचारयितुम् अन्यानि पुराण्यपि मया यातव्यानि यतस्तदर्थमेव प्रेरितोऽहं। अथ गालीलो ४४ भजनगेहेषु स उपदिदेश।

---

## ५ पञ्चमाऽध्यायः।

१ अनकमत्स्यधरणं १२ कुष्ठिनः परिष्करणं १७ पक्षाघातिनः स्वास्थ्यकरणं पापमर्षणं २७ मथिनाम्न आह्वानम् तद्गेहे भोजनं ३३ अनुपवासकारणनिर्णयश्च।

अनन्तरं यीशुरेकदा गिनेषरत्ह्रदस्य तीर उत्तिष्ठति, १ तदा लोका ईश्वरीयकथां श्रोतुं तदुपरि प्रपतिताः। तदानीं २ स ह्रदस्य तीरसमीपे नौद्वयं ददर्श किञ्च मत्स्योपजीविनो नावं विहाय जालं प्रक्षालयन्ति। ततस्तयोर्द्वयो र्मध्ये शिमोनो नाव- ३ मारुह्य तीरात् किञ्चिद्दूरं यातुं तस्मिन् विनयं कृत्वा नौका- यामुपविश्य लोकान् प्रोपदिष्टवान्। पश्चात् तं प्रस्तावं समाप्य ४ स शिमोनं व्याजहार, गभीरं जलं गत्वा मत्स्यान् धर्त्तुं जालं निक्षिप। ततः शिमोन बभाषे, हे गुरो यद्यपि वयं कृत्स्नां ५ यामिनीं परिश्रम्य मत्स्यैकमपि न प्राप्तास्तथापि भवतो निदे- शतो जालं क्षिपामः। अथ जाले क्षिप्ते बहुमत्स्यपतनाद् ६ आनायः प्रच्छिन्नः। तस्माद् उपकर्त्तुम् अन्यनौस्थान् सङ्गिन ७ आयातुम् इङ्गितेन समाह्वयन् ततस्त आगत्य मत्स्यै र्नौद्वयं प्रपूरयामासु र्यै र्नौद्वयं प्रमग्नम्। तदा शिमोन्पितरस्तद् ८ विलोक्य यीशोश्चरणयोः पतित्वा, हे प्रभोऽहं पापी नरो मम निकटाद् भवान् यातु, इति कथितवान्। यतो जाले ९

पतितानां मत्स्यानां यूथात् शिमोन् तत्सङ्गिनश्च चमत्कृतवन्तः;
१० शिमोनः सहकारिणौ सिवदेः पुत्रौ याकूब् योहन् चेमौ
तादृशौ बभूवतुः। तदा यीशुः शिमोनं जगाद मा भैषीरद्या-
११ रभ्य त्वं मनुष्यधरो भविष्यसि। अनन्तरं सर्व्वासु नौसु तीरम्
आनीतासु ते सर्व्वान् परित्यज्य तस्य पश्चाद्गामिनो बभूवुः।
१२　ततः परं यीशौ कस्मिंश्चित् पुरे तिष्ठति जन एकः सर्व्वाङ्ग-
कुष्ठस्तं विलोक्य तस्य समीपे न्युब्जः पतित्वा सविनयं वक्तुमारेभे,
हे प्रभो यदि भवानिच्छति तर्हि मां परिष्कर्त्तुं शक्नोति।
१३ तदानीं स पाणिं प्रसार्य्य तदङ्गं स्पृशन् बभाषे त्वं परिष्क्रिय-
१४ स्वेति ममेच्छास्ति ततस्तत्क्षणं स कुष्ठात् मुक्तः। पश्चात् स तमा-
ज्ञापयामास कथामिमां कस्मैचिद् अकथयित्वा याजकस्य
समीपञ्च गत्वा स्वं दर्शय, लोकेभ्यो निजपरिष्कृतत्वस्य प्रमाण-
१५ दानाय मूसाज्ञानुसारेण द्रव्यमुत्सृजस्व च। तथापि यीशोः
सुख्यातिर्बहु व्याप्तुमारेभे किञ्च तस्य कथां श्रोतुं स्वीयरोगेभ्यो
१६ मोक्तुञ्च लोका आजग्मुः। अथ स प्रान्तरं गत्वा प्रार्थयाञ्चक्रे।
१७　अपरञ्च एकदा यीशुरुपदिशति, एतर्हि गालील्यिहूदा-
प्रदेशयोः सर्व्वनगरेभ्यो यिरूशालमश्च कियन्तः फिरूशिलोका
व्यवस्थापकाश्च समागत्य तदन्तिके समुपविविशुः, तस्मिन् काले
१८ लोकानामारोग्यकारणात् प्रभोः प्रभावः प्रचकाशे। पश्चात्
कियन्तो लोका एकं पक्षाघातिनं खट्वायां निधाय यीशोः
१९ समीपमानेतुं सम्मुखे स्थापयितुञ्च व्याप्रियन्त। किन्तु बहुजन-
निवहसम्बाधात् न शक्नुवन्तो गृहोपरि गत्वा गृहपृष्ठं खनित्वा तं
पक्षाघातिनं सखट्वं गृहमध्ये यीशोः सम्मुखे ऽवरोहयामासुः।
२० तदा यीशुस्तेषाम् ईदृशं विश्वासं विलोक्य तं पक्षाघातिनं व्याज-

द्वार, हे मानव तव पापमक्षम्यत। तस्माद् अध्यापकाः फिरू- २१
शिनश्च चित्तैरित्थं प्रचिन्तितवन्तः, एष जन ईश्वरं निन्दति
कोयं? केवलमीश्वरं विना पापं क्षन्तुं कः शक्नोति? तदा यीशुस्ते- २२
षाम् इत्थं चिन्तनं विदित्वा तेभ्योकथयद् यूयं मनोभिः कुतो
वितर्कयथ? तव पापक्षमा जाता यद्वा त्वमुत्थाय व्रज एतयो २३
र्मध्ये का कथा सुकथ्या? किन्तु पृथिव्यां पापं क्षन्तुं मानव- २४
सुतस्य सामर्थ्यमस्तीति यथा यूयं ज्ञातुं शक्नुथ तदर्थं (स तं
पक्षाघातिनं जगाद) उत्तिष्ठ स्वशय्यां गृहीत्वा गृहं याहीति
त्वामादिशामि। तस्मात् स तत्क्षणम् उत्थाय सर्व्वेषां साक्षात् २५
निजशयनीयं गृहीत्वा ईश्वरं धन्यं वदन् निजनिवेशनं ययौ।
तस्मात् सर्व्वे विस्मय प्राप्ता मनःसु भीताश्च वयमद्यासम्भव- २६
कार्य्याण्यदर्शाम इत्युक्त्वा परमेश्वरं धन्यं प्रोदिताः।

ततः परं वहिर्गच्छन् करसञ्चयस्थाने लेविनामानं कर- २७
सञ्चायकं दृष्ट्वा यीशुस्तमभिदधे मम पश्चादेहि। तस्मात् स २८
तत्क्षणात् सर्व्वं परित्यज्य तस्य पश्चादियाय। अनन्तरं लेवि २९
र्निजगृहे तदर्थं महाभोज्यं चकार, तदा तैः सहानेके कर-
सञ्चायिनस्तदन्यलोकाश्च भोक्तुमुपविविशुः। तस्मात् कारणात् ३०
चण्डालानां पापिलोकानाञ्च सङ्गे यूयं कुतो भुंग्ध्वे पिवथ
चेति कथां कथयित्वा फिरूशिनोऽध्यापकाश्च तस्य शिष्यैः सह
वाग्युद्धं कर्त्तुमारेभिरे। तस्माद् यीशुस्तान् प्रत्यवोचद् अरो- ३१
गलोकानां चिकित्सकेन प्रयोजनं नास्ति किन्तु सरोगाणामेव।
अहं धार्म्मिकान् आह्वातुं नागतोस्मि किन्तु मनः परावर्त्तयितुं ३२
पापिन एव।

ततस्ते प्रोचुः, योहनः फिरूशिनाञ्च शिष्या वारंवारम् उप- ३३

वसन्ति प्रार्थयन्ते च किन्तु तव शिष्याः कुतो भुञ्जते पिबन्ति
३४ च? तदा स तानाचख्यौ वरे सङ्गे तिष्ठति वरस्य सखिगणं किमु-
३५ पवासयितुं शक्नुथ? किन्तु यदा तेषां निकटाद् वरो नेष्यते
३६ तदा ते समुपवत्स्यन्ति। सोपरमपि दृष्टान्तं कथयाम्बभूव
पुरातनवस्त्रे कोपि नूतनवस्त्रं न सीव्यति यतस्तेन सेवनेन जीर्ण-
३७ वस्त्रं छिद्यते, नूतनपुरातनवस्त्रयो र्मेलञ्च न भवति। पुरातन्यां
कुत्वां कोपि नूतनं द्राक्षारसं न निदधाति, यतो नवीनद्राक्षा-
रसस्य तेजसा पुरातनी कुत्व र्विदीर्य्यते ततो द्राक्षारसः पतति
३८ कुत्वश्च नश्यति। ततो हेतो र्नूतन्यां कुत्वां नवीनद्राक्षारसः
३९ निधातव्यस्तेनोभयस्य रक्षा भवति। अपरञ्च पुरातनं द्राक्षा-
रसं पीत्वा कोपि नूतनं न वाञ्छति, यतः स वक्ति नूतनात्
पुरातनम् प्रशस्तम्।

---

## ६ षष्ठोऽध्यायः।

१ विश्रामवारार्थे फिरूशिनां निरुत्तरकरणं ६ शुष्ककरस्यारोग्यकरणं १२ शिष्याणां मनोनीतत्वकरणं १७ रोगिणामारोग्यकरणं २० शिष्याणामुपदेशः २७ शत्रुषु प्रेमकरणं ३७ उपदेशः ३९ परस्य दोषित्वकरणनिषेधः ४६ गृहनिर्म्माणदृष्टान्त-कथा च।

१　अपरञ्च पर्व्वणो द्वितीयदिनात् परं प्रथमविश्रामवारे शस्य-
क्षेत्रेण यीशोर्गमनकाले तस्य शिष्याः कणिशं छित्त्वा करेषु मर्द्द-
२ यित्वा खादितुमारेभिरे। तस्मात् कियन्तः फिरूशिनस्तान-
वदन् विश्रामवारे यत् कर्म्म न कर्त्तव्यं तत् कुतः कुरुथ?
३ यीशुः प्रत्युवाच दायूद् तस्य सङ्गिनश्च क्षुधार्त्ताः किं चक्रुः स
४ कथम् ईश्वरस्य मन्दिरं प्रविश्य ये दर्शनीयाः पूपा याजकान्
विनान्यस्य कस्याप्यभोजनीयास्तानानीय स्वयं बुभुजे सङ्गिभ्योपि

ददौ तत् किं युष्माभिः कदापि नापाठि? पश्चात् स तानवदत् ५
मनुजसुतो विश्रामवारस्यापि प्रभु र्भवति।

अनन्तरम् अन्यविश्रामवारे स भजनगेहं प्रविश्य समुपदि- ६
शति। तदा तत्स्थाने शुष्कदक्षिणकर एकः पुमान् उपतस्थि-
वान्। तस्माद् अध्यापकाः फिरूशिनश्च तस्मिन् दोषमारोप- ७
यितुं स विश्रामवारे तस्य स्वास्थ्यं करोति नवेति प्रतीक्षितु-
मारेभिरे। तदा यीशुस्तेषां चिन्तां विदित्वा तं शुष्ककरं पुमां- ८
सं प्रोवाच, त्वमुत्थाय मध्यस्थाने तिष्ठ। तस्मात् तस्मिन् उत्थि- ९
तवति यीशुस्तान् व्याजहार, युष्मान् इमां कथां पृच्छामि,
विश्रामवारे हितम् अहितं वा, प्राणरक्षणं प्राणनाशनं वा,
एतेषां किं कर्म्म करणीयम्? पश्चात् चतुर्दिक्षु सर्व्वान् विलोक्य १०
तं मानवं बभाषे, निजकरं प्रसारय; ततस्तेन तथा कृत इतर-
करवत् तस्य हस्तः स्वस्थोभवत्। तस्मात् ते प्रचण्डकोपान्विता ११
यीशुं किं करिष्यन्तीति परस्परं प्रमन्त्रिताः।

ततः परं स पर्व्वतमारुह्येश्वरमुद्दिश्य प्रार्थयमानः कृत्स्नां १२
रात्रिं यापितवान्। अथ दिने सति स सर्व्वान् शिष्यान् १३
आहूतवान् तेषां मध्ये पितरनाम्ना ख्यातः शिमोन् तस्य भ्राता १४
आन्द्रियश्च याकूब् योहन् च फिलिप् बर्थलमयश्च मथिः १५
थोमा आल्फीयस्य पुत्रो याकूब् ज्वलन्तनाम्ना ख्यातः शिमोन्
च याकूबो भ्राता यिहूदाश्च तं यः परकरेषु समर्पयिष्यति १६
स ईष्करीयोतीययिहूदाश्चैतान् द्वादश जनान् मनोनीतान्
कृत्वा स जग्राह तथा प्रेरित इति तेषां नाम चकार।

ततः परं स तैः सह पर्व्वतादवरुह्य उपत्यकायां तस्थौ १७
ततस्तस्य शिष्यसङ्घो यिहूदादेशाद् यिरूशालमश्च सोरः सीदो-

नश्च जलधे रोधसो जननिवहाश्च एत्य तस्य कथाश्रवणार्थं
१८ रोगमुक्त्यर्थञ्च तस्य समीपे तस्थुः। अमेध्यभूतग्रहाश्च तन्नि-
१९ कटमागत्य स्वास्थ्यं प्रापुः। सर्व्वेषां स्वास्थ्यकरणप्रभावस्य प्रका-
शितत्वात् सर्व्वे लोका एत्य तं स्प्रष्टुं येतिरे।

२० पश्चात् स शिष्यान् प्रति दृष्टिं कृत्वा जगाद, हे दरिद्रा
२१ यूयं धन्या यत ईश्वरीये राज्ये वोऽधिकारोस्ति। हे अधुना
क्षुधितलोका यूयं धन्या यतो यूयं तर्प्स्यथ; हे इह रोदिनो
२२ जना यूयं धन्या यतो यूयं हसिष्यथ। यदा लोका मनुष्यसूनो
र्नामहेतो र्युष्मान् ऋतीयिष्यन्ते पृथक् कृत्वा निन्दिष्यन्ति,
अधमानिव युष्मान् स्वसमीपाद् दूरीकरिष्यन्ति च तदा यूयं
२३ धन्याः। स्वर्गे युष्माकं यथेष्टं फलं भविष्यति, एतदर्थं तस्मिन्
दिने प्रोल्लसत आनन्देन नृत्यत च, तेषां पूर्व्वपुरुषाश्च भवि-
२४ ष्यद्वादिनः प्रति तथैव व्यवाहरन्। किन्तु हा हा धनवन्तो यूयं
२५ सुखं प्राप्नुत। हन्त परितृप्ता यूयं क्षुधिता भविष्यथ; इह
२६ हसन्तो यूयं वत युष्माभिः शोचितव्यं रोदितव्यञ्च। सर्व्वैर्लोकै
र्युष्माकं सुख्यातौ कृतायां युष्माकं दुर्गति र्भविष्यति युष्माकं
पूर्व्वपुरुषा मृषाभविष्यद्वादिनः प्रति तद्वत् कृतवन्तः।

२७ हे श्रोतारो युष्मभ्यमहं कथयामि, यूयं शत्रुषु प्रीयध्वं ये
२८ च युष्मान् द्विषन्ति तेषामपि हितं कुरुत। ये च युष्मान् शपन्ति
तेभ्य आशिषं दत्त ये च युष्मान् अवमन्यन्ते तेषां मङ्गलं प्रार्थ-
२९ यध्वं। यदि कश्चित् तव कपोले चपेटाघातं करोति तर्हि तं
प्रति कपोलम् अन्यं परावर्त्त्य सम्मुखीकुरु पुनश्च यदि कश्चित्
तव गात्रीयवस्त्रं हरति तर्हि तं परिधेयवस्त्रम् अपि ग्रहीतुं मा
३० वारय। यस्त्वां याचते तस्मै देहि, यश्च तव सम्पत्तिं हरति

तं मा याचस्व। परेभ्यः स्वान् प्रति यथाचरणम् अपेक्षध्वे ३१ परान् प्रति यूयमपि तथाचरत। ये जना युष्मासु प्रीयन्ते ३२ केवलं तेषु प्रीयमाणेषु युष्माकं किं फलं? पापिलोका अपि स्वेषु प्रीयमाणेषु प्रीयन्ते। यदि हितकारिण एव हितं कुरुथ ३३ तर्हि युष्माकं किं फलं? पापिलोका अपि तथा कुर्व्वन्ति। येभ्य ३४ ऋणपरिशोधस्य प्राप्तिप्रत्याशास्ते केवलं तेषु ऋणे समर्पिते युष्माकं किं फलं? पुनः प्राप्त्याशया पापिलोका अपि पापिजनेषु ऋणम् अर्पयन्ति। अतो यूयं रिपुष्वपि प्रीयध्वं, पर- ३५ हितं कुरुत च; पुनः प्राप्त्याशां त्यक्ता ऋणमर्पयत, तथा कृते युष्माकं महाफलं भविष्यति, यूयञ्च सर्व्वप्रधानस्य सन्ताना इति ख्यातिं प्राप्स्यथ, यतो युष्माकं पिता कृतघ्नानां दुर्वृत्तानाञ्च हितमाचरति। अत एव स यथा दयालु र्यूयमपि तादृशा ३६ दयालवो भवत।

अपरञ्च परान् दोषिणो मा कुरुत तस्माद् यूयं दोषी- ३७ कृता न भविष्यथ; अदण्ड्यान् मा दण्डयत तस्माद् यूयमपि दण्डं न प्राप्स्यथ; परेषां दोषान् क्षमध्वं तस्माद् युष्माकमपि दोषाः क्षमिष्यन्ते। दानानि दत्त तस्माद् यूयं दानानि प्राप्स्यथ, ३८ वरञ्च लोकाः परिमाणपात्रं प्रदलय्य सञ्चाल्य प्रोञ्चाल्य परिपूर्य्य युष्माकं क्रोडेषु समर्पयिष्यन्ति; यूयं येन परिमाणेन परिमाथ तेनैव परिमाणेन युष्मत्कृते परिमास्यते।

अथ स तेभ्यो दृष्टान्तकथामकथयत्, अन्धो जनः किमन्धं ३९ पन्थानं दर्शयितुं शक्नोति? तस्माद् उभावपि किं गर्त्ते न पतिष्यतः? गुरोः शिष्यो न श्रेष्ठः किन्तु शिष्ये सिद्धे सति स ४० गुरुतुल्यो भवितुं शक्नोति। अपरञ्च त्वं स्वचक्षुषि नासाम् अदृष्ट्वा ४१

४२ तव भ्रातुश्चक्षुषि यत्तृणमस्ति तदेव कुतः पश्यसि? स्वचक्षुषि या नासा विद्यते ताम् अज्ञात्वा, भ्रातस्तव नेत्रात् तृणं वहिः करोमीति वाक्यं भ्रातरं कथं वक्तुं शक्नोषि? हे कपटिन् पूर्व्वं स्वनयनात् नासां वहिः कुरु ततो भ्रातुश्चक्षुषस्तृणं वहिः
४३ कर्त्तुं सुदृष्टिं प्राप्स्यसि। अन्यच्च उत्तमस्तरुः कदापि फल-मनुत्तमं न फलति, अनुत्तमतरुश्च फलमुत्तमं न फलति
४४ कारणादतः फलैस्तरवो ज्ञायन्ते। कण्टकिपादपात् कोपि उडुम्बरफलानि न पातयति तथा शृगालकोलिवृचादपि
४५ कोपि द्राचाफलं न पातयति। तद्वत् साधुलोकोऽन्तःकरण-रूपात् सुभाण्डागाराद् उत्तमानि द्रव्याणि वहिः करोति, दुष्टो लोकश्चान्तःकरणरूपात् कुभाण्डागारात् कुत्सितानि द्रव्याणि निर्गमयति यतोऽन्तःकरणानां पूर्णभावानुरूपाणि वचांसि मुखान्निर्गच्छन्ति।

४६ अपरञ्च ममाज्ञानुरूपं नाचरित्वा कुतो मां प्रभो प्रभो
४७ इति वदथ? यः कश्चिन् मम निकटम् आगत्य मम कथा निशम्य तदनुरूपं कर्म्म करोति स कस्य सदृशो भवति तदहं
४८ युष्मान् ज्ञापयामि। यो जनो गभीरं खनित्वा पाषाणस्थले भित्तिं निर्म्माय स्वगृहं रचयति तेन सह तस्योपमा भवति; यत आप्लाविजलमेत्य तस्य मूले वेगेन वहदपि तद्गेहं लाड-यितुं न शक्नोति यतस्तस्य भित्तिः पाषाणोपरि तिष्ठति।
४९ किन्तु यः कश्चिन् मम कथाः श्रुत्वा तदनुरूपं नाचरति स भित्तिं विना मृदुपरि गृहनिर्म्माता समानो भवति; यत आप्लाविजलमागत्य वेगेन यदा वहति तदा तद्गृहं पतति तस्य महत् पतनं जायते।

## ७ सप्तमोऽध्यायः।

१ शतसेनापते र्दासस्यारोग्यकरणं ११ विधवाया मृतपुत्त्रस्य जीवनं १८ योहने ख्रीष्टवार्त्ता २४ योहनि ख्रीष्टसाक्ष्यं ३६ दुष्टनार्य्याः पापमार्जनञ्च।

ततः परं स लोकानां कर्णगोचरे तान् सर्व्वान् उपदेशान् १ समाप्य यदा कफर्नाहूमपुरं प्रविशति तदा शतसेनापतेः २ प्रियदास एको मृतकल्पः पीडित आसीत्। अतः सेनापति ३ र्यीशो र्वार्त्तां निशम्य दासस्यारोग्यकरणाय तस्यागमनार्थं विनयकरणाय यिहूदीयान् कियतः प्राचः प्रेषयामास। ते ४ यीशोरन्तिकं गत्वा विनयातिशयं वक्तुमारेभिरे, स सेनापति र्भवतोनुग्रहं प्राप्तुम् अर्हति। यतः सोस्मज्जातीयेषु लोकेषु ५ प्रीयते तथास्मत्कृते भजनगेहं निर्म्मितवान्। तस्माद् यीशुस्तैः ६ सह गत्वा निवेशनस्य समीपं प्राप, तदा स शतसेनापति र्वक्ष्यमाणवाक्यं तं वक्तुं बन्धून् प्राहिणोत्। हे प्रभो स्वयं श्रमो न कर्त्तव्यो यद् भवता मद्गेहमध्ये पादार्पणं क्रियेत तदप्यहं नार्हामि, किञ्चाहं भवत्समीपं यातुमपि नात्मानं योग्यं ७ बुद्धवान्, ततो भवान् वाक्यमात्रं वदतु तेनैव मम दासः स्वस्थो भविष्यति। यस्माद् अहं पराधीनोपि ममाधीना याः सेनाः ८ सन्ति तासाम् एकजनं प्रति याहीति मया प्रोक्ते स याति; तदन्यं प्रति आयाहीति प्रोक्ते स आयाति; तथा निजदासं प्रति एतत् कुर्व्विति प्रोक्ते स तदेव करोति। यीशुरिदं ९ वाक्यं श्रुत्वा विस्मयं ययौ, मुखं परावर्त्त्य पश्चाद्वर्त्तिनो लोकान् बभाषे च, युष्मानहं वदामि इस्रायेलो वंशमध्येपि विश्वासमीदृशं न प्राप्नवं। ततस्ते प्रेषिता गृहं गत्वा तं पीडितं दासं १० स्वस्थं ददृशुः।

परेऽहनि स नायीनाख्यं नगरं जगाम तस्यानेके शिष्या ११

१२ अन्ये च लोकास्तेन सार्द्धं ययुः। तेषु तन्नगरस्य द्वारसन्निधिं प्राप्तेषु कियन्तो लोका एकं मृतमनुजं वहन्तो नगरस्य बहिर्यान्ति, स तन्मातुरेकपुत्त्रस्तन्माता च विधवा; तया सार्द्धं
१३ तन्नगरीया बहवो लोका आसन्। प्रभुस्तां विलोक्य सानु-
१४ कम्पः कथयामास, मा रोदीः। स समीपमित्वा खट्वां पस्पर्श तस्माद् वाहकाः स्थगितास्तस्थुः; तदा स उवाच हे युवमनुष्य
१५ त्वमुत्तिष्ठ, त्वामहम् आज्ञापयामि। तस्मात् स मृतो जनस्तत्क्षणमुत्थाय कथां प्रकथितः; ततो यीशुस्तस्य मातरि तं
१६ समर्पयामास। तस्मात् सर्व्वे लोकाः शशङ्किरे; एको महाभविष्यद्वादी मध्येऽस्माकम् समुदैत्, ईश्वरश्च स्वलोकानन्वगृह्णात्
१७ कथामिमां कथयित्वा ईश्वरं धन्यं जगदुः। ततः परं समस्तं यिहूदादेशं तस्य चतुर्दिक्स्थदेशञ्च तस्यैतत्कीर्त्ति र्व्यानशे।

१८ ततः परं योहनः शिष्येषु तं तद्वृत्तान्तं ज्ञापितवत्सु स
१९ स्वशिष्याणां द्वौ जनावाहूय यीशुं प्रति वक्ष्यमाणं वाक्यं वक्तुं प्रेषयामास, यस्यागमनम् अपेक्ष्य तिष्ठामो वयं किं स
२० एव जनस्त्वं? किं वयमन्यमपेक्ष्य स्थास्यामः? पश्चात्तौ मानवौ गत्वा कथयामासतुः, यस्यागमनम् अपेक्ष्य तिष्ठामो वयं, किं स एव जनस्त्वं? किं वयमन्यमपेक्ष्य स्थास्यामः? कथामिमां
२१ तुभ्यं कथयितुं योहन् मज्जक आवां प्रेषितवान्। तस्मिन् दण्डे यीशू रोगिणो महाव्याधिमतो दुष्टभूतग्रस्तांश्च बहून्
२२ स्वस्थान् कृत्वा, अनेकान्धेभ्यश्चक्षुंषि दत्त्वा प्रत्युवाच, युवां व्रजतम् अन्धा नेत्राणि खञ्जाश्चरणानि च प्राप्नुवन्ति, कुष्ठिनः परिष्क्रियन्ते, बधिराः श्रवणानि मृताश्च जीवनानि प्राप्नुवन्ति, दरिद्राणां समीपेषु सुसंवादः प्रचार्य्यते, यं प्रति विघ्नस्वरू-

पोहं न भवामि स धन्यः, एतानि यानि पश्यथः शृणुथश्च २३ तानि योहनं ज्ञापयतम्।

तयो र्दूतयो र्गतयोः सतो र्योहनि स लोकान् वक्तुमुपचक्रमे, २४ यूयं मध्येप्रान्तरं किं द्रष्टुं निरगमत? किं वायुना कम्पितं नडं? यूयं किं द्रष्टुं निरगमत? किं सूक्ष्मवस्त्रपरिधायिनं २५ कमपि नरं? किन्तु ये सूक्ष्ममृदुवस्त्राणि परिदधति सुत्त-मानि द्रव्याणि भुञ्जते च ते राजधानीषु तिष्ठन्ति। तर्हि यूयं किं द्रष्टुं निरगमत? किमेकं भविष्यद्वादिनं? तदेव सत्यं २६ किन्तु स पुमान् भविष्यद्वादिनोपि श्रेष्ठ इत्यहं युष्मान् वदामि;

पश्य स्वकीयदूतन्तु तवाग्रे प्रेषयाम्यहं। २७
गत्वा त्वदीयमार्गन्तु स हि परिष्करिष्यति।

यदर्थे लिपिरियम् आस्ते स एव योहन्। अतो युष्मानहं २८ वदामि स्त्रिया गर्भजातानां भविष्यद्वादिनां मध्ये योहनो मज्जकात् श्रेष्ठः कोपि नास्ति, तथापि ईश्वरस्य राज्ये यः सर्व्वस्मात् क्षुद्रः स योहनोपि श्रेष्ठः। अपरञ्च सर्व्वे लोकाः २९ करसञ्चायिनश्च तस्य वाक्यानि श्रुत्वा योहना मज्जनेन मज्जिताः परमेश्वरं निर्दोषं मेनिरे। किन्तु फिरूशिनो व्यव- ३० स्थापकाश्च तेन न मज्जिताः स्वान् प्रतीश्वरस्योपदेशं निष्फ-लम् अकुर्व्वन्। अथ प्रभुः कथयामास, इदानीन्तनजनान् ३१ केनोपमामि? ते कस्य सदृशाः? ये बालका विपण्याम् उप- ३२ विश्य परस्परम् आहूय वाक्यमिदं वदन्ति, वयं युष्माकं निकटे वंशीरवादिष्म किन्तु यूयं नानर्त्तिष्ट, वयं युष्माकं निकट अरोदिष्म, किन्तु यूयं न व्यलपिष्ट, बालकैरेतादृशैस्तेषाम् उपमा भवति। यतो योहन् मज्जक आगत्य पूपं नाखादत् ३३

द्राचारसञ्च नापिवत् तस्माद् यूयं वदथ, भूतग्रस्तोयम्।
३४ ततः परं मानवसुत आगत्याखादद्पिवच्च तस्माद् यूयं वदथ,
खादकः सुरापश्चाण्डालपापिनां बन्धुरेको जनो दृश्यताम्।
३५ किन्तु ज्ञानिनो ज्ञानं निर्दोषं विदुः।
३६ पश्चादेकः फिरूशी यीशुं भोजनाय न्यमन्त्रयत् ततः स
३७ तस्य गृहं गत्वा भोक्तुमुपविष्टः। एतर्हि तत्फिरूशिनो गृहे
यीशुः भोक्तुम् उपावेक्षीत् तच्छ्रुत्वा तन्नगरवासिनी कापि
दुष्टा नारी पाण्डरप्रस्तरस्य सम्पुटके सुगन्धितैलम् आनीय
३८ तस्य पश्चात् पादयोः सन्निधौ तस्थौ रुदती च नेत्राम्बुभिस्तस्य
चरणौ प्रक्षाल्य निजकचैरमार्क्षीत्, ततस्तस्य चरणौ चुम्बित्वा
३९ तेन सुगन्धितैलेन ममर्द। तस्मात् स निमन्त्रयिता फिरूशी
मनसा चिन्तयामास, यद्ययं भविष्यद्वादी भवेत् तर्हि एनं
स्पृशति या स्त्री सा का कीदृशी चेति ज्ञातुं शक्नुयात् यतः
४० सा दुष्टा। तदा यीशुस्तं जगाद, हे शिमोन् त्वां प्रति मम
किञ्चिद् वक्तव्यमस्ति; तस्मात् स बभाषे, हे गुरो तद् वदतु।
४१ एकोत्तमर्णस्य द्वावधमर्णावास्तां, तयोरेकः पञ्चशतानि
मुद्रापादान् अपरश्च पञ्चाशत् मुद्रापादान् धारयामास।
४२ तदनन्तरं तयोः शोध्याभावात् स उत्तमर्णस्तयो ऋणे चक्षमे;
४३ तस्मात् तयोर्द्वयोः कस्तस्मिन् प्रेष्यते बहु? तद् ब्रूहि। शिमोन्
प्रत्युवाच, मया बुध्यते यस्याधिकम् ऋणं चक्षमे स इति;
४४ ततो यीशुस्तं व्याजहार, त्वं यथार्थं व्यचारयः। अथ तां
नारीं प्रति व्याघुट्य शिमोनमवोचत्, स्त्रीमिमां पश्यसि? तव
गृहे मय्यागते त्वं पादप्रक्षालनार्थं जलं नादाः किन्तु योषि-
४५ देषा नयनजलै र्मम पादौ प्रक्षाल्य केशैरमार्क्षीत्। त्वं मां

नाचुम्बीः किन्तु योषिदेषा स्वीयागमनादारभ्य मदीयपादौ चुम्बितुं न व्यरंस्त। त्वञ्च मदीयोत्तमाङ्गे किञ्चिदपि तैलं ४६ नामर्द्दीः किन्तु योषिदेषा मम चरणौ सुगन्धितैलेनामर्द्दीत्। अतस्त्वां व्याहरामि, एतस्या बहु पापमक्षम्यत ततो बहु ४७ प्रीयते किन्तु यस्याल्पपापं क्षम्यते सोऽल्पं प्रीयते। ततः परं स ४८ तां बभाषे, त्वदीयं पापमक्षम्यत। तदा तेन सार्द्धं ये भोक्तुम् ४९ उपविविशुस्ते परस्परं वक्तुमारेभिरे, अयं पापं क्षमते क एषः? किन्तु स तां नारीं जगाद, तव विश्वासस्त्वां पर्य्यत्रास्त ५० त्वं क्षेमेण व्रज।

---

# ८ अष्टमोऽध्यायः।

१ नगरेषु ख्रीष्टस्य गमनं ४ वीजवपनस्य दृष्टान्तकथा ९ तस्य तात्पर्य्यं १६ प्रदीपदृष्टान्तः १९ कुटुम्बलक्षणं २२ वायोस्तम्भनं २६ भूतानां त्याजनं ४० ख्रीष्टस्य ग्राह्यत्वं ४१ प्रदररोगिण्या आरोग्यकरणं ४९ अधिपते र्म्मृतकन्यायै जीवनदानञ्च।

अपरञ्च यीशु र्द्वादशभिः शिष्यैः सार्द्धं नानानगरेषु १ नानाग्रामेषु च गच्छन् ईश्वरीयराजत्वस्य सुसंवादं प्रचारयितुं प्रारेभे। तदा यस्याः सप्त भूता निरगच्छन् सा मग्दलीनीति विख्याता मरियम् हेरोद्राजस्य गृहाधिपतेः होषे २ र्भार्य्या योहना शूशाना प्रभृतयो या बह्व्यः स्त्रियः दुष्टभूतेभ्यो ३ रोगेभ्यश्च मुक्ताः सत्यो निजविभूती र्व्ययित्वा तमसेवन्त, ताः सर्व्वास्तेन सार्द्धम् आसन्।

अनन्तरं नानानगरेभ्यो बहवो लोका आगत्य तस्य ४ समीपेऽमिलन्, तदा स तेभ्य एकां दृष्टान्तकथां कथयामास। एकः कृषीवलो वीजानि वप्तुं बहिर्जगाम, ततो वपनकाले ५ कतिपयानि वीजानि मार्गपार्श्वे पेतुः, ततस्तानि पदतलै

६ दलितानि पक्षिभि र्भक्षितानि च। कतिपयानि बीजानि पाषाणस्थले पतितानि यद्यपि तान्यङ्कुरितानि तथापि रसा-
७ भावात् शुशुषुः। कतिपयानि बीजानि कण्टकिवनमध्ये
८ पतितानि ततः कण्टकिवनानि संवृद्ध्य तानि जग्रसुः। तदन्यानि कतिपयबीजानि च भूम्यामुत्तमायां पेतुस्ततस्तान्यङ्कुरयित्वा शतगुणानि फलानि फेलुः। स इमां कथां कथयित्वा प्रोच्चैः प्रोवाच, यस्य श्रोतुं श्रोत्रे स्तः स शृणोतु।

९ 　ततः परं शिष्यास्तं पप्रच्छुरस्य दृष्टान्तस्य किं तात्पर्य्यं?
१० ततः स व्याजहार, ईश्वरीयराज्यस्य गुह्यानि ज्ञातुं युष्मभ्यमधिकारो दीयते किन्त्वन्ये यथा दृष्ट्वापि न पश्यन्ति श्रुत्वापि न बुध्यन्ते च तदर्थं तेषां पुरस्तात् ताः सर्व्वाः कथा दृष्टा-
११ न्तेन कथ्यन्ते। दृष्टान्तस्यास्याभिप्रायः, ईश्वरीयकथा बीजस्व-
१२ रूपा। ये कथामात्रं शृण्वन्ति किन्तु पश्चाद् विश्वस्य यथा परित्राणं न प्राप्नुवन्ति तदाशयेन शैतानेत्य हृदयात् तां
१३ कथाम् अपहरति त एव मार्गपार्श्वस्थभूमिस्वरूपाः। ये कथां श्रुत्वा सानन्दं गृह्णन्ति किन्त्वबद्धमूलत्वात् स्वल्पकालमात्रं प्रतीत्य परीक्षाकाले भ्रश्यन्ति तएव पाषाणभूमिस्वरूपाः।
१४ ये कथां श्रुत्वा यान्ति विषयचिन्तायां धनलोभेन ऐहिकसुखे च मज्जन्त उपयुक्तफलानि न फलन्ति त एवोप्तबीज-
१५ कण्टकिभूस्वरूपाः। किन्तु ये श्रुत्वा सरलैः शुद्धैश्चान्तःकरणैः कथां गृह्णन्ति धैर्य्यम् अवलम्ब्य फलान्युत्पादयन्ति च त एवोत्तमभूस्वरूपाः।

१६ 　अपरञ्च प्रदीपं प्रज्वाल्य कोपि पात्रेण नाच्छादयति तथा खट्वाधोपि न स्थापयति, किन्तु दीपाधारोपर्य्येव स्थापयति,

तस्मात् प्रवेशका दीप्तिं पश्यन्ति। यन्न प्रकाशयिष्यते तादृग् १७ अप्रकाशितं वस्तु किमपि नास्ति यच्च न सुव्यक्तं प्रचारयिष्यते तादृग् गुप्तं वस्तु किमपि नास्ति। अतो यूयं केन प्रकारेण १८ शृणुथ तत्र सावधाना भवत, यस्य समीपे बर्द्धते तस्मै पुनर्दास्यते किन्तु यस्याश्रये न बर्द्धते तस्य यद्यदस्ति तदपि तस्मात् नेष्यते।

अपरञ्च यीशो र्माता भ्रातरश्च तस्य समीपं जिगमिषवः १९ किन्तु जनतासम्बाधात् तत्सन्निधिं प्राप्तुं न शेकुः। तत्पश्चात् २० तव माता भ्रातरश्च त्वां साक्षात् चिकीर्षन्तो बहिस्तिष्ठन्तीति वार्त्तायां तस्मै कथितायां स प्रत्युवाच; ये जना ईश्वरस्य कथां २१ श्रुत्वा तदनुरूपमाचरन्ति तएव मम माता भ्रातरश्च।

अनन्तरं एकदा यीशुः शिष्यैः सार्द्धं नावमारुह्य जगाद, २२ आयात वयं ह्रदस्य पारं यामः, ततस्ते जग्मुः। तेषु नौकां २३ वाहयत्सु स निदद्रौ; अथाकस्मात् प्रबलझञ्भ्शागमाद् ह्रदे नौकायां तरङ्गैराच्छन्नायां विपत् तान् जग्रास। तस्माद् २४ यीशोरन्तिकं गत्वा हे गुरो हे गुरो प्राणा नो यान्तीति गदित्वा तं जागरयाम्बभूवुः। तदा स उत्थाय वायुं तरङ्गांश्च तर्जयामास तस्मादुभौ निवृत्य स्थिरौ बभूवतुः। स तान् २५ बभाषे युष्माकं विश्वासः क्व? तस्मात्ते भीता विस्मिताश्च परस्परं जगदुः, अहो कीदृगयं मनुजः पवनं पानीयञ्चादिशति तदुभयं तदादेशं वहति।

ततः परं गालील्प्रदेशस्य सम्मुखस्थगिदेरीयप्रदेशे नौकायां २६ लगन्त्यां तटेऽवरोहमात्राद् बहुतिथकालं भूतग्रस्त एको मानुषः पुरादागत्य तं साक्षाच्चकार। स मानुषो वासो न २७

२८ परिदधत् गृहे च न वसन् केवलं श्मशानम् अध्युवास। स यीशुं दृष्ट्वैव चीच्छब्दं चकार तस्य सम्मुखे पतित्वा प्रोच्चैर्जगाद च, हे सर्व्वप्रधानेश्वरस्य पुत्त्र, मया सह तव कः सम्बन्धः?
२९ त्वयि विनयं करोमि मां मा यातय। यतः स तं मानुषं त्यक्त्वा यातुम् अमेध्यभूतम् आदिदेश; स भूतस्तं मानुषम् असकृद् दधार तस्माल्लोकाः शृङ्खलेन निगडेन च बबन्धुः; स तद्
३० भंक्त्वा भूतवशत्वात् मध्येप्रान्तरं ययौ। अनन्तरं यीशुस्तं पप्रच्छ तव किन्नाम? स उवाच, मम नाम वाहिनो यतो बहवो
३१ भूतास्तमाशिश्रियुः। अथ भूता विनयेन जगदुः, गभीरं गर्त्तं
३२ गन्तुं माज्ञापयास्मान्। तदा पर्व्वतोपरि वराहव्रजश्चरति तस्माद् भूता विनयेन प्रोचुः, अमुं वराहव्रजम् आश्रयितुम्
३३ अस्मान् अनुजानीहि; ततः सोनुजज्ञौ। ततः परं भूतास्तं मानुषं विहाय वराहव्रजम् आशिश्रियुः वराहव्रजाश्च तत्क्षणात् कट-
३४ केन धावन्तो ह्रदे प्राणान् विजहुः। तद् दृष्ट्वा शूकररक्षकाः पलायमाना नगरं ग्रामञ्च गत्वा तत्सर्व्ववृत्तान्तं कथयामासुः।
३५ ततः किं वृत्तम् एतद्दर्शनार्थं लोका निर्गत्य यीशोः समीपं ययुः, तं मानुषं त्यक्तभूतं परिहितवस्त्रं स्वस्थमानुषवद् यीशो-
३६ श्चरणसन्निधौ सूपविशन्तं विलोक्य बिभ्युः। ये लोकास्तस्य भूतग्रस्तस्य स्वास्थ्यकरणं ददृशुस्ते तेभ्यः सर्व्ववृत्तान्तं कथया-
३७ मासुः। तदनन्तरं तस्य गिदेरीयप्रदेशस्य चतुर्दिक्स्था बहवो जना अतित्रस्ता विनयेन तं जगदुः, भवान् अस्माकं निकटाद्
३८ व्रजतु तस्मात् स नावमारुह्य ततो व्याघुट्य जगाम। तदानीं त्यक्तभूतमनुजस्तेन सह स्थातुं प्रार्थयाञ्चक्रे किन्तु तदर्थम् ईश्वरः कीदृङ्महाकर्म्म कृतवान् इति निवेशनं गत्वा विज्ञापय,

यीशुः कथामेतां कथयित्वा तं विससर्ज। ततः स व्रजित्वा यीशु- ३९
स्तदर्थं यन्महाकर्म्म चकार तत् पुरस्य सर्व्वत्र प्रकाशयितुं प्रारेभे।

अथ यीशौ परावृत्यागते लोकास्तं आदरेण जगृहु र्यस्मात्ते ४०
सर्व्वे तमपेक्षाञ्चक्रिरे।

तदनन्तरं याथीर्‌नाम्नो भजनगेहस्यैकोधिप आगत्य ४१
यीशोश्चरणयोः पतित्वा स्वनिवेशनागमनार्थं तस्मिन् विनयं
चकार, यतस्तस्य द्वादशवर्षवयस्का कन्यैकासीत् सा मृतकल्पा-
भवत्। ततस्तस्य गमनकाले मार्गे लोकानां महान् समागमो ४२
बभूव। द्वादशवर्षाणि प्रदररोगग्रस्ता नाना वैद्यैश्चिकित्सिता ४३
सर्व्वस्वं व्ययित्वापि स्वास्थ्यं न प्राप्ता या योषित् सा
यीशोः पश्चादागत्य तस्य वस्त्रग्रन्थिं पस्पर्श। तस्मात् तत्क्षणात् ४४
तस्या रक्तस्रावो रुद्धः। तदानीं यीशुरवदत् केनाहं स्पृष्टः? ४५
ततोऽनेकैरनङ्गीकृते पितरस्तस्य सङ्गिनश्चावदन्, हे गुरो लोका
निकटस्थाः सन्तस्तव देहे घर्षयन्ति, तथापि केनाहं स्पृष्टइति
भवान् कुतः पृच्छति? यीशुः कथयामास, केनाप्यहं स्पृष्टो, ४६
यतो मत्तः शक्ति र्निर्गतेति मया निश्चितमज्ञायि। तदा सा ४७
नारी स्वयं न गुप्तेति विदित्वा कम्पमाना सती तस्य सम्मुखे
पपात; येन निमित्तेन तं पस्पर्श स्पर्शमात्राच्च येन प्रकारेण
स्वस्थाभवत् तत् सर्व्वं तस्य साक्षादाचख्यौ। ततः स तां जगाद ४८
हे कन्ये सुस्थिरा भव, तव विश्वासस्त्वां स्वस्थाम् अकार्षीत् त्वं
क्षेमेण याहि।

यीशोरेतद्वाक्यवदनकाले तस्याधिपते र्निवेशनात् कश्चिल्लोक ४९
आगत्य तं बभाषे, तव कन्या मृता गुरुं मा क्लिशान। किन्तु ५०
यीशुस्तदाकर्ण्याधिपतिं व्याजहार, मा भैषीः केवलं विश्वसिहि

५१ तस्मात् सा जीविष्यति। अथ तस्य निवेशने प्राप्ते स पितरं योहनं याकूबञ्च कन्याया मातरं पितरञ्च विना, अन्यं कञ्चन ५२ प्रवेष्टुं वारयामास। अपरञ्च ये रुदन्ति विलपन्ति च तान् सर्व्वान् जनान् उवाच, यूयं मा रोदिष्ट कन्या न मृता ५३ निद्राति। किन्तु सा निश्चितं मृतेति ज्ञात्वा ते तमुपजहसुः। ५४ पश्चात् स सर्व्वान् बहिः कृत्वा कन्यायाः करौ धृत्वाजुहुवे, हे कन्ये त्वमुत्तिष्ठ, तस्मात् तस्याः प्राणेषु पुनरागतेषु सा तत्क्षणाद् ५५ उत्तस्थौ। तदानीं तस्यै किञ्चिद् भक्ष्यं दातुम् आदिदेश। ५६ ततस्तस्याः पितरौ विस्मयं गतौ किन्तु स तावादिदेश घटनाया एतस्याः कथां कस्मैचिदपि मा कथयतं।

---

## ९ नवमोऽध्यायः।

१ शिष्याणां प्रेषणं ७ ख्रीष्टं द्रष्टुं हेरोद् इच्छा १० पञ्चपूपैर्मत्स्याभ्याञ्च पञ्चसहस्रपुंभोजनं १८ ख्रीष्टस्य निर्णयः २३ ख्रीष्टस्योपदेशः २८ तेन मूर्त्यन्तरधारणं ३७ भूतग्रस्तबालकस्य स्वस्थता ४६ नम्रताया उपदेशः ४९ सर्व्वेष्वनग्रहस्यावश्यकत्वं ५१ शोमिरोणीयैः ख्रीष्टस्याग्राह्यता ५७ चञ्चललोकान् प्रति ख्रीष्टस्योपदेशकथा च।

१ ततः परं स द्वादशशिष्यानाहूय भूतान् त्याजयितुं रोगान् २ प्रतिकर्त्तुञ्च तेभ्यः शक्तिमाधिपत्यञ्च ददौ। अपरञ्च ईश्वरीयराज्यस्य सुसंवादं प्रकाशयितुम् रोगिणामारोग्यं कर्त्तुञ्च ३ प्रेरणकाले तान् जगाद। यात्रार्थं यष्टिर्वस्त्रपुटकं भक्ष्यं मुद्रा ४ द्वितीयवस्त्रम्, एषां किमपि मा गृह्णीत। यूयञ्च यन्निवेशनं ५ प्रविशथ नगरत्यागपर्य्यन्तं तन्निवेशने तिष्ठत। तत्र यदि कस्यचित् पुरस्य लोका युष्माकमातिथ्यं न कुर्व्वन्ति तर्हि तस्मान्नगराद् गमनकाले तेषां विरुद्धं साक्ष्यार्थं युष्माकं पदधूलीः सम्पातयत। ६ अथ ते प्रस्थाय सर्व्वत्र सुसंवादं प्रचारयितुं पीडितान् स्वस्थान् कर्त्तुञ्च ग्रामेषु भ्रमितुं प्रारेभिरे।

एतर्हि हेरोद् राजा यीशोः सर्व्वकर्म्मणां वार्त्तां श्रुत्वा ७ भृशमुद्विविजे यतः केचिदूचुर्योहन् श्मशानादुदतिष्ठत्। केचि- ८ दूचुः, एलियो दर्शनं दत्तवान्; एवमन्यलोका ऊचुः पूर्व्वीयः कश्चिद् भविष्यद्वादी समुत्थितः। किन्तु हेरोदुवाच योहनः ९ शिरोऽहमछिनदम् इदानीं यस्येदृक्कर्म्मणां वार्त्तां प्राप्नोमि स कः? अथ स तं द्रष्टुम् ऐच्छत्।

अनन्तरं प्रेरिताः प्रत्यागत्य यानि यानि कर्म्माणि चक्रु- १० स्तानि यीशवे कथयामासुः ततः स तान् बैत्सैदानामकनगरस्य विजनं स्थानं नीत्वा गुप्तं जगाम। पश्चात् लोकास्तद् विदित्वा ११ तस्य पश्चाद् ययुः; ततः स तान् नयन् ईश्वरीयराज्यस्य प्रसङ्ग- मुक्तवान्, येषां चिकित्सया प्रयोजनम् आसीत् तान् स्वस्थान् चकार च। अपरञ्च दिवावसन्ने सति द्वादशशिष्या यीशोर- १२ न्तिकम् एत्य कथयामासुः, वयमत्र प्रान्तरस्थाने तिष्ठामः, ततो नगराणि ग्रामाणि गत्वा वासस्थानानि प्राप्य भक्ष्यद्रव्याणि क्रेतुं जननिवहं भवान् विसृजतु। तदा स उवाच, यूयमेव तान् १३ भोजयध्वं; ततस्ते प्रोचुरस्माकं निकटे केवलं पञ्च पूपा द्वौ मत्स्यौ च विद्यन्ते, अतएव स्थानान्तरम् इत्वा निमित्तमेतेषां भक्ष्यद्रव्येषु न क्रीतेषु न भवति। तत्र प्रायेण पञ्चसहस्राणि १४ पुरुषा आसन्। तदा स शिष्यान् जगाद पञ्चाशत् पञ्चाशज्जनैः १५ पंक्तीकृत्य तानुपवेशयत, तस्मात् ते तदनुसारेण सर्व्वलोकानु- पवेशयामासुः। ततः स तान् पञ्च पूपान् मीनद्वयञ्च गृहीत्वा १६ स्वर्गं विलोक्येश्वरगुणान् कीर्त्तयाञ्चक्रे भङ्क्त्वा च लोकेभ्यः परि- वेषणार्थं शिष्येषु समर्पयाम्बभूव। ततः सर्व्वे भुक्त्वा तृप्तिं गता १७ अवशिष्टानाञ्च द्वादश डल्लकान् संजगृहुः।

१८ अथैकदा निर्जने शिष्यैः सह प्रार्थनाकाले तान् पप्रच्छ,
१९ लोका मां कं वदन्ति? ततस्ते प्रोचुः, त्वां योहन्मज्जकं वदन्ति;
केचित् त्वाम् एलियं वदन्ति, पूर्व्वकालिकः कश्चिद् भविष्यद्-
२० वादी श्मशानाद् उदतिष्ठद् इत्यपि केचिद् वदन्ति। तदा स
उवाच, यूयं मां कं वदथ? ततः पितर उक्तवान् त्वम् ईश्वरा-
२१ भिषिक्तः पुरुषः। तदा स तान् दृढमादिदेश, कथामेतां
२२ कस्मैचिदपि मा कथयत। स पुनरुवाच, मनुष्यपुत्रेण बहु-
यातना भोक्तव्याः प्राचीनलोकैः प्रधानयाजकैरध्यापकैश्च सोव-
ज्ञाय हन्तव्यः किन्तु तृतीयदिवसे श्मशानात् तेनोत्थातव्यम्।

२३ अपरं स सर्व्वानुवाच, कश्चिद् यदि मम पश्चाद् गन्तुं
वाञ्छति तर्हि स स्वं दाम्यतु, दिने दिने क्रुशं गृहीत्वा च मम
२४ पश्चादागच्छतु। यतो यः कश्चित् स्वप्राणान् रिरक्षिषति स
तान् हारयिष्यति, यः कश्चिन् मदर्थं प्राणान् हारयिष्यति
२५ स तान् रक्षिष्यति। कश्चिद् यदि सर्व्वं जगत् प्राप्नोति किन्तु
स्वप्राणान् हारयति स्वयं विनश्यति च तर्हि तस्य को लाभः?
२६ पुन र्यः कश्चिन् मां मम वाक्यं वा लज्जास्पदं जानाति मनुष्य-
पुत्रो यदा स्वस्य पितुश्च पवित्राणां दूतानाञ्च तेजोभिः परि-
२७ वेष्टित आगमिष्यति तदा सोपि तं लज्जास्पदं ज्ञास्यति।
किन्तु युष्मानहं यथार्थं वदामि, ईश्वरीयराजत्वं न दृष्ट्वा
मृत्युं नास्वादिष्यन्ते, एतादृशाः कियन्तो लोका अत्र स्थानेऽपि
दण्डायमानाः सन्ति।

२८ एतदाख्यानकथनात् परं प्रायेणाष्टसु दिनेषु गतेषु स
पितरं योहनं याकूबञ्च गृहीत्वा प्रार्थयितुं पर्व्वतमेकं समा-
२९ रुरोह। अथ तस्य प्रार्थनकाले तस्य मुखाकृतिरन्यरूपा जाता,

तदीयं वस्त्रमुज्ज्वलशुक्लं जातं। अपरञ्च मूसा एलियश्चोभौ ३०
तेजस्विनौ दृष्टौ तौ तेन यिरूशालम्पुरे यो मृत्युः साधिष्यते ३१
तदीयां कथां तेन सार्द्धं कथयितुम् आरेभाते। तदा पितरादयः ३२
स्वस्य सङ्गिनो निद्रयाकृष्टा आसन् किन्तु जागरित्वा तस्य
तेजस्तेन सार्द्धम् उत्तिष्ठन्तौ तौ जनौ च ददृशुः। अथ तयो- ३३
रुभयो र्गमनकाले पितरो यीशुं बभाषे, हे गुरोऽस्माकं
स्थानेऽस्मिन् स्थितिः शुभा, तत एका त्वदर्था, एका मूसार्था,
एका एलियार्था, इति तिस्रः कुट्योऽस्माभि र्निर्म्मीयन्तां, इमां
कथां स न विविच्य कथयामास। अपरञ्च तद्वाक्यवदनकाले ३४
पयोद एक आगत्य तेषामुपरि छायां चकार, ततस्तन्मध्ये
तयोः प्रवेशात् ते शशङ्किरे। तदा तस्मात् पयोदाद् इयमा- ३५
काशीया वाणी निर्जगाम, ममायं प्रियः पुत्त्र एतस्य कथायां
मनो निधत्त। इति शब्दे जाते ते यीशुमेकाकिनं ददृशुः ३६
किन्तु ते तदानीं तस्य दर्शनस्य वाचमेकामपि नोक्त्वा मनःसु
स्थापयामासुः।

परेऽहनि तेषु तस्माच्छैलाद् अवरूढेषु तं साचात् कर्त्तुं ३७
बहवो लोका आजग्मुः। तेषां मध्याद् एको जन उच्चैरुवाच, ३८
हे गुरो अहं विनयं करोमि मम पुत्त्रं प्रति कृपादृष्टिं करोतु, ३९
मम स एवैकः पुत्त्रः। भूतेन धृतः सन् स प्रसभं चीच्छब्दं
करोति तन्मुखात् फेणा निर्गच्छन्ति च, भूत इत्थं विदार्य्य ४०
क्लिष्ट्वा प्रायशस्तं न त्यजति। तस्मात् तं भूतं त्याजयितुं तव ४१
शिष्यसमीपे न्यवेदयं किन्तु ते न शेकुः। तदा यीशुरवादीत्, रे
अविश्वासिन् विपथगामिन् वंश कतिकालान् युष्माभिः सह
स्थास्याम्यहं युष्माकम् आचरणानि च सहिष्ये? तव पुत्त्रमिहा- ४२

नय। ततस्तस्मिन्नागतमात्रे भूतस्तं भूमौ पातयित्वा विददार;
४३ तदा यीशुस्तममेध्यं भूतं तर्जयित्वा बालकं स्वस्थं कृत्वा तस्य
पितरि समर्पयामास। ईश्वरस्य महाशक्तिम् इमां विलोक्य सर्व्वे
४४ चमच्चक्रुः; इत्थं यीशोः सर्व्वाभिः क्रियाभिः सर्व्वैर्लोकैराश्चर्य्ये
मन्यमाने सति स शिष्यान् बभाषे, कथेयं युष्माकं कर्णेषु प्रवि-
४५ शतु, मनुष्यपुत्रो मनुष्याणां करेषु समर्पयिष्यते। किन्तु ते तां
कथां न बुबुधिरे, स्पष्टत्वाभावात् तस्या अभिप्रायस्तेषां बोध-
गम्यो न बभूव; तस्या आशयः क इत्यपि ते भयात् प्रष्टुं न शेकुः।
४६　तदनन्तरं तेषां मध्ये कः श्रेष्ठः कथामेतां गृहीत्वा ते मिथो
४७ विवादं चक्रुः। ततो यीशुस्तेषां मनोभिप्रायं विदित्वा बालकमेकं
गृहीत्वा स्वस्य निकटे स्थापयित्वा तान् जगाद, यो जनो मम
४८ नाम्नास्य बालकस्यातिथ्यं विदधाति स ममातिथ्यं विदधाति,
यश्च ममातिथ्यं विदधाति स मम प्रेरकस्यातिथ्यं विदधाति,
युष्माकं मध्ये यः स्वं सर्व्वस्मात् क्षुद्रं जानीते स एव श्रेष्ठो भविष्यति।
४९　अपरञ्च योहन् व्याजहार हे प्रभो तव नाम्ना भूतान्
त्याजयन्तं मानुषम् एकं दृष्टवन्तो वयं, किन्त्वस्माकम् अप-
५० श्चाद् गामित्वात् तं न्यषेधाम। तदानीं यीशुरुवाच, तं मा
निषेधत, यतो यो जनोस्माकं न विपक्षः स एवास्माकं सपक्षो
भवति।
५१　अनन्तरं तस्यारोहणसमय उपस्थिते स स्थिरचेता यिरूशा-
५२ लमं प्रति यात्रां कर्त्तुं निश्चित्याग्रे दूतान् प्रेषयामास। तस्मात्
ते गत्वा तस्य प्रयोजनीयद्रव्याणि संग्रहीतुं शोमिरोणीयानां
५३ ग्रामं प्रविविशुः। किन्तु स यिरूशालमं नगरं याति ततो हेतो
५४ र्लोकास्तस्यातिथ्यं न चक्रुः। अतएव याकूब्योहनौ तस्य शिष्यौ

तद् दृष्ट्वा जगदतुः, हे प्रभो एलियो यथा चकार तथा वयमपि किं गगणाद् आगन्तुम् एतान् भस्मीकर्त्तुञ्च वह्निमाज्ञापयामः? भवान् किमिच्छति? किन्तु स मुखं परावर्त्य तान् ५५ तर्जयित्वा गदितवान् युष्माकं मनोभावः कः, इति यूयं न जानीथ। मनुजसुतो मनुजानां प्राणान् नाशयितुं नागच्छत्, ५६ किन्तु रक्षितुम् आगच्छत्। पश्चाद् इतरग्रामं ते ययुः।

तदनन्तरं पथि गमनकाले जन एकस्तं बभाषे, हे प्रभो ५७ भवान् यत्र याति भवता सहाहमपि तत्र यास्यामि। तदानीं ५८ यीशुस्तमुवाच, गोमायूनां गर्त्ता आसते, विहायसीयविहगानां नीडानि च सन्ति, किन्तु मानवतनयस्य शिरः स्थापयितुं स्थानं नास्ति। ततः परं स इतरजनं जगाद, त्वं मम पश्चाद् ५९ एहि; ततः स उवाच, हे प्रभो पूर्व्वं पितरं श्मशाने स्थापयितुं मामादिशतु। तदा यीशुरुवाच, मृता मृतान् श्मशाने ६० स्थापयन्तु किन्तु त्वं गत्वेश्वरीयराज्यस्य कथां प्रचारय। ततोन्यः ६१ कथयामास, हे प्रभो मयापि भवतः पश्चाद् गंस्यते, किन्तु पूर्व्वं मम निवेशनस्य परिजनानाम् अनुमतिं ग्रहीतुम् अहमादिश्यै भवता। तदानीं यीशुस्तं प्रोक्तवान्, यो जनो लाङ्गले ६२ करमर्पयित्वा पश्चात् पश्यति स ईश्वरीयराज्यं नार्हति।

---

## १० दशमोऽध्यायः।

१ सप्ततिशिष्याणां निरूपणं प्रेरणञ्च १३ कोरासीनादिनगराणां सन्तापो भविष्यत्कथा च १७ सप्ततिशिष्यैः सह कथनं २३ शिष्येभ्य आशीर्दानं २५ ख्रीष्टेन व्यवस्थापकायोपदेशः ३८ मर्थामरियमो र्गेहे ख्रीष्टस्यातिथित्वञ्च।

ततः परं प्रभुरपरान् सप्ततिशिष्यान् नियुज्य स्वयं यानि १ नगराणि यानि स्थानानि च गमिष्यति तानि नगराणि तानि

२ स्थानानि च प्रति द्वौ द्वौ जनौ प्रहितवान्। तेभ्यः कथयामास च शस्यानि बहूनीति सत्यं किन्तु छेदका अल्पे; तस्माद्धेतोः शस्यक्षेत्रे छेदकान् अपरानपि प्रेषयितुं क्षेत्रस्वामिनं
३ प्रार्थयध्वं। यूयं यात, पश्यत, वृकाणां मध्ये मेषशावकानिव
४ युष्मान् प्रहिणोमि। यूयं क्षुद्रं महद् वा वसनसम्पुटकं पादु-
५ काश्च मा गृह्लीत, मार्गमध्ये कमपि मा नमत च। अपरञ्च यूयं यद् यत् निवेशनं प्रविशथ तत्र निवेशनस्यास्य मङ्गलं
६ भूयादिति वाक्यं प्रथमं वदत। तस्मात् तस्मिन् निवेशने यदि मङ्गलपात्रं स्थास्यति तर्हि तन्मङ्गलं तस्य भविष्यति, नोचेत्
७ युष्मान् प्रति परावर्त्तिष्यते। अपरञ्च ते यत्किञ्चिद् दास्यन्ति तदेव भुक्त्वा पीत्वा तस्मिन्निवेशने स्थास्यथ; यतः कर्म्मकारी
८ जनो भृतिम् अर्हति; गृहाद् गृहं मा यास्यथ। अन्यच्च युष्मासु किमपि नगरं प्रविष्टेषु लोका यदि युष्माकम् आतिथ्यं करिष्यन्ति, तर्हि यत् खाद्यम् उपस्थास्यन्ति तदेव खादिष्यथ।
९ तन्नगरस्थान् रोगिणः स्वस्थान् करिष्यथ, ईश्वरीयं राज्यं
१० युष्माकम् अन्तिकम् आगमत् कथामेताञ्च प्रचारयिष्यथ। किन्तु किमपि पुरं युष्मासु प्रविष्टेषु लोका यदि युष्माकम् आतिथ्यं न करिष्यन्ति, तर्हि तस्य नगरस्य पन्थानं गत्वा कथामेतां
११ वदिष्यथ, युष्माकं नगरीया या धूल्योऽस्मासु समलगन् ता अपि युष्माकं प्रातिकूल्येन साक्ष्यार्थं सम्पातयामः; तथापीश्वर-
१२ राज्यं युष्माकं समीपम् आगतम् इति निश्चितं जानीत। अहं युष्मभ्यं यथार्थं कथयामि, विचारदिने तस्य नगरस्य दशातः सिदोमो दशा सह्या भविष्यति।

१३　हा हा कोरासीन् नगर, हा हा बैत्सैदानगर युवयोर्मध्ये

यादृशानि आश्चर्य्याणि कर्म्माण्यक्रियन्त, तानि कर्म्माणि यदि सोरसीदोनो र्नगरयोरकारिष्यन्त, तदा इतो बहुदिनपूर्व्वं तन्निवासिनः शणवस्त्राणि परिधाय गात्रेषु भस्म विलिप्य समुपविश्य समखेत्स्यन्त । अतो विचारदिवसे युष्माकं दशातः १४ सोरसीदोन्निवासिनां दशा सह्या भविष्यति। हे कफर्नाहूम्, १५ त्वं स्वर्गं यावद् उन्नता किन्तु नरकं यावत् न्यग्भविष्यसि। यो १६ जनो युष्माकं वाक्यं गृह्लाति स ममैव वाक्यं गृह्लाति; किञ्च यो जनो युष्माकम् अवज्ञां करोति स ममैवावज्ञां करोति; यो जनो ममावज्ञां करोति च स मत्प्रेरकस्यैवावज्ञां करोति।

अथ ते सप्ततिशिष्या आनन्देन प्रत्यागत्य कथयामासुः, १७ हे प्रभो भवतो नाम्ना भूता अप्यस्माकं वशीभवन्ति। तदानीं १८ स तान् जगाद, विद्युतमिव स्वर्गात् पतन्तं शैतानम् अदर्शम्। पश्यत सर्पान् वृश्चिकान् रिपोः सर्व्वपराक्रमांश्च पदतलै १९ र्दलयितुं युष्मभ्यं शक्तिं ददामि तस्माद् युष्माकं कापि हानि र्न भविष्यति। भूता युष्माकं वशीभवन्ति, एतन्निमित्तात् मा २० समुल्लसत, स्वर्गे युष्माकं नामानि लिखितानि सन्तीति निमित्तं समुल्लसत। तद्घटिकायां यीशु र्मनसि जाताह्लादः कथया- २१ मास हे स्वर्गपृथिव्योरेकाधिपते पितस्त्वं ज्ञानवतां विदुषाञ्च लोकानां पुरस्तात् सर्व्वमेतद् अप्रकाश्य बालकानां पुरस्तात् प्राकाशय एतस्माद्धेतोस्त्वां धन्यं वदामि, हे पितरित्थं भवतु यद् एतदेव तव गोचर उत्तमम्। पित्रा सर्व्वाणि मयि समर्पि- २२ तानि पितरं विना कोपि पुत्रं न जानाति किञ्च पुत्रं विना यस्मै जनाय पुत्रस्तं प्रकाशितवान् तञ्च विना कोपि पितरं न जानाति।

२३ ततः परं स शिष्यान् प्रति परावृत्य गुप्तं जगाद, यूयमेतानि
२४ सर्व्वाणि पश्यथ ततो युष्माकं चक्षूंषि धन्यानि। युष्मानहं
वदामि, यूयं यानि सर्व्वाणि पश्यथ तानि बहवो भविष्यद्वा-
दिनो भूपतयश्च द्रष्टुमिच्छन्तोपि द्रष्टुं न प्राप्नुवन्, युष्माभि
र्या याः कथाश्च श्रूयन्ते ताः श्रोतुमिच्छन्तोपि श्रोतुं नालभन्त।
२५ अनन्तरम् एको व्यवस्थापक उत्थाय तं परीक्षितुं पप्रच्छ,
२६ हे उपदेशक अनन्तायुषः प्राप्तये मया किं करणीयं? यीशुः
प्रत्युवाच, अत्रार्थे व्यवस्थायां किं लिखितमस्ति? त्वं कीदृक्
२७ पठसि? ततः सोवदत्, त्वं सर्व्वान्तःकरणैः सर्व्वप्राणैः सर्व्व-
शक्तिभिः सर्व्वचित्तैश्च प्रभौ परमेश्वरे प्रेम कुरु, समीपवा-
२८ सिनि स्ववत् प्रेम कुरु च। तदा स कथयामास, त्वं यथार्थं
२९ प्रत्यवोचः, इत्थम् आचर तेनैव जीविष्यसि। किन्तु स जनः
स्वं निर्द्दोषं ज्ञापयितुं यीशुं पप्रच्छ, मम समीपवासी कः?
३० ततो यीशुः प्रत्युवाच, एको जनो यिरूशालम्पुराद् यिरीहो-
पुरं याति, एतर्हि दस्यूनां करेषु पतिते ते तस्य वस्त्रादिकं
३१ हृतवन्तः तमाहत्य मृतप्रायं कृत्वा त्यक्त्वा ययुः। अकस्माद्
एको याजकस्तेन मार्गेण गच्छन् तं दृष्ट्वा मार्गान्यपार्श्वेन
३२ जगाम। इत्थम् एको लेवीयस्तत्स्थानं प्राप्य तस्यान्तिकं गत्वा
३३ तं विलोक्यान्येन पार्श्वेन जगाम। किन्त्वेकः शोमिरोणीयो
३४ गच्छन् तत्स्थानं प्राप्य तं दृष्ट्वादयत। तस्यान्तिकं गत्वा तस्य
क्षतेषु तैलं द्राक्षारसञ्च प्रक्षिप्य क्षतानि बद्ध्वा निजवाहनोपरि
३५ तमुपवेश्य प्रवासीयगृहम् आनीय तं सिषेवे। परस्मिन् दिवसे
निजगमनकाले द्वौ मुद्रापादौ तद्गृहस्वामिने दत्त्वावदत्
जनमेनं सेवस्व तत्र योऽधिको व्ययो भविष्यति तमहं पुनरा-

गमनकाले परिशोत्स्यामि। एषां त्रयाणां मध्ये तस्य दस्युहस्त- ३६ पतितस्य जनस्य समीपवासी कः? त्वया किं बुध्यते? ततः स व्यवस्थापकः कथयामास यस्तस्मिन् दयां चकार। तदा यीशुः ३७ कथयामास त्वमपि गत्वा तथाचर।

ततः परं ते गच्छन्त एकं ग्रामं प्रविविशुः; तदा मर्था- ३८ नामा स्त्री स्वगृहे तस्यातिथ्यं चकार। तस्मात् मरियम् नाम- ३९ धेया तस्या भगिनी यीशोः पदसमीप उपविश्य तस्योपदेशकथां श्रोतुमारेभे। किन्तु मर्था नानापरिचर्य्यायां व्यग्रा बभूव ४० तस्माद्धेतोस्तस्य समीपमागत्य बभाषे; हे प्रभो मम भगिनी केवलं ममोपरि सर्व्वकर्म्मणां भारम् अर्पितवती तत्र भवता किञ्चिदपि न मनो निधीयते किम्? मम साहाय्यं कर्त्तुं भवान् तामादिशतु। ततो यीशुः प्रत्युवाच हे मर्थे हे मर्थे, त्वं नाना- ४१ कार्य्येषु चिन्तितवती व्यग्रा चासि, किन्तु प्रयोजनीयम् एक- मात्रम् आस्ते। अपरञ्च यमुत्तमं भागं कोपि हर्त्तुं न शक्नोति ४२ सएव मरियमा वृतः।

---

## ११ एकादशोऽध्यायः।

१ प्रार्थनार्थे ख्रीष्टस्योपदेशः १४ मूकभूतत्याजनं २४ अशुचिभूतस्य दृष्टान्तः २७ धन्यलोकानां निर्णयः २९ लोकानामन्तिके ख्रीष्टस्य प्रचारः ३३ प्रदीपस्य दृष्टान्तकथा ३७ फिरूशिनः प्रति तस्य कथा ४५ व्यवस्थापकान् प्रति तस्य कथा च।

अनन्तरं स कस्मिंश्चित् स्थाने प्रार्थयत तत्समाप्तौ सत्यां १ तस्यैकः शिष्यस्तं जगाद हे प्रभो योहन् यथा स्वशिष्यान् प्रार्थ- यितुम् उपदिष्टवान् तथा भवानप्यस्मान् उपदिशतु। तस्मात् २ स कथयामास, प्रार्थनकाले यूयम् इत्थं कथयध्वं, हे अस्माकं स्वर्गस्थपितस्तव नाम पूज्यं भवतु; तव राजत्वं भवतु; स्वर्गे

३ यथा तथा पृथिव्यामपि तवेच्छया सर्व्वं भवतु। प्रत्यहम्
४ अस्माकं प्रयोजनीयं भोज्यं देहि। यथा वयं सर्व्वान् अपराधिनः
क्षमामहे तथा त्वमपि पापान्यस्माकं क्षमस्व। अस्मान् परीक्षां
५ मानय किन्तु पापात्मनो रक्ष। पश्चात् सोऽपरमपि कथितवान्
यदि युष्माकं कस्यचिद् बन्धुस्तिष्ठति निशीथे च तस्य समीपं स
६ गत्वा वदति, हे बन्धो पथिक एको बन्धु र्मम निवेशनम्
आयातः किन्तु तस्यातिथ्यं कर्त्तुं ममान्तिके किमपि नास्ति,
७ अतएव पूपत्रयं मह्यम् ऋणं देहि; तदा स यदि गृहमध्यात्
प्रतिवदति मां मा क्लिशान, इदानीं द्वारं रुद्धं शयने मया
८ सह बालकाश्च तिष्ठन्ति तुभ्यं दातुम् उत्थातुं न शक्नोमि, तर्हि
युष्मानहं वदामि, स यदि मित्रतया तस्मै किमपि दातुं
नोत्तिष्ठति तथापि वारं वारं प्रार्थनात उत्थापितः सन् यस्मिन्
९ तस्य प्रयोजनं तदेव दास्यति। अतः कारणात् कथयामि,
याचध्वं ततो युष्मभ्यं दास्यते, मृगयध्वं तत उद्देशं प्राप्स्यथ,
१० द्वारम् आहत ततो युष्मभ्यं द्वारं मोच्यते। यो याचते स
प्राप्नोति, यो मृगयते स एवोद्देशं प्राप्नोति, यो द्वारम् आहन्ति
११ तदर्थं द्वारं मोच्यते। पुत्रेण पूपे याचिते तस्मै पाषाणं ददाति
१२ वा मत्स्ये याचिते तस्मै सर्पं ददाति वा अण्डे याचिते तस्मै
१३ वृश्चिकं ददाति युष्माकं मध्ये क एतादृशः पितास्ते? तस्मादेव
यूयमभद्रा अपि यदि स्वस्वबालकेभ्य उत्तमानि द्रव्याणि दातुं
जानीथ तर्ह्यस्माकं स्वर्गस्थः पिता निजयाचकेभ्यः किं पवित्रम्
आत्मानं न दास्यति?

१४ अनन्तरं यीशुना कस्माच्चिद् एकस्मिन् मूकभूते त्याजिते
सति स भूतत्यक्तो मानुषो वाक्यं वक्तुम् आरेभे; ततो लोकाः

सकला आश्चर्य्यं मेनिरे। किन्तु तेषां केचिदूचु र्जनोयं बाल- १५
सिबूबा अर्थाद् भूतराजेन भूतान् त्याजयति। तं परीक्षितुं १६
केचिद् आकाशीयम् एकं चिह्नं दर्शयितुं तं प्रार्थयाञ्चक्रिरे।
तदा स तेषां मनःकल्पनां ज्ञात्वा कथयामास, कस्यचिद् राज्यस्य १७
लोका यदि परस्परं विरुन्धन्ति तर्हि तद् राज्यम् नश्यति;
केचिद् गृहस्था यदि परस्परं विरुन्धन्ति तर्हि तेपि नश्यन्ति।
तथैव शैतानपि स्वलोकान् यदि विरुणद्धि तदा तस्य राज्यं १८
कथं स्थास्यति? बालसिबूबाहं भूतान् त्याजयामि यूयमिति
वदथ। यद्यहं बालसिबूबा भूतान् त्याजयामि तर्हि युष्माकं १९
सन्तानाः केन त्याजयन्ति? तस्मात् तएव कथाया एतस्या
विचारयितारो भविष्यन्ति। किन्तु यद्यहम् ईश्वरस्य पराक्रमेण २०
भूतान् त्याजयामि तर्हि युष्माकं निकटम् ईश्वरस्य राज्यमवश्यम्
उपतिष्ठति। बलवान् पुमान् सुसज्जमानो यतिकालं निजा- २१
ट्टालिकां रक्षति ततिकालं तस्य द्रव्यं निरुपद्रवं तिष्ठति।
किन्तु तस्माद् अधिकबलः कश्चिदागत्य यदि तं जयति तर्हि २२
येषु शस्त्रास्त्रेषु तस्य विश्वास आसीत् तानि सर्व्वाणि हृत्वा
तस्य द्रव्याणि गृह्लाति। अतः कारणाद् यो मम सपक्षो न २३
स विपक्षः, यो मया सह न संगृह्लाति स विकिरति।

अपरञ्च अमेध्यभूतो मानुषस्यान्तर्निर्गत्य शुष्कस्थाने भ्रान्त्वा २४
विश्रामं मृगयते किन्तु न प्राप्य वदति मम यस्माद् गृहाद्
आगतोहं पुनस्तद् गृहं परावृत्य यामि। ततो गत्वा तद् गृहं २५
मार्जितं शोभितञ्च दृष्ट्वा तत्क्षणम् अपगत्य स्वस्मादपि दुर्म्मतीन् २६
अपरान् सप्तभूतान् सहानयति ते च तद्गृहं प्रविश्य निवसन्ति।
तस्मात् तस्य मनुष्यस्य प्रथमदशातः शेषदशा दुःखतरा भवति।

२७　अस्याः कथायाः कथनकाले जनतामध्यस्था काचिन्नारी तमुच्चैःस्वरं प्रोवाच, या योषित् त्वां गर्भेऽधारयत् स्तन्यम-
२८ पाययच्च सैव धन्या। किन्तु सोऽकथयत् ये परमेश्वरस्य कथां श्रुत्वा तदनुरूपम् आचरन्ति तएव धन्याः।

२९　ततः परं तस्यान्तिके बहुलोकानां समागमे जाते स वक्तुमारेभे, आधुनिका दुष्टलोकाश्चिह्नं द्रष्टुमिच्छन्ति किन्तु यूनस्-भविष्यद्वादिनश्चिह्नं विनान्यत् किञ्चिच्चिह्नं तान् न दर्शयिष्यते।
३० यूनस् तु यथा नीनिवीयलोकानां समीपे चिह्नरूपोभवत् तथा विद्यमानलोकानाम् एषां समीपे मनुष्यपुत्रोपि चिह्न-
३१ रूपो भविष्यति। विचारसमय इदानीन्तनलोकानां प्रातिकूल्येन दक्षिणदेशीया राज्ञी प्रोत्थाय तान् दोषिणः करिष्यति, यतः सा राज्ञी सुलेमान उपदेशकथां श्रोतुं पृथिव्याः सीमात आगच्छत् किन्तु पश्यत सुलेमानोपि गुरुतर एको जनोऽस्मिन्
३२ स्थाने विद्यते। अपरञ्च विचारसमये नीनिवीयलोका अपि वर्त्तमानकालिकानां लोकानां वैपरीत्येन प्रोत्थाय तान् दोषिणः करिष्यन्ति, यतो हेतोस्ते यूनसो वाक्यात् चित्तानि परिवर्त्तयामासुः किन्तु पश्यत यूनसोतिगुरुतर एको जनोऽस्मिन् स्थाने विद्यते।

३३　प्रदीपं प्रज्वाल्य द्रोणस्याधः कुत्रापि गुप्तस्थाने वा कोपि न स्थापयति किन्तु गृहप्रवेशिभ्यो दीप्तिं दातुं दीपाधारोपर्य्येव
३४ स्थापयति। देहस्य प्रदीपश्चक्षुस्तस्मादेव चक्षु र्यदि प्रसन्नं भवति तर्हि तव सर्व्वशरीरं दीप्तिमद् भविष्यति किन्तु चक्षु र्यदि
३५ मलीमसं तिष्ठति तर्हि सर्व्वशरीरं सान्धकारं स्थास्यति। अस्मात् कारणात् तवान्तःस्थं ज्योति र्यथान्धकारमयं न भवति तदर्थं

सावधानो भव। यतः शरीरस्य कुत्राप्यंशे सान्धकारे न जाते ३६
सर्व्वं यदि दीप्तिमत् तिष्ठति तर्हि तुभ्यं दीप्तिदायिप्रोज्ज्वलन्
प्रदीप इव तव सर्व्वशरीरं दीप्तिमद् भविष्यति।

एतत्कथायाः कथनकाले फिरूश्येको भोजनाय तं निम- ३७
न्त्रयामास, ततः स गत्वा भोक्तुम् उपविवेश। किन्तु भोजनात् ३८
पूर्व्वं नामाङ्क्षीत् एतद् दृष्ट्वा स फिरूश्याश्चर्य्यं मेने। तदा प्रभुस्तं ३९
प्रोवाच यूयं फिरूशिलोकाः पानपात्राणां भोजनपात्राणाञ्च
वहिः परिष्कुरुथ किन्तु युष्माकमन्त दौरात्म्ये दुष्क्रियाभिश्च
परिपूर्णं तिष्ठति। हे सर्व्वे निर्बोधा यो वहिः ससर्ज स एव ४०
किमन्त र्न ससर्ज? तत एव युष्माभिरन्तःकरणं (ईश्वराय) ४१
निवेद्यतां तस्मिन् कृते युष्माकं सर्व्वाणि शुचितां यास्यन्ति।
किन्तु हन्त फिरूशिगणा यूयं न्यायम् ईश्वरे प्रेम च परित्यज्य ४२
पोदिनाया अरुदादीनां सर्व्वेषां शाकानाञ्च दशमांशान् दत्थ
किन्तु प्रथमं पालयित्वा शेषस्यालङ्घनं युष्माकम् उचितमासीत्।
हा हा फिरूशिनो यूयं भजनगेहे प्रोच्चासने आपणेषु च नम- ४३
स्कारेषु प्रीयध्वे। वत कपटिनोऽध्यापकाः फिरूशिनश्च लोका ४४
यत् श्मशानम् अनुपलभ्य तदुपरि गच्छन्ति यूयम् तादृगप्रका-
शितश्मशानवद् भवथ।

तदानीं व्यवस्थापकानाम् एको योशुमवदत्, हे उपदेशक ४५
वाक्येनेदृशेनास्मास्वपि दोषम् आरोपयसि। ततः स उवाच, ४६
हा हा व्यवस्थापका यूयम् मानुषाणाम् उपरि दुःसह्यान्
भारान् न्यस्यथ किन्तु स्वयम् एकाङ्गुल्यापि तान् भारान् न
स्पृशथ। हन्त युष्माकं पूर्व्वपुरुषा यान् भविष्यद्वादिनोऽवधि- ४७
षुस्तेषां श्मशानानि यूयं निर्म्माथ। तेनैव यूयं स्वपूर्व्वपुरुषाणां ४८

कर्म्माणि संमन्यध्वे तदेव सप्रमाणं कुरुथ च, यतस्ते तानवधिषुः
४९ यूयं तेषां श्मशानानि निर्म्माथ । अतएव ईश्वरस्य शास्त्रे प्रोक्त-
मस्ति तेषामन्तिके भविष्यद्वादिनः प्रेरितांश्च प्रेषयिष्यामि
५० ततस्ते तेषां कांश्चन हनिष्यन्ति कांश्चन ताडयिष्यन्ति । एतस्मात्
कारणात् हाबिलः शोणितपातमारभ्य मन्दिरयज्ञवेद्यो र्मध्ये
हतस्य सिखरियस्य रक्तपातपर्य्यन्तं जगतः सृष्टिमारभ्य पृथिव्यां
५१ भविष्यद्वादिनां यतिरक्तपाता जातास्ततोनाम् अपराधदण्डा
एषां वर्त्तमानलोकानां भविष्यन्ति, युष्मानहं निश्चितं वदामि
५२ सर्व्वे दण्डा वंशस्यास्य भविष्यन्ति । हा हा व्यवस्थापका यूयं
ज्ञानस्य कुञ्चिकां हृत्वा स्वयं न प्रविष्टा ये प्रवेष्टुञ्च प्रयासि-
५३ नस्तानपि प्रवेष्टुं वारितवन्तः । इत्थं कथाकथनाद् अध्यापकाः
५४ फिरूशिनश्च सतर्काः सन्तस्तमपवदितुं तस्य कथाया दोषं
धर्त्तुमिच्छन्तो नानाख्यानकथनाय तं प्रवर्त्तयितुं कोपयितुञ्च
प्रारेभिरे ।

## १२ द्वादशोऽध्यायः ।

१ खीष्टेन शिष्याणामुपदेशः १३ धनिलोकानां दृष्टान्तकथा २२ चिन्तननिषेधः ३५ कर्म्मशीलत्वोपदेशः ४१ प्रभुदासयोर्दृष्टान्तः ४९ खीष्टोपदेशस्य फलनिर्णयः ५४ कपटिनां तर्जनं ५९ तेषामुपदेशश्च ।

१　तदानीं लोकाः सहस्रं सहस्रम् आगत्य समुपस्थितास्तत
एकैको ऽन्येषामुपरि पतितुम् उपचक्रमे; तदा यीशुः शिष्यान्
बभाषे, यूयं फिरूशिनां किण्वरूपकापट्ये विशेषेण सावधाना-
२ स्तिष्ठत । यतो यन्न प्रकाशयिष्यते तदाच्छन्नं वस्तु किमपि
नास्ति; तथा यन्न ज्ञास्यते तद् गुप्तं वस्तु किमपि नास्ति ।
३ अन्धकारे तिष्ठन्तो याः कथा अकथयत ताः सर्व्वाः कथा
दीप्तौ श्रोष्यन्ते निर्जने कर्णे च यदकथयत गृहपृष्ठात् तत् प्रचा-

रयिष्यते। हे बन्धवो युष्मानहं वदामि, ये शरीरस्य नाशं ४ विना किमप्यपरं कर्त्तुं न शक्नुवन्ति तेभ्यो मा भैष्ट। तर्हि ५ कस्माद् भेतव्यम् इत्यहं वदामि, यः शरीरं नाशयित्वा नरके निक्षेप्तुं शक्नोति तस्मादेव भयं कुरुत, पुनरपि वदामि तस्मादेव भयं कुरुत। पञ्च चटकपक्षिणः किं द्वाभ्यां ताम्रखण्डाभ्यां ६ न विक्रीयन्ते? तथापीश्वरस्तेषाम् एकमपि न विस्मरति। युष्माकं ७ शिरःकेशा अपि गणिताः सन्ति तस्मात् मा बिभीत बहुचटकपक्षिभ्योपि यूयं बहुमूल्याः। अपरं युष्मभ्यं कथयामि यः ८ कश्चिन् मानुषाणां साक्षान् मां स्वीकरोति मनुष्यपुत्त्र ईश्वरदूतानां साक्षात् तं स्वीकरिष्यति। किन्तु यः कश्चिन्मानुषाणां ९ साक्षान्माम् अस्वीकरोति तम् ईश्वरस्य दूतानां साक्षाद् अहम् अस्वीकरिष्यामि। अन्यच्च यः कश्चिन् मनुजसुतस्य निन्दाभावेन १० काञ्चित् कथां कथयति तस्य तत्पापस्य मोचनं भविष्यति किन्तु यदि कश्चित् पवित्रम् आत्मानं निन्दति तर्हि तस्य तत्पापस्य मोचनं न भविष्यति। यदा लोका युष्मान् भजनगेहं विचार- ११ कर्तृराज्यकर्तृणां सम्मुखञ्च नेष्यन्ति तदा केन प्रकारेण किमुत्तरं वदिष्यथ किं कथयिष्यथ चेत्यत्र मा चिन्तयत; यतो १२ युष्माभिर्यद् यद् वक्तव्यं तत् तस्मिन् समयएव पवित्र आत्मा युष्मान् शिक्षयिष्यति।

ततः परं जनतामध्यस्थः कश्चिज्जनस्तं जगाद हे गुरो मया १३ सह पैतृकं धनं विभक्तुं मम भ्रातरमाज्ञापयतु भवान्। किन्तु १४ स तमवदत् हे मनुष्य युवयो र्विचारं विभागञ्च कर्त्तुं मां को नियुक्तवान्? अनन्तरं स लोकानवदत् लोभे सावधानाः १५ सतर्काश्च तिष्ठत, यतो बहुसम्पत्तिप्राप्त्या मनुष्यस्यायु र्न भवति।

१६ पश्चाद् दृष्टान्तकथामुत्थाप्य कथयामास, एकस्य धनिनो भूमौ
१७ बहूनि शस्यानि जातानि। ततः स मनसा चिन्तयित्वा कथ-
याम्बभूव ममैतानि समुत्पन्नानि द्रव्याणि स्थापयितुं स्थानं
१८ नास्ति किं करिष्यामि? ततोवदद् इत्थं करिष्यामि, मम
सर्व्वभाण्डागाराणि भङ्क्त्वा बृहद्भाण्डागाराणि निर्म्माय तन्मध्ये
१९ सर्व्वफलानि द्रव्याणि च स्थापयिष्यामि। अपरं निजमनो वदि-
ष्यामि, हे मनो बहुवत्सरार्थं नानाद्रव्याणि सञ्चितानि सन्ति
२० विश्रामं कुरु भुक्त्वा पीत्वा कौतुकञ्च कुरु। किन्त्वीश्वरस्तम्
अवदत्, रे निर्बोध अद्य रात्रौ तव प्राणास्त्वत्तो नेष्यन्ते तत
एतानि यानि द्रव्याणि त्वयासादितानि तानि कस्य भवि-
२१ ष्यन्ति? अतएव यः कश्चिद् ईश्वरस्य समीपे धनसञ्चयमकृत्वा
केवलं स्वनिकटे सञ्चयं करोति सोपि तादृशः।

२२　अथ स शिष्येभ्यः कथयामास, युष्मानहं वदामि, किं खादि-
ष्यामः? किं परिधास्यामः? इत्युक्त्वा जीवनस्य शरीरस्य चार्थं
२३ चिन्तां मा कार्ष्ट। भक्ष्याज्जीवनं भूषणाच्छरीरञ्च श्रेष्ठं भवति।
२४ काकपक्षिणां कार्य्यं विचारयत, ते न वपन्ति शस्यानि च न
छिन्दन्ति, तेषां भाण्डागाराणि न सन्ति कोषाश्च न सन्ति,
तथापीश्वरस्तेभ्यो भक्ष्याणि ददाति, यूयं पक्षिभ्यः श्रेष्ठतरा न
२५ किं? अपरञ्च भावयित्वा निजायुषः क्षणमात्रं वर्द्धयितुं शक्नोति,
२६ एतादृशो लोको युष्माकं मध्ये कोस्ति? अतएव क्षुद्रं कार्य्यं
साधयितुम् असमर्था यूयम् अन्यस्मिन् कार्य्ये कुतो भावयथ?
२७ अन्यच्च काम्पिल्लपुष्पं कथं वर्द्धते तदपि विचारयत, तत् कञ्चन
श्रमं न करोति तन्तूंश्च न जनयति किन्तु युष्मभ्यं यथार्थं कथ-
यामि सुलेमान् बह्वैश्वर्य्यान्वितोपि पुष्पस्यास्य सदृशो विभूषितो

नासीत्। अद्य क्षेत्रे वर्त्तमानं श्वश्चूल्यां क्षेप्स्यमानं यत् तृणं, २८ तस्मै यदीश्वर इत्थं भूषयति तर्हि हे अल्पप्रत्ययिनो युष्मान् किं न परिधापयिष्यति? अतएव किं खादिष्यामः? किं परि- २९ धास्यामः? एतदर्थं मा चेष्टध्वं मा संदिग्ध्वञ्च। जगतो देवा- ३० र्च्चका एतानि सर्व्वाणि चेष्टन्ते; एषु वस्तुषु युष्माकं प्रयोजन- मास्ते इति युष्माकं पिता जानाति। अतएवेश्वरस्य राज्यार्थं ३१ सचेष्टा भवत तथा कृते सर्व्वाण्येतानि द्रव्याणि युष्मभ्यं प्रदायि- ष्यन्ते। हे क्षुद्रमेषव्रज यूयं मा भैष्ट युष्मभ्यं राज्यं दातुं युष्माकं ३२ पितुः सम्मतिरस्ति। अतएव युष्माकं या या सम्पत्तिरस्ति तां ३३ तां विक्रीय वितरत, यत् स्थानं चौरा नागच्छन्ति, कीटाश्च न क्षाययन्ति तादृशे स्वर्गे निजार्थम् अजरे सम्पुटके ऽक्षयं धनं सञ्चिनुत च; यतो यत्र युष्माकं धनं वर्त्तते तत्रैव युष्माकं मनः। ३४

अपरञ्च यूयं प्रदीपं ज्वालयित्वा बद्धकटयस्तिष्ठत; प्रभु ३५ र्विवाहादागत्य यदैव द्वारमाहन्ति तदैव द्वारं मोचयितुं यथा ३६ भृत्या अपेक्ष्य तिष्ठन्ति तथा यूयमपि तिष्ठत। यतः प्रभुरा- ३७ गत्य यान् दासान् सचेतनान् तिष्ठतो द्रक्ष्यति तएव धन्याः; अहं युष्मान् यथार्थं वदामि प्रभुस्तान् भोजनार्थम् उपवेश्य स्वयं बद्धकटिः समीपमेत्य परिवेषयिष्यति। यदि द्वितीये तृतीये ३८ वा प्रहरे समागत्य तथैव पश्यति, तर्हि तएव दासा धन्याः। अपरञ्च कस्मिन् क्षणे चौरा आगमिष्यन्ति इति यदि गृहपति ३९ र्ज्ञातुं शक्नोति तदावश्यं जाग्रन् निजगृहे सन्धिं कर्त्तयितुं वारयति यूयमेतद् वित्त। अतएव यूयमपि सज्जमानास्तिष्ठत ४० यतो यस्मिन् क्षणे तं नाप्रेक्षध्वे तस्मिन्नेव क्षणे मनुष्यपुत्र आग- मिष्यति।

४१ तदा पितरः पप्रच्छ, हे प्रभो भवान् किमस्मान् उद्दिश्य किं
४२ सर्व्वान् उद्दिश्य दृष्टान्तकथामिमां वदति? ततः प्रभुः प्रोवाच,
प्रभुः समुचितकाले निजपरिवारार्थं भोज्यपरिवेषणाय यं
तत्पदे नियोच्यति तादृशो विश्वास्यो बोद्धा कर्म्माधीशः कोस्ति?
४३ प्रभुरागत्य यम् एतादृशे कर्म्मणि प्रवृत्तं द्रच्यति सएव दासो
४४ धन्यः। अहं युष्मान् यथार्थं वदामि स तं निजसर्व्वस्वस्या-
४५ धिपतिं करिष्यति। किन्तु प्रभुर्विलम्बेनागमिष्यति, इति विचिन्त्य
स दासो यदि तदन्यदासीदासान् प्रहर्त्तुम् भोक्तुं पातुं मदि-
४६ तुञ्च प्रारभते, तर्हि यदा प्रभुं नापेचिष्यते यस्मिन् चणे सोऽ-
चेतनश्च स्थास्यति तस्मिन्नेव चणे तस्य प्रभुरागत्य तं पदभ्रष्टं
४७ कृत्वा विश्वासहीनैः सह तस्य अंशं निरूपयिष्यति। यो दासः
प्रभोराज्ञां ज्ञात्वापि सज्जितो न तिष्ठति तदाज्ञानुसारेण च
४८ कार्य्यं न करोति सोनेकान् प्रहारान् प्राप्स्यति; किन्तु यो
जनोऽज्ञात्वा प्रहारार्हं कर्म्म करोति सोल्पप्रहारान् प्राप्स्यति।
यतो यस्मै बाहुल्येन दत्तं तस्मादेव बाहुल्येन ग्रहीष्यते, मानुषा
यस्य निकटे बहु समर्पयन्ति तस्माद् बहु याचन्ते।

४९ अहं पृथिव्याम् अनैक्यरूपं वह्निं निचेप्तुम् आगतोस्मि, स
५० चेद् इदानीमेव प्रज्वलति तत्र मम का चिन्ता? किन्तु येन
मज्जनेनाहं मग्नो भविष्यामि यावत्कालं तस्य सिद्धिर्न भवि-
५१ ष्यति तावदहं कतिकष्टं प्राप्स्यामि। मेलनं कर्त्तुं जगद् आग-
तोस्मि यूयं किमित्थं बोधध्वे? युष्मान् वदामि न तथा, किन्त्वहं
५२ मेलनाभावं कर्त्तुम् आगतोस्मि। यस्मादेतत्कालमारभ्य एक-
त्रस्थपरिजनानां मध्ये पञ्चजनाः पृथग् भूत्वा त्रयो जना द्वयो-
र्जनयोः प्रतिकूला द्वौ जनौ च त्रयाणां जनानां प्रतिकूलौ

भविष्यन्ति। पिता पुत्रस्य विपक्षः पुत्रश्च पितु र्विपक्षो भवि- ५३
ष्यति माता कन्याया विपक्षा कन्या च मातु र्विपक्षा भवि-
ष्यति, तथा श्वश्रूर्बध्वा विपक्षा बधूश्च श्वश्र्वा विपक्षा भविष्यति।

स लोकेभ्योपरमपि कथयामास, पश्चिमदिशि मेघो- ५४
द्गमं दृष्ट्वा यूयं हठाद् वदथ वृष्टि र्भविष्यति ततस्तथैव
जायते। अपरं दक्षिणतो वायौ वाति सति वदथ निदाघो ५५
भविष्यति ततः सोपि जायते। रे रे कपटिन आकाशस्य भूम्याश्च ५६
लक्षणं बोद्धुं शक्नुथ, किन्तु कालस्यास्य लक्षणं कुतो बोद्धुं न
शक्नुथ? यूयञ्च स्वयं कुतो न न्याय्यं विचारयथ? ५७

अपरञ्च विवादिना सार्द्धं विचारयितुः समीपं गच्छन् पथि ५८
तस्मादुद्धारं प्राप्तुं यतस्व नोचेत् स त्वां धृत्वा विचारयितुः
समीपं नयति। विचारयिता यदि त्वां प्रहर्त्तुः समीपं सम- ५९
र्पयति प्रहर्त्ता त्वां कारायां बध्नाति तर्हि त्वामहं वदामि
त्वया निःशेषं कपर्दकेषु न परिशोधितेषु त्वं ततो मुक्तिं प्राप्तुं
न शक्ष्यसि।

## १३ त्रयोदशोऽध्यायः।

१ पापस्य दण्डं त्याजयितुम् अनुतापावश्यकत्वं ६ निष्फलोडुम्बरवृक्षदृष्टान्तः १० कुब्जस्त्रिया आरोग्यकरणं १८ सर्षपकिण्वयोर्दृष्टान्तः २२ उपदेशकथा ३१ हेरोदा यिरूशालमस्थलोकानामपि तर्जनञ्च।

अपरञ्च पीलातो येषां गालीलीयानां रक्तानि बलीनां १
रक्तैः सहामिश्रयत् तेषां गालीलीयानां वृत्तान्तं कतिपयजना
उपस्थाप्य यीशवे कथयामासुः। ततः स प्रत्युवाच तेषां २
लोकानाम् एतादृशी दुर्गति र्घटिता तत्कारणाद् यूयं
किमन्येभ्यो गालीलीयेभ्योप्यधिकपापिनस्तान् बोधध्वे? युष्मा- ३
नहं वदामि तथा न किन्तु मनःसु न परावर्त्तितेषु यूयमपि

४ तथा नंक्ष्यथ। अपरञ्च शीलोहनाम्न उच्चगृहस्य पतनाद् येऽष्टादशजना मृतास्ते यिरूशालमि निवासिसर्व्वलोकेभ्योऽधि-
५ कापराधिनः किं यूयमित्थं बोधध्वे? युष्मानहं वदामि तथा न किन्तु मनःसु न परिवर्त्तितेषु यूयमपि तथा नंक्ष्यथ।

६ अनन्तरं स इमां दृष्टान्तकथामकथयद् एको जनो द्राक्षाक्षेत्रमध्य एकमुडुम्बरवृक्षं रोपितवान्। पश्चात् स आगत्य तस्मिन् फलानि गवेषयामास, किन्तु फलाप्राप्तेः कारणाद्
७ उद्यानकारं भृत्यं जगाद, पश्य वत्सरत्रयं यावदागत्य एतस्मिन्नुडुम्बरतरौ फलान्यन्विच्छामि, किन्तु नैकमपि प्राप्नोमि तरुरयं कुतो वृथा स्थानं व्याप्य तिष्ठति? एनं छिन्धि।
८ ततो भृत्यः प्रत्युवाच, हे प्रभो पुनर्वर्षमेकं स्थातुम् आदिश; एतस्य मूलस्य चतुर्दिक्षु खनित्वाहम् आलवालं स्थापयामि।
९ ततः फलितुं शक्नोति यदि न फलति तर्हि पश्चात् छेत्स्यसि।

१० अथ विश्रामवारे भजनगेहे यीशुरुपदिशति तस्मिन् समये
११ भूतग्रस्तत्वात् कुब्जीभूयाष्टादशवर्षाणि यावत् केनाप्युपायेन ऋजु र्भवितुं न शक्नोति या दुर्ब्बला स्त्री, तां तत्रोपस्थितां
१२ विलोक्य यीशुस्तामाहूय कथितवान् हे नारि तव दौर्ब्बल्यात्
१३ त्वं मुक्ता भव। ततः परं तस्या गात्रे हस्तार्पणमात्रात् सा
१४ ऋजुर्भूत्वेश्वरस्य धन्यवादं कर्त्तुमारेभे। किन्तु विश्रामवारे यीशुना तस्याः स्वास्थ्यकरणाद् भजनगेहस्याधिपतिः प्रकुप्य लोकान् उवाच, षट्सु दिनेषु लोकैः कर्म्म कर्त्तव्यं तस्माद्धेतोः स्वास्थ्यार्थं तेषु दिनेषु आगच्छत, विश्रामवारे मागच्छत।
१५ तदा प्रभुः प्रत्युवाच रे कपटिनो युष्माकम् एकैको जनो विश्रामवारे स्वीयं स्वीयं वृषभं गर्दभं वा बन्धनान्मोचयित्वा

जलं पाययितुं किं न नयति? तर्ह्यष्टादशवत्सरान् यावत् १६ शैताना बद्धा इब्राहीमः सन्ततिरियं नारी किं विश्रामवारे न मोचयितव्या? एषु वाक्येषु कथितेषु तस्य विपक्षाः सलज्जा १७ जाताः किन्तु तेन कृतसर्व्वमहाकर्म्मकारणात् लोकनिवहः सानन्दोऽभवत्।

अनन्तरं सोवदद् ईश्वरस्य राज्यं कस्य सदृशं? केन १८ तदुपमास्यामि? यत् सर्षपबीजं गृहीत्वा कश्चिज्जन उद्यान १९ उप्तवान् तद् बीजमङ्कुरितं सत् महावृक्षोऽजायत, ततस्तस्य शाखासु विहायसीयविहगा आगत्य न्यूषुः, तद्राज्यं तादृशेन सर्षपबीजेन तुल्यं। पुनः कथयामास, ईश्वरस्य राज्यं कस्य २० सदृशं वदिष्यामि? यत् किण्वं काचित् स्त्री गृहीत्वा द्रोणत्रय- २१ परिमितगोधूमचूर्णेषु स्थापयामास, ततः क्रमेण तत् सर्व्वगो-धूमचूर्णं व्याप्नोति, तस्य किण्वस्य तुल्यम् ईश्वरस्य राज्यं।

ततः स यिरूशालम्नगरं प्रति यात्रां कृत्वा नगरे नगरे २२ ग्रामे ग्रामे समुपदिशन् जगाम। तदा कश्चिज्जनस्तं पप्रच्छ, २३ हे प्रभो किं केवलम् अल्पे लोकाः परित्रास्यन्ते? ततः स २४ लोकान् उवाच, संकीर्णद्वारेण प्रवेष्टुं यतध्वं, यतोहं युष्मान् वदामि, बहवः प्रवेष्टुं चेष्टिष्यन्ते किन्तु न शक्ष्यन्ति। गृहपति- २५ नोत्थाय द्वारे रुद्धे सति यदि यूयं बहिः स्थित्वा द्वारमाहत्य वदथ, हे प्रभो हे प्रभो अस्मत्कारणाद् द्वारं मोचयतु, ततः स इति प्रतिवक्ष्यति, यूयं कुत्रत्या लोका इत्यहं न जानामि। तदा यूयं वदिष्यथ, तव साक्षाद् वयं भोजनं २६ पानञ्च कृतवन्तः, त्वञ्चास्माकं नगरस्य पथि समुपदिष्टवान्। किन्तु स वक्ष्यति, युष्मानहं वदामि, यूयं कुत्रत्या लोका २७

इत्यहं न जानामि; हे दुराचारिणो यूयं मत्तो दूरीभवत।
२८ तदा इब्राहीमं इस्हाकं याकूबञ्च सर्व्वभविष्यद्वादिनश्च ईश्व-
रस्य राज्यं प्राप्तान् स्वांश्च वहिष्कृतान् दृष्ट्वा यूयं रोदनं दन्तै-
२९ र्दन्तघर्षणञ्च करिष्यथ। अपरञ्च पूर्व्वपश्चिमदक्षिणोत्तरदिग्भ्यो
३० लोका आगत्य ईश्वरस्य राज्ये निवत्स्यन्ति। पश्यतेत्थं शेषीया
लोका अग्रा भविष्यन्ति, अग्रीया लोकाश्च शेषा भविष्यन्ति।
३१ अपरञ्च तस्मिन् दिने कियन्तः फिरूशिन आगत्य यीशुं
प्रोचुः, वहिर्गच्छ, स्थानादस्मात् प्रस्थानं कुरु, हेरोद् त्वां
३२ जिघांसति। ततः स प्रत्यवोचत् पश्यताद्य श्वश्च भूतान् विहाप्य
रोगिणोऽरोगिणः कृत्वा तृतीयेह्नि सेत्स्यामि, कथामेतां यूय-
३३ मित्वा तं भूरिमायं वदत। तत्राप्यद्य श्वः परश्वश्च मया गम-
नागमने कर्त्तव्ये, यतो हेतो र्यिरूशालमो वहिः कुत्रापि कोपि
३४ भविष्यद्वादी न घानिष्यते। हे यिरूशालम् हे यिरूशालम्
त्वं भविष्यद्वादिनो हंसि तवान्तिके प्रेरितान् प्रस्तरैर्मारयसि
च, यथा कुक्कुटी निजपक्षाधः स्वशावकान् संगृह्लाति, तथाह-
मपि तव शिशून् संग्रहीतुं कतिवारान् ऐच्छं किन्तु त्वं नैच्छः।
३५ पश्यत युष्माकं वासस्थानानि प्रोच्छिद्यमानानि परित्यक्तानि
च भविष्यन्ति; युष्मानहं यथार्थं वदामि, यः प्रभो र्नाम्नाग-
च्छति स धन्य इति वाचं यावत्कालं न वदिष्यथ, तावत्-
कालं यूयं मां न द्रक्ष्यथ।

---

## १४ चतुर्दशोऽध्यायः।

१ जलोदरिणः स्वास्थ्यकरणं ७ नम्रत्वोपदेशः १२ निमन्त्रणविधिः १५ महाभोज्य-
दृष्टान्तः २५ नानोपदेशकथा च।

१ अनन्तरं विश्रामवारे यीशौ प्रधानस्य फिरूशिनो गृहे भोक्तुं

गतवति ते तं वीचितुम् आरेभिरे। तदा जलोदरी तस्य सम्मुखे २
स्थितः। ततः स व्यवस्थापकान् फिरूशिनश्च पप्रच्छ, विश्रामवारे ३
स्वास्थ्यं कर्त्तव्यं न वा? ततस्ते किमपि न प्रत्यूचुः। तदा स तं ४
रोगिणं स्वस्थं कृत्वा विससर्ज; तानुवाच च युष्माकं कस्यचिद् ५
गर्द्दभो वृषभो वा चेद् गर्त्ते पतति तर्हि विश्रामवारे तत्क्षणं
स किं तं नोत्थापयिष्यति? ततस्ते कथाया एतस्याः किमपि ६
प्रतिवक्तुं न शेकुः।

अपरञ्च प्रधानस्थानमनोनीतत्वकरणं विलोक्य स निम- ७
न्त्रितान् एतदुपदेशकथां जगाद, त्वं विवाहादिभोज्येषु निम- ८
न्त्रितः सन् प्रधानस्थाने मोपावेक्षीः। त्वत्तो गौरवान्वितनिम- ९
न्त्रितजन आयाते निमन्त्रयितागत्य मनुष्यायैतस्मै स्थानं देहीति
वाक्यं चेद् वक्ष्यति तर्हि त्वं सङ्कुचितो भूत्वा स्थान इतरस्मिन्
उपवेष्टुम् उद्यंस्यसि। अस्मात् कारणादेव त्वं निमन्त्रितो गत्वा- १०
ऽप्रधानस्थान उपविश, ततो निमन्त्रयितागत्य वदिष्यति, हे
बन्धो प्रोच्चस्थानं गत्वोपविश, तथा सति भोजनोपविष्टानां
सकलानां साक्षात् त्वं मान्यो भविष्यसि। यः कश्चित् स्वमुन्नमयति ११
स नमयिष्यते, किन्तु यः कश्चित् स्वं नमयति स उन्नमयिष्यते।

तदा स निमन्त्रयितारं जनमपि जगाद, मध्याह्ने रात्रौ वा १२
भोज्ये कृते निजबन्धुगणो वा भ्रातृगणो वा ज्ञातिगणो वा धनि-
गणो वा समीपवासिगणो वा एतान् न निमन्त्रय, तथा कृते
चेत् ते त्वां निमन्त्रयिष्यन्ति, तर्हि परिशोधो भविष्यति। किन्तु १३
यदा भोज्यं करोषि तदा दरिद्रशुष्ककरखञ्जान्धान् निमन्त्रय,
तत आशिषं लप्स्यसे, तेषु परिशोधं कर्त्तुमशक्नुवत्सु श्मशाना- १४
द्धार्म्मिकानामुत्थानकाले त्वं फलं लप्स्यसे।

१५　अनन्तरं तां कथां निशम्य भोजनोपविष्टः कश्चित् कथयामास, यो जन ईश्वरस्य राज्ये भोक्तुं लप्स्यते सएव धन्यः।
१६ ततः स उवाच, कश्चित् जनो रात्रौ भोज्यं कृत्वा बहून् निम-
१७ न्त्रयामास। ततो भोजनसमये निमन्त्रितलोकान् आह्वातुं दासद्वारा कथयामास, खाद्यद्रव्याणि सर्व्वाणि समासादितानि
१८ सन्ति, यूयमागच्छत। किन्तु ते सर्व्वे एकैकं छलं कृत्वा चमां प्रार्थयाञ्चक्रिरे। प्रथमो जनः कथयामास, क्षेत्रमेकं क्रीतवानहं तदेव द्रष्टुं मया गन्तव्यम्, अतएव मां चन्तुं तं निवेदय।
१९ अन्यो जनः कथयामास, दशवृषानहं क्रीतवान् तान् परीक्षितुं
२० यामि तस्मादेव मां चन्तुं तं निवेदय। अपरः कथयामास,
२१ व्यूढवानहं तस्मात् कारणाद् यातुं न शक्नोमि। पश्चात् स दासो गत्वा निजप्रभोः साक्षात् सर्व्ववृत्तान्तं निवेदयामास, ततोसौ गृहपतिः कुपित्वा स्वदासं व्याजहार, त्वं सत्वरं नगरस्य सन्निवेशान् मार्गांश्च गत्वा दरिद्रशुष्ककरखञ्जान्धान् अत्रानय।
२२ ततो दासोऽवदत्, हे प्रभो भवत आज्ञानुसारेणाक्रियत तथापि
२३ स्थानमस्ति। तदा प्रभुः पुन र्दासायाकथयत्, राजपथान् वृक्षमूलानि च यात्वा मदीयगृहपूरणार्थं लोकानागन्तुं प्रव-
२४ र्त्तय। अहं युष्मभ्यं कथयामि, पूर्व्वनिमन्त्रितानामेकोपि ममास्य रात्रिभोज्यस्यास्वादं न प्राप्स्यति।

२५　अनन्तरं बहुषु लोकेषु यीशोः पश्चाद् व्रजितेषु सत्सु स
२६ व्याघुट्य तेभ्यः कथयामास, यः कश्चिन् मम समीपम् आगत्य स्वस्य माता पिता पत्नी सन्ताना भ्रातरो भगिन्यो निजप्राणाश्च, एतेभ्यः सर्व्वेभ्यो मय्यधिकं प्रेम न करोति, स मम शिष्यो
२७ भवितुं न शक्ष्यति। यः कश्चित् स्वीयं क्रुशं वहन् मम पश्चान्न

गच्छति, सोपि मम शिष्यो भवितुं न शक्ष्यति। दुर्गनिर्माणे २८ कतिव्ययो भविष्यति, तथा तस्य समाप्तिकरणार्थं सम्पत्तिरस्ति न वा, प्रथममुपविश्य एतन्न गणयति, युष्माकं मध्य एतादृशः कोस्ति? नोचेद् भित्तिं कृत्वा शेषे यदि समापयितुं न शक्ष्यति, २९ तर्हि मानुषोयं निचेतुम् आरभत समापयितुं नाशक्नोत्, इति ३० व्याहृत्य सर्व्वे तमुपहसिष्यन्ति। अपरञ्च भिन्नभूपतिना सह ३१ युद्धं कर्त्तुम् उद्यम्य दशसहस्राणि सैन्यानि गृहीत्वा विंशति-सहस्रैः सैन्यैः सहितस्य समीपवासिनः सम्मुखं यातुं शक्ष्यामि न वेति प्रथमं उपविश्य न विचारयति एतादृशो भूमिपतिः कः? यदि न शक्नोति तर्हि रिपावतिदूरे तिष्ठति सति निज- ३२ दूतं प्रेष्य सन्धिं कर्त्तुं प्रार्थयेत। तद्वद् युष्माकं मध्ये यः कश्चिन् ३३ मदर्थं सर्व्वस्वं हातुं न शक्नोति स मम शिष्यो भवितुं न शक्ष्यति। लवणम् उत्तमम् इति सत्यं, किन्तु यदि लवणस्य ३४ लवणत्वम् अपगच्छति तर्हि तत् कथं स्वादुयुक्तं भविष्यति? तद् भूम्यर्थम् आलवालराश्यर्थमपि भद्रं न भवति; लोकास्तद् ३५ बहिः क्षिपन्ति। यस्य श्रोतुं श्रोत्रे स्तः स शृणोतु।

---

## १५ पञ्चदशोऽध्यायः।

१ हारितमेषहारितरूप्ययो र्दृष्टान्तः ११ अपव्ययिपुत्त्रस्य दृष्टान्तश्च।

तदा करसञ्चायिनः पापिनश्च लोका उपदेशकथां श्रोतुं १ यीशोः समीपम् आगच्छन्। ततः फिरूशिन उपाध्यायाश्च २ विवदमानाः कथयामासुः, एष मानुषः पापिभिः सह प्रणयं कृत्वा तैः सार्द्धं भुंक्ते। तदा स तेभ्य इमां दृष्टान्तकथां कथि- ३ तवान्, कस्यचित् शतमेषेषु तिष्ठत्सु तेषामेकं स यदि हारयति ४ तर्हि मध्येप्रान्तरम् एकोनशतमेषान् विहाय हारितमेषस्य

उद्देशप्राप्तिपर्य्यन्तं न गवेषयति, एतादृशो लोको युष्माकं
५ मध्ये क आस्ते? तस्योद्देशं प्राप्य हृष्टमनास्तं स्कन्धे निधाय
६ स्वस्थानम् आनीय बन्धुबान्धवसमीपवासिन आहूय वक्ति,
हारितं मेषं प्राप्तोहम् अतो हेतो मया सार्द्धम् आनन्दत।
७ तद्वदहं युष्मान् वदामि, येषां मनःपरावर्त्तनस्य प्रयोजनं
नास्ति, तादृशैकोनशतधार्म्मिककारणाद् य आनन्दस्तस्माद्
एकस्य मनःपरिवर्त्तिनः पापिनः कारणात् स्वर्गेऽधिकानन्दो
८ जायते। अपरञ्च दशानां रूप्यखण्डानाम् एकखण्डे हारिते
प्रदीपं प्रज्वाल्य गृहं सम्मार्ज्य तस्य प्राप्तिं यावद् यत्नेन न गवे-
९ षयति, एतादृशी योषित् कास्ते? प्राप्ते सति बन्धुबान्धवस-
मीपवासिनीराहूय कथयति, हारितं रूप्यखण्डं प्राप्ताहं
१० तस्मादेव मया सार्द्धम् आनन्दत। तद्वदहं युष्मान् व्याहरामि,
एकेन पापिना मनसि परिवर्त्तिते, ईश्वरस्य दूतानां मध्येप्या-
नन्दो जायते।

११　अपरञ्च स कथयामास, कस्यचिद् द्वौ पुत्त्रावास्तां, तयोः
१२ कनिष्ठः पुत्त्रः पित्रे कथयामास, हे पितस्तव सम्पत्त्या यमंशं
प्राप्स्याम्यहं विभज्य तं देहि, ततः पिता निजां सम्पत्तिं विभज्य
१३ ताभ्यां ददौ। कतिपयात् कालात् परं स कनिष्ठपुत्रः समस्तं धनं
संगृह्य दूरदेशं गत्वा दुष्टाचरणेन सर्व्वां सम्पत्तिं नाशयामास।
१४ तस्य सर्व्वधने व्ययं गते तद्देशे महादुर्भिक्षं बभूव, ततस्तस्य
१५ दैन्यदशा भवितुम् आरेभे। ततः परं स गत्वा तद्देशीयं गृह-
स्थमेकम् आश्रयत; ततः स तं शूकरव्रजं चारयितुं प्रान्तरं
१६ प्रेषयामास। केनापि तस्मै भक्ष्यादानात् स शूकरफलवल्कलेन
१७ पिचिण्डपूरणं ववाञ्छ। शेषे स मनसि चेतनां प्राप्य कथ-

यामास, हा मम पितुः समीपे कति कति वेतनभुजो दासा यथेष्टं ततोधिकञ्च भक्ष्यं प्राप्नुवन्ति किन्त्वहं क्षुधा मुमूर्षुः। अहमुत्थाय पितुः समीपं गत्वा कथामेतां वदिष्यामि, हे पितर् १८ ईश्वरस्य तव च विरुद्धं पापमकरवम् तव पुत्रइति विख्यातो १९ भवितुं न योग्योस्मि च, मां तव वैतनिकं दासं कृत्वा स्थापय। पश्चात् स उत्थाय पितुः समीपं जगाम; ततस्तस्य पितातिदूरे २० तं निरीक्ष्य दयाञ्चक्रे, धावित्वा तस्य कण्ठं गृहीत्वा तं चुचुम्ब च। तदा पुत्र उवाच, हे पितर् ईश्वरस्य तव च विरुद्धं २१ पापमकरवं, तव पुत्रइति विख्यातो भवितुं न योग्योस्मि च। किन्तु तस्य पिता निजदासान् आदिदेश, सर्व्वोत्तमवस्त्राण्यानीय २२ परिधापयतैनं हस्ते चाङ्गुरीयकम् अर्पयत पादयोश्चोपानहौ समर्पयत; पुष्टं गोवत्सम् आनीय मारयत च तं भुक्त्वा वयम् २३ आनन्दाम। यतो मम पुत्रोयम् अम्रियत पुनरजीवीद् हारि- २४ तश्च लब्धोभूत् ततस्त आनन्दितुम् आरेभिरे। तत्काले तस्य २५ ज्येष्ठः पुत्रः क्षेत्र आसीत्। अथ स निवेशनस्य निकटं आग- २६ च्छन् नृत्यानां वाद्यानाञ्च शब्दं श्रुत्वा दासानाम् एकम् आहूय पप्रच्छ, किं कारणमस्य? ततः सोवादीत्, तव भ्रातागमत्, २७ तव तातश्च तं सुशरीरं प्राप्य पुष्टं गोवत्सं मारितवान्। ततः २८ स प्रकुप्य निवेशनान्तः प्रवेष्टुं न सम्मेने; ततस्तस्य पिता बहि- रागत्य तं साधयामास। ततः स पितरं प्रत्युवाच, पश्य तव २९ काञ्चिदप्याज्ञां न विलंघ्य बहून् वत्सरान् अहं त्वां सेवे तथापि मित्रैः सार्द्धम् उत्सवं कर्त्तुं कदापि छागमेकमपि मह्यं नादादाः; किन्तु तव यः पुत्रो वेश्यागमनादिभिस्तव सम्पत्तिम् ३० अपव्ययितवान् तस्मिन्नागतमात्रे तस्यैव निमित्तं पुष्टं गोवत्सं

३१ मारितवान्। तदा तस्य पितावोचत्, हे पुत्र त्वं सर्व्वदा मया
३२ सहासि तस्मात् मम यद्यदास्ते तत्सर्व्वं तव। किन्तु तवायं भ्राता मृतः पुनरजीवीद् हारितश्च भूत्वा प्राप्तोभूत्, एतस्मात् कारणाद् उत्सवानन्दौ कर्त्तुम् उचितमस्माकम्।

---

## १६ षोडशोऽध्यायः।

१ अपव्ययिगृहकार्य्याधीशदृष्टान्तः १० विश्वास्यत्वस्यावश्यकत्वं १४ फिरूशिनः प्रति तर्जनं धनिदरिद्रयो दृष्टान्तश्च।

१ अपरञ्च यीशुः शिष्येभ्योन्यामेकां कथां कथयामास कस्यचिद् धनवतो मनुष्यस्य गृहकार्य्याधीशे सम्पत्तेरपव्ययेऽप-
२ वादिते सति तस्य प्रभुस्तम् आहूय जगाद, त्वयि यामिमां कथां शृणोमि सा कीदृशी? त्वं गृहकार्य्याधीशकर्म्मणो गणनां
३ दर्शय गृहकार्य्याधीशपदे त्वं न स्थास्यसि। तदा स गृहकार्य्याधीशो मनसा चिन्तयामास, प्रभु र्यदि मां गृहकार्य्याधीशपदाद् भ्रंशयति तर्हि किं करिष्येऽहं? मृदं खनितुं मम शक्ति
४ र्नास्ति भिक्षितुञ्च लज्जिष्येऽहं। अतएव मयि गृहकार्य्याधीशपदात् च्युते सति यथा लोका मह्यम् आश्रयं दास्यन्ति तदर्थं
५ यत्कर्म्म मया करणीयं तन् निर्णीयते। पश्चात् स स्वप्रभोरेकैकम् अधमर्णम् आहूय प्रथमं पप्रच्छ, त्वत्तो मे प्रभुणा
६ कति प्राप्यम्? ततः स उवाच, एकशताढकतैलानि; तदा गृहकार्य्याधीशः प्रोवाच, तव पत्रमानीय शीघ्रमुपविश्य तत्र
७ पञ्चाशतं लिख। पश्चादन्यमेकं पप्रच्छ, त्वत्तो मे प्रभुणा कति प्राप्यम्? ततः सोवादीद् एकशताढकगोधूमाः; तदा स
८ कथयामास, तव पत्रमानीय अशीतिं लिख। तेनैव प्रभुस्तमयथार्थकृतम् अधीशं तद्बुद्धिनैपुण्यात् प्रशशंस; इत्थं दीप्ति-

रूपसन्तानेभ्य एतत्संसारस्य सन्ताना वर्त्तमानकालेऽधिक-बुद्धिमन्तो भवन्ति। अतो वदामि यूयमप्ययथार्थेन धनेन ९ मित्राणि लभध्वं ततो युष्मासु पदभ्रष्टेष्वपि तानि चिरकालम् आश्रयं दास्यन्ति।

यः कश्चित् क्षुद्रे कार्य्ये विश्वास्यो भवति स महति कार्य्येपि १० विश्वास्यो भवति, किन्तु यः कश्चित् क्षुद्रे कार्य्येऽविश्वास्यो भवति स महति कार्य्येप्यविश्वास्यो भवति। अतएव अयथार्थेन ११ धनेन यदि यूयमविश्वास्या जातास्तर्हि सत्यं धनं युष्माकं करेषु कः समर्पयिष्यति? यदि च परधनेन यूयम् अविश्वास्या भवथ १२ तर्हि युष्माकं स्वकीयधनं युष्मभ्यं को दास्यति? कोपि दास १३ उभौ प्रभू सेवितुं न शक्नोति, यत एकस्मिन् प्रीयमाणोऽन्य-स्मिन्नप्रीयते यद्वा एकं जनं समादृत्य तदन्यं तुच्छीकरोति तद्वद् यूयमपि धनेश्वरौ सेवितुं न शक्नुथ।

तदैताः सर्व्वाः कथाः श्रुत्वा लोभिफिरूशिनस्तमुपजहसुः। १४ ततः स उवाच, यूयं मनुष्याणां निकटे स्वान् निर्दोषान् दर्शयथ १५ किन्तु युष्माकम् अन्तःकरणानीश्वरो जानाति, यत् मनुष्या-णाम् अति प्रशंस्यं तद् ईश्वरस्य घृण्यं। योहन आगमन- १६ पर्य्यन्तं युष्माकं समीपे व्यवस्थाभविष्यद्वादिनां लेखनानि चासन् ततः प्रभृति ईश्वरराज्यस्य सुसंवादः प्रचरति, एकैको लोकस्त-न्मध्यं यत्नेन प्रविशति च। वरं नभसः पृथिव्याश्च लोपो भवि- १७ ष्यति तथापि व्यवस्थाया एकविन्दोरपि लोपो न भविष्यति। यः १८ कश्चित् स्वीयां भार्य्यां विहाय स्त्रियमन्यां विवहति स परदा-रान् गच्छति, यश्च तां त्यक्तां नारीं विवहति सोपि परदा-रान गच्छति।

१९ एको धनी मनुष्यः शुक्लानि सूक्ष्माणि वस्त्राणि पर्य्यदधात्
२० प्रतिदिनं परितोषरूपेणाभुंक्तापिवच्च। सर्व्वाङ्गे क्षतयुक्त इलि-
२१ यासरनामा कश्चिद् दरिद्रस्तस्य धनवतो भोजनपात्रात्
पतितम् उच्छिष्टं भोक्तुं वाञ्छन् तस्य द्वारे पतित्वातिष्ठत्;
२२ अथ श्वान आगत्य तस्य क्षतान्यलिहन्। कियत्कालात्परं स
दरिद्रः प्राणान् जहौ; ततः स्वर्गीयदूतास्तं नीत्वा इब्राहीमः
२३ क्रोड उपवेशयामासुः। पश्चात् स धनवानपि ममार, तं
श्मशाने स्थापयामासुश्च; किन्तु परलोके स वेदनाकुलः सन्
ऊर्द्ध्वं निरीक्ष्य बहुदूराद् इब्राहीमं तत्क्रोड इलियासरञ्च
२४ विलोक्य रुवन्नुवाच; हे पितर् इब्राहीम् अनुगृह्य अङ्गुल्य-
ग्रभागं जले मज्जयित्वा मम जिह्वां शीतलां कर्त्तुम् इलि-
२५ यासरं प्रेरय, यतो वह्निशिखातोहं व्यथितोस्मि। तदा इब्रा-
हीम् बभाषे, हे पुत्र त्वं जीवन् सम्पदं प्राप्तवान् इलियास-
रस्तु विपदं प्राप्तवान् एतत् स्मर, किन्तु सम्प्रति तस्य सुखं तव
२६ च दुःखं भवति। अपरमपि युष्माकम् अस्माकञ्च स्थानयो र्मध्ये
महद्विच्छेदोऽस्ति तत एतत्स्थानस्य लोकास्तत् स्थानं यातुं
यद्वा तत्स्थानस्य लोका एतत् स्थानमायातुं न शक्नुवन्ति।
२७ तदा स उक्तवान्, हे पितस्तर्हि त्वां निवेदयामि मम पितु र्गेहे
२८ ये मम पञ्च भ्रातरः सन्ति ते यथैतद् यातनास्थानं नायास्यन्ति
२९ तथा मन्त्रणां दातुं तेषां समीपम् इलियासरं प्रेरय। तत
इब्राहीम् उवाच, मूसाभविष्यद्वादिनाञ्च पुस्तकानि तेषां निकटे
३० सन्ति ते तद्वचनानि मन्यन्तां। तदा स निवेदयामास, हे
पितर् इब्राहीम् न तथा, किन्तु यदि मृतलोकानां कश्चित् तेषां
३१ समीपं याति तर्हि ते मनांसि व्याघोटयिष्यन्ति। तत इब्राहीम्

जगाद, ते यदि मूसाभविष्यद्वादिनाञ्च वचनानि न मन्यन्ते तर्हि मृतलोकानां कस्मिंश्चिद् उत्थितेपि ते तस्य मन्त्रणां न मंस्यन्ते।

## १७ सप्तदशोऽध्यायः।

१ विघ्नस्यानुत्पादनायोपदेशः ७ प्रभुदासयोराचारविधिः ११ दशकुष्ठिनां स्वास्थ्यकरणं २० ईश्वरराज्यस्य कथा २२ खीष्टागमनकथा च।

इतः परं यीशुः शिष्यान् उवाच, विघ्नैरवश्यम् आगन्तव्यं १ किन्तु विघ्ना येन घटिष्यन्ते तस्य दुर्गति भविष्यति। एतेषां २ क्षुद्रप्राणिनाम् एकस्यापि विघ्नजननात् कण्ठबद्धपेषणीकस्य तस्य सागरागाधजले मज्जनं भद्रं। यूयं स्वेषु सावधाना- ३ स्तिष्ठत; तव भ्राता यदि तव किञ्चिद् अपराध्यति तर्हि तं तर्जय, तेन यदि मनः परिवर्त्तयति तर्हि तं क्षमस्व। पुनरेक- ४ दिनमध्ये यदि स तव सप्तकृत्वोऽपराध्यति किन्तु सप्तकृत्व आगत्य मनः परिवर्त्त्य मयापराद्धम् इति वदति तर्हि तं क्षमस्व। तदा प्रेरिताः प्रभुम् अवदन् अस्माकं विश्वासं वर्द्धय। ५ प्रभुरुवाच, यदि युष्माकं सर्षपैकप्रमाणो विश्वासोस्ति तर्हि त्वं ६ समूलमुत्पाटितो भूत्वा समुद्रे रोपितो भव कथायाम् एतस्याम् एतदुडुम्बराय कथितायां स युष्माकमाज्ञावहो भविष्यति।

अपरं स्वदासे हलं वाहयित्वा वा पशून् चारयित्वा क्षेत्राद् ७ आगते सति तं वदति, एहि भोक्तुमुपविश, युष्माकम् एतादृशः कोस्ति? वरञ्च पूर्व्वं मम खाद्यमासाद्य यावद् भुञ्जे पिवामि ८ च तावद् बद्धकटिः परिचर पश्चात् त्वमपि भोक्ष्यसे पास्यसि च कथामीदृशीं किं न वक्ष्यति? तेन दासेन प्रभोराज्ञानु- ९ रूपे कर्म्मणि कृते प्रभुः किं तस्मिन् बाधितो जातः? नेत्थं बुध्यते मया। इत्थं निरूपितेषु सर्व्वकर्म्मसु कृतेषु सत्सु यूयमपीदं १०

वाक्यं वदथ, वयम् अनुपकारिणो दासा अस्माभिर्यद्यत्कर्त्तव्यं तन्मात्रमेव कृतं।

११ स यिरूशालमि यात्रां कुर्व्वन् शोमिरोण्गालील्प्रदेशमध्येन
१२ गच्छति, एतर्हि कुत्रचिद् ग्रामे प्रवेशमात्रे दशकुष्ठिनस्तं सा-
१३ क्षात् कृत्वा दूरे तिष्ठन्त उच्चै र्वक्तुमारेभिरे, हे प्रभो यीशो
१४ दयस्वास्मान्। ततः स तान् दृष्ट्वा जगाद, यूयं याजकानां समीपे स्वान् दर्शयत, ततस्ते गच्छन्तो रोगात् परिष्कृताः।
१५ तदा तेषामेकः स्वं स्वस्थं दृष्ट्वा प्रोच्चैरीश्वरं धन्यं वदन् व्या-
१६ घुट्यायातो यीशो र्गुणाननुवदन् तच्चरणाधोभूमौ पपात;
१७ स चासीत् शोमिरोणी। तदा यीशुरवदत्, दशजनाः किं न
१८ परिष्कृताः? तर्ह्यन्ये नवजनाः कुत्र? ईश्वरं धन्यं वदन्तम् एनं
१९ विदेशिनं विना कोप्यन्यो न प्राप्यत। तदा स तमुवाच, त्वमु-त्थाय याहि विश्वासस्ते त्वां स्वस्थं कृतवान्।

२० अथ कदेश्वरस्य राजत्वं भविष्यतीति फिरूशिभिः पृष्टे स
२१ प्रत्युवाच, ईश्वरस्य राजत्वम् ऐश्वर्य्यदर्शनेन न भविष्यति। अत एतस्मिन् पश्य तस्मिन् वा पश्य, इति वाक्यं लोका वक्तुं न शक्ष्यन्ति, ईश्वरस्य राजत्वं युष्माकम् अन्तरेवास्ते।

२२ ततः स शिष्यान् जगाद, यदा युष्माभि र्मनुजसुतस्य दिन-मेकं द्रष्टुम् वाञ्छिष्यते किन्तु न दर्शिष्यते, ईदृक्काल आयाति।
२३ तदात्र पश्य वा तत्र पश्येति वाक्यं लोका वक्ष्यन्ति, किन्तु
२४ तेषां पश्चात् मा यात, मानुगच्छत च। यतस्तडिद् यथाका-शैकदिश्युदिय तदन्यामपि दिशं व्याप्य प्रकाशते तद्वत् निज-
२५ दिने मनुजसूनुः प्रकाशिष्यते। किन्तु तत्पूर्व्वं तेनानेकानि
२६ दुःखानि भोक्तव्यान्येतद्वर्त्तमानलोकैश्च सोऽवज्ञातव्यः। नोहस्य

विद्यमानकाले यथाभवत् मनुष्यसूनोः कालेपि तथा भविष्यति। यावत्कालं नोहो महापोतं नारोहद् आप्लाविवार्य्यैत्य सर्व्वं २७ नानाशयच्च तावत्कालं यथा लोका अभुञ्जतापिबन् व्यवहन् व्यवाहयंश्च; इत्थं लोटो वर्त्तमानकालेपि यथा लोका २८ भोजनपानक्रयविक्रयरोपणगृहनिर्म्माणकर्म्मसु प्रावर्त्तन्त, किन्तु २९ यदा लोट् सिदोमो निर्जगाम तदा नभसः सगन्धकाग्निवृष्टि भूत्वा सर्व्वं व्यनाशयत् तद्वन् मानवपुत्त्रप्रकाशदिनेपि भवि- ३० ष्यति। तदा यदि कश्चिद् गृहोपरि तिष्ठति तर्हि स गृह- ३१ मध्यात् किमपि द्रव्यमानेतुम् अवरुह्य नैतु; यश्च क्षेत्रे तिष्ठति सोपि व्याघुट्य नायातु। लोटः पत्नीं स्मरत। यः प्राणान् ३२ रक्षितुं चेष्टिष्यते स प्राणान् हारयिष्यति यस्तु प्राणान् हार- ३३ यिष्यति स एव प्राणान् रक्षिष्यति। युष्मानहं वच्मि तस्यां ३४ रात्रौ शय्यैकगतयो र्लोकयोरेको धारिष्यते परस्त्यक्ष्यते। स्त्रियौ युगपत् पेषणीं व्यावर्त्तयिष्यतस्तयोरेका धारिष्यते परा ३५ त्यक्ष्यते। पुरुषौ चेत्रे स्थास्यतस्तयोरेको धारिष्यते पर- ३६ स्त्यक्ष्यते। तदा ते पप्रच्छुः, हे प्रभो कुत्रेत्थं भविष्यति? ततः ३७ स उवाच, यत्र शवस्तिष्ठति तत्र गृध्रा मिलन्ति।

## १८ अष्टादशोऽध्यायः।

१ विधवाया दृष्टान्तः ९ फिरूशिनां करसञ्चायिनाञ्च दृष्टान्तः १५ शिशूनां ग्राह्यत्वं १८ कस्यचिद् युवधनवदधिपतेश्चरित्रं ३१ खीष्टमरणस्य भविष्यद्वाक्यं ३५ अन्धभिक्षवे चक्षुर्दानञ्च।

अपरञ्च लोकैरक्लान्तै र्निरन्तरं प्रार्थयितव्यम् इत्याशयेन १ यीशुना दृष्टान्त एकः कथितः। कुत्रचिन्नगरे कश्चित् प्राड्विवाक २ आसीत् स ईश्वरान्नाबिभेत् मानुषांश्च नामन्यत। अथ ३

तत्पुरवासिनी काचिद्विधवा तत्समीपमेत्य विवादिना सह मम
४ विवादं परिष्कुर्व्विति निवेदयामास। ततः स प्राड्विवाकः
कियद्दिनानि न तदङ्गीकृतवान् पश्चाच्चित्ते चिन्तयामास, यद्य-
५ पीश्वरान्न बिभेमि मनुष्यानपि न मन्ये तथाप्येषा विधवा मां
क्लिश्नाति तस्मादस्या विवादं परिष्करिष्यामि नोचेत् सा सदा-
६ गत्य मां व्यग्रं करिष्यति। पश्चात् प्रभुरवदद् असावन्याय-
७ प्राड्विवाको यदाह तत्र मनो निधध्वं। ईश्वरस्य ये ऽभिरुचित-
लोका दिवानिशं प्रार्थयन्ते स बहुदिनानि विलम्ब्यापि तेषां
८ विवादान् किं न परिष्करिष्यति? युष्मानहं वदामि त्वरया
परिष्करिष्यति, किन्तु यदा मनुष्यपुत्त्र आगमिष्यति तदा
पृथिव्यां किमीदृशं विश्वासं प्राप्स्यति?

९ ये स्वान् धार्म्मिकान् ज्ञात्वा परान् तुच्छीकुर्व्वन्ति एता-
१० दृग्भ्यः, कियद्भ्य इमं दृष्टान्तं कथयामास। एकः फिरूशिपरः
११ करसञ्चायी द्वाविमौ प्रार्थयितुं मन्दिरं गतौ। ततोऽसौ
फिरूश्येकपार्श्वे तिष्ठन् हे ईश्वर अहमन्यलोकवत् लोठयिता-
न्यायी पारदारिकश्च न भवामि अस्य करसञ्चायिनस्तुल्यश्च न,
१२ तस्मात्त्वां धन्यं वदामि। सप्तसु दिनेषु दिनद्वयमुपवसामि
सर्व्वसम्पत्ते र्दशमांशं ददामि च, एतत्कथां कथयन् प्रार्थया-
१३ मास। किन्तु स करसञ्चायी दूरे तिष्ठन् स्वर्गं द्रष्टुं नेच्छन्
वक्षसि कराघातं कुर्व्वन् हे ईश्वर पापिष्ठं मां दयस्व, इत्थं
१४ प्रार्थयामास। युष्मानहं वदामि, तयोर्द्वयो र्मध्ये केवलः
करसञ्चायी पुण्यवत्त्वेन गणितो निजगृहं जगाम, यतो यः
कश्चित् स्वमुन्नमयति स नामयिष्यते किन्तु यः कश्चित् स्वं
नमयति स उन्नमयिष्यते।

अथ शिशूनां गात्रस्पर्शार्थं लोकास्तान् तस्य समीपमा- १५ निन्युः शिष्यास्तद् दृष्ट्वानेतृन् तर्जयामासुः, किन्तु यीशुस्ता- १६ नाहूय जगाद, मन्निकटम् आगन्तुं शिशून् अनुजानीध्वं तांश्च मा वारयत; यत ईश्वरराज्याधिकारिण एषां सदृशाः। अहं युष्मान् यथार्थं वदामि, यो जनः शिशोः सदृशो भूत्वा १७ ईश्वरराज्यं न गृह्णाति स केनापि प्रकारेण तत् प्रवेष्टुं न शक्नोति।

अपरम् एकोधिपतिस्तं पप्रच्छ, हे परमगुरो, अनन्तायुषः १८ प्राप्तये मया किं कर्त्तव्यं? यीशुरुवाच, मां कुतः परमं वदसि? १९ ईश्वरं विना कोपि परमो न भवति। परदारान् मा गच्छ, २० नरं मा जहि, मा चोरय, मिथ्यासाक्ष्यं मा देहि, मातरं पितरञ्च संमन्यस्व, एता या आज्ञाः सन्ति तास्त्वं जानासि। तदा स उवाच, बाल्यकालात् सर्व्वा एता आचरामि। इति २१ कथां श्रुत्वा यीशुस्तमवदत्, तथापि तवैकं कर्म्म न्यूनमास्ते, २२ निजं सर्व्वस्वं विक्रीय दरिद्रेभ्यो वितर, तस्मात् स्वर्गे धनं प्राप्स्यसि; तत आगत्य ममानुगामी भव। किन्त्वेतां कथां २३ श्रुत्वा सोधिपतिः शुशोच, यतस्तस्य बहुधनमासीत्। तदा २४ यीशुस्तमतिशोकान्वितं दृष्ट्वा जगाद, धनवताम् ईश्वरराज्य-प्रवेशः कीदृग् दुष्करः। ईश्वरराज्ये धनिनः प्रवेशात् सूचेश्छि- २५ द्रेण महाङ्गस्य गमनागमने सुकरे। श्रोतारः पप्रच्छुस्तर्हि २६ केन परित्राणं प्राप्स्यते? स उक्तवान्, यन् मानुषेणाशक्यं तद् २७ ईश्वरेण शक्यं। तदा पितर उवाच, पश्य वयं सर्व्वस्वं परि- २८ त्यज्य तव पश्चाद्गामिनोऽभवाम। ततः स उवाच, युष्मानहं २९ यथार्थं वदामि, ईश्वरराज्यार्थं गृहं पितरौ भ्रातृगणं जायां

३० सन्तानांश्च त्यक्त्वा इह काले ततोऽधिकं परकाले ऽनन्तायुश्च न प्राप्स्यति लोक ईदृशः कोपि नास्ति।

३१ अनन्तरं स द्वादशशिष्यानाहूय बभाषे, पश्यत वयं यिरूशालम्नगरं यामः, तस्मात् मनुष्यपुत्त्रे भविष्यद्वादिभिरुक्तं

३२ यदस्ति तदनुरूपं तं प्रति घटिष्यते; वस्तुतस्तु सोऽन्यदेशीयानां हस्तेषु समर्पयिष्यते, ते तमुपहसिष्यन्ति, अन्यायमाचरिष्यन्ति

३३ तद्वपुषि निष्ठीवं निक्षेप्स्यन्ति, कशाभिः प्रहृत्य तं हनिष्यन्ति च,

३४ किन्तु तृतीयदिने स श्मशानाद् उत्थास्यति। एतस्याः कथाया अभिप्रायं किञ्चिदपि ते बोद्धुं न शेकुः तेषां निकटेऽस्पष्टत्वात् तस्यैतासां कथानाम् आशयं ते ज्ञातुं न शेकुश्च।

३५ अथ तस्मिन् यिरीहोः पुरस्यान्तिकं प्राप्ते कश्चिदन्धः पथः

३६ पार्श्व उपविश्य भिक्षाम् अकरोत् स लोकसमूहस्य गमनशब्दं

३७ श्रुत्वा तत्कारणं पृष्टवान्। नासरतीययीशुर्यातीति लोकैरुक्ते

३८ स उच्चैर्वक्तुमारेभे, हे दायूदः सन्तान यीशो मां दयस्व।

३९ ततोग्रगामिनस्तं मौनी तिष्ठेति तर्जयामासुः किन्तु स पुनारुवन्

४० उवाच, हे दायूदः सन्तान मां दयस्व। तदा यीशुः स्थगितो भूत्वा स्वान्तिके तमानेतुम् आदिदेश। ततः स तस्यान्तिकम्

४१ आगमत्, तदा स तं पप्रच्छ, त्वं किमिच्छसि? त्वदर्थमहं किं

४२ करिष्यामि? स उक्तवान्, हे प्रभोऽहं द्रष्टुं लभै। तदा यीशुरुवाच, दृष्टिशक्तिं गृहाण तव प्रत्ययस्त्वां स्वस्थं कृतवान्।

४३ ततस्तत्क्षणात् तस्य चक्षुषी प्रसन्ने; तस्मात् स ईश्वरं धन्यं वदन् तत्पश्चाद् ययौ, तदालोक्य सर्व्वे लोका ईश्वरं प्रशंसितुम् आरेभिरे।

---

# १९ ऊनविंशोऽध्यायः।

१ सक्केयनाम्नः करसञ्चायिनश्चरित्रं ११ कस्यचिन्महतो जनस्य तद्दासस्य चाख्यानं १८ ख्रीष्टस्य यिरूशालमृगमनं तत्पुरीयभाविदुःखे ख्रीष्टस्य विलापः ४५ अन्यकथा च।

यदा यीशु र्यिरीहोपुरं प्रविश्य तन्मध्येन गच्छंस्तदा सक्केय- १
नामा करसञ्चायिनां प्रधानो धनवानेको यीशुः कीदृगिति २
द्रष्टुं चेष्टितवान् किन्तु खर्व्वत्वाल्लोकसंघमध्ये तद्दर्शनमप्राप्य ३
येन पथा स यास्यति तत्पथेऽग्रे धावित्वा तं द्रष्टुम् उडुम्बरत- ४
रुमारुरोह। पश्चाद् यीशुस्तत्स्थानम् इत्वा ऊर्द्ध्वं विलोक्य तं ५
दृष्ट्वावादीत्, हे सक्केय त्वं शीघ्रमवरोह मयाद्य त्वद्गेहे
वस्तव्यं। ततः स शीघ्रमवरुह्य साह्लादं तं जग्राह। तद् दृष्ट्वा ६
सर्व्वे विवदमाना वक्तुमारेभिरे, सोतिथित्वेन दुष्टलोकगृहं ७
गच्छति। किन्तु सक्केयो दण्डायमानो वक्तुमारेभे, हे प्रभो ८
पश्य मम या सम्पत्तिरस्ति तदर्द्धं दरिद्रेभ्यो ददे, अपरम्
अन्यायं कृत्वा कस्मादपि यदि कदापि किञ्चित् मया गृहीतं
तर्हि तच्चतुर्गुणं ददामि। तदा यीशुस्तमुक्तवान् अयमपि ९
इब्राहीमः सन्तानोऽतः कारणाद् अद्यास्य गृहे त्राणमुपस्थितं।
यद् हारितं तत् मृगयितुं रक्षितुञ्च मनुष्यपुत्त्र आगतवान्। १०

अथ स यिरूशालमः समीप उपातिष्ठद् ईश्वरराजत्वस्या- ११
नुष्ठानं तदैव भविष्यतीति लोकैरन्वभूयत, तस्मात् स श्रोतृभ्यः
पुनर्दृष्टान्तकथाम् उत्थाप्य कथयामास। कोपि महाल्लोको १२
निजार्थं राजत्वपदं गृहीत्वा पुनरागन्तुं दूरदेशं जगाम।
यात्राकाले निजान् दशदासान् आहूय दशस्वर्णमुद्रा दत्त्वा १३
ममागमनपर्य्यन्तं वाणिज्यं कुरुतेत्यादिदेश। किन्तु तस्य १४
प्रजास्तमवज्ञाय मनुष्यमेनम् अस्माकमुपरि राजत्वं न कारयि-

१५ थाम इमां वार्त्तां तन्निकटे प्रेरयामासुः। अथ स राजत्वपदं प्राप्यागतवान् एकैको जनो वाणिज्येन किं लब्धवान् इति ज्ञातुं येषु दासेषु मुद्रा अर्पयत् तान् आह्वयानेतुम् आदि-
१६ देश। तदा प्रथम आगत्य कथितवान्, हे प्रभो तव तयैकया
१७ मुद्रया दशमुद्रा लब्धाः। ततः स उवाच त्वमुत्तमो दासः स्वल्पेन विश्वास्यो जात इतः कारणात् त्वं दशनगराणाम्
१८ अधिपो भव। द्वितीय आगत्य कथितवान्, हे प्रभो तवैकया
१९ मुद्रया पञ्चमुद्रा लब्धाः। ततः स उवाच, त्वं पञ्चानां नग-
२० राणामधिपति र्भव। ततोन्य आगत्य कथयामास, हे प्रभो
२१ पश्य तव या मुद्रा अहं वस्त्रे बद्ध्वास्थापयं सेयं। त्वं कृपणो यन्नास्थापयस्तदपि गृह्णासि, यन्नावपस्तदेव च छिनत्सि ततोहं
२२ त्वत्तो भीतः। तदा स जगाद, रे दुष्टदास तव वाक्येन त्वां दोषिणं करिष्यामि, यदहं नास्थापयं तदेव गृह्णामि, यदहं नावपञ्च तदेव छिनद्मि, एतादृशः कृपणोहमिति यदि त्वं
२३ जानासि, तर्हि मम मुद्रा वणिजां निकटे कुतो नास्थापयः? तथा कृतेऽहम् आगत्य कुसीदेन सार्द्धं निजमुद्रा अप्राप्स्यम्।
२४ पश्चात् स समीपस्थान् जनान् आज्ञापयत् अस्मात् मुद्रा आ-
२५ नीय यस्य दशमुद्राः सन्ति तस्मै दत्त। ते प्रोचुः प्रभोऽस्य
२६ दशमुद्राः सन्ति। युष्मानहं वदामि यस्याश्रये वर्द्धते ऽधिकं तस्मै दायिष्यते, किन्तु यस्याश्रये न वर्द्धते तस्य यद्यदस्ति तदपि
२७ तस्मात् नायिष्यते। किन्तु ममाधिपतित्वस्य वशत्वे स्थातुम् असम्मन्यमाना ये मम रिपवस्तानानीय मम समक्षं संहरत।
२८ 　इत्युपदेशकथां कथयित्वा सोग्रगः सन् यिरूशालमपुरं
२९ ययौ। ततो बैतफगीबैथनीयाग्रामयोः समीपे जैतुनाद्रेरन्तिकम्

इत्वा शिष्यद्वयम् इत्युक्त्वा प्रेषयामास, युवामम् सम्मुखस्थग्रामं ३०
प्रविश्यैव यं कोपि मानुषः कदापि नारोहत् तं गर्द्दभशावकं
बद्धं द्रक्ष्यथस्तं मोचयित्वानयतं। तत्र कुतो मोचयथः? इति ३१
चेत् कोपि वक्ष्यति तर्हि वक्ष्यथः प्रभोरत्र प्रयोजनम् आस्ते।
तदा तौ प्रेरितौ गत्वा तत्कथानुसारेण सर्व्वं प्राप्तौ। गर्द्दभ- ३२
शावकमोचनकाले तत्स्वामिन ऊचुः, गर्द्दभशावकं कुतो मोच- ३३
यथः? तावूचतुः प्रभोरत्र प्रयोजनम् आस्ते। पश्चात् तौ तं ३५
गर्द्दभशावकं यीशोरन्तिकमानीय तत्पृष्ठे निजवसनानि पात-
यित्वा तदुपरि यीशुमारोहयामासतुः। अथ यात्राकाले ३६
लोकाः पथि स्ववस्त्राणि पातयितुम् आरेभिरे। अपरं जैतुना- ३७
द्रेरुपत्यकाम् इत्वा शिष्यसंघः पूर्व्वदृष्टानि महाकर्म्माणि स्मृत्वा,
यो राजा प्रभो र्नाम्नायाति स धन्यः स्वर्गे कुशलं सर्व्वोच्चे जय-
ध्वनि र्भवतु, कथामेतां कथयित्वा सानन्दम् उच्चैरीश्वरं धन्यं ३८
वक्तुमारेभे। तदा लोकारण्यमध्यस्थाः कियन्तः फिरूशिनस्तत् ३९
श्रुत्वा यीशुं प्रोचुः, हे उपदेशक स्वशिष्यान् तर्जय। स उवाच, ४०
युष्मानहं वदामि यद्यमी नीरवास्तिष्ठन्ति तर्हि पाषाणा उच्चैः
कथाः कथयिष्यन्ति।

पश्चात् तत्पुरान्तिकमेत्य तदवलोक्य साश्रुपातं जगाद, ४१
हा हा चेत् त्वमग्रेऽज्ञास्यथाः, तवास्मिन्नेव दिने वा यदि स्वम- ४२
ङ्गलम् उपालप्स्यथाः, तर्ह्युत्तमम् अभविष्यत्, किन्तु क्षणेस्मिन्
तत्तव दृष्टेरगोचरम् भवति। त्वं स्वत्राणकाले न मनो न्यधत्था ४३
इति हेतो र्यत्काले तव रिपवस्त्वां चतुर्दिक्षु प्राचीरेण वेष्टयित्वा
रोत्स्यन्ति बालकैः सार्द्धं भूमिसात् करिष्यन्ति च त्वन्मध्ये पाषाणै- ४४
कोपि पाषाणोपरि न स्थास्यति च, काल ईदृश उपस्थास्यति।

४५ अथ मध्येमन्दिरं प्रविश्य तत्रत्यान् क्रयिविक्रयिणो बहि-
४६ ष्कुर्व्वन् अवदत् मद्गृहं प्रार्थनागृहमिति लिपिरास्ते किन्तु
४७ यूयं तदेव चौराणां गह्वरं कुरुथ। पश्चात् स प्रत्यहं मध्ये-
मन्दिरम् उपदिदेश; ततः प्रधानयाजका अध्यापकाः प्राची-
४८ नाश्च तं नाशयितुं चिचेष्टिरे; किन्तु तदुपदेशे सर्व्वे लोका
निविष्टचित्ताः स्थितास्तस्मात् ते तत्कर्त्तुं नावकाशं प्रापुः।

---

## २० विंशोऽध्यायः।

१ प्रधानयाजकाध्यापकानां निरुत्तरकरणं ९ द्राक्षाक्षेत्रस्य दृष्टान्तः १९ राजकरे याजकाध्यापकानां निरुत्तरकरणं २७ श्मशानादुत्थाने सिदूकिनां निरुत्तरकरणं ४१ खृष्टमिन् अध्यापकानां निरुत्तरकरणञ्च।

१ अथैकदा यीशु र्मन्दिरे सुसंवादं प्रचारयन् लोकानुपदि-
शति, एतर्हि प्रधानयाजका अध्यापकाः प्राञ्चश्च तन्निकटमागत्य
२ पप्रच्छुः कयाज्ञया त्वं कर्म्माण्येतानि करोषि? को वा त्वामा-
३ ज्ञापयत्? तदस्मान् वद। स प्रत्युवाच, तर्हि युष्मानपि कथा-
४ मेकां पृच्छामि तस्योत्तरं वदत। योहनो मज्जनम् ईश्वरस्य
५ मानुषाणां वाज्ञातो जातं? ततस्ते मिथो विविच्य जगदुः,
यदीश्वरस्य वदामस्तर्हि तं कुतो न प्रत्यैत स इति वक्ष्यति।
६ यदि मनुष्यस्येति वदामस्तर्हि सर्व्वे लोका अस्मान् पाषाणै
र्हनिष्यन्ति यतो योहन् भविष्यद्वादीति सर्व्वे दृढं जानन्ति।
७ अतएव ते प्रत्यूचुः कस्याज्ञया जातम् इति वक्तुं न शक्नुमः।
८ तदा यीशुरवदत् तर्हि कयाज्ञया कर्म्माण्येतानि करोमीति
च युष्मान् न वक्ष्यामि।

९ अथ लोकानां साक्षात् स इमां दृष्टान्तकथां वक्तुमारेभे,
कश्चिद् द्राक्षाक्षेत्रं कृत्वा तत् क्षेत्रं कृषीवलानां हस्तेषु समर्प्य

बहुकालार्थं दूरदेशं जगाम। अथ फलकाले फलानि ग्रहीतुं १०
कृषीबलानां समीपे दासं प्राहिणोत् किन्तु कृषीबलास्तं प्रहृत्य
रिक्तहस्तं विससर्जुः। ततः सोधिपतिः पुनरन्यं दासं प्रेषया- ११
मास, ते तमपि प्रहृत्य कुव्यवहृत्य रिक्तहस्तं विससृजुः। ततः १२
स तृतीयवारम् अन्यं प्राहिणोत् ते तमपि क्षताङ्गं कृत्वा बहि
र्निचिक्षिपुः। तदा क्षेत्रपति र्विचारयामास, ममेदानीं किं १३
कर्त्तव्यं? मम प्रिये पुत्रे प्रहिते ते तमवश्यं दृष्ट्वा समादरिष्यन्ते।
किन्तु कृषीबलास्तं निरीक्ष्य परस्परं विविच्य प्रोचुः, अयमु- १४
त्तराधिकारी आगच्छतैनं हन्मस्ततोधिकारोस्माकं भविष्यति।
ततस्ते तं क्षेत्राद् बहि र्निपात्य जघ्नुस्तस्मात् स क्षेत्रपतिस्तान् १५
प्रति किं करिष्यति? स आगत्य तान् कृषीबलान् हत्वा परेषां १६
हस्तेषु तत्क्षेत्रं समर्पयिष्यति; इति कथां श्रुत्वा तेऽवदन् एता-
दृशी घटना न भवतु। किन्तु यीशुस्तानवलोक्य जगाद, तर्हि, १७

स्थपतयः करिष्यन्ति ग्रावाणं यन्तु तुच्छकं।
प्रधानप्रस्तरः कोणे स एव हि भविष्यति।

एतस्य शास्त्रीयवचनस्य किं तात्पर्य्यं? अपरं तत्पाषाणोपरि १८
यः पतिष्यति स भंक्ष्यते किन्तु यस्योपरि स पाषाणः पतिष्यति
स तेन धूलिवच् चूर्णीभविष्यति।

सोस्माकं विरुद्धं दृष्टान्तमिमं कथितवान् इति ज्ञात्वा १९
प्रधानयाजका अध्यापकाश्च तदैव तं धर्त्तुं ववाञ्छुः किन्तु
लोकेभ्यो बिभ्युः। अतएव तं प्रति सतर्काः सन्तः कथं तद्वाक्य- २०
दोषं धृत्वा तं देशाधिपस्य हस्ते शासने च समर्पयितुं शक्नुवन्ति,
एतदर्थं कतिपयान् साधुवेशधारिणश्चरान् तस्य समीपे प्रेषया-
मासुः। तदा ते तं पप्रच्छुः, हे उपदेशक भवान् यथार्थं कथयन् २१

उपदिशति, कमप्यनपेक्ष्य सत्यत्वेनैश्वरं मार्गमुपदिशति, वयमे-
२२ तज्जानीमः। कैसरराजाय करोऽस्माभि र्देयो न वा? स तेषां
२३ वञ्चनं ज्ञात्वावदत् कुतो मां परीक्षध्वे? मां मुद्रामेकां
२४ दर्शयत। इह लिखिता मूर्त्तिरियं नाम च कस्य? तेऽवदन्
२५ कैसरस्य। तदा स उवाच, तर्हि कैसरस्य द्रव्यं कैसराय दत्त;
२६ ईश्वरस्य तु द्रव्यमीश्वराय दत्त। तस्माल्लोकानां साक्षात् तत्-
कथायाः कमपि दोषं धर्तुमप्राप्य ते तस्योत्तराद् आश्चर्य्यं
मन्यमाना मौनिनस्तस्थुः।

२७ अपरञ्च श्मशानादुत्थानानङ्गीकारिणां सिदूकिनां कियन्तो
२८ जना आगत्य तं पप्रच्छुः, हे उपदेशक शास्त्रे मूसा अस्मान्
प्रतीति लिलेख यस्य भ्राता भार्य्यायां सत्यां निःसन्तानो म्रियते
२९ स तज्जायां विवह्य तद्वंशम् उत्पादयिष्यति। तथाच केचित्
सप्त भ्रातर आसन् तेषां ज्येष्ठो भ्राता विवह्य निरपत्यः प्राणान्
३० जहौ। अथ द्वितीयस्तस्य जायां विवह्य निरपत्यः सन् ममार।
३१ तृतीयश्च तामेव व्यवाह; इत्थं सप्त भ्रातरस्तामेव विवह्य
३२ निरपत्याः सन्तो ममुः। शेषे सा स्त्री च ममार। अतएव
श्मशानादुत्थानकाले तेषां सप्तजनानां कस्य सा भार्य्या भवि-
३४ ष्यति? यतः सा तेषां सप्तानामेव भार्य्यासीत्। तदा यीशुः
प्रत्युवाच, एतस्य जगतो लोका विवहन्ति वाग्दत्ताश्च भवन्ति
३५ किन्तु ये तज्जगत्प्राप्तियोग्यत्वेन गणिता भविष्यन्ति श्मशाना-
३६ च्चोत्थास्यन्ति ते न विवहन्ति वाग्दत्ताश्च न भवन्ति, ते पुन र्न
म्रियन्ते किन्तु श्मशानादुत्थापिताः सन्त ईश्वरस्य सन्तानाः
३७ स्वर्गीयदूतानां सदृशाश्च भवन्ति। अधिकन्तु मूसाः स्तम्बोपा-
ख्याने परमेश्वर ईब्राहीम ईश्वर इस्हाक ईश्वरो याकूबश्चेश्वर

इत्युक्त्वा मृतानां श्मशानाद् उत्थानस्य प्रमाणं लिलेख। अतएव ३८ य ईश्वरः स मृतानां प्रभु र्न किन्तु जीवतामेव प्रभुः, तन्निकटे सर्व्वे जीवन्तः सन्ति। इति श्रुत्वा कियन्तोध्यापका ऊचुः, हे ३९ उपदेशक भवान् भद्रं प्रत्युक्तवान्। इतः परं तं किमपि प्रष्टुं ४० तेषां प्रगल्भता नाभूत्।

पश्चात् स तान् उवाच, यः ख्रीष्टः स दायूदः सन्तान ४१ एतां कथां लोकाः कथं कथयन्ति? यतः

मम प्रभुमिदं वाक्यमवदत् परमेश्वरः। ४२
तव शत्रूनहं यावत् पादपीठं करोमि न। ४३
तावत् कालं मदीये त्वं दक्षपार्श्व उपाविश।

इति कथां दायूद् स्वयं गीतग्रन्थेऽवदत्। अतएव यदि दायूद् ४४ तं प्रभुं वदति, तर्हि स कथं तस्य सन्तानो भवति?

पश्चाद् यीशुः सर्व्वजनानां कर्णगोचरे शिष्यानुवाच, येऽध्या- ४५ पका दीर्घपरिच्छदं परिधाय भ्रमन्ति, हट्टापणयो र्नमस्कारे ४६ भजनगेहस्य प्रोच्चासने भोजनगृहस्य प्रधानस्थाने च प्रीयन्ते विधवानां सर्व्वस्वं ग्रसित्वा छलेन दीर्घकालं प्रार्थयन्ते च तेषु ४७ सावधाना भवत, तेषामुग्रदण्डो भविष्यति।

---

## २१ एकविंशोऽध्यायः।

१ विधवाया दानकथनं ५ मन्दिरविनाशे भविष्यद्वाक्यं १० शिष्याणां दुःखे भविष्यद्वाक्यं २० लोकानां दुःखे भविष्यद्वाक्यं २९ उडुम्बरवृक्षस्य दृष्टान्त उपदेशस्य ३७ ख्रीष्टस्य यातायातकथा च।

अथ धनिलोका भाण्डागारे धनं निक्षिपन्ति स तदेव १ पश्यति, एतर्हि काचिद्दीना विधवा पणद्वयं निक्षिपति तद् २ ददर्श। ततो यीशुरुवाच युष्मानहं यथार्थं वदामि, दरिद्रेयं ३

४ विधवा सर्व्वेभ्योधिकं न्यचेप्सीत्, यतोन्ये स्वप्राज्यधनेभ्य ईश्वराय किञ्चित् न्यचेप्सुः, किन्तु दरिद्रेयं विधवा दिनयापनार्थं स्वस्य यत् किञ्चित् स्थितं तत् सर्व्वं न्यचेप्सीत्।

५ अपरञ्च उत्तमप्रस्तरैरुत्सृष्टद्रव्यैश्च मन्दिरं सुशोभतेतरां ६ कैश्चिदित्युक्ते स प्रत्युवाच यूयं यदिदं निचयनं पश्यथ, अस्य पाषाणैकोप्यन्यपाषाणोपरि न स्थास्यति, सर्व्वे भूसाद्भविष्यन्ति ७ कालोयमायाति। तदा ते पप्रच्छुः, हे गुरो घटनेदृशी कदा ८ भविष्यति? घटनाया एतस्याश्चिह्नं वा किं भविष्यति? तदा स जगाद, सावधाना भवत यथा युष्माकं भ्रमं कोपि न जनयति, खीष्टोहमित्युक्त्वा मम नाम्ना बहव उपस्थास्यन्ति स कालः ९ प्रायेणोपस्थितः, तेषां पश्चान्मा गच्छत। युद्धस्योपप्लवस्य च वार्त्तां श्रुत्वा मा शङ्कध्वं, यतः प्रथमम् एता घटना अवश्यं भविष्यन्ति किन्तु नापाते युगान्तो भविष्यति।

१० अपरञ्च कथयामास, तदा देशस्य विपक्षत्वेन देशो राज्यस्य ११ विपक्षत्वेन राज्यम् उत्थास्यति, नानास्थानेषु महाभूकम्पो दुर्भिक्षं मारी च भविष्यन्ति, तथा व्योममण्डलस्य भयङ्कर-१२ दर्शनान्याश्चर्य्यलक्षणानि च प्रकाशयिष्यन्ते। किन्तु सर्व्वासामेतासां घटनानां पूर्व्वं लोका युष्मान् धृत्वा ताडयिष्यन्ति, भजनालये कारायाञ्च समर्पयिष्यन्ति मम नामकारणाद् १३ युष्मान् भूपानां शासकानाञ्च सम्मुखं नेष्यन्ति च। साक्ष्यार्थम् १४ एतानि युष्मान् प्रति घटिष्यन्ते। तदा किमुत्तरं वक्तव्यम् एतत् १५ न चिन्तयिष्याम इति मनःसु निश्चिनुत। विपक्षा यस्मात् किमप्युत्तरम् आपत्तिञ्च कर्त्तुं न शक्ष्यन्ति तादृशं वाक्पटुत्वं १६ ज्ञानञ्च युष्मभ्यं दास्यामि। किञ्च यूयं पित्रा मात्रा भ्रात्रा

बन्धुना ज्ञात्या कुटुम्बेन च परकरेषु समर्पयिष्यध्वे; ततस्ते युष्माकं कञ्चन कञ्चन घातयिष्यन्ति। मम नाम्नः कारणात् १७ सर्व्वै र्मनुष्यै र्यूयम् ऋतीयिष्यध्वे। किन्तु युष्माकं शिरःकेशैकोपि १८ न विनंक्ष्यति, तस्मादेव धैर्य्यमवलम्ब्य स्वस्वप्राणान् रक्षत। १९

अपरञ्च यिरूशालम्पुरं सैन्यवेष्टितं विलोक्य तस्योच्छि- २० न्नतायाः समयः समीप इत्यवगमिष्यथ। तदा यिहूदादेशस्था २१ लोकाः पर्व्वतं पलायन्तां, ये च नगरे तिष्ठन्ति ते देशान्तरं पलायन्तां, ये च ग्रामे तिष्ठन्ति ते नगरं न प्रविशन्तु, यतस्तदा २२ समुचितदण्डनाय धर्म्मपुस्तके यानि सर्व्वाणि लिखितानि तानि सफलानि भविष्यन्ति। किन्तु या यास्तदा गर्भवत्यः स्तन्यदा- २३ श्च तासां दुर्गति र्भविष्यति, यत एताल्लोकान् प्रति कोपो देशे च विषमदुर्गति र्घटिष्यते। वस्तुतस्तु ते खड्गधारपरिव्वङ्गं २४ लप्स्यन्ते बद्धाः सन्तः सर्व्वदेशेषु नायिष्यन्ते च किञ्चान्यदेशी- यानां समयोपस्थितिपर्य्यन्तं यिरूशालम्पुरं तैः पदतलै र्दल- यिष्यते। सूर्य्यचन्द्रनक्षत्रेषु लक्षणादि भविष्यति, भुवि सर्व्व- २५ देशीयानां दुःखं चिन्ता च सिन्धौ वीचीनां तर्जनं गर्जनञ्च भविष्यति। भूमौ भाविघटनां चिन्तयित्वा मनुजा भिया २६ मृतकल्पा भविष्यन्ति; यतो व्योममण्डले तेजस्विनो दोलाय- माना भविष्यन्ति। तदा पराक्रमेण महातेजसा च मेघारूढं २७ मनुष्यपुत्रम् आयान्तं द्रक्ष्यन्ति। किन्त्वेतासां घटनानामारम्भे २८ सति यूयं मस्तकान्युत्तोल्य ऊर्द्ध्वं द्रक्ष्यथ, यतो युष्माकं मुक्तेः कालः सविधो भविष्यति।

ततस्तेनैतद्दृष्टान्तकथा कथिता, पश्यत उडुम्बरादिवृक्षाणां २९ नवीनपत्राणि जातानीति दृष्ट्वा निदाघकाल उपस्थित इति ३०

३१ यथा यूयं ज्ञातुं शक्नुथ, तथा सर्व्वासामासां घटनानाम् आरम्भे
३२ दृष्टे सतीश्वरस्य राजत्वं निकटम् इत्यपि ज्ञास्यथ। युष्मानहं
यथार्थं वदामि, विद्यमानलोकानामेषां गमनात् पूर्व्वम् एतानि
३३ घटिष्यन्ते। नभोभुवोर्लोपो भविष्यति मम वाक् तु कदापि लुप्ता
३४ न भविष्यति । अतएव विषमाशनेन पानेन च सांसारिक-
चिन्ताभिश्च युष्माकं चित्तेषु मत्तेषु तद्दिनम् अकस्माद् युष्मान्
३५ प्रति यथा नोपतिष्ठति तदर्थं स्वेषु सावधानास्तिष्ठत। पृथि-
वीस्थसर्व्वलोकान् प्रति तद्दिनम् उन्माथ इव उपस्थास्यति।
३६ यथा यूयम् एतद्भाविघटना उत्तर्त्तुं मनुजसुतस्य सम्मुखे संस्था-
तुञ्च योग्या भवथ कारणादस्मात् सावधानाः सन्तो निरन्तरं
प्रार्थयध्वं ।

३७ अपरञ्च स दिवा मन्दिर उपदिश्य रात्रौ जैतुनाद्रिं गत्वा-
३८ तिष्ठत्। ततः प्रत्यूषे लोकास्तत्कथां श्रोतुं मन्दिरे तदन्तिकम्
आगच्छन्।

---

## २२ द्वाविंशोऽध्यायः ।

१ ख्रीष्टस्य विरुद्धकुमन्त्रणा ७ निस्तारोत्सवीयभोज्यासादनं १४ प्रभो रात्रिभोज्यनि-
रूपणं २१ तस्य परकरार्पकस्य कथा २४ नम्रत्वोपदेशः ३१ पितरस्यानङ्गीकार-
कथनं ३५ शिष्यान् प्रति प्रश्नः ३९ उद्याने ख्रीष्टस्य दुःखं ४७ यिहूदा विश्वास-
घातित्वं ५४ पितरस्यानङ्गीकारः ६३ ख्रीष्टं प्रत्युपहासः प्रहारश्च ६६ विचारे
स्वसाक्ष्यदानञ्च ।

१ अपरञ्च किण्वशून्यपूपोत्सवस्य काल उपस्थिते प्रधानयाजका
२ अध्यापकाश्च यथा तं हन्तुं शक्नुवन्ति तथोपायम् अचेष्टन्त
३ किन्तु लोकेभ्यो बिभ्युः। एतस्मिन् समये द्वादशशिष्येषु गणित
ईष्करियोतीयरूढिमान् यो यिहूदास्तस्यान्तःकरणं शैता-
४ नाश्रितत्वात् स गत्वा यथा यीशुं तेषां करेषु समर्पयितुं शक्नोति

तथा मन्त्रणां प्रधानयाजकैः सेनापतिभिश्च सह चकार। तेन ५ ते तुष्टास्तस्मै मुद्रां दातुं पणं चक्रुः। ततः सोऽङ्गीकृत्य यथा ६ लोकानामगोचरे तं परकरेषु समर्पयितुं शक्नोति तथावकाशं चेष्टितुमारेभे।

अथ किण्वशून्यपूपोत्सवदिने, अर्थात् यस्मिन् दिने निस्ता- ७ रोत्सवस्य मेषो हन्तव्यस्तस्मिन् दिने यीशुः पितरं योहनञ्चाहूय ८ जगाद, युवां गत्वास्माकं भोजनार्थं निस्तारोत्सवस्य द्रव्याण्या- सादयतं। तदा तौ पप्रच्छतुः कुत्रासादयावो भवतः केच्छा? ९ तदा सोवादीत्, नगरे प्रविष्टे कश्चिज्जलकुम्भमादाय युवां १० साक्षात् करिष्यति स यन्निवेशनं प्रविशति युवामपि तन्निवेशनं तत्पश्चादित्वा निवेशनपतिम् इति वाक्यं वदतं, यत्राहं निस्ता- ११ रोत्सवस्य भोज्यं शिष्यैः सार्द्धं भोक्तुं शक्नोमि सातिथिशाला कुत्र? कथामिमां प्रभुस्त्वां पृच्छति। ततः स जनो द्वितीय- १२ प्रकोष्ठीयम् एकं शस्तं कोष्ठं दर्शयिष्यति तत्र भोज्यमासादयतं। ततस्तौ गत्वा तद्वाक्यानुसारेण सर्व्वं दृष्ट्वा तत्र निस्तारोत्सवीयं १३ भोज्यमासादयामासतुः।

अथ काल उपस्थिते यीशु र्द्वादशभिः प्रेरितैः सह भोक्तुम्- १४ पविश्य कथितवान् मम दुःखभोगात् पूर्व्वं युष्माभिः सह निस्ता- १५ रोत्सवस्यैतस्य भोज्यं भोक्तुं मयातिवाञ्छा कृता। युष्मान् १६ वदामि, यावत्कालम् ईश्वरराज्ये भोजनं न करिष्ये तावत्का- लम् इदं न भोक्ष्ये। तदा स पानपात्रमादाय ईश्वरस्य गुणान् १७ कीर्त्तयित्वा तेभ्यो दत्त्वावदत्, इदं गृह्णीत यूयं विभज्य पिवत। युष्मान् वदामि यावत्कालम् ईश्वरराजत्वस्य संस्थापनं न भवति १८ तावद् द्राक्षाफलरसं न पास्यामि। ततः पूपं गृहीत्वा ईश्वर- १९

गुणान् कीर्त्तयित्वा भङ्क्त्वा तेभ्यो दत्त्वावदत्, युष्मदर्थं समर्पितं
२० यन्मम वपुस्तदिदं, एतत् कर्म्म मम स्मरणार्थं कुरुध्वं । अथ
भोजनान्ते तादृशं पात्रं गृहीत्वावदत्, युष्मत्कृते पातितं यन्मम
रक्तं तेन निर्णीतनवनियमरूपं पानपात्रमिदं ।

२१　पश्यत यो मां परकरेषु समर्पयिष्यति स मया सह भोज-
२२ नासन उपविशति । यथा निरूपितमास्ते तदनुसारेण मनुष्य-
पुत्त्रस्य गति र्भविष्यति किन्तु यस्तं परकरेषु समर्पयिष्यति तस्य
२३ सन्तापो भविष्यति । तदा तेषां को जन एतत् कर्म्म करिष्यति
तत् ते परस्परं प्रष्टुमारेभिरे ।

२४　अपरं तेषां को जनः श्रेष्ठत्वेन गणयिष्यते, अत्रार्थे तेषां
२५ विवादोभवत् । अस्मात् कारणात् सोवदत्, अन्यदेशीयानां
राजानः प्रजानामुपरि प्रभुत्वं कुर्व्वन्ति दारुणशासनं कृत्वापि ते
२६ भूपतित्वेन विख्याता भवन्ति च । किन्तु युष्माकं तथा न भविष्यति,
यो युष्माकं श्रेष्ठो भविष्यति स कनिष्ठवद् भवतु, यश्च मुख्यो
२७ भविष्यति स सेवकवद्भवतु । भोजनोपविष्टपरिचारकयोः कः
श्रेष्ठः? यो भोजनायोपविशति स किं श्रेष्ठो न भवति? किन्तु
२८ युष्माकं मध्येऽहं परिचारकइवास्मि। अपरञ्च यूयं मम परीक्षा-
२९ काले प्रथममारभ्य मया सह स्थिता एतत्कारणात् पित्रा यथा
मदर्थं राज्यमेकं निरूपितं तथाहमपि युष्मदर्थं राज्यं निरूप-
३० यामि । तस्मान् मम राज्ये भोजनासने च भोजनपाने
करिष्यध्वे सिंहासनेषूपविश्य चेस्रायेलीयानां द्वादशवंशानां
विचारं करिष्यध्वे ।

३१　अपरं प्रभुरुवाच, हे शिमोन् शिमोन् पश्य तितउना धान्या-
३२ नीव युष्मान् शैतान् चालयितुम् ऐच्छत्, किन्तु तव विश्वासस्य

लोपो यथा न भवति एतत् त्वदर्थं प्रार्थितं मया, त्वन्मनसि परिवर्त्तिते च भ्रातृणां मनांसि स्थिरीकुरु। तदा सोवदत्, हे ३३ प्रभोहं त्वया सार्द्धं कारां मृतिञ्च यातुं सज्जितोस्मि। ततः ३४ स उवाच, हे पितर त्वां वदामि, अद्य कुक्कुटरवात् पूर्व्वं त्वं मत्परिचयं वारत्रयम् अपह्नोष्यसे।

अपरं स पप्रच्छ, यदा मुद्रासम्पुटं खाद्यपात्रं पादु- ३५ काञ्च विना युष्मान् प्राहिण्वं तदा युष्माकं कस्यापि न्यूनतासीत्? ते प्रोचुः कस्यापि न। तदा सोवदत् किन्त्विदानीं ३६ मुद्रासम्पुटं खाद्यपात्रं वा यस्यास्ति तेन तद्ग्रहीतव्यं, यस्य च कृपाणो नास्ति तेन स्ववस्त्रं विक्रीय स क्रेतव्यः। यतो युष्मानहं ३७ वदामि,

अपराधिजनैः सार्द्धं गणितः स भविष्यति।

इदं यच्छास्त्रीयं वचनं लिखितमस्ति तन्मयि फलिष्यति यतो मम सम्बन्धीयं सर्व्वं सेत्स्यति। तदा ते प्रोचुः प्रभो पश्य इमौ ३८ कृपाणौ। ततः सोवदद् एतौ यथेष्टौ।

अथ स तस्माद्बहि र्गत्वा स्वाचारानुसारेण जैतुननामाद्रिं ३९ जगाम शिष्याश्च तत्पश्चाद् ययुः। तत्रोपस्थाय स तानुवाच, ४० यथा परीक्षायां न पतथ तदर्थं प्रार्थयध्वं। पश्चात् स तस्माद् ४१ एकशरक्षेपाद् बहि र्गत्वा जानुनी पातयित्वा एतत् प्रार्थयाञ्चक्रे, हे पित र्यदि भवान् सम्मन्यते तर्हि कंसमेनं ममान्तिकाद् ४२ दूरय किन्तु मदिच्छानुरूपं न त्वदिच्छानुरूपं भवतु। तदा ४३ तस्मै शक्तिं दातुं स्वर्गीयदूतो दर्शनं ददौ। पश्चात् सोत्यन्तं ४४ यातनया व्याकुलो भूत्वा पुनर्दृढं प्रार्थयाञ्चक्रे, तस्माद् बृहच्छो- णितबिन्दव इव तस्य स्वेदबिन्दवः पृथिव्यां पतितुमारेभिरे।

४५ अथ प्रार्थनात उत्थाय शिष्याणां समीपमेत्य तान् मनोदुःखिनो
४६ निद्रितान् दृष्ट्वावदत् कुतो निद्राथ? उत्तिष्ठत परीक्षायाम्
अपतनार्थं प्रार्थयध्वं।

४७ एतत्कथायाः कथनकाले द्वादशशिष्याणां मध्ये गणितो
यिहूदानामा जनतासहितस्तेषाम् अग्रे चलित्वा यीशुश्चुम्ब-
४८ नार्थं तदन्तिकम् आययौ। तदा यीशुरुवाच, हे यिहूदा किं
४९ चुम्बनेन मनुष्यपुत्रं परकरेषु समर्पयसि? तदा यद्यद् घटि-
ष्यते तदनुमाय सङ्गिभिरुक्तं, हे प्रभो वयं किं खड्गेन घातयि-
५० ष्यामः? तत एकः करवालेनाहत्य प्रधानयाजकस्य दासस्य
५१ दक्षिणं कर्णं चिच्छेद। अधुना निवर्त्तस्व इत्युक्त्वा यीशुस्तस्य
५२ श्रुतिं स्पृष्ट्वा स्वस्थं चकार। पश्चाद् यीशुः समीपस्थान्
प्रधानयाजकान् मन्दिरस्य सेनापतीन् प्राचीनांश्च जगाद,
यूयं कृपाणान् यष्टींश्च गृहीत्वा मां किं चोरं धर्त्तुमा-
५३ याताः? यदाहं युष्माभिः सह प्रतिदिनं मन्दिरेऽतिष्ठं
तदा मां धर्त्तुं न प्रवृत्ताः, किन्त्विदानीं युष्माकं समयोऽन्ध-
कारस्य चाधिपत्यमस्ति।

५४ अथ ते तं धृत्वा महायाजकस्य निवेशनं निन्युः। ततः
५५ पितरो दूरे दूरे पश्चादित्वा वृहत्कोष्ठस्य मध्ये यत्राग्निं ज्वाल-
५६ यित्वा लोकाः समेत्योपविष्टास्तत्र तैः सार्द्धम् उपविवेश। अथ
वह्निसन्निधौ समुपवेशकाले काचिद्दासी मनो निविश्य तं
५७ निरीक्ष्यावदत् पुमानयं तस्य सङ्गेऽस्थात्। किन्तु स तद् अप-
५८ ह्नुत्यावादीत् हे नारि तमहं न परिचिनोमि। क्षणान्तरे-
ऽन्यजनस्तं दृष्ट्वाब्रवीत् त्वमपि तेषां निकरस्यैकजनोसि। पितरः
५९ प्रत्युवाच हे नर नाहमस्मि। ततः सार्द्धदण्डद्वयात् परं पुनरन्यो

जनो निश्चित्य बभाषे, एष तस्य सङ्गीति सत्यं यतोयं गाली-
लीयो लोकः। तदा पितर उवाच हे नर त्वं यद् वदसि ६०
तदहं बोद्धुं न शक्नोमि, इति वाक्ये कथितमात्रे कुक्कुटो रुराव।
तदा प्रभुणा व्याघुट्य पितरे निरीक्षिते कृकवाकुरवात् पूर्व्वं ६१
मां त्रिरपह्नोष्यसे इति पूर्व्वोक्तं तस्य वाक्यं पितरः स्मृत्वा बहि ६२
र्गत्वा महाखेदेन चक्रन्द।

तदा ये यीशुंधृतवन्तस्ते तमुपहस्य प्रहर्त्तुमारेभिरे। वस्त्रेण ६३
तस्य दृशौ बद्ध्वा कपोले चपेटाघातं कृत्वा पप्रच्छुः, कस्ते कपोले ६४
चपेटाघातं कृतवान्? गणयित्वा तद् वद। तदन्यत् तद्विरुद्धं ६५
बहुनिन्दावाक्यं वक्तुमारेभिरे।

अथ प्रभाते सति लोकप्राचः प्रधानयाजका अध्यापकाश्च ६६
सभां कृत्वा मध्येसभं यीशुमानीय पप्रच्छुः, त्वम् अभिषिक्तोसि ६७
न वास्मान् वद। स प्रत्युवाच, मया तस्मिन्नुक्तेऽपि यूयं न
विश्वसिष्यथ। कस्मिंश्चिद्वाक्ये युष्मान् पृष्टेऽपि मां न तदुत्तरं ६८
वक्ष्यथ न मां त्यक्ष्यथ च। किन्त्वितः परं मनुजसुतः सर्व्व- ६९
शक्तिमत ईश्वरस्य दक्षिणे पार्श्वे समुपवेक्ष्यति। ततस्ते पप्रच्छुः, ७०
तर्हि त्वमीश्वरस्य पुत्त्रः? स कथयामास, यूयं यथार्थं वदथ
स एवाहं। तदा ते सर्व्वे कथयामासुः, तर्हि साक्ष्येऽन्यस्मिन् ७१
अस्माकं किं प्रयोजनं? अस्य स्वमुखादेव साक्ष्यं प्राप्तम्।

---

## २३ त्रयोविंशोऽध्यायः।

१ पीलातस्य हेरोदस्य समीपे खीष्टस्य नयनं १२ पीलातस्य विचारो दण्डाज्ञा च २६ विलापिन्यः स्त्रियः प्रति खीष्टस्य कथा ३२ खीष्टस्य क्रुशे वेधनमुपहासश्च ३९ क्रुशे विद्धस्तेनयोः कथा च ४४ खीष्टस्य निधनं ५० तस्य श्मशाने स्थापनञ्च।

ततः सभास्थाः सर्व्वलोका उत्थाय तं पीलातसम्मुखं नीत्वा- १

२ प्रोच्य वक्तुमारेभिरे, खमभिषिक्तं राजानं वदन्तं कैसरराजाय करदानं निषेधन्तं राज्यविपर्य्ययं कर्त्तुं प्रवर्त्तमानम् एन
३ प्राप्ता वयं। तदा पीलातस्तं पृष्टवान् त्वं किं यिहूदीयानां
४ राजा? स प्रत्युवाच त्वं सत्यमुक्तवान्। तदा पीलातः प्रधानयाजकादिलोकान् जगाद, अहमेतस्य कमप्यपराधं नाप्त-
५ वान्। ततस्ते पुनः साहसिनो भूत्वावदन्, एष गालील एतत्स्थानपर्य्यन्ते सर्व्वस्मिन् यिहूदादेशे सर्व्वाल्लोकानुपदिश्य कुप्र-
६ वृत्तिं ग्राहीतवान्। तदा पीलातो गालीलप्रदेशस्य नाम
७ श्रुत्वा पप्रच्छ, किमयं गालीलीयो लोकः? ततः स गालील्प्रदेशीयहेरोद्राजाधिकारस्य लोक इति पीलातोऽवगत्य यिरूशालम्पुरे हेरोद्राजस्य तदा स्थितेस्तस्य समीपे यीशुं
८ प्रेषयामास। तदा हेरोद् यीशुं विलोक्य सन्तुतोष, यतः स तस्य बहुवृत्तान्तश्रवणात् तस्य किञ्चिदाश्चर्य्यकर्म्म पश्यति
९ इत्याशां कृत्वा बहुकालमारभ्य तं द्रष्टुं प्रयासं कृतवान्। तस्मात् तं बहुकथाः पप्रच्छ किन्तु स तस्य कस्यापि वाक्यस्य प्रत्युत्तरं
१० नोवाच। अथ प्रधानयाजका अध्यापकाश्च प्रोत्तिष्ठन्तः साह-
११ सेन तमपवदितुं प्रारेभिरे। हेरोद् तस्य सेनागणश्च तमवज्ञाय उपहासत्वेन राजवस्त्रं परिधाप्य पुनः पीलातं प्रति तं
१२ प्राहिणोत्। पूर्व्वं हेरोद्पीलातयोः परस्परं वैरभाव आसीत् किन्तु तद्दिने द्वयो र्मेलनं जातम्।

१३ पश्चात् पीलातः प्रधानयाजकान् शासकान् लोकांश्च
१४ युगपदाहूय बभाषे, राज्यविपर्य्ययकारकोयम् इत्युक्त्वा मनुष्यमेनं मम निकटमानैष्ट किन्तु पश्यत युष्माकं समक्षम् अस्य विचारं कृत्वापि प्रोक्तापवादानुरूपेणास्य कोप्यपराधः सप्रमाणो

न जातः, यूयञ्च हेरोदः सन्निधौ प्रेषिता मया तत्रास्य १५ कोप्यपराधस्तेनापि न प्राप्तः। पश्यतानेन बधहेतुकं किमपि १६ नापराद्धं। तस्मादेनं ताडयित्वा विहास्यामि। तत्रोत्सवे १७ तेषामेको मोचयितव्यः। इति हेतोस्ते प्रोच्चैरेकदा प्रोचुः, १८ एनं दूरीकृत्य बरब्बानामानं मोचय। स बरब्बा नगर १९ उपप्लवबधापराधाभ्यां कारायां बद्ध आसीत्। किन्तु पीलातो २० यीशुं मोचयितुं वाञ्छन् पुनस्तानुवाच। तथाप्येनं क्रुशे व्यध २१ क्रुशे व्यधेति वदन्तस्ते रुरुवुः। ततः स तृतीयवारं जगाद २२ कुतः? स किं कर्म्म कृतवान्? नाहमस्य कमपि बधापराधं प्राप्तः केवलं ताडयित्वामुं त्यजामि। तथापि ते पुनरेनं क्रुशे २३ व्यध इत्युक्त्वा प्रोच्चैर्दृढं प्रार्थयाञ्चक्रिरे; ततः प्रधानयाज-कादीनां कलरवे प्रबले सति तेषां प्रार्थनारूपं कर्त्तुं २४ पीलात आदिदेश। राजद्रोहबधयोरपराधेन कारास्थं यं २५ जनं ते ययाचिरे तं मोचयित्वा यीशुं तेषामिच्छायां समार्पयत्।

अथ ते यीशुं गृहीत्वा यान्ति, एतर्हि ग्रामादागतं शिमो- २६ ननामानं कुरीणीयं जनं धृत्वा यीशोः पश्चान्नेतुं तस्य स्कन्धे क्रुशमर्पयामासुः। ततो लोकारण्यमध्ये बहुस्त्रियो रुदत्यो २७ विलपन्त्यश्च यीशोः पश्चाद् ययुः। किन्तु स व्याघुट्य ता उवाच, २८ हे यिरूशालमो नार्य्यो यूयं मदर्थं न रुदित्वा स्वार्थं स्वाप-त्यार्थञ्च रुदित; पश्यत याः कदापि गर्भवत्यो नाभवन् २९ स्तन्यञ्च नापाययन् तादृशी र्बन्ध्या यदा धन्या वक्ष्यन्ति स काल आयाति। तदा हे शैला अस्माकमुपरि पतत, हे उपशैला ३० अस्मानाच्छादयत कथामीदृशीं लोका वक्ष्यन्ति। यतः सतेजसि ३१

शाखिनि चेदेतद् घटते तर्हि शुष्कशाखिनि किं न घटिष्यते?
३२ तदा ते हन्तुं द्वावपराधिनौ तेन सार्द्धं निन्युः ।

३३ अपरं शिरःकपालनामकस्थानं प्राप्य तं क्रुशे विविधुः ; तद्द्वयोरपराधिनोरेकं तस्य दक्षिणे तदन्यं वामे क्रुशे विविधुः ।
३४ तदा यीशुरकथयत्, हे पितरेतान् क्षमस्व यत एते यत् कर्म्म कुर्व्वन्ति तन् न विदुः; पश्चात्ते गुटिकापातं कृत्वा तस्य
३५ वस्त्राणि विभज्य जगृहुः । तत्र लोकसंघस्तिष्ठन् ददर्श; ते तेषां शासकाश्च तमुपहस्य जगदुः, एष इतरान् रक्षितवान् यदीश्वरेणाभिरुचितो ऽभिषिक्तस्त्राता भवति तर्हि स्वमधुना
३६ रक्षतु । तदन्यः सेनागण एत्य तस्मै अम्लरसं दत्त्वा परिहस्य
३७ प्रोवाच, चेत्त्वं यिहूदीयानां राजासि तर्हि स्वं रक्ष । यिहूदी-
३८ यानां राजेति वाक्यं यूनानीयरोमीयेब्रीयाक्षरै र्लिखितं तच्छिरस ऊर्द्ध्वेऽस्थाप्यत ।

३९ तदोभयपार्श्वयो र्विद्धौ यावपराधिनौ तयोरेकस्तं विनिन्द्य
४० बभाषे, चेत्त्वम् अभिषिक्तोसि तर्हि स्वमावाञ्च रक्ष । किन्त्वन्यस्तं तर्जयित्वावदत्, ईश्वरात्तव किञ्चिदपि भयं नास्ति किं ? त्वमपि
४१ समानदण्डोसि, योग्यपात्रे आवां स्वस्वकर्म्मणां समुचितफलं
४२ प्राप्नुवः किन्त्वनेन किमपि नापराद्धं । अथ स यीशुं जगाद
४३ हे प्रभो भवान् स्वराज्यप्रवेशकाले मां स्मरतु । तदा यीशुः कथितवान् त्वां यथार्थं वदामि त्वमद्यैव मया सार्द्धं परलोकस्य सुखस्थानं प्राप्स्यसि ।

४४ अपरञ्च द्वितीययामात् तृतीययामपर्य्यन्तं रवेस्तेजसोन्तर्हि-
४५ तत्वात् सर्व्वदेशोऽन्धकारेणावृतो मन्दिरस्य यवनिका च
४६ छिद्यमाना द्विधा बभूव । ततो यीशुरुच्चैरुवाच, हे पित र्ममा-

त्मानं तव करे समर्पये, इत्युक्त्वा स प्राणान् जहौ। तदैता ४७
घटना दृष्ट्वा शतसेनापतिरीश्वरं धन्यमुक्त्वा कथितवान् अयं
नितान्तं साधुमनुष्य आसीत्। अथ यावन्तो लोका द्रष्टुम् ४८
आगतास्ते ता घटना दृष्ट्वा वक्षःसु कराघातं कृत्वा व्याघुट्य
गताः। यीशो र्ज्ञातयो या या योषितश्च गालीलस्तेन सार्द्ध- ४९
मायातास्ता अपि दूरे स्थित्वा तत् सर्व्वं ददृशुः।

तदा यिहूदीयानां मन्त्रणां क्रियाञ्चासम्मन्यमान ईश्वरस्य ५०
राजत्वम् अपेक्षमाणो यिहूदिदेशीयो ऽरिमथीयनगरीयो ५१
यूषफ्नामा मन्त्री भद्रो धार्म्मिकश्च पुमान् पीलातान्तिकं ५२
गत्वा यीशो र्देहं ययाचे। पश्चाद् वपुरवरोह्य वाससा संवेष्ट्य ५३
यत्र कोपि मानुषो नास्थाप्यत तस्मिन् शैले खाते श्मशाने तद्-
स्थापयत्। तद्दिनमायोजनीयं दिनं विश्रामवारश्च समीपः। ५४
अपरं यीशुना सार्द्धं गालील आगता योषितः पश्चादित्वा ५५
श्मशाने तत्र यथा वपुः स्थापितं तच्च दृष्ट्वा व्याघुट्य सुगन्धि- ५६
द्रव्यतैलानि कृत्वा विधिवद् विश्रामवारे विश्रामं चक्रुः।

---

## २४ चतुर्विंशोऽध्यायः।

१ स्वर्गीयदूताभ्यां ख्रीष्टस्य श्मशानोत्थानप्रकाशः ९ स्त्रीभिः शिष्येभ्यस्तदुत्थानवार्त्ता-
कथनं १३ इम्मायुनगरगामिभ्यां शिष्याभ्यां ख्रीष्टदर्शनं ताभ्यां सह कथनञ्च ३३
यिरूशालमे परावृत्य सर्व्वेभ्यो वार्त्ताकथनञ्च ३६ शिष्यैः ख्रीष्टस्य दर्शनं तेन
भोजनमुपदेशस्च ५० स्वर्गारोहणञ्च।

अथ सप्ताहप्रथमदिनेऽतिप्रत्यूषे ता योषितः सम्पादितं १
सुगन्धिद्रव्यं गृहीत्वा तदन्याभिः कियतीभिः स्त्रीभिः सह
श्मशानं ययुः। किन्तु श्मशानद्वारात् पाषाणमपसारितं दृष्ट्वा २
ताः प्रविश्य प्रभो र्देहमप्राप्य व्याकुला भवन्ति एतर्हि ३

४ तेजोमयवस्त्रान्वितौ द्वौ पुरुषौ तासां समीपे समुपस्थितौ
५ तस्मात्ताः शङ्कायुक्ता भूमावधोमुख्यस्तस्थुः । तदा तौ ता ऊचतु
६ र्मृतानां मध्ये जीवन्तं कुतो मृगयथ? सोत्र नास्ति स उद-
७ स्थात् । पापिनां करेषु समर्पितेन क्रुशे हतेन च मनुष्यपुत्त्रेण
तृतीयदिवसे श्मशानादुत्थातव्यम् इति कथां स गालीलि
८ तिष्ठन् युष्मभ्यं कथितवान् तां स्मरत । तदा तस्य सा कथा
तासां मनःसु जाता ।

९ अनन्तरं श्मशानाद् गत्वा ता एकादशशिष्यादिभ्यः सर्व्वे-
१० भ्यस्तां वार्त्तां कथयामासुः । मग्दलीनीमरियम्, योहना,
याकूबो माता मरियम् तदन्याः सङ्गिन्यो योषितश्च प्रेरितेभ्य
११ एताः सर्व्वा वार्त्ताः कथयामासुः किन्तु तासां कथाम् अनर्थ-
१२ काख्यानमात्रं बुद्ध्वा कोपि न प्रत्यैत् । तदा पितर उत्थाय
श्मशानान्तिकं दधाव, तत्र च प्रह्वो भूत्वा पार्श्वैकस्थापितं
केवलं वस्त्रं ददर्श; तस्मादाश्चर्य्यं मन्यमानो यदघटत तन्म-
नसि विचारयन् प्रतस्थे ।

१३ तस्मिन्नेव दिने द्वौ शिष्यौ यिरूशालमश्चतुष्क्रोशान्तरि-
१४ तम् इम्मायुग्रामं गच्छन्तौ तासां घटनानां कथामकथयतां
१५ तयोरालापविचारयोः काले यीशुरागत्य ताभ्यां सह जगाम
१६ किन्तु यथा तौ तं न परिचिनुतस्तदर्थं तयो र्दृष्टिः संरुद्धा ।
१७ स तौ पृष्टवान् युवां विषण्णौ किं विचारयन्तौ गच्छथः?
१८ ततस्तयोः क्लियपानामा प्रत्युवाच यिरूशालमपुरेऽधुना यान्य-
१९ घटन्त त्वं केवलविदेशी किं तद्वृत्तान्तं न जानासि? स
पप्रच्छ का घटनाः? तदा तौ वक्तुमारेभाते यीशुनामा यो
नासरतीयो भविष्यद्वादी ईश्वरस्य मानुषाणाञ्च साक्षात्

वाक्ये कर्म्मणि च शक्तिमानासीत् तम् अस्माकं प्रधानयाजका २०
विचारकाश्च केनापि प्रकारेण क्रुशे विद्धा तस्य प्राणाननाशयन् तदीया घटनाः; किन्तु य इस्रायेलीयलोकान् उद्धा- २१
रयिष्यति स एवायम् इत्याशास्माभिः कृता। तद्यथा तथास्तु
तस्या घटनाया अद्य दिनत्रयं गतं। अधिकन्त्वस्माकं २२
सङ्गिनीनां कियत्स्त्रीणां मुखेभ्योऽसम्भववाक्यमिदं श्रुतं; ताः
प्रत्यूषे श्मशानं गत्वा तत्र तस्य देहम् अप्राप्य व्याघुत्येत्वा २३
प्रोक्तवत्यः स्वर्गीयदूतौ दृष्टावस्माभिस्तौ चावादिष्टां स जीवितवान्। ततोस्माकं कैश्चित् श्मशानमगम्यत तेऽपि स्त्रीणां २४
वाक्यानुरूपं दृष्टवन्तः किन्तु तं नापश्यन्। तदा स तावुवाच, २५
हे अबोधौ हे भविष्यद्वादिभिरुक्तवाक्यं प्रत्येतुं विलम्बमानौ;
एतत्सर्व्वदुःखं भुक्त्वा स्वभूतिप्राप्तिः किं ख्रीष्टस्य न न्याय्या? २६
ततः स मूसाग्रन्थमारभ्य सर्व्वभविष्यद्वादिनां सर्व्वशास्त्रे स्वस्मिन् २७
लिखिताख्यानाभिप्रायं बोधयामास। अथ गम्यग्रामाभ्यर्णं २८
प्राप्य तेनाग्रे गमनलक्षणे दर्शिते तौ साधयित्वावदतां सहा- २९
वाभ्यां तिष्ठ दिने गते सति रात्रिरभूत्; ततः स ताभ्यां
सार्द्धं स्थातुं गृहं ययौ। पश्चाद्भोजनोपवेशकाले स पूपं ३०
गृहीत्वा ईश्वरगुणान् जगाद तञ्च भंक्त्वा ताभ्यां ददौ। तदा ३१
तयो र्दृष्टौ प्रसन्नायां तं प्रत्यभिजज्ञतुः किन्तु स तयोः साक्षादन्तर्दधे। ततस्तौ मिथोभिधातुम् आरब्धवन्तौ गमनकाले ३२
यदा कथामकथयत् शास्त्रार्थञ्चाबोधयत् तदावयो र्बुद्धिः किं
न प्राज्वलत्?

तौ तत्क्षणादुत्थाय यिरूशालमपुरं प्रत्याययतुः, तत्स्थाने ३३
शिष्याणाम् एकादशानां सङ्गिनाञ्च दर्शनं जातं। ते प्रोचुः ३४

३५ प्रभुरुदतिष्ठद् इति सत्यं शिमोने दर्शनमदाच्च । ततः पथः सर्व्वघटनायाः पूपभञ्जनेन तत्परिचयस्य च सर्व्ववृत्तान्तं तौ वक्तुमारेभाते ।

३६ इत्थं ते परस्परं वदन्ति तत्काले यीशुः स्वयं तेषां मध्य
३७ प्रोत्थाय युष्माकं कल्याणं भूयाद् इत्युवाच, किन्तु भूतं
३८ पश्याम इत्यनुमाय ते समुद्विविजिरे त्रेषुश्च । स उवाच, कुतो दुःखिता भवथ? युष्माकं मनःसु सन्देह उदेति च कुतः?
३९ एषोहं, मम करौ पश्यत वरं स्पृष्ट्वा पश्यत, मम यादृशानि पश्यथ
४० तादृशानि भूतस्य मांसास्थीनि न सन्ति । इत्युक्त्वा स हस्त-
४१ पादान् दर्शयामास । तेऽसम्भवं ज्ञात्वा सानन्दा न प्रत्ययन् । ततः स तान् पप्रच्छ, अत्र युष्माकं समीपे खाद्यं किञ्चिदस्ति?
४२ ततस्ते कियद्दग्धमत्स्यं मधु च ददुः स तदादाय तेषां साचाद्
४४ बुभुजे कथयामास च मूसाव्यवस्थायां भविष्यद्वादिनां ग्रन्थेषु गीतपुस्तके च मयि यानि सर्व्वाणि वचनानि लिखितानि तदनुरूपाणि घटिष्यन्ते युष्माभिः सार्द्धं स्थित्वाहं यदेतद्वाक्यम्
४५ अवदं तदिदानीं प्रत्यचमभूत् । अथ तेभ्यः शास्त्रबोधाधि-
४६ कारं दत्त्वावदत्, ख्रीष्टेनेत्थं मृतियातना भोक्तव्या तृतीय-
४७ दिने च श्मशानादुत्थातव्यञ्चेति लिपिरस्ति; तन्नाम्ना यिरू-शालममारभ्य सर्व्वदेशे मनःपरावर्त्तनस्य पापमोचनस्य च
४८ सुसंवादः प्रचारयितव्यः, एषु सर्व्वेषु यूयं साचिणः । अपरञ्च
४९ पश्यत पित्रा यत् प्रतिज्ञातं तत् प्रेषयिष्यामि, अतएव याव-त्कालं यूयं स्वर्गीयां शक्तिं न प्राप्स्यथ तावत्कालं यिरूशालम्-नगरे तिष्ठत ।

५० अथ स तान् वैथनीयापर्य्यन्तं नीत्वा हस्तावुत्तोल्य आशिष

वक्तुमारेभे आशिषं वदन्नेव च तेभ्यः पृथग्भूत्वा स्वर्गाय नीतो- ५१
ऽभवत्। तदा ते तं भजमाना महानन्देन यिरूशालमं प्रत्या- ५२
जग्मुः। ततो निरन्तरं मन्दिरे तिष्ठन्त ईश्वरस्य प्रशंसां धन्य- ५३
वादञ्च कर्त्तुम् आरेभिरे। इति ॥

---

# योहन्लिखितसुसंवादः ।

## १ प्रथमोऽध्यायः ।

१ ख्रीष्टस्येश्वरत्वं ६ ईश्वरेण योहनः प्रेरणं १४ ख्रीष्टावतारकथा १९ तस्मिन् योहनः साक्ष्यदानं २९ ख्रीष्टस्य प्रामाण्यस्य कथा ३५ शिमोनान्द्रिययोः कथा ४३ नियनेलः कथा च ।

१ आदौ वाद आसीत् स च वाद ईश्वरेण सार्द्धमासीत् स
२ वादः स्वयमीश्वर एव। स आदाव् ईश्वरेण सहासीत्। तेन
सर्व्वं वस्तु ससृजे सर्व्वेषु सृष्टवस्तुषु किमपि वस्तु तेनासृष्टं नास्ति।
४ स जीवनस्याकरः, तच्च जीवनं मनुष्याणां ज्योतिः; तज्ज्यो-
५ तिरन्धकारे प्रचकाशे किन्त्वन्धकारस्तन्न जग्राह।
६ योहन् नामक एको मनुज ईश्वरेण प्रेषयाञ्चक्रे। तद्द्वारा
७ यथा सर्व्वे विश्वसन्ति तदर्थं स तज्ज्योतिषि प्रमाणं दातुं
८ साक्षिस्वरूपो भूत्वागमत्, स स्वयं तज्ज्योति र्न किन्तु तज्ज्यो-
९ तिषि प्रमाणं दातुमागमत्। जगत्यागत्य यः सर्व्वमनुजेभ्यो दीप्तिं
१० ददाति तदेव सत्यज्योतिः। स यज्जगदसृजत् तन्मध्य एव
११ स आसीत् किन्तु जगतो लोकास्तं नाजानन्। निजाधिकारं
१२ स आगच्छत् किन्तु प्रजास्तं नागृह्लन्। तथापि ये ये तम-
गृह्लन् अर्थात् तस्य नाम्नि व्यश्वसन् तेभ्य ईश्वरस्य पुत्त्रा भवितुम्
१३ अधिकारम् अददात्। तेषां जनिः शोणितान्न शारीरिका-
भिलाषान्न मानवानाम् इच्छातो न किन्त्वीश्वरादभवत्।
१४ स वादो मनुष्यरूपेणावतीर्य्य सत्यतानुग्रहाभ्यां परिपूर्णः
सन् सार्द्धम् अस्माभि र्न्यवसत् ततः पितुरद्वितीयपुत्त्रस्य योग्यो
१५ यो महिमा तं महिमानं तस्यापश्याम। ततो योहनपि प्रचार्य्य

साक्ष्यमिदं दत्तवान् यो मम पश्चाद् आगमिष्यति स मत्तो गुरुतरः; यतो मत्पूर्व्वं स विद्यमान आसीत्; यदर्थम् अहं साक्ष्यमिदम् अदां स एषः। अपरञ्च तस्य पूर्णताया वयं १६ सर्व्वे क्रमशः क्रमशोनुग्रहं प्राप्ताः। मूसाद्वारा व्यवस्था दत्ता १७ किन्त्वनुग्रहः सत्यत्वञ्च यीशुख्रीष्टद्वारा समुपातिष्ठतां। कोपि १८ मनुज ईश्वरं कदापि नापश्यत् किन्तु पितुः क्रोडस्थोऽद्वितीयः पुत्रस्तं प्रकाशयत्।

त्वं कः? इति वाक्यं प्रष्टुं यदा यिहूदीयलोका याज- १९ कान् लेविलोकांश्च यिरूशालमो योहनः समीपे प्रेषयामासुः, तदा स स्वीकृतवान् नापह्नुतवान् नाहम् अभिषिक्त इत्य- २० ङ्गीकृतवान्। तदा ते ऽपृच्छन् तर्हि को भवान्? किम् एलियः? २१ सोवदत् न; ततस्तेऽपृच्छन् तर्हि भवान् स भविष्यद्वादी? सोवदत् नाहं सः। तदा तेऽपृच्छन् तर्हि भवान् कः? वयं २२ गत्वा प्रेरकान् त्वयि किं वक्ष्यामः? स्वस्मिन् किं वदसि? तदा सोवदत्। २३

परमेशस्य पन्थानं परिष्कुरुत सर्व्वतः।
इतीदं प्रान्तरे वाक्यं वदतः कस्यचिद्रवः।

कथामिमां यस्मिन् यिशयियो भविष्यद्वादी लिखितवान् सोहम्। ये प्रेषितास्ते फिरूशिलोकाः। तदा तेऽपृच्छन् यदि २४ नाभिषिक्तोसि एलियोसि न स भविष्यद्वाद्यपि नासि च, २५ तर्हि लोकान् मज्जयसि कुतः? ततो योहन् प्रत्यवोचत्, २६ तोयेऽहं मज्जयामीति सत्यं किन्तु यं यूयं न जानीथ तादृश एको जनो युष्माकं मध्य उपतिष्ठति। स मत्पश्चाद् आगतोपि २७ मत्पूर्व्वं वर्त्तमान आसीत् तस्य पादुकाबन्धनं मोचयितुमपि

२८ नाहं योग्योस्मि । यर्द्दननद्याः पारस्थवैथवारायां यस्मिन् स्थाने योहन् अमज्जयत् तस्मिन् स्थाने सर्व्वमेतद् अघटत ।

२९ परेऽहनि योहन् स्वनिकटम् आगच्छन्तं यीशुं विलोक्य
३० प्रावोचत् जगतः पापमोचकम् ईश्वरस्य मेषशावकं पश्यत । यो मम पश्चाद् आगमिष्यति स मत्तो गुरुतरः, यतो हेतोर्मत्पूर्व्वं
३१ सोऽवर्त्तत यस्मिन्नहं कथामिमां कथितवान् स एवायं । अपरं नाहमेनं प्रत्यभिज्ञातवान् किन्तु इस्रायेल्लोका एनं यथा परिचिन्वन्ति तदभिप्रायेणाहं जले मज्जयितुम् आगच्छम् ।
३२ पुनश्च योहन् अपरमेकं प्रमाणं दत्त्वा कथितवान् विहायसः कपोतवद् अवतरन्तमात्मानम् अस्योपर्य्यवतिष्ठन्तञ्च दृष्टवान-
३३ हम् । नाहमेनं प्रत्यभिज्ञातवान् इति सत्यं किन्तु यो जले मज्जयितुं मां प्रैरयत् स एवेमां कथामकथयत् यस्योपर्य्यात्मानम् अवतरन्तम् अवतिष्ठन्तञ्च द्रक्ष्यसि सएव पवित्रे आत्मनि
३४ मज्जयिष्यति । अतस्तन्निरीक्ष्यायम् ईश्वरस्य तनय इति प्रमाणं ददामि ।

३५ परेऽहनि योहन् द्वाभ्यां शिष्याभ्यां सार्द्धं तिष्ठन् यीशुं
३६ गच्छन्तं विलोक्य गदितवान्, ईश्वरस्य मेषशावकं पश्यतं । इमां
३७ कथां श्रुत्वा द्वौ शिष्यौ यीशोः पश्चाद् ईयतुः । ततो यीशुः
३८ परावृत्य तौ पश्चाद् आगच्छन्तौ दृष्ट्वा पृष्टवान् युवां किं गवेषयथः? तावपृच्छतां हे रब्बि अर्थात् हे गुरो भवान् कुत्र
३९ तिष्ठति? ततः सोवादीत् एत्य पश्यतं । तदा तौ तेन सार्क्कं व्रजित्वा तस्य वासस्थानम् अदर्शतां, ततो दिवसस्य तृतीय-
४० प्रहरस्य गतत्वात् तौ तद्दिनं तस्य सङ्गेऽस्थातां । यौ द्वौ योहनो वाक्यं श्रुत्वा यीशोः पश्चाद् अगमतां तयोः शिमोन्पितरस्य

भ्राता य आन्द्रियः स दृत्वा प्रथमं निजसोदरं शिमोनं साक्षात् ४१
प्राप्य कथितवान् वयं ख्रीष्टम् अर्थात् अभिषिक्तपुरुषं साक्षात्
कृतवन्तः। पश्चात् स तं यीशोः समीपम् आनयत्। तदा ४२
यीशुस्तं दृष्ट्वावदत् त्वं यूनसः पुत्रः शिमोन् किन्तु त्वन्नामधेयं
कैफाः (वा पितरः) अर्थात् प्रस्तरो भविष्यति।

परेऽहनि यीशौ गालीलं गन्तुं निश्चितचेतसि सति फिलिप- ४३
नामानं जनं साक्षात् प्राप्यावोचत् मम पश्चाद् आगच्छ।
वैत्सैदानाम्नि यस्मिन् ग्रामे पितरान्द्रियवो र्वास आसीत् तस्मिन् ४४
ग्रामे तस्य फिलिपस्य वसतिरासीत्। पश्चात् फिलिपो निथनेलं ४५
साक्षात् प्राप्यावदत् मूसाव्यवस्थाग्रन्थे भविष्यद्वादिनां ग्रन्थेषु च
यस्याख्यानं लिखितमास्ते तं यूषफः पुत्रं नासरतीयं यीशुं
साक्षाद् अकार्ष्म वयम्। तदा निथनेल् कथितवान् नासरन्- ४६
नगरात् किं कश्चिदुत्तम उत्पत्तुं शक्नोति? ततः फिलिपो
ऽवोचत् एत्य पश्य। अपरञ्च यीशुः स्वस्य समीपं तम् आग- ४७
च्छन्तं दृष्ट्वा व्याहृतवान्, पश्यायं निष्कपटः सत्य इस्रायेल्लोकः।
ततः सोवदद्, भवान् मां कथं प्रत्यभिजानाति? यीशुरवादीत् ४८
फिलिपस्य आह्वानात् पूर्व्वं यदा त्वमुडुम्बरस्य तरोर्मूलेऽस्था-
स्तदा त्वामदर्शम्। निथनेल् अचकथत्, हे गुरो भवान् निता- ४९
न्तम् ईश्वरस्य पुत्रोसि, भवान् इस्रायेल्वंशस्य राजा। ततो ५०
यीशु र्व्याहरत्, त्वामुडुम्बरस्य पादपस्य मूले दृष्टवानहं
ममैतस्माद्वाक्यात् किं त्वं व्यश्वसीः? एतस्मादप्याश्चर्य्याणि
कार्य्याणि द्रक्ष्यसि। अन्यच्चावादीद् युष्मानहं यथार्थं वदामि, ५१
इतः परं मोचिते मेघद्वारे तस्मान्मनुजसूनुना ईश्वरस्य दूत-
गणम अवरोहन्तम् आरोहन्तञ्च द्रक्ष्यथ।

# २ द्वितीयोऽध्यायः।

१ ख्रीष्टस्य प्रथमाश्चर्य्यक्रिया १२ कफर्नाहूमि तेन यानं १३ तेन यिरूशालमि यानं मन्दिरपरिष्करणञ्च १८ निजनिधनोत्थानयो र्भविष्यद्वाक्यं २३ तस्याश्चर्य्यक्रियाभि र्बहूनां विश्वासश्च।

१ अनन्तरं तृतीयदिवसे गालील्प्रदेशीये कान्नानाम्नि नगरे
२ विवाह आसीत् तत्र च यीशो र्माताතिष्ठत्। तस्मै विवाहाय
३ यीशुस्तस्य शिष्याश्च निमन्त्रिता आसन्। तदनन्तरं द्राक्षा-
रसस्य न्यूनत्वाद् यीशो र्माता तमवदत् एतेषां द्राक्षारसो
४ नास्ति। तदा स तामवोचत् हे नारि मया सह तव किं
५ कार्य्यं? मम समय इदानीं नोपतिष्ठति। ततस्तस्य माता दासान्
६ अवोचद् अयं यद् वदति तदेव कुरुत। तस्मिन् स्थाने यि-
हूदीयानां शुचित्वकरणव्यवहारानुसारेणाढकैकजलधराणि
७ पाषाणमयानि षड् वृहत्पात्राणि आसन्। तदा यीशुस्तान्
सर्व्वकलशान् जलैः पूरयितुं तानाज्ञापयत्, ततस्ते सर्व्वान्
८ कुम्भान् आकर्णं जलैः पर्य्यपूरयन्। अथ तेभ्यः किञ्चिदुत्तार्य्य
भोज्याधिपतेः समीपं नेतुं स तानादिशत्, ते तदनयन्।
९ अपरञ्च तज्जलं कथं द्राक्षारसोऽभवत् तज्जलवाहका दासा
ज्ञातुं शक्ताः किन्तु तद्भोज्याधिपो ज्ञातुं नाशक्नोत् तदवलिह्य
१० वरं सम्बोध्यावदत्, लोकाः प्रथमम् उत्तमद्राक्षारसं ददति
तेषु यथेष्टं पीतवत्सु तस्मा॰ किञ्चिदनुत्तमञ्च ददति किन्तु
११ त्वमिदानीं यावत् उत्तमद्राक्षारसं स्थापयसि। इत्थं यीशु
र्गालीलप्रदेशे आश्चर्य्यकर्म्म प्रारभ्य निजमहिमानं प्राकाशयत्
ततः शिष्यास्तस्मिन् व्यश्वसन्।

१२ ततः परं स निजमातृभ्रातृशिष्यैः सार्द्धं कफर्नाहूमम् अग-
मत् किन्तु तत्र बहुदिनानि नातिष्ठत्।

तदनन्तरं यिहूदीयानां निस्तारोत्सवे निकटमागते यीशु १३ यिरूशालम्नगरम् अगच्छत्। ततो मन्दिरस्य मध्ये गोमेष- १४ पारावतविक्रयिणो बणिजश्चोपविष्टान् विलोक्य रज्जुभिः कशां १५ निर्म्माय सर्व्वगोमेषादिभिः सार्द्धं तान् मन्दिराद् दूरीकृत-वान्। बणिजां मुद्रादि विकीर्य्य आसनानि न्युब्जीकृत्य पारा- १६ वतविक्रयिभ्योऽकथयद् अस्मात् स्थानात् सर्व्वाण्येतानि नयत, मम पितु र्गृहं बाणिज्यगृहं मा कार्ष्ट। तस्मात् १७

'तन्मन्दिरार्थ उद्योगो यस्तु स ग्रसतीव माम्।'

इमां शास्त्रीयलिपिं शिष्याः समस्मरन्।

ततः परं यिहूदीयलोका यीशुमवदन् त्वमीदृशकर्म्म- १८ करणात् किं चिह्नमस्मान् दर्शयसि? ततो यीशुस्तानवोचद् १९ युष्माभिरेतस्मिन् मन्दिरे नाशिते दिनत्रयमध्येऽहं तद् उत्था-पयिष्यामि। तदा यिहूदीया व्याहार्षुः, एतस्य मन्दिरस्य २० निर्म्माणेन षट्चत्वारिंशद्वत्सरा गताः, त्वं किं दिनत्रयमध्ये तद् उत्थापयिष्यसि? किन्तु स निजदेहरूपमन्दिरे कथा- २१ मिमां कथितवान्। स यदेतादृशं गदितवान् तच्छिष्याः २२ श्मशानात् तदीयोत्थाने सति स्मृत्वा धर्म्मग्रन्थे यीशुनोक्तकथा-याञ्च व्यश्वसिषुः।

अनन्तरं निस्तारोत्सवस्य भोज्यसमये यिरूशालम्नगरे २३ तत्कृताश्चर्य्यकर्म्माणि विलोक्य बहुभिस्तस्य नामनि विश्वसितं। किन्तु स तेषां करेषु स्वं न समर्पयत्, यतः स सर्व्वानवैत्। २४ स मानवेषु कस्यचित् प्रमाणं नापेक्षत यतो मनुजानां मध्ये २५ यद्यदस्ति तत्तत् सोजानात्।

# ३ तृतीयोऽध्यायः।

१ निकदीमं प्रति खीष्टस्योपदेशकथा २२ योहनमज्जनम् २५ खीष्टे योहनः साक्ष्यदानञ्च।

१ निकदीमनामा यिहूदीयानाम् अधिपतिः फिरूशी क्षण-
२ दायां यीशोरभ्यर्णम् आव्रज्य व्याहार्षीत्, हे गुरो भवान्
ईश्वराद् आगत एक उपदेष्टा, एतद् अस्माभिर्ज्ञायते; यतो
भवता यान्याश्चर्य्यकर्म्माणि क्रियन्ते परमेश्वरस्य साहाय्यं
३ विना केनापि तत्तत्कर्म्माणि कर्त्तुं न शक्यन्ते। तदा यीशु-
रुत्तरं दत्तवान् त्वामहं यथार्थतरं व्याहरामि पुनर्जन्मनि न
४ सति कोपि मानव ईश्वरस्य राज्यं द्रष्टुं न शक्नोति। ततो
निकदीमः प्रत्यवोचत् मनुजो वृद्धो भूत्वा कथं जनिष्यते?
५ स किं पुन र्मातुर्जठरं प्रविश्य जनितुं शक्नोति? यीशुर-
वादीद् यथार्थतरम् अहं कथयामि मनुजे तोयात्मभ्यां पुन
६ र्न जाते स ईश्वरस्य राज्यं प्रवेष्टुं न शक्नोति। मांसाद् यत्
जायते तन् मांसमेव तथात्मनो यो जायते स आत्मैव।
७ युष्माभिः पुन र्जनितव्यं ममैतस्यां कथायाम् आश्चर्य्यं मा
८ मंस्थाः। सदागति र्यां दिशमिच्छति तस्यामेव दिशि वाति,
त्वं तस्य स्वनं शृणोषि किन्तु स कुत आयाति कुत्र याति वा
किमपि न जानासि तद्वद् आत्मनः सकाशात् सर्व्वेषां मनु-
९ जानां जन्म भवति। तदा निकदीमः पृष्टवान् एतत् कथं
१० भवितुं शक्नोति? यीशुः प्रत्युक्तवान् त्वमिस्रायेलो गुरु र्भूत्वापि
११ किमेतां कथां न वेत्सि? तुभ्यं यथार्थं कथयामि, वयं यद्
विद्मस्तद् वच्मः यच्च पश्यामस्तस्यैव साक्ष्यं दद्मः, किन्तु युष्मा-
१२ भिरस्माकं साक्षित्वं न गृह्यते। एतस्य संसारस्य कथायां
कथितायां यदि यूयं न विश्वसिथ तर्हि स्वर्गीयायां कथायां

कथं विश्वसिष्यथ? यः स्वर्गेऽस्ति यश्च स्वर्गाद् अवारोहत् तं १३
मानवतनयं विना कोपि स्वर्गं नारोहत्। अपरञ्च मूसा यथा १४
प्रान्तरे सर्पं प्रोत्थापितवान् मनुष्यपुत्त्रोऽपि तथैवोत्थापितव्यः;
तस्माद् यः कश्चित् तस्मिन् विश्वसिष्यति सोऽविनाश्यः सन् १५
अनन्तायुः प्राप्स्यति। ईश्वर इत्थं जगददयत यत् स्वमद्वितीयं १६
तनयं प्राददात् ततो यः कश्चित् तस्मिन् विश्वसिष्यति सोऽवि-
नाश्यः सन् अनन्तायुः प्राप्स्यति। ईश्वरो जगतो लोकान् १७
दण्डयितुं स्वपुत्त्रं न प्रेष्य तान् परित्रातुं प्रेषितवान्। अतएव १८
यः कश्चित् तस्मिन् विश्वसिति स दण्डार्हो न भवति किन्तु यः
कश्चित् तस्मिन् न विश्वसिति स इदानीमेव दण्डार्हो भवति,
यतः स ईश्वरस्याद्वितीयपुत्त्रस्य नामनि प्रत्ययं न करोति।
जगतो मध्ये ज्योतिः प्राकाशत किन्तु मनुष्याणां कर्म्मणां १९
दुष्टत्वात् ते ज्योतिषोपि तिमिरे प्रीयन्ते एतदेव दण्डस्य कारणं
भवति। यः कुकर्म्म करोति तस्याचारस्य दुष्टत्वात् स ज्योति २०
र्ऋतीयित्वा तन्निकटं नायाति; किन्तु यः सत्कर्म्म करोति २१
तस्य सर्व्वाणि कर्म्माणीश्वरेण कृतानीति यथा प्रकाशते तद-
भिप्रायेण स ज्योतिषः सन्निधिम् आयाति।

ततः परं यीशुः शिष्यैः सार्द्धं यिहूदीयदेशं गत्वा तत्र २२
स्थित्वा मज्जयितुम् आरभत। तदा शालम्नगरस्य समीपस्था- २३
यिनि ऐनन्ग्रामे बहुतरतोयस्थितेस्तत्र योहन् अमज्जयत्
तथा च लोका आगत्य तेन मज्जिता अभवन्। तदा योहन् २४
कारायां न बद्धः।

अपरञ्च शाचकर्म्मणि योहनः शिष्यैः सह यिहूदीयलो- २५
कानां विवादे जाते, ते योहनः सन्निधिं गत्वाकथयन्, हे २६

गुरो यर्द्दननद्याः पारे भवता सार्द्धं य आसीत् यस्मिंश्च भवान्
साक्ष्यं प्राददात् पश्यतु सोपि मज्जयति सर्व्वे तस्य समीपं
२७ यान्ति च। तदा योहन् प्रत्यवोचद् ईश्वरेण न दत्ते कोपि
२८ मनुजः किमपि प्राप्तुं न शक्नोति। अहम् अभिषिक्तो न भवामि
किन्तु तदग्रे प्रेषितोस्मि यामिमां कथां कथितवानहं तत्र
२९ यूयं सर्व्वे साक्षिणः स्थ। यो जनः कन्यां लभते स एव वरः किन्तु
वरस्य सन्निधौ दण्डायमानं तस्य यन्मित्रं तेन वरस्य शब्दे
३० श्रुतेऽतीवाह्लाद्यते ममापि तद्वद् आनन्दसिद्धिर्जाता। तेन
३१ क्रमशो वर्द्धितव्यं किन्तु मया ह्रसितव्यं। य ऊर्द्ध्वादागच्छत् स
सर्व्वेषां मुख्यो यश्च संसाराद् उदपद्यत स सांसारिकः संसा-
रीयां कथाञ्च कथयति यस्तु स्वर्गादागच्छत् स सर्व्वेषां
३२ मुख्यः। स यद् अपश्यद् अशृणोच्च तस्मिन्नेव साक्ष्यं ददाति
३३ तथापि प्रायशः कश्चित् तस्य साक्ष्यं न गृह्लाति; किन्तु यो
३४ गृह्लाति स ईश्वरस्य सत्यवादित्वं मुद्राङ्कितं करोति। ईश्वरेण
यः प्रेरितः, सएव ईश्वरीयकथां कथयति यत ईश्वर आत्मानं
३५ तस्मै अपरिमितम् अददात्। पिता पुत्रे स्नेहं कृत्वा तस्य हस्ते
३६ सर्व्वाणि समर्पितवान्। यः कश्चित् पुत्रे विश्वसिति सएवान-
न्तम् परमायुः प्राप्नोति किन्तु यः कश्चित् पुत्रे न विश्वसिति
स परमायुषो दर्शनं न प्राप्नोति किन्त्वीश्वरस्य कोपभाजनं
भूत्वा तिष्ठति।

---

## ४ चतुर्थोऽध्यायः।

१ शोमिरोणीयस्त्रियै खीष्टस्योपदेशकथा २७ नगरे खीष्टं प्रति तस्या वार्त्ताकथनं ३१ शिष्येभ्यः खीष्टस्य कथनं ३९ नगरादागतलोकानां खीष्टे विश्वसनं ४३ गालील्-प्रदेशं प्रति खीष्टस्य गमनं ४६ कफर्नाहूमि राजसभास्तारपुत्त्रस्य स्वास्थ्यञ्च।

१　यीशुः स्वयं नामज्जयत् केवलं तस्य शिष्या अमज्जयन्

किन्तु योहनोऽधिकशिष्यान् स करोति मज्जयति च, फिरूशिन २
इमां वार्त्तामशृण्वन् इति प्रभुरवगत्य यिहूदीयदेशं विहाय ३
पुन र्गालीलम् अगात्। ततः शोमिरोणप्रदेशस्य मध्येन तेन ४
गन्तव्ये सति याकूब् निजपुत्राय यूषफे यां भूमिम् अददात् ५
तत्समीपस्थायिशोमिरोणप्रदेशस्य सुखार्नाम्ना विख्यातस्य
नगरस्य सन्निधावुपास्थात्। तत्र याकूबः प्रहिरासीत्; तदा ६
द्वितीययामवेलायां जातायां स मार्गे श्रमापन्नस्तस्य प्रहेः पार्श्वे
उपाविशत्। एतर्हि काचित् शोमिरोणीया योषित् तोयो- ७
त्तोलनार्थम् तत्रागमत्; तदा शिष्याः खाद्यद्रव्याणि क्रेतुं ८
नगरम् अगच्छन्। यीशुः शोमिरोणीयां तां योषितम् ९
व्याहार्षीत् मह्यं किञ्चित् पानीयं पातुं देहि। किन्तु शोमि-
रोणीयैः सार्कं यिहूदीयलोका न व्यवाहरन्; तस्माद्धेतोः
साकथयत् शोमिरोणीया योषिदहं त्वं यिहूदीयोसि कथं
मत्तः पानीयं पातुम् इच्छसि? ततो यीशुरवदद् ईश्वरस्य १०
यद्दानं तत्कीदृक् पानीयं पातुं मह्यं देहि य इत्थं त्वां याचते
स वा क इति चेदज्ञास्यथास्तर्हि तमयाचिष्यथाः स च तुभ्यम-
मृतं तोयमदास्यत्। तदा सा सीमन्तिनी भाषितवती, हे ११
महेच्छ प्रहि र्गम्भीरो भवतो नीरोत्तोलनपात्रं नास्ति च
तस्मात् तदमृतं कीलालं कुतः प्राप्स्यसि? योस्मभ्यम् इममन्धुं १२
ददौ, यस्य च परिजना गोमेषादयश्च सर्व्वेऽस्य प्रहेः पानीयं
पपुरेतादृशो योस्माकं पूर्व्वपुरुषो याकूब् तस्मादपि भवान्
महान् किं? ततो यीशुरकथयद् इदं पानीयं यः पिवति १३
स पुनस्तृषार्त्तो भविष्यति, किन्तु मया दत्तं पानीयं यः पिवति १४
स पुनः कदापि तृषार्त्तो न भविष्यति। मया दत्तम् इदं

तोयं तस्यान्तः प्रस्रवणरूपं भूत्वा अनन्तायु र्यावत् स्रोष्यति।
१५ तदा सा वनिताकथयत्, हे महेच्छ तर्हि मम पुनः पिपासा यथा न जायते तोयोत्तोलनाय यथात्रागमनं न भवति च,
१६ तदर्थं मह्यं तत्तोयं देहि। ततो यीशुरवदद् याहि तव
१७ पतिमाहूय स्थानेऽत्रागच्छ। सा वामावदत् मम पति र्नास्ति।
१८ यीशुरवदत् मम पति र्नास्तीति वाक्यं भद्रम् अवोचः। यतस्तव पञ्च पतयोभवन् अधुना तु त्वया सार्द्धं यस्तिष्ठति स
१९ तव भर्त्ता न वाक्यमिदं सत्यम् अवादीः। तदा सा महिला गदितवती, हे महेच्छ भवान् एको भविष्यद्वादीति बुद्धं
२० मया। अस्माकं पितृलोका एतस्मिन् शिलोच्चयेऽभजन्त, किन्तु भवद्भिरुच्यते यिरूशालम्नगरे भजनयोग्यं स्थानमास्ते।
२१ यीशुरवोचत्, हे योषित् मम वाक्ये विश्वसिहि यदा यूयं केवलशैलेऽस्मिन् वा यिरूशालम्नगरे पितु र्भजनं न करि-
२२ ष्यध्वे काल एतादृश आयाति। यूयं यं भजध्वे तं न जानीथ, किन्तु वयं यं भजामहे तं जानीमहे, यतो यिहूदीयलो-
२३ कानां मध्यात् परित्राणं जायते। किन्तु यदा सत्यभक्ता आत्मना सत्यरूपेण च पितु र्भजनं करिष्यन्ते समय एतादृश आयाति, वरम् इदानीमपि विद्यते; यत एतादृशो भक्तान्
२४ पिता चेष्टते। ईश्वर आत्मा; ततस्तस्य ये भक्तास्तैः स आत्मना
२५ सत्यरूपेण च भजनीयः। तदा सा महिलावादीत्, ख्रीष्टनाम्ना विख्यातोऽभिषिक्तः पुरुष आगमिष्यतीति जानामि, स
२६ च सर्व्वाः कथा अस्मान् ज्ञापयिष्यति। ततो यीशुरवदत् त्वया सार्द्धं कथनं करोमि योऽहम् अहमेव स पुरुषः।

२७ एतस्मिन् समये शिष्या आगत्य तया स्त्रिया सार्द्धं तस्य

कथोपकथने महाश्चर्य्यम् अमन्यन्त तथापि भवान् किमिच्छति? यद्वा किमर्थम् एतया सार्द्धं कथां कथयति? इति कोपि नापृच्छत्। ततः परं सा नारी कलशं स्थापयित्वा नगरमध्यं २८ गत्वा लोकेभ्योकथयद् अहं यद्यत् कर्म्माकरवं तत्सर्व्वं मह्यमकथ- २९ यद् एतादृशं मानवमेकम् आगत्य पश्यत स किम् अभिषिक्तो न भवति? ततस्ते नगराद् वहिरागत्य तस्य समीपम् आयन्। ३०

एतर्हि शिष्याः साधयित्वा तं व्याहार्षुः, हे गुरो भवान् ३१ किञ्चिद् भुंक्तां। ततः सोवदद् युष्माभि र्यन्न ज्ञायते तादृशं ३२ भक्ष्यं ममास्ते। तदा शिष्याः परस्परं प्रष्टुम् आरभन्त, ३३ किमस्मै कोपि किमपि भक्ष्यमानीय दत्तवान्? यीशुरवोचत् ३४ मत्प्रेरकस्याभिमतानुरूपकरणं तस्यैव कर्म्मसिद्धिकरणञ्च मम भक्ष्यं। मासचतुष्टये जाते शस्यकर्त्तनसमयो भविष्यतीति ३५ वाक्यं युष्माभिः किं नोद्यते? किन्त्वहं वदामि, शिर उत्तोल्य क्षेत्राणि प्रति निरीक्ष्य पश्यत, इदानीं कर्त्तनयोग्यानि शुक्लवर्णान्यभवन्। यश्छिनत्ति स वेतनं लभते, अनन्तायुःस्वरूपं ३६ शस्यं स गृह्लाति च, तेनैव वप्ता छेत्ता च युगपद् आनन्दतः। इत्थं सति वपत्येकश्छिनत्त्यन्य इति वचनं सिद्ध्यति। यत्र यूयं ३७ न पर्य्यश्राम्यत तादृशं शस्यं छेत्तुं युष्मान् प्रैरयम्, अन्ये जनाः ३८ पर्य्यश्राम्यन् यूयं तेषां श्रमस्य फलम् अलभध्वम्।

यस्मिन् काले यद्यत् कर्म्माकार्षं तत्सर्व्वं स मह्यम् अकथयत् ३९ तस्या वनिताया इदं साक्ष्यवाक्यं श्रुत्वा तन्नगरनिवासिनो बहवः शोमिरोणीयलोका व्यश्वसन्। तथा च तस्यान्तिके ४० समुपस्थाय स्वेषां सन्निधौ कतिचिद् दिनानि स्थातुं तस्मिन् विनयम् अकुर्व्वन्, तस्मात् स दिनद्वयं तत्स्थाने न्यवष्टत्। तत- ४१

४२ स्त्र्युपदेशेन बहवोऽपरे विश्वस्य तां योषामवदन् केवलं तव वाक्येन प्रतीम इति न, किन्तु स जगतोऽभिषिक्तस्त्रातेति तस्य कथां श्रुत्वा वयं स्वयमेवाज्ञास्महि।

४३ स्वदेशे भविष्यद्वक्तुः सत्कारो नास्तीति यद्यपि यीशुः प्रमाणं
४४ दत्त्वाकथयत् तथापि दिवसद्वयात् परं स तस्मात् स्थानाद्
४५ गालीलं गतवान्। अनन्तरं ये गालीलीयलोका उत्सवे गता उत्सवसमये यिरूशालम्नगरे तस्य सर्व्वाः क्रिया अपश्यन् ते गालीलम् आगतं तम् अगृह्णन्।

४६ ततः परं यीशु र्यस्मिन् कान्नानगरे जलं द्राक्षारसम् अकरोत् तत्स्थानं पुनरगात्। तस्मिन्नेव समये कस्यचिद्
४७ राजसभास्तारस्य पुत्रः कफर्नाहूमपुरि रोगग्रस्त आसीत्। स यिहूदीयदेशाद् यीशो र्गालीलागमनवार्त्तां निशम्य तस्य समीपं गत्वा प्रार्थ्य व्याहृतवान्, मम पुत्रस्य प्रायेण काल आ-
४८ सन्नः, भवान् आगत्य तं स्वस्थं करोतु। तदा यीशुरकथयद्
४९ आश्चर्य्यं कर्म्म चित्रं चिह्नञ्च न दृष्टा यूयं न प्रत्येष्यथ। ततः स सभासदवदत्, हे महेच्छ मम पुत्रे न मृते भवानागच्छतु।
५० यीशुस्तमवदद् गच्छ तव पुत्रोऽजीवीत्; तदा यीशुनोक्त-
५१ वाक्ये स विश्वस्य गतवान्। गमनकाले मार्गमध्ये दासास्तं साक्षात्
५२ प्राप्यावदन् भवतः पुत्रोऽजीवीत्। ततः कं कालमारभ्य रोगप्रतीकारारम्भो जात इति पृष्टे तैरुक्तं ह्यः सार्द्धदण्डद्-
५३ याधिकद्वितीययामे तस्य ज्वरत्यागोऽभवत्। तदा यीशुस्त-स्मिन् क्षणे प्रोक्तवान्, तव पुत्रोऽजीवीत् पिता तद्बुद्ध्वा सपरि-
५४ वारो व्यश्वसीत्। यिहूदीयदेशाद् आगत्य गालीलि यीशु-रेतद् द्वितीयम् आश्चर्य्यकर्म्माकरोत्।

# ५ पञ्चमोऽध्यायः।

१ अष्टात्रिंशद्वत्सरान् यावद् रोगग्रस्तमनुष्यस्य विश्रामवारे स्वास्थ्यकरणं १४ ख्रीष्टेन यिहूदीयानां तर्जनं शिक्षणञ्च ३१ ख्रीष्टे योहनः पितुश्च धर्म्मशास्त्रस्य च साक्ष्यं।

ततः परं यिहूदीयानाम् उत्सव उपस्थिते यीशु र्यिरू- १
शालमं गतवान्। तस्मिन्नगरे मेषनाम्नो द्वारस्य समीपे इब्री- २
यभाषया बैथेस्दा नाम्ना पुष्करिणी पञ्चघट्टयुक्तासीत्। तस्या- ३
स्तेषु घट्टेषु कीलालकम्पनम् अपेक्ष्य अन्धखञ्जशुष्काङ्गादयो
बहवो रोगिणः पतन्तस्तिष्ठन्ति स्म। यतो विशेषकाले तस्य ४
सरसो वारि स्वर्गीयदूत एत्याकम्पयत् तत्कीलालकम्पनात् परं
यः कश्चिद् रोगी प्रथमं पानीयमवारोहत् स एव तत्क्षणाद्
रोगमुक्तोऽभवत्। तदाष्टात्रिंशद्वर्षाणि यावद् रोगग्रस्त एक- ५
जनस्तस्मिन् स्थाने स्थितवान्। यीशुस्तं शयितं दृष्ट्वा बहुका- ६
लिकरोगीति ज्ञात्वा व्याहृतवान्, त्वं किं स्वस्थो बुभूषसि?
ततो रोगी कथितवान्, हे महेच्छ यदा कीलालं कम्पते तदा ७
मां पुष्करिणीम् अवरोहयितुं मम कोपि नास्ति, तस्मान्
मम गमनकाले कश्चिदन्योऽग्रे गत्वा अवरोहति। तदा ८
यीशुरकथयद् उत्तिष्ठ, तव शय्यामुत्तोल्य गृहीत्वा याहि। स ९
तत्क्षणात् स्वस्थो भूत्वा शय्यामुत्तोल्यादाय गतवान्, किन्तु
तद्दिनं विश्रामवारः। तस्माद् यिहूदीयाः स्वस्थं नरं व्याहरन्१०
अद्य विश्रामवारे शयनीयमादाय न यातव्यम्। ततः स ११
प्रत्यवोचद् यो मां स्वस्थम् अकार्षीत्, शयनीयम् उत्तोल्या-
दाय यातुं मां स एवादिशत्। तदा तेऽपृच्छन् शयनीयम् १२
उत्तोल्यादाय यातुं य आज्ञापयत् स कः? किन्तु स क इति १३
स्वस्थीभूतो नाजानाद् यतस्तस्मिन् स्थाने जनतासत्त्वाद् यीशुः
स्थानान्तरम् अगमत्।

१४ ततः परं यीशु र्मन्दिरे तं नरं साक्षात् प्राप्याकथयत्, पश्येदानीम् अनामयो जातोसि यथाधिका दुर्दशा न घटते
१५ तद्धेतोः पापं कर्म्म पुनर्माकार्षीः। ततः स गत्वा यिहूदीयान्
१६ अवदद् यीशु र्माम् अरोगिणम् अकार्षीत्। ततो यीशु र्विश्रामवारे कर्म्मेदृशं कृतवान् इति हेतो र्यिहूदीयास्तं ताडयित्वा
१७ हन्तुम् अचेष्टन्त। यीशुस्तानाख्यत् मम पिता यत् कार्य्यं
१८ करोति तदनुरूपम् अहमपि करोमि। ततो यिहूदीयास्तं हन्तुं पुनरयतन्त, यतो विश्रामवारं नामन्यत, तदेव केवलं न अधिकन्तु ईश्वरं स्वपितरं प्रोच्य स्वमपीश्वरतुल्यं कृतवान्।
१९ पश्चाद् यीशुरवदद् युष्मानहं यथार्थतरं वदामि, पुत्रः पितरं यद्यत् कर्म्म कुर्व्वन्तं पश्यति, तदतिरिक्तं स्वेच्छातः किमपि कर्म्म कर्त्तुं न शक्नोति। पिता यत् करोति पुत्रोपि तदेव
२० करोति। पिता पुत्रे स्नेहं करोति तस्मात् स्वयं यद्यत् कर्म्म करोति तत्सर्व्वं पुत्रं दर्शयति; यथा च युष्माकं आश्चर्य्यज्ञानं
२१ जनिष्यते तदर्थम् इतोपि महाकर्म्म तं दर्शयिष्यति। वस्तुतस्तु पिता यथा प्रमीतान् उत्थाप्य सजीवान् करोति तद्वत् पुत्रोपि
२२ यं यम् इच्छति तं तं सजीवं करोति। सर्व्वे पितरं यथा सत्कुर्व्वन्ति तथा पुत्रमपि सत्कारयितुं पिता स्वयं कस्यापि
२३ विचारमकृत्वा सर्व्वविचाराणां भारं पुत्रे समर्पितवान्। यः
२४ पुत्रं सत् करोति स तस्य प्रेरकमपि सत् करोति। युष्मानहं यथार्थतरं वदामि यो जनो मम वाक्यं श्रुत्वा मत्प्रेरके विश्वसिति सोनन्तायुः प्राप्नोति कदापि दण्डभाजनं न भवति
२५ निधनादुत्थाय परमायुः प्राप्नोति। अहं युष्मानतियथार्थं वदामि, यदा मृता ईश्वरपुत्रस्य निनादं श्रोष्यन्ति, ये च

श्रोष्यन्ति ते सजीवा भविष्यन्ति, समय एतादृश आयाति वरम् इदानीमप्युपतिष्ठति। पिता यथा स्वयञ्जीवी तथा पुत्राय २६ स्वयञ्जीवित्वाधिकारं दत्तवान्। स मनुष्यपुत्रः, एतस्मात् कार- २७ णात् पिता दण्डकरणाधिकारमपि तस्मिन् समर्पितवान्। एतदर्थे यूयम् आश्चर्यं न मन्यध्वं यतो यस्मिन् समये तस्य २८ निनादं श्रुत्वा श्मशानस्थाः सर्व्वे वहिरागमिष्यन्ति समय एतादृश उपस्थास्यति। तस्माद् ये सत्कर्म्माणि कृतवन्तस्त उत्थाय २९ आयुः प्राप्स्यन्ति; ये च कुकर्म्माणि कृतवन्तस्त उत्थाय दण्डं प्राप्स्यन्ति। अहं स्वयं किमपि कर्त्तुं न शक्नोमि, यथा शृणोमि ३० तथा विचारयामि, मम विचारश्च न्याय्यः, यतोहं स्वीयाभीष्टं नेहित्वा मत्प्रेरयितुः पितुरिष्टम् ईहे।

यदि स्वस्मिन् स्वयं साक्ष्यं ददामि तर्हि तत्साक्ष्यम् अग्राह्यं ३१ भवति; किन्तु मदर्थेऽपरो जनः साक्ष्यं ददाति मदर्थे तस्य ३२ यत् साक्ष्यं तत् सत्यम् एतदप्यहं जानामि। युष्माभि र्योहनं ३३ प्रति लोकेषु प्रेरितेषु स सत्यकथायां साक्ष्यमददात्। मानु- ३४ षादहं साक्ष्यं नोपेक्षे तथापि यूयं यथा परित्रयध्वे तदर्थम् इदं वाक्यं वदामि। योहन् देदीप्यमानो दीप इव तेजस्वी ३५ स्थितवान्, यूयम् अल्पकालं तस्य दीप्यानन्दितुं समम्नध्वं। किन्तु तत्प्रमाणादपि मम गुरुतरं प्रमाणं विद्यते, पिता मां ३६ प्रेष्य यद्यत् कर्म्म समापयितुं शक्तिमददात् मया कृतं तत्तत् कर्म्म मदर्थे प्रमाणं ददाति। यः पिता मां प्रेरितवान् सोपि ३७ मदर्थे प्रमाणं ददाति। तस्य वाक्यं युष्माभिः कदापि न श्रुतं तस्य रूपञ्च न दृष्टं, तस्य वाक्यञ्च युष्माकम् अन्तः कदापि ३८ स्थानं नाप्नोति; यतः स यं प्रेषितवान् यूयं तस्मिन् न

३९ विश्वसिथ। धर्म्मपुस्तकानि यूयम् आलोचयध्वं, तै र्वाक्यैरनन्तायुः प्राप्स्याम इति यूयं बुध्यध्वे तद्धर्म्मपुस्तकानि मदर्थे
४० प्रमाणं ददति। तथापि यूयं परमायुःप्राप्तये मम संन्निधिम्
४१ न जिगमिषथ। अहं मानुषेभ्यः सत्कारं न गृह्लामि। अहं
४३ युष्मान् जानामि; युष्माकमन्तर ईश्वरप्रेम नास्ति। अहं निजपितु र्नाम्नागतोस्मि, तथापि मां न गृह्लीथ, किन्तु कश्चिद्
४४ यदि स्वनाम्ना समागमिष्यति तर्हि तं ग्रहीष्यथ। यूयम् ईश्वरात् सत्कारं न चेष्टित्वा केवलं परस्परं सत्कारम् चेद् आदद्ध्वे तर्हि
४५ कथं विश्वसितुं शक्नुथ? पितुः समीपेऽहं युष्मान् अपवदिष्यामीति मा चिन्तयत, यस्मिन् युष्माकं विश्वासः स एव मूसा
४६ युष्मान् अपवदति। यदि यूयं तस्मिन् व्यश्वसिष्यत तर्हि
४७ मय्यपि व्यश्वसिष्यत, यत् स मयि लिखितवान्। ततो यदि तेन लिखितानि न प्रतीथ, तर्हि मम वाक्यानि कथं प्रत्येष्यथ?

---

## ६ षष्ठोऽध्यायः।

१ ख्रीष्टस्य सिन्धुपारगमनं ४ पञ्चभिः पूपैर्द्वाभ्यां मत्स्याभ्याञ्च पञ्चसहस्रलोकानां भोजनं १६ तोयोपरि ख्रीष्टस्य पद्व्रजनं २२ तदन्तिके बहुलोकागते तेषामुपदेशः ४१ स्वस्याहाररूपकथनं ५२ विवादियिहूदीयान् प्रति प्रत्युत्तरं ६० बहुलोकैस्तस्य त्यागः शिष्याणां स्थिरस्थितिश्च।

१ ततः परं यीशु र्गालील्प्रदेशीयस्य तिविरियानाम्नः सिन्धोः
२ पारं गतवान्। ततो व्याधिमल्लोकस्वास्थ्यकरणरूपाणि तस्या-
३ श्चर्य्याणि कर्म्माणि दृष्ट्वा बहवो जनास्तत्पश्चाद् अगच्छन्। ततो यीशुः पर्व्वतमारुह्य तत्र शिष्यैः साकम् उपाविशत्।
४ तस्मिन् समये निस्तारोत्सवनाम्नि यिहूदीयानाम् उत्सव
५ उपस्थिते यीशु र्नेत्रे उत्तोल्य बहुलोकान् स्वसमीपागतान्

विलोक्य फिलिपं पृष्टवान् एतेषां भोजनाय भोज्यद्रव्याणि वयं कुत्र क्रेतुं शक्नुमः? वाक्यमिदं तस्य परीक्षार्थम् अवादीत् ६ किन्तु यत् करिष्यति तत् स्वयम् अजानात्। फिलिपः प्रत्यवोचत् ७ एतेषाम् एकैको यद्यल्पम् अल्पं प्राप्नोति तर्हि मुद्रापादद्विशतेन क्रीतपूपा अपि न्यूना भविष्यन्ति। शिमोन्पितरस्य भ्राता ८ आन्द्रियाख्यः शिष्याणामेको व्याहृतवान्, अत्र कस्यचिद् बाल- ९ कस्य समीपे पञ्च यावपूपाः क्षुद्रमत्स्यद्वयञ्च सन्ति किन्तु लोकानां एतावतां मध्ये तैः किं भविष्यति? पश्चाद् यीशुरवदत् १० लोकानुपवेशयत; तत्र बहुयवससत्त्वात् पञ्चसहस्रेभ्यो न्यूना अधिका वा पुरुषा भूम्याम् उपाविशन्। ततो यीशुस्तान् पूपाना- ११ दाय ईश्वरस्य गुणान् कीर्त्तयित्वा शिष्येषु समार्पयत्; ततस्ते तेभ्य उपविष्टलोकेभ्यः पूपान् यथेष्टमत्स्यञ्च प्रादुः। तेषु तृप्तेषु स १२ तानवोचद् एतेषां किञ्चिदपि यथा नापचीयते तथा सर्व्वाण्यवशिष्टानि संगृह्णीत। ततः सर्व्वेषां भोजनात् परं ते तेषां १३ पञ्चानां यावपूपानां अवशिष्टान्यखिलानि संगृह्य द्वादशडल्लकान् अपूरयन्। अपरं यीशोरेतादृशीम् आश्चर्य्यक्रियां दृष्ट्वा १४ लोका मिथो वक्तुमारेभिरे, जगति यस्यागमनं भविष्यति स एवायम् अवश्यं भविष्यद्वक्ता। अतएव लोका आगत्य तमाक्रम्य १५ राजानं करिष्यन्ति यीशुस्तेषाम् ईदृशं मानसं विज्ञाय पुनश्च पर्व्वतम् एकाकी गतवान्।

सायंकाल उपस्थिते शिष्या जलधितटं व्रजित्वा नावमारुह्य १६ कफर्नाहूम्नगरदिशि सिन्धौ वाहयित्वागमन्। तस्मिन् समये १७ तिमिर उपातिष्ठत् किन्तु यीशुस्तेषां समीपं नागच्छत्। तदा १८ प्रबलपवनवहनात् सागरे महातरङ्गो भवितुम् आरेभे। ततस्ते १९

वाहयित्वा द्विचान् क्रोशान् गताः पश्चाद् यीशुं जलधेरुपरि पद्भ्यां व्रजन्तं नौकान्तिकम् आगच्छन्तं विलोक्य त्रासयुक्ता
२० अभवन्; किन्तु स तानुक्तवान् अयमहं माभैष्ट। तदा ते तं
२१ स्वैरं नावि गृहीतवन्तः; तदा तत्क्षणाद् उद्दिष्टस्थाने नौरुपास्थात्।

२२ यया नावा शिष्या अगच्छन् तदन्या कापि नौका तस्मिन् स्थाने नासीत् ततो यीशुः शिष्यैः साकं नागमत् केवलाः
२३ शिष्या अगमन् एतत् पारस्था लोका ज्ञातवन्तः। किन्तु ततः परं प्रभु र्यत्र ईश्वरस्य गुणान् अनुकीर्त्त्य लोकान् पूपान् अभोजयत् तत्स्थानस्य समीपस्थतिविरियाया अपरास्तरण्य
२४ आगमन्। यीशुस्तत्र नास्ति शिष्या अपि तत्र न सन्ति, लोका इति विज्ञाय यीशुं गवेषयितुं तरणिभिः कफर्नाहूम्पुरं
२५ गताः। ततस्ते सरित्पतेः पारे तं साचात् प्राप्य प्रावोचन्, हे
२६ गुरो भवान् अत्र स्थाने कदागमत्? तदा यीशुस्तान् प्रत्यवादीद् युष्मानहं यथार्थतरं वदामि आश्चर्य्यकर्म्मदर्शनाद्धेतो
२७ र्न किन्तु पूपभोजनात् तेन तृप्तत्वाच्च मां गवेषयथ। चयणीयभक्ष्यार्थं मा श्राम्यिष्ट किन्त्वनन्तायुर्भक्ष्यार्थं श्राम्यत, तस्मात् तादृशं भक्ष्यं मनुजपुत्रो युष्मभ्यं दास्यति; तस्मिन् तात ईश्वरः
२८ प्रमाणं प्रादात्। तदा तेऽपृच्छन् ईश्वराभिमतं कर्म्म कर्त्तुम्
२९ अस्माभिः किं कर्त्तव्यं? ततो यीशुरवदद् ईश्वरो यं प्रैरयत्
३० तस्मिन् विश्वसनम् ईश्वराभिमतं कर्म्म। तदा ते व्याहरन् भवता किं लक्षणं दर्शितं यद्दृष्ट्वा भवति विश्वसिष्यामः? त्वया
३१ किं कर्म्म कृतं? अस्माकं पूर्व्वपुरुषा महाप्रान्तरे मान्नां भोक्तुं प्रापुः यथा लिपिरास्ते।

'स्वर्गीयाणि तु भक्ष्याणि प्रददौ परमेश्वरः।'
तदा यीशुरवदद् अहं युष्मानतियथार्थं वदामि मूसा युष्मभ्यं ३२ स्वर्गीयं भक्ष्यं नादात् किन्तु मम पिता युष्मभ्यं स्वर्गीयं परमं भक्ष्यं ददाति। यः स्वर्गादवरुह्य जगते जीवनं ददाति ३३ स ईश्वरदत्तभक्ष्यरूपः। तदा ते प्रावोचन्, हे प्रभो भक्ष्य- ३४ मिदं नित्यमस्मभ्यं ददातु। यीशुरवदद् अहमेव जीवनरूपं ३५ भक्ष्यं, यो जनो मम सन्निधिम् आगच्छति स जातु क्षुधार्त्तो न भविष्यति, तथा यो जनो मां प्रत्येति स जातु तृषार्त्तो न भविष्यति। मां दृष्ट्वापि यूयं न विश्वसिथ युष्मानहम् ३६ इत्यवोचं। पिता मह्यं यावतो लोकानददात् ते सर्व्वे एव ३७ ममान्तिकम् आगमिष्यन्ति यः कश्चिच्च मम सन्निधिम् आया- स्यति तं केनापि प्रकारेण न दूरीकरिष्यामि। निजाभिमतं ३८ साधयितुं न हि किन्तु प्रेरयितुरभिमतं साधयितुं स्वर्गाद् आगतोस्मि। स यान् यान् लोकान् मह्यमददात् तेषामेकमपि ३९ न हारयित्वा शेषदिने सर्व्वानहम् उत्थापयामि, इदं मत्प्रे- रयितुः पितुरभिमतं। यः कश्चिन् मानवसुतं विलोक्य ४० विश्वसिति स शेषदिने मयोत्थापितः सन् अनन्तायुः प्राप्स्यति, इति मत्प्रेरकस्याभिमतं।

तदा स्वर्गाद् यद् भक्ष्यम् अवारोहत् तद् भक्ष्यम् अह- ४१ मेव, यिहूदीयलोकास्तस्यैतद्वाक्ये विवदमाना वक्तुमारेभिरे, यूषफः पुत्रो यीशु र्यस्य मातापितरौ वयं जानीम एष किं ४२ सएव न? तर्हि स्वर्गाद् अवारोहम् इति वाक्यं कथं वक्ति? तदा यीशुस्तान् प्रत्यवदत् परस्परं मा विवदध्वं; मत्प्रेरकेण ४३ पित्रा नाकृष्टः कोपि जनो ममान्तिकम् आयातुं न शक्नोति ४४

४५ किन्त्वागतं जनं चरमेऽह्नि प्रोत्थापयिष्यामि। 'ते सर्व्वे ईश्वरेण शिक्षिता भविष्यन्ति,' भविष्यद्वादिनां ग्रन्थेषु लिपिरित्थमास्ते; अतो यः कश्चित् पितुः सकाशात् श्रुत्वा शिक्षते स एव
४६ मम समीपम् आगमिष्यति। य ईश्वराद् अजायत तं विना कोपि मनुष्यो जनकं नादर्शत् केवलः सएव तातम् अद्राक्षीत्।
४७ अहं युष्मान् यथार्थतरं वदामि यो जनो मयि विश्वासं
४८ करोति सोनन्तायुः प्राप्नोति। अहमेव तज्जीवनभक्ष्यं। युष्माकं
४९ पूर्व्वपुरुषा महाप्रान्तरे मान्नाभक्ष्यं भुक्त्वापि मृताः; किन्तु
५० यद्भक्ष्यं स्वर्गादागच्छत् तद् यदि कश्चिद् भुङ्क्ते तर्हि स न
५१ म्रियते। यज्जीवनभक्ष्यं स्वर्गादागच्छत् सोहमेव, इदं भक्ष्यं यो जनो भुङ्क्ते स नित्यजीवी भविष्यति। पुनश्च जगतो जीवनार्थमहं यत् स्वकीयपिशितं दास्यामि, तदेव मया वितरितं भक्ष्यम्।
५२     तस्माद् यिहूदीयाः परस्परं विवदमाना वक्तुमारेभिरे,
५३ एष भोजनार्थं स्वीयं पललं कथम् अस्मभ्यं दास्यति? तदा यीशुस्तान् अवोचद् युष्मानहं यथार्थतरं वदामि, मनुष्यपुत्रस्यामिषे युष्माभि र्न भुक्ते तस्य रुधिरे च न पीते जीवनेन
५४ सार्द्धं युष्माकं सम्बन्धो नास्ति। यो ममामिषं स्वादति मम रुधिरञ्च पिवति सोनन्तायुः प्राप्नोति ततः शेषेऽह्नि तमहम्
५५ उत्थापयिष्यामि। यतो मदीयमामिषं परमं भक्ष्यं तथा
५६ मदीयं शोणितं परमं पेयं। यो जनो मदीयं पललं स्वादति मदीयं रुधिरञ्च पिवति स मयि वसति तस्मिन्नहञ्च वसामि।
५७ मत्प्रेरयित्रा जीवता तातेन यथाहं जीवामि तद्वद् यः कश्चिन्
५८ मामत्ति सोपि मया जीविष्यति। यद्भक्ष्यं स्वर्गादागच्छत् तदिदं; यन्मान्नां स्वादित्वा युष्माकं पितरोऽम्रियन्त तादृशम्

इदं भक्ष्यं न भवति, इदं भक्ष्यं यो भक्षति स नित्यं जीविष्यति। यदा कफर्नाहूमपुर्य्यां भजनगेहे उपादिशत् तदा ५९ कथा एता अकथयत्।

तदेत्थं श्रुत्वा तस्य शिष्याणाम् अनेके परस्परम् अकथ- ६० यन्, इदं गाढं वाक्यं; वाक्यमीदृशं कः श्रोतुं शक्नुयात्? किन्तु यीशुः यिष्याणाम् इत्थं विवादं स्वचित्ते विज्ञाय ६१ कथितवान्, इदं वाक्यं किं युष्माकं विघ्नं जनयति? यदि ६२ मनुजसुतं पूर्व्ववासस्थानम् ऊर्द्ध्वं गच्छन्तं पश्यथ तर्हि किं भविष्यति? आत्मैव जीवनदायकः, वपु र्निष्फलं; युष्मभ्यमहं ६३ यानि वचांसि कथयामि तान्यात्मा जीवनञ्च। किन्तु युष्माकं ६४ मध्ये केचन अविश्वासिनः सन्ति; के के न विश्वसन्ति को वा तं परकरेषु समर्पयिष्यति तान् यीशुराप्रथमाद् वेत्ति। अपर- ६५ मपि कथितवान् अस्मात् कारणाद् अकथयं पितुः सकाशात् शक्तिमप्राप्य कोपि ममान्तिकम् आगन्तुं न शक्नोति।

तत्कालेऽनेके शिष्या व्याघुय्य तेन सार्द्धं पुन र्नागच्छन्। ६६ तदा यीशु र्द्वादशशिष्यान् उक्तवान् यूयमपि किं यास्यथ? ६७ ततः शिमोन्पितरः प्रत्यवोचत् हे प्रभो कस्याभ्यर्णं गमिष्यामः? ६८ अनन्तजीवनदायिन्यो याः कथास्तास्त्वैव। भवान् अमरेश्व- ६९ रस्याभिषिक्तपुत्त्र इति विश्वस्य निश्चितं जानीमः। तदा ७० यीशुरवदत् किमहं युष्माकं द्वादशजनान् मनोनीतान् न कृतवान्? किन्तु युष्माकं मध्येपि कश्चिदेको विघ्नकारी विद्यते। इमां कथां स शिमोनः पुत्रम् ईष्करीयोतीयं यिहूदाम् ७१ उद्दिश्य कथितवान्, यतो द्वादशानां मध्ये गणितः स तं परकरेषु समर्पयिष्यति।

# ७ सप्तमोऽध्यायः।

१ ख्रीष्टस्य यिरूशालमगमनं १४ मन्दिरस्थलोकेभ्य उपदेशः २५ विवादिनः प्रति प्रत्युत्तरं ३२ तस्योपदेशः ३७ तमुद्दिश्य लोकानां विचारः ४५ महायाजकानां फिरूशिनाञ्च ख्रीष्टं प्रति विपक्षता।

१ ततः परं यिहूदीयलोकास्तं हन्तुं समैहन्त तस्माद् यीशु र्यिहूदाप्रदेशे पर्य्यटितुं नेच्छन् गालील्प्रदेशे पर्य्यटितुं प्रार-२ भत। किन्तु तस्मिन् समये यिहूदीयानां दूष्यवासनामोत्सव ३ उपस्थिते तस्य भ्रातरस्तम् अवदन् यानि कर्म्माणि त्वया क्रियन्ते तानि यथा तव शिष्याः पश्यन्ति तदर्थं त्वमितः स्थानाद् ४ यिहूदीयदेशं व्रज। यः कश्चित् स्वयं प्रचिकाशिषति स कदापि गुप्तं कर्म्म न करोति; यदीदृशं कर्म्म करोषि तर्हि ५ जगति निजं परिचायय। यतस्तस्य भ्रातरोपि तं न विश्व-६ सन्ति। तदा यीशुस्तान् अवोचत् मम समय इदानीं नोप-७ तिष्ठति किन्तु युष्माकं समयः सततम् उपतिष्ठति। जगतो लोका युष्मान् ऋतीयितुं न शक्नुवन्ति किन्तु मामेव ऋतीयन्ते, यतस्तेषां कर्म्माणि दुष्टानि तत्र साक्ष्यमिदम् अहं ददामि। ८ अतएव यूयम् उत्सवेऽस्मिन् यात, नाहम् इदानीम् अस्मिन्नु-९ त्सवे यामि, यतो मम समय इदानीं न सम्पूर्णः। इति १० वाक्यम् उक्त्वा स गालीलि स्थितवान्, किन्तु तस्य भ्रातृषु तत्र ११ प्रस्थितेषु सत्सु सोऽप्रकट उत्सवम् अगच्छत्। अनन्तरम् उत्सवम् उपस्थिता यिहूदीयास्तं मृगयित्वापृच्छन् स कुत्र? १२ ततो लोकानां मध्ये तस्मिन् नानाविधा विवादा भवितुम् आरब्धवन्तः। केचिद् अवोचन् स उत्तमः पुरुषः, केचिद् १३ अवोचन् न तथा वरं लोकानां भ्रमं जनयति। किन्तु यिहूदीयानां भयात् कोपि तस्य पक्षे स्पष्टं नाकथयत्।

ततः परम् उत्सवस्य मध्यसमये यीशु र्मन्दिरं गत्वा समु- १४ पदिशति स्म। ततो यिहूदीया लोका आश्चर्य्यं ज्ञात्वाकथयन्, १५ एष मानुषो नाधीत्य कथम् एतादृशो विद्वानभूत्? तदा १६ यीशुः प्रत्यवोचद् उपदेशोयं न मम किन्तु यो मां प्रेषितवान् तस्य। यो जनो निदेशं तस्य ग्रहीष्यति ममोपदेशो १७ मत्तो भवति किम् ईश्वराद् भवति स जनस्तज्ज्ञातुं शक्ष्यति। यो जनः स्वतः कथयति स स्वीयं गौरवम् ईहते, किन्तु यः १८ प्रेरयितु र्गौरवम् ईहते स सत्यवादी तस्मिन् कोप्यधर्म्मो नास्ति। मूसा युष्मभ्यं व्यवस्थाग्रन्थं किं नाददात्? किन्तु १९ युष्माकं कोपि तां व्यवस्थां न समाचरति। मां हन्तुं कुतो यतध्वे? तदा लोका अवदन् त्वं भूतग्रस्तस्त्वां हन्तुं को यतते? २० ततो यीशुरवोचद् एकं कर्म्म मयाकारि तस्माद् यूयं सर्व्वे २१ महाश्चर्य्यं मन्यध्वे। मूसा युष्मभ्यं त्वक्छेदविधिं प्रददौ, स २२ मूसातो न जातः किन्तु पितृपुरुषेभ्यो जातः, तेन विश्रामवारेऽपि मानुषाणां त्वक्छेदं कुरुथ। अतएव विश्रामवारे २३ मनुष्याणां त्वक्छेदे कृते यदि मूसाव्यवस्थालङ्घनं न भवति, तर्हि मया विश्रामवारे मानुषः सम्पूर्णरूपेण स्वस्थोऽकारि तत्कारणाद् यूयं किं मह्यं कुप्यथ? सपक्षपातं विचारमकृत्वा २४ न्याय्यं विचारं कुरुत।

तदा यिरूशालम्निवासिनः कतिपयजना अकथयन्, इमे २५ यं हन्तुं चेष्टन्ते स एवायं किं न? किन्तु पश्यत निर्भयः सन् २६ कथां कथयति तथापि किमपि न वदन्त्येते, अयमेवाभिषिक्तो भवतीति निश्चितं किमधिपतयो जानन्ति? मनुजोयं कस्मादा- २७ गमद् इति वयं जानीमः किन्त्वभिषिक्त आगते स कस्मादा-

२८ गतवान् इति कोपि ज्ञातुं न शक्ष्यति । तदा यीशु र्मध्ये-
मन्दिरम् उपदिशन् उच्चैःकारम् उक्तवान्, यूयं किं मां
जानीथ? कस्माच्चागतोस्मि तदपि किं जानीथ? नाहं स्वत
आगतोस्मि किन्तु यः सत्यवादी सएव मां प्रेषितवान्, यूयं तं
२९ न जानीथ । तमहं जाने तेनाहं प्रेरित आगतोस्मि । तस्माद्
३० यिहूदीयास्तं धर्त्तुम् उद्यतास्तथापि कोपि तस्य गात्रे हस्तं
३१ नार्पयद् यतो हेतोस्तदा तस्य समयो नोपतिष्ठति । किन्तु
बहवो लोकास्तस्मिन् विश्वस्य कथितवन्तोऽभिषिक्तपुरुष आगत्य
मानुषस्यास्य क्रियाभ्यः किम् अधिका आश्चर्य्याः क्रियाः
करिष्यति ?

३२　ततः परं लोकास्तस्मिन् इत्थं विवदन्ते, फिरूशिनः प्रधान-
याजकाश्चेति श्रुतवन्तस्तं धृत्वा नेतुं पदातिगणं प्रेषयामासुः ।
३३ ततो यीशुरवदद् अहम् अल्पदिनानि युष्माभिः सार्द्धं स्थित्वा
३४ मत्प्रेरयितुः समीपं यास्यामि । मां मृगयिष्यध्वे किन्तूद्देशं न
३५ लप्स्यध्वे; यत्र स्थास्यामि तत्र यूयं गन्तुं न शक्ष्यथ । तदा
यिहूदीयाः परस्परं वक्तुमारेभिरे, अस्योद्देशं न प्राप्स्याम
एतादृशं किं स्थानं यास्यति ? भिन्नदेशे विकीर्णानां यिहूदी-
३६ यानां सन्निधिम् एष गत्वा तान् उपदेक्ष्यति किं? नो चेत्
मां गवेषयिष्यथ किन्तूद्देशं न प्राप्स्यथ, एष कीदृशं वाक्य-
मिदं वदति ?

३७　अनन्तरम् उत्सवस्य चरमेऽहनि, अर्थात् प्रधानदिने यीशु-
रुत्तिष्ठन् उच्चैःकारम् आह्वयन् उदितवान्, यदि कश्चित्
३८ तृषार्त्तो भवति तर्हि ममान्तिकम् आगत्य पिवतु । यः
कश्चिन्मयि विश्वसिति धर्म्मग्रन्थस्य वचनानुसारेण तस्याभ्यन्तरतो

ऽमृततोयस्य स्रोतांसि निर्गमिष्यन्ति। ये तस्मिन् विश्वसन्ति ३९ त आत्मानं प्राप्स्यन्तीत्यर्थे स इदं वाक्यं व्याहृतवान् एतत्कालं यावद् यीशु र्विभवं न प्राप्तस्तस्मात् पवित्र आत्मा नादीयत। एतां वाणीं श्रुत्वा बहवो लोका अवदन् अयमेव निश्चितं स ४० भविष्यद्वादी। केचिद् अकथयन् एषएव सोभिषिक्तः, किन्तु ४१ केचिद् अवदन् सोभिषिक्तः किं गालील्प्रदेशे जनिष्यते? सोभिषिक्तो दायूदो वंशे दायूदो जन्मस्थाने बैत्लेहमि पत्तने ४२ जनिष्यते धर्म्मग्रन्थे किमित्थं लिखितं नास्ति? इत्थं तस्मिन् ४३ लोकानां भिन्नवाक्यता जाता। कतिपयलोकास्तं धर्त्तुम् ४४ ऐच्छन् तथापि तद्वपुषि कोपि हस्तं नार्पयत्।

अनन्तरं पदातिगणे प्रधानयाजकानां फिरूशिनाञ्च ४५ समीपमागतवति ते तान् अपृच्छन् कुतो हेतोस्तं नानयत? तदा पदातयः प्रत्यवदन् स मानव इव कोपि कदापि नोपा- ४६ दिशत्। ततः फिरूशिनः प्रावोचन् यूयमपि किमभ्राम्यिष्ट? ४७ अधिपतीनां फिरूशिनाञ्च कोपि किं तस्मिन् व्यश्वसीत्? ये ४८ शास्त्रं न जानन्ति त इमेऽधमलोकाएव शापग्रस्ताः। तदा ५० निकदीमनामा तेषामेको यः क्षणदायां यीशोः सन्निधिम् अगात् स उक्तवान्, तस्य वाक्ये न श्रुते कर्म्मणि च न विदिते ५१ ऽस्माकं व्यवस्था किं कञ्चन मनुजं दोषीकरोति? ततस्ते व्याहृ- ५२ रन्, त्वमपि किं गालीलीयलोकः? विविच्य पश्य गालीलि कोपि भविष्यद्वादी नोत्पद्यते। ततः परं सर्व्वे स्वं स्वं गृहं ५३ गताः, किन्तु यीशु र्जैतुननामानं शिलोच्चयं गतवान्।

---

## ८ अष्टमोऽध्यायः।

१ एकस्या व्यभिचारिण्या मोचनं १२ भाण्डागार उपदेशः २१ यिहूदीयैः सार्कं विवदनं ३० इब्राहीमि कथनं ४८ स्वनिर्दोषत्वप्रकटनं मन्दिराद्गमनञ्च।

१ प्रत्यूषे यीशुः पुनर्मन्दिरम् आगच्छत्, ततः सर्व्वेषु लोकेषु
२ तस्य समीप आगतेषु स उपविश्य तान् उपदेष्टुम् आरभत।
३ तदा अध्यापकाः फिरूशिनश्च व्यभिचारकर्म्मणि धृतां स्त्रिय-
४ मेकाम् आनीय सर्व्वेषां मध्ये स्थापयित्वा व्याहरन्, हे गुरो
योषितम् इमां व्यभिचारकर्म्म कुर्व्वाणां लोका धृतवन्तः।
५ एतादृशलोकाः पाषाणाघातेन हन्तव्या इति विधिर्मूसाव्य-
६ वस्थाग्रन्थे लिखितोस्ति किन्तु भवान् किमादिशति? ते तम-
पवदितुं परीक्षाभिप्रायेण वाक्यमिदम् अपृच्छन् किन्तु स
७ प्रह्वीभूय भूमावङ्गुल्या लेखितुम् आरभत। ततस्तैः पुनः पुनः
पृष्ट उत्थाय कथितवान्, युष्माकं मध्ये यो जनो निरपराधी
८ सएव प्रथमम् एनां पाषाणेनाहन्तु। पश्चात् स पुनश्च प्रह्वी-
९ भूय भूमौ लेखितुम् आरभत। तां कथां श्रुत्वा ते स्वस्व-
मनसि प्रबोधं प्राप्य ज्येष्ठानुक्रमं एकैकशः सर्व्वे बहिरगच्छन्,
ततो यीशुरेकाकी त्यक्तोभवत् मध्यस्थाने दण्डायमाना सा
१० योषा च स्थिता। तत्पश्चाद् यीशुरुत्थाय तां वनितां विना
कमप्यपरं न विलोक्य पृष्टवान्, हे वामे तवापवादकाः कुत्र?
११ कोपि त्वां किं न दण्डयति? सावदत् हे महेच्छ कोपि
न; तदा यीशुरवोचत्, नाहमपि दण्डयामि, याहि पुनः
पापं माकार्षीः।

१२ ततो यीशुः पुनरपि लोकेभ्य इत्थं कथयितुम् आरभत,
जगतोहं ज्योतिःस्वरूपो यः कश्चिन् मत्पश्चाद् गच्छति स
१३ तिमिरे न भ्रमित्वा जीवनरूपां दीप्तिं प्राप्स्यति। ततः फिरू-

शिनोऽवादिषुस्त्वं स्वार्थे स्वयं साक्ष्यं ददासि तस्मात् तव साक्ष्यं ग्राह्यं न भवति। तदा यीशुः प्रत्युदितवान् यद्यपि स्वार्थेऽहं १४ स्वयं साक्ष्यं ददामि तथापि मत्साक्ष्यं ग्राह्यं यस्माद् अहं कुत आगतोस्मि क्व यामि च तदहं जानामि, किन्तु कुत आगतोस्मि कुत्र गच्छामि च तद् यूयं न जानीथ। यूयं लौकिकं १५ विचारयथ नाहं किमपि विचारयामि। किन्तु यदि विचार- १६ यामि तर्हि मम विचारो ग्रहीतव्यो यतोहम् एकाकी नास्मि प्रेरयिता पिता मया सह विद्यते। द्वयो र्जनयोः साक्ष्यं १७ ग्रहणीयं भवतीति युष्माकं व्यवस्थाग्रन्थे लिखितमस्ति। अहं १८ स्वार्थे स्वयं साक्षित्वं ददामि यश्च मम तातो मां प्रेरितवान् सोपि मदर्थे साक्ष्यं ददाति। तदा तेऽपृच्छन् तव तातः १९ कुत्र? ततो यीशुः प्रत्यवादीद् यूयं मां न जानीथ मत्पितरञ्च न जानीथ, यदि माम् अज्ञास्यत तर्हि मम तातमप्यज्ञास्यत। यीशु र्मन्दिर उपदिश्य भाण्डागारे कथा एता अकथयत् २० तथापि तं प्रति कोपि करं नोदतोलयत्।

ततः परं यीशुः पुनरुदितवान् अधुनाहं गच्छामि यूयं मां २१ गवेषयिष्यथ किन्तु निजैः पापै र्मरिष्यथ यत्स्थानम् अहं यास्यामि तत्स्थानं यूयं यातुं न शक्ष्यथ। तदा यिहूदीयाः २२ प्रावोचन् किमयम् आत्मघातं करिष्यति? यतो यत् स्थानम् अहं यास्यामि तत् स्थानं यूयं यातुं न शक्ष्यथ इति वाक्यं ब्रवीति। ततो यीशुस्तेभ्यः कथितवान्, यूयम् अधःस्थानीया लोका २३ अहम् ऊर्द्ध्वस्थानीयः, यूयम् एतज्जगत्सम्बन्धीया अहम् एतज्जगत्सम्बन्धीयो न। तस्मात् कथितवान् यूयं निजैः पापै र्मरिष्यथ, २४ यतोहं स पुमान् इति यदि न विश्वसिथ तर्हि निजैः पापै

२५ मरिष्यथ। तदा ते ऽपृच्छन् कस्त्वं? ततो यीशुः कथितवान् युष्माकं सन्निधौ यस्य प्रस्तावम् आ प्रथमात् करोमि सएव
२६ पुरुषोहं। युष्मासु मया बहुवाक्यं वक्तव्यं विचारयितव्यञ्च, किन्तु मत्प्रेरयिता सत्यवादी तस्य समीपे यदहं श्रुतवान् तदेव
२७ जगते कथयामि। किन्तु स जनके वाक्यमिदं प्रोक्तवान् इति
२८ ते नाबुध्यन्त। ततो यीशुरकथयद् यदा मनुष्यपुत्रम् ऊर्द्ध उत्थापयिष्यथ तदाहं स पुमान् केवलः स्वयं किमपि कर्म्म न करोमि किन्तु तातो यथा शिक्षयति तदनुसारेण वाक्यमिदं
२९ वदामीति च यूयं ज्ञातुं शक्ष्यथ। मत्प्रेरयिता पिता माम् एकाकिनं न त्यजति स मया सार्द्धं तिष्ठति यतोहं तदभिमतं कर्म्म सदा करोमि।

३० तदा तस्यैतानि वाक्यानि श्रुत्वा बहवस्तस्मिन् व्यश्वसन्। तत्र
३१ ये यिहूदीया व्यश्वसन् यीशुस्तेभ्योऽकथयत्, मम वाक्ये यदि
३२ यूयम् आस्थां कुरुथ तर्हि मम शिष्या भूत्वा सत्यत्वं ज्ञास्यथ;
३३ ततः सत्यतया युष्माकं मोक्षो भविष्यति। तदा ते प्रत्यवादिषुः, वयम् इब्राहीमो वंशः कदापि कस्यापि दासा न जातास्तर्हि
३४ युष्माकं मुक्ति र्भविष्यतीति वाक्यं कथं ब्रवीषि? तदा यीशुः प्रत्यवदद् युष्मानहं यथार्थतरं वदामि, यः पापं करोति स
३५ पापस्य दासः। दासश्च निरन्तरं निवेशने न तिष्ठति किन्तु पुत्रो
३६ निरन्तरं तिष्ठति। अतः पुत्रो यदि युष्मान् मोचयति तर्हि
३७ नितान्तमेव मुक्ता भविष्यथ। यूयम् इब्राहीमो वंश इत्यहं जानामि किन्तु मम कथा युष्माकम् अन्तःकरणेषु स्थानं न
३८ प्राप्नुवन्ति तस्माद्धेतो र्मां हन्तुम् ईहध्वे। अहं स्वपितुः समीपे यदपश्यं तदेव कथयामि, तथा यूयमपि स्वपितुः समीपे

यदपश्यत तदेव कुरुध्वे। तदा ते प्रत्यवोचन् इब्राहीम् अस्माकं ३९ पिता ततो यीशुरकथयद् यदि यूयम् इब्राहीमः सन्ताना अभविष्यत तर्हि इब्राहीम आचरणवद् आचरिष्यत। ईश्वरस्य ४० मुखात् सत्यं वाक्यं श्रुत्वा युष्मान् ज्ञापयामि योऽहं तं मां हन्तुं चेष्टध्वे, इब्राहीम् एतादृशं कर्म्म न चकार। यूयं स्वस्वपितुः ४१ कर्म्माणि कुरुथ; तदा तैरुक्तं न वयं जारजाता अस्माकम् एकएव पितास्ति स एवेश्वरः। ततो यीशुना कथितम् ईश्वरो ४२ यदि युष्माकं तातोऽभविष्यत् तर्हि यूयं मयि प्रेमाकरिष्यत, यतोऽहम् ईश्वरान्निर्गत्यागतोऽस्मि स्वतो नागतोऽहं स मां प्राहिणोत्। यूयं मम वाक्यमिदं न बुध्यध्वे कुतः? यतो यूयं ४३ ममोपदेशं सोढुं न शक्नुथ। यूयं शैतान्पितुः सन्ताना एतस्माद् ४४ युष्माकं पितुरभिलाषं पूरयथ; स आ प्रथमात् नरघाती तदन्तः सत्यत्वस्य लेशोऽपि नास्ति कारणादतः स सत्यतायां नातिष्ठत्; स यदा मृषा कथयति तदा निजस्वभावानुसारेणैव कथयति यतो स मृषाभाषी मृषोत्पादकश्च। अहं तथ्यवाक्यं ४५ वदामि कारणादस्माद् यूयं मां न प्रतीथ। मयि पापमस्तीति ४६ प्रमाणं युष्माकं को दातुं शक्नोति? यद्यहं तथ्यवाक्यं वदामि तर्हि कुतो मां न प्रतीथ? यः कश्चन ईश्वरीयो लोकः स ४७ ईश्वरीयकथायां मनो निधत्ते, यूयम् ईश्वरीयलोका न भवथ तन्निदानात् तत्र न मनांसि निधद्ध्वे।

तदा यिहूदीयाः प्रत्यवादिषुः, त्वमेकः शोमिरोणीयो ४८ भूतग्रस्तश्च वयं किमिदं भद्रं नावादिष्म? ततो यीशुः प्रत्य- ४९ वादीत् नाहं भूतग्रस्तः किन्तु निजतातं सम्मन्ये तस्माद् यूयं माम् अपमन्यध्वे। अहं स्वसुख्यातिं न चेष्टे किन्तु चेष्टिता ५०

५१ विचारयिता चापर एक आस्ते। अहं युष्मभ्यम् अतीव यथार्थं कथयामि; यो नरो मदीयां वाचं मन्यते स कदाचन निधनं
५२ न द्रक्ष्यति। यिहूदीयास्तमवदन्, त्वं भूतग्रस्त इतीदानीम् अवैष्म। इब्राहीम् भविष्यद्वादिनश्च सर्व्वे मृताः किन्तु त्वं भाषसे यो नरो मम भारतीं गृह्लाति स जातु निधनास्वादं
५३ न लप्स्यते। तर्हि त्वं किम् अस्माकं पूर्व्वपुरुषाद् इब्राहीमोपि महान्? यस्मात् सोपि मृतः, भविष्यद्वादिनोपि मृताः, त्वं स्वं
५४ कं पुमांसं मनुषे? यीशुः प्रत्यवोचद् यद्यहं स्वं स्वयं सम्मन्ये तर्हि मम तत् सम्मननं किमपि न किन्तु मम तातो यं यूयं
५५ स्वीयम् ईश्वरं भाषध्वे सएव मां सम्मनुते। यूयं तं नावगच्छथ किन्त्वहं तमवगच्छामि तं नावगच्छामीति वाक्यं यदि वदामि तर्हि यूयमिव मृषाभाषी भवामि; किन्त्वहं तमवगच्छामि
५६ तदाज्ञामपि गृह्लामि। युष्माकं पूर्व्वपुरुष इब्राहीम् मम समयं
५७ द्रष्टुम् अतीवावाञ्छत् तन्निरीक्ष्यानन्दच्च। तदा यिहूदीया अपृच्छन् तव वयः पञ्चाशद्वत्सरा न, त्वं किम् इब्राहीमम्
५८ अद्राक्षीः? यीशुः प्रत्यवादीद् युष्मानहं यथार्थतरं वदामि
५९ इब्राहीमो जन्मनः पूर्व्वकालमारभ्याहं विद्ये। तदा ते पाषाणान् उत्तोल्य तमाहन्तुम् उदयच्छन् किन्तु यीशु र्गुप्तो मन्दिराद् बहिर्गत्य तेषां मध्येन प्रस्थितवान्।

---

## ९ नवमोऽध्यायः।

१ अन्धाय चक्षुर्दानं ८ तस्माल्लोकानामाश्चर्य्यज्ञानं १३ फिरूशिनां समीपमन्धस्य नयनं १८ तस्य पित्रोः कथा २४ फिरूशिनां कथा ३५ अन्धस्यापगमनं तस्य ख्रीष्टसाक्षात्कारश्च।

१ ततः परं यीशुर्गच्छन् मार्गमध्ये जन्मान्धं नरम् अपश्यत्।

ततः शिष्यास्तम् अपृच्छन्, हे गुरो नरोयं स्वपापेन वा स्वपित्रोः २
पापेनान्धोऽजायत? ततः स प्रत्युदितवान्, एतस्य वास्य पित्रोः ३
पापाद् एतादृशोभूद् इति नहि किन्त्वनेन यथेश्वरस्य कर्म्म
प्रकाश्यते तद्धेतोरेव। दिने तिष्ठति मत्प्रेरयितुः कर्म्म मया ४
कर्त्तव्यं यदा किमपि कर्म्म न क्रियते तादृशी निशागच्छति।
अहं यावत्कालं जगति तिष्ठामि तावत्कालं जगतो ज्योतिः- ५
स्वरूपोस्मि। इत्युक्त्वा भूमौ निष्ठीवं निक्षिप्य तेन पङ्कं कृतवान्; ६
पश्चात् तत्पङ्केन तस्यान्धस्य नेत्रे प्रलिप्य तमित्यादिशत्, गत्वा ७
शिलोहे ऽर्थात् प्रेरितनाम्नि सरसि स्नाहि। ततोन्धो गत्वा
तत्रास्नात् ततः प्रसन्नचक्षु र्भूत्वा व्याघुय्यागात्।

अपरञ्च समीपवासिनो लोका ये च तं पूर्व्वमन्धम् अपश्यन् ८
ते वक्तुम् आरभन्त, योन्धलोको वर्त्मन्युपविश्याभिक्षत स एवायं
जनः किं न भवति? केचिदवदन् स एव केचिदवोचन् तादृशो ९
भवति किन्तु स स्वयमब्रवीत् स एवाहं भवामि। अतएव १०
ते ऽपृच्छन् त्वं कथं दृष्टिं प्राप्तवान्? ततः सोवदद् यीशु- ११
नामक एको जनो मम नयने पङ्केन प्रलिप्य इत्याज्ञापयत्
शिलोहकासारं गत्वा तत्र स्नाहि। ततस्तत्र गत्वा मयि स्नाते
दृष्टिमहं लब्धवान्। तदा ते ऽवदन् स पुमान् कुत्र? तेनोक्तं १२
नाहं जानामि।

अपरं तस्मिन् पूर्व्वान्धे जने फिरूशिनां निकटम् आनीते १३
सति फिरूशिनोपि तमपृच्छन् कथं दृष्टिं प्राप्तोसि? ततः स १४
कथितवान् स पङ्केन मम नेत्रे ऽलिम्पत् पश्चात् स्नात्वा दृष्टि-
मलभे। किन्तु यीशु र्विश्रामवारे कर्द्दमं कृत्वा तस्य नयने १५
प्रसन्नेऽकरोद् इतिकारणात् कतिपयफिरूशिनोऽवदन्, स १६

पुमान् ईश्वरान्न, यतः स विश्रामवारं न मन्यते। ततोन्ये केचित् प्रत्यवदन् पापी पुमान् किम् एतादृशम् आश्चर्य्यं कर्म्म कर्त्तुं
१७ शक्नोति? इत्थं तेषां परस्परं भिन्नवाक्यत्वम् अभवत्। पश्चात् ते पुनरपि तं पूर्व्वान्धं मानुषम् अप्राक्षुः, यो जनस्तव चक्षुषी प्रसन्ने कृतवान् तस्मिन् त्वं किं वदसि? स उक्तवान् स भविष्यद्वादी।

१८ स दृष्टिम् आप्तवान् इति यिहूदीयास्तस्य दृष्टिं प्राप्तस्य
१९ जनस्य पित्रो र्मुखाद् अश्रुत्वा न प्रत्ययन्। अतएव ते ताव-पृच्छन् युवयो र्यं पुत्रं जन्मान्धं वदथः स किमयं? तर्हीदानीं
२० कथं द्रष्टुं शक्नोति? ततस्तस्य पितरौ प्रत्यवोचताम्, अयम्
२१ आवयोः पुत्र आ जनेरन्धश्च तदप्यावां जानीवः; किन्त्वधुना कथं दृष्टिं प्राप्तवान् तदावां न जानीवः, कोस्य चक्षुषी प्रसन्ने कृतवान् तदपि न जानीव एष वयःप्राप्त एनं पृच्छत स्वकथां
२२ स्वयं वक्ष्यति। यिहूदीयानां भयात् तस्य पितरौ वाक्यमिदम् अवदतां यतः कोपि मनुष्यो यदि यीशुम् अभिषिक्तं वदति तर्हि स भजनगृहाद् दूरीकारिष्यते, यिहूदीया इति मन्त्र-
२३ णाम् अकुर्व्वन्; अतस्तस्य पितरौ व्याहरताम् एष वयःप्राप्त एनं पृच्छत।

२४ तदा ते पुनश्च तं पूर्व्वान्धम् आहूय व्याहरन् ईश्वरस्य गुणान्
२५ वद, एष मनुष्यः पापीति वयं जानीमः। तदा स उक्तवान् स पापी न वेति नाहं जाने, पूर्व्वमन्ध आसमहम् अधुना पश्या-
२६ मीति मात्रं जानामि। ते पुनरपृच्छन् स त्वां प्रति किमकरोत्?
२७ कथं नेत्रे प्रसन्ने ऽकरोत्? ततः सोवादीद् एककृत्वोकथयं यूयं न शृणुथ तर्हि कुतः पुनः श्रोतुम् इच्छथ? यूयमपि किं
२८ तस्य शिष्या भवितुम् इच्छथ? तदा ते तं तिरस्कृत्य व्याहरन्

त्वं तस्य शिष्यो वयं मूसाः शिष्याः। मूसावक्त्रेणेश्वरो जगाद २९ तज्जानीमः किन्त्वेष कुत्रत्यलोक इति न जानीमः। सोवदद् ३० एष मम लोचने प्रसन्ने ऽकरोत् तथापि कुत्रत्यलोक इति यूयं न जानीथ, एतद् आश्चर्य्यं भवति। ईश्वरः पापिनां कथां ३१ न शृणोति, किन्तु यो जनस्तस्मिन् भक्तिं कृत्वा तदिष्टक्रियां करोति तस्यैव कथां शृणोति, एतद् वयं जानीमः। कोपि ३२ मनुष्यो जन्मान्धाय चक्षुषी अददात्, जगदारम्भाद् एतादृशीं कथां कोपि कदापि नाशृणोत्। अस्माद् एष मनुष्यो यदी- ३३ श्वरान्नाजायत तर्हि किञ्चिदपीदृशं कर्म्म कर्त्तुं नाशक्नोत्। ते ३४ व्याहरन् त्वं पापाद् अजायथाः किमस्मान् त्वं शिक्षयसि? पश्चात्ते तं वहिरकुर्व्वन्।

तदनन्तरं यिहूदीयैः स वहिरक्रियत यीशुरिति वार्त्तां ३५ श्रुत्वा तं साक्षात् प्राप्य पृष्टवान् ईश्वरस्य पुत्रे त्वं विश्वसिषि? तदा स प्रत्यवोचत् हे प्रभो स को यत् तस्मिन्नहं विश्वसिमि? ३६ ततो यीशुः कथितवान् त्वं तं दृष्टवान् त्वया साकं यः कथां ३७ कथयति सएव सः। तदा हे प्रभो विश्वसिमीत्युक्त्वा स तं ३८ प्राणमत्। पश्चाद् यीशुः कथितवान् नयनहीना नयनानि प्राप्नु- ३९ वन्ति नयनवन्तश्चान्धा भवन्तीत्यभिप्रायेण जगदहम् आगच्छम्। एतत् श्रुत्वा निकटस्थाः कतिपयाः फिरूशिनो व्याहरन् ४० वयमपि किमन्धाः? तदा यीशुरवादीद् यद्यन्धा अभवत ४१ तर्हि पापानि नातिष्ठन् किन्तु पश्यामीति वाक्यवदनाद् युष्माकं पापानि तिष्ठन्ति।

---

# १० दशमोऽध्यायः ।

१ ख्रीष्टेन स्वस्य मेषगृहद्वारस्वरूपस्य दर्शनं ६ तस्य तात्पर्य्यं ११ स्वस्य मेषपालकस्वरूपस्य दर्शनम् १९ ख्रीष्टेन सह यिहूदीयानां विवादः २२ लोकानामुपदेशः २९ यर्द्दननद्यास्तटगमनञ्च ।

१ अहं युष्मानतियथार्थं वदामि, यो जनो द्वारेण न प्रविश्य
२ केनाप्यन्येन मेषगृहं प्रविशति स एव स्तेनो दस्युश्च । यो द्वारेण
३ प्रविशति स एव मेषपालकः । दौवारिकस्तस्मै द्वारं मोचयति
मेषगणश्च तस्य वाक्यं शृणोति स निजान् मेषान् स्वस्वनाम्ना-
४ हूय वहिः कृत्वा नयति । तथा निजान् मेषान् वहिः कृत्वा
स्वयं तेषाम् अग्रे गच्छति, ततो मेषास्तस्य शब्दं बुध्यन्ते, तस्मात्
५ तस्य पश्चाद् व्रजन्ति । किन्तु परस्य शब्दं न बुध्यन्ते तस्मात्
तस्य पश्चान्न व्रजिष्यन्ति वरं तस्य समीपात् पलायिष्यन्ते ।

६ यीशुस्तेभ्य इमां दृष्टान्तकथाम् अकथयत् किन्तु तेन कथि-
७ तकथायास्तात्पर्य्यं ते नाबुध्यन्त । अतो यीशुः पुनरकथयत्,
युष्मानहं यथार्थतरं व्याहरामि, मेषगृहस्य द्वारम् अहमेव ।
८ मया न प्रविश्य य आगच्छन् ते स्तेना दस्यवश्च किन्तु मेषा-
९ स्तेषां कथा नाशृण्वन् । अहमेव द्वारस्वरूपः, मया यः कश्चित
प्रविशति स रक्षां प्राप्स्यति तथा वहिरन्तश्च गमनागमने कृत्वा
१० चरणस्थानं प्राप्स्यति । यो जनस्तेनः स केवलं स्तैन्यबधविना-
शान् कर्त्तुमेव समायाति किन्त्वहम् आयु दातुम् अर्थात्
बाहुल्येन तदेव दातुम् आगच्छम् ।

११ अहमेव सत्यमेषपालको यस्तु सत्यो मेषपालकः स मेषार्थं
१२ प्राणत्यागं करोति; किन्तु यो जनो मेषपालको न, अर्थाद्
यस्य मेषा निजा न भवन्ति, य एतादृशो वैतनिकः स वृकम्
आगच्छन्तं दृष्ट्वा मेजव्रजं विहाय पलायते, तस्माद् वृकस्तं व्रजं

धृत्वा विकिरति। वैतनिकः पलायते यतः स वेतनार्थी मेषार्थं १३
न चिन्तयति। अहमेव सत्यो मेषपालकः, पिता मां यथा १४
जानाति, अहञ्च यथा पितरं जानामि, तथा निजान् मेषा- १५
नपि जानामि, मेषाश्च मां जानन्ति, अहञ्च मेषार्थं प्राणत्यागं
करोमि। अपरञ्च एतद्गृहीयमेषेभ्यो भिन्ना अपि मेषा मम १६
सन्ति ते सकला आनयितव्याः; ते मम शब्दं श्रोष्यन्ति तत एको
व्रज एको रक्षको भविष्यति। प्राणानहं त्यक्त्वा पुनः प्राणान् १७
ग्रहीष्यामि, तस्मात् पिता मयि स्नेहं करोति। कश्चिज्जनो १८
मम प्राणान् हन्तुं न शक्नोति किन्तु स्वयं तान् समर्पयामि
तान् समर्पयितुं पुनर्ग्रहीतुञ्च मम शक्तिरास्ते भारमिमं स्वपितुः
सकाशात् प्राप्तोहम्।

अस्मादुपदेशात् पुनश्च यिहूदीयानां मध्ये भिन्नवाक्यता १९
जाता। ततो बहवो व्याहरन् एष भूतग्रस्त उन्मत्तश्च, कुत २०
एतस्य कथां शृणुथ? केचिद् अवदन् एतस्य कथा भूतग्रस्तस्य २१
कथावन्न भवन्ति, भूतः किम् अन्धाय चक्षुषी दातुं शक्नोति?

शीतकाले यिरूशालमि मन्दिरोत्सर्गपर्व्वण्युपस्थिते यीशुः २२
सुलेमानो निःसरेण गमनागमने करोति, एतस्मिन् समये २३
यिहूदीयास्तं वेष्टयित्वा व्याहरन् कति कालान् अस्माकं विचि- २४
कित्सां स्थापयिष्यसि? यद्यभिषिक्तो भवसि तर्हि तत् स्पष्टं वद।
तदा यीशुः प्रत्यवदद् अहम् अचकथं किन्तु यूयं न प्रतीथ, २५
निजपितु र्नाम्ना यां यां क्रियां करोमि सा क्रियैव मम साक्षि-
स्वरूपा। किन्त्वहं पूर्व्वमकथयं यूयं मम मेषा न भवथ, कारणा- २६
दस्मान् न विश्वसिथ। मम मेषा मम शब्दं शृण्वन्ति तानहं २७
जानामि ते च मम पश्चाद् गच्छन्ति। अहं तेभ्योऽनन्तायु २८

र्ददामि, ते कदापि न नंक्ष्यन्ति कोपि मम करात् तान् हर्त्तुं
२९ न शक्ष्यति। यो मम पिता तान् मह्यं दत्तवान् स सर्व्वस्मात्
महान्, कोपि मम पितुः करात् तान् हर्त्तुं न शक्ष्यति।
३० अहं पिता च द्वयोरेकत्वम्। ततो यिहूदीयाः पुनरपि तं
३१ हन्तुं पाषाणान् उदतोलयन्। यीशुः कथितवान् पितुः
सकाशाद् बहून्युत्तमकर्म्माणि युष्माकं समक्षं प्राकाशयं तेषां
कस्य कर्म्मणः कारणान् मां पाषाणैराहन्तुम् उद्यताः स्थ?
३३ यिहूदीयाः प्रत्यवदन् प्रशस्तकर्म्महेतो र्न किन्तु त्वं मानुषः
स्वमीश्वरम् उक्त्वेश्वरं निन्दसि कारणादस्मात् त्वां पाषाणैर्हन्मः।
३४ तदा यीशुः प्रत्युक्तवान् मया कथितं यूयम् ईश्वरा एतद्वचनं
३५ युष्माकं शास्त्रे लिखितं नास्ति किं? तस्माद् येषाम् उद्देशे
ईश्वरस्य कथा कथिता ते यदीश्वरगणा उच्यन्ते धर्म्मग्रन्थस्या-
३६ प्यन्यथा भवितुं न शक्यं, तर्ह्यहम् ईश्वरस्य पुत्त्र इति वाक्यस्य
कथनात् यूयं पित्राभिषिक्तं जगति प्रेरितञ्च पुमांसं कथम्
३७ ईश्वरनिन्दकं वदथ? यद्यहं पितुः कर्म्म न करोमि तर्हि मां
३८ न प्रतीत; किन्तु यदि करोमि तर्हि मयि युष्माभिः प्रत्यये
न कृतेऽपि कार्य्ये प्रत्ययः क्रियतां, ततो मयि पितास्तीति
पितर्य्यहम् अस्मीति च ज्ञात्वा विश्वसिष्यथ।

३९ तदा ते पुनरपि तं धर्त्तुम् अचेष्टन्त किन्तु स तेषां करेभ्यो
४० निस्तीर्य्य पुन र्यर्द्दन्नद्यास्तटे यत्र पूर्व्वं योहन् अमज्जयत् तत्रा-
४१ गत्य न्यवसत्। ततो बहवो लोकास्तत्समीपम् आगत्य व्याहरन्
योहन् किमप्याश्चर्य्यं कर्म्म नाकरोत् किन्त्वस्मिन् मनुष्ये या
४२ याः कथा अकथयत् ताः सर्व्वाः सत्याः; तत्र च बहवो लोका-
स्तस्मिन् व्यश्वसन्।

# ११ एकादशोऽध्यायः।

१ इलियासरः पीडितत्वं ७ तन्निकटे खीष्टस्य गमनं १७ तस्य भगिनीभ्यां सार्द्धं खीष्टस्य कथनं तस्योत्थापनञ्च ४७ महायाजकफिरूशिनां विपक्षत्वकरणं ५५ निस्तारोत्सवे तं धर्त्तुं चेष्टा च।

अनन्तरं मरियम् तस्या भगिनी मर्था च यस्मिन् वैथनीया- १ ग्रामे वसतस्तस्मिन् ग्रामे इलियासर्नामा पीडित एक आसीत्। या मरियम् प्रभुं सुगन्धितैलेन मर्द्दयित्वा स्वकेशैस्तस्य चरणौ २ सममार्जत् [१२ अध्यायस्य ३ पदे] तस्या भ्राता स इलियासर् रोगी। अपरञ्च हे प्रभो भवान् यस्मिन् प्रीयते स एव पीडितोस्तीति ३ कथां कथयित्वा तस्य भगिन्यौ प्रेषितवत्यौ। तदा यीशुरिमां ४ वार्त्तां श्रुत्वाकथयत पीडेयं मरणार्थं न किन्त्वीश्वरस्य महिमा- र्थम् ईश्वरपुत्त्रस्य महिमप्रकाशार्थञ्च जाता। यीशु र्यद्यपिमर्था- ५ यां तद्भगिन्याम् इलियासरि चाप्रीयत, तथापि इलियासरः ६ पीडायाः कथां श्रुत्वा यत्र आसीत् तत्रैव दिनद्वयमतिष्ठत्।

ततः परं स शिष्यानकथयद् वयं पुन र्यिहूदीयप्रदेशं ७ यामः। ततस्ते प्रत्यवदन्, हे गुरो स्वल्पदिनानि गतानि यिहू- ८ दीयास्त्वां पाषाणै र्हन्तुम् उद्यतास्तथापि किं पुनस्तत्र यास्यसि? यीशुः प्रत्यवदत्, एकस्मिन् दिने किं द्वादशघटिका न भवन्ति? ९ कोपि दिवा गच्छन् न स्खलति यतः स एतज्जगतो दीप्तिं प्राप्नोति। किन्तु रात्रौ गच्छन् स्खलति यतो हेतोस्तत्र दीप्ति १० र्नास्ति। इमां कथां कथयित्वा स तानवदद्, अस्माकं बन्धुः ११ इलियासर् निद्रितोभूद् इदानीं तं निद्रातो जागरयितुं गच्छामि। यीशु र्मृतौ कथामिमां कथितवान् किन्तु विश्रामार्थं १२ निद्रायां कथितवान् इति ज्ञात्वा शिष्या अकथयन्, हे गुरो स १३ यदि निद्राति तर्हि भद्रमेव। तदा यीशुः स्पष्टं तान् व्याहरत्, १४

१५ इलियासर् अम्रियत; किन्तु यूयं यथा प्रतीथ तदर्थमहं तत्र
न स्थितवान् इत्यस्माद् युष्मन्निमित्तम् आह्लादितोऽहं, तथापि
१६ तस्य समीपे याम। तदा थोमा यं दिदुमं वदन्ति स सङ्गिनः
शिष्यान् अवदद् वयमपि गत्वा तेन सार्द्धं म्रियामहै।
१७ यीशुस्तत्रोपस्थाय इलियासरः श्मशाने स्थापनात् चत्वारि
१८ दिनानि गतानीति वार्त्तां श्रुतवान्। बैथनीया यिरूशालमः
१९ समीपस्था क्रोशैकमात्रान्तरिता; तस्माद् बहवो यिहूदीया
मर्थां मरियमञ्च भ्रातृशोकापन्नां सान्त्वयितुं तयोः समीपम्
२० आगच्छन्। मर्था यीशोरागमनवार्त्तां श्रुत्वैव तं साक्षाद् अकरोत्
२१ किन्तु मरियम् गेह उपविश्य स्थिता। तदा मर्था यीशुमवदत्,
हे प्रभो यदि भवान् अत्रास्थास्यत् तर्हि मम भ्राता नामरि-
२२ ष्यत्। किन्त्विदानीमपि यद् ईश्वरे प्रार्थयिष्यते ईश्वरस्तद्
२३ दास्यतीति जानेऽहं। यीशुरवादीत् तव भ्राता समुत्थास्यति।
२४ मर्था व्याहरत् शेषदिवसे स उत्थानसमये प्रोत्थास्यतीति जाने-
२५ ऽहं। तदा यीशुः कथितवान् अहमेव उत्थापयिता जीवयिता
२६ च यः कश्चन मयि विश्वसिति स मृत्वापि जीविष्यति; यः
कश्चन च जीवन् मयि विश्वसिति स कदापि न मरिष्यति,
२७ अस्यां कथायां किं विश्वसिषि? सावदत् प्रभो यस्यावतरणा-
पेक्षास्ति भवान् सएवाभिषिक्त ईश्वरपुत्त्र इति विश्वसिमि।
२८ इति कथां कथयित्वा सा गत्वा स्वां भगिनीं मरियमं गुप्त-
२९ माहूय व्याहरत् गुरुरुपतिष्ठति त्वामाह्वयति च। कथामिमां
३० श्रुत्वा सा तूर्णम् उत्थाय तस्य समीपम् अगच्छत्। यीशु र्ग्राम-
मध्यं न प्रविश्य यत्र मर्था तं साक्षाद् अकरोत् तत्र स्थितवान्।
३१ ये यिहूदीया मरियमा साकं गृहे तिष्ठन्तस्ताम् असान्त्वयन

ते तां चिप्रम् उत्थाय गच्छन्तीं विलोक्य व्याहरन्, सा श्मशाने रोदितुं याति, इत्युक्त्वा ते तस्याः पश्चाद् अगच्छन्। यत्र ३२ यीशुरतिष्ठत् तत्र मरियम् उपस्थाय तं दृष्ट्वा तस्य चरणयोः पतित्वा व्याहरत्, हे प्रभो यदि भवान् अत्रास्थास्यत् तर्हि मम भ्राता नामरिष्यत्। यीशुस्तां तस्याः सङ्गिनो यिहूदी- ३३ यांश्च रुदतो विलोक्य शोकार्त्तः सन् दीर्घं निश्वस्य कथितवान् तं कुत्रास्थापयत? ते व्याहरन्, हे प्रभो भवान् आगत्य ३४ पश्यतु। यीशुना क्रन्दितं। अतएव यिहूदीया अवदन्, पश्यतायं ३६ तस्मिन् कीदृग् अप्रीयत। तेषां केचिद् अवदन् योऽन्धाय ३७ चक्षुषी दत्तवान् स किम् अस्य मृत्युं निवारयितुं नाशक्नोत्? ततो यीशुः पुनरन्तर्दीर्घं निश्वस्य श्मशानान्तिकम् अगच्छत्। ३८ तत् श्मशानम् एकं गह्वरं तन्मुखे पाषाण एक आसीत्। तदा ३९ यीशुरवदद् एनं पाषाणम् अपसारयत, ततः प्रमीतस्य भगिनी मर्थावदत् प्रभो, अधुना तत्र दुर्गन्धो जातः, यतोद्य चत्वारि दिनानि श्मशाने स तिष्ठति। तदा यीशुरवादीत्, यदि विश्व- ४० सिषि तर्हीश्वरस्य महिमप्रकाशं द्रक्ष्यसि कथामिमां किं तुभ्यं नाकथयं? तदा मृतस्य श्मशानात् पाषाणेऽपसारिते यीशुरूर्द्ध्वं ४१ पश्यन् अकथयत्, हे पित र्मम निवेदनम् अशृणोः कारणादस्मात् त्वां धन्यं वदामि। त्वं सततं शृणोषि तदप्यहं जानामि, ४२ किन्तु त्वं मां यत् प्रैरयस्तद् यथास्मिन् स्थाने स्थिता लोका विश्वसन्ति तदर्थम् इदं वाक्यं वदामि। इमां कथां कथयित्वा ४३ स प्रोच्चैराह्वयत्, हे इलियासर् वहिरागच्छ। ततः स प्रमीतः ४४ श्मशानवस्त्रै र्बद्धहस्तपादो गात्रमार्जनवाससा बद्धमुखश्च वहिरागच्छत्। यीशुरुदितवान् बन्धनानि मोचयित्वा त्यजतैनं।

४५ मरियमः समीपम् आगता ये यिहूदीयलोकास्तदा यीशोरेतत्
४६ कर्म्मापश्यन् तेषां बहवो व्यश्वसन्, किन्तु केचिदन्ये फिरूशिनां
समीपं गत्वा यीशोरेतस्य कर्म्मणो वार्त्ताम् अवदन्।

४७ ततः परं प्रधानयाजकाः फिरूशिनश्च सभां कृत्वा व्याहरन्
वयं किं कुर्म्मः? एष मानवो बहून्याश्चर्य्यकर्म्माणि करोति।
४८ यदीदृशं कर्म्म कर्त्तुं न वारयामस्तर्हि सर्व्वे लोकास्तस्मिन्
विश्वसिष्यन्ति रोमिलोकाश्चागत्यास्माकम् अनया राजधान्या
४९ सार्द्धं राज्यम् आच्छेत्स्यन्ति। तदा तेषां कियफानामा
यस्तस्मिन् वत्सरे महायाजकपदे न्ययुज्यत स प्रत्यवदद् यूयं
५० किमपि न जानीथ; समग्रदेशस्य विनाशतोपि सर्व्वलोकार्थम्
एकस्य जनस्य मरणम् अस्माकं मङ्गलहेतुकम् एतस्य विवेचना-
५१ मपि न कुरुथ। एतां कथां स निजबुद्ध्या व्याहरद् इति न,
५२ किन्तु यीशुस्तद्देशीयानां कारणात् प्राणान् त्यक्ष्यति, दिशि
दिशि विकीर्णान् ईश्वरस्य सन्तानान् संगृह्यैकजातिं करिष्यति
च, तस्मिन् वत्सरे कियफा महायाजकत्वपदे नियुक्तः सन् इदं
५३ भविष्यद्वाक्यं कथितवान्। तद्दिनमारभ्य ते कथं तं हन्तुं शक्नुव-
५४ न्तीति मन्त्रणां कर्त्तुं प्रारेभिरे। अतएव यिहूदीयानां मध्ये
यीशुः सप्रकाशं गमनागमने अकृत्वा तस्माद् गत्वा प्रान्तरस्य
समीपस्थायिप्रदेशस्येफ्रायिम्नाम्नि नगरे शिष्यैः सार्कं कालं
यापयितुं प्रारेभे।

५५ अनन्तरं यिहूदीयानां निस्तारोत्सवे निकटवर्त्तिनि सति
तदुत्सवात् पूर्व्वं स्वान् शुचीन् कर्त्तुं बहवो जना ग्रामेभ्यो यिरू-
५६ शालम्नगरम् आगच्छन्, यीशोरन्वेषणं कृत्वा मन्दिरे दण्डा-
यमानाः सन्तः परस्परं व्याहरन्, युष्माकं कीदृशो बोधो

जायते? स किम् उत्सवेऽस्मिन् अत्रागमिष्यति? स च कुत्रास्ति ५७
यद्येतत् कश्चिद् वेत्ति तर्हि दर्शयतु प्रधानयाजकाः फिरूशिनश्च
तं धर्त्तुं पूर्व्वम् इमाम् आज्ञां प्राचारयन्।

---

## १२ द्वादशोऽध्यायः।

१ यीशोश्चरणयो र्मरियमा तैलमर्द्दनं ९ इलियासरं द्रष्टुं बहुलोकानामागमनं १२ खीष्टस्य यिरूशालम्गमनं २० खीष्टसमीपेऽन्यदेशीयानामागमनं २७ खीष्टस्य निजनिधनस्य भविष्यद्वाक्यं ३७ अल्पलोकै र्विश्वसनं ४४ खीष्टस्योपदेशश्च।

निस्तारोत्सवात् पूर्व्वं दिनषट्के स्थिते यीशु र्यं प्रमीतम् १
इलियासरं श्मशानाद् उदस्थापयत् तस्य निवासस्थानं बैथनि-
याग्रामम् आगच्छत्। तत्र तदर्थं रजन्यां भोज्ये कृते मर्था २
पर्य्यवेषयद् इलियासर् च तस्य सङ्गिभिः सार्द्धं भोजनासन
उपाविशत्। तदा मरियम् अर्द्धसेटकं बहुमूल्यं जटामांसीयं ३
तैलम् आनीय यीशोश्चरणयो र्मर्द्दयित्वा निजकेशै र्मार्ष्टुम्
आरभत; तदा तैलस्य परिमलेन गृहम् आमोदितम् अभवत्।
यः शिमोनः पुत्त्र ईष्करियोतीयो यिहूदानामा यीशुं पर- ४
करेषु समर्पयिष्यति स शिष्यस्तदा कथितवान्, एतत्तैलं त्रिभिः ५
शतै र्मुद्रापादै र्विक्रीतं सद् दरिद्रेभ्यः कुतो नादीयत? स ६
दरिद्रलोकार्थम् अचिन्तयद् इति न, किन्तु स चौर एवं तन्नि-
कटे मुद्रासम्पुटकस्थित्या तन्मध्ये यदतिष्ठत् तदपाहरत् तस्मात्
कारणाद् इमां कथामकथयत्। तदा यीशुरकथयद् एनां मा ७
वारय सा मम श्मशानस्थापनदिनार्थं तदरक्षयत्। दरिद्रा ८
युष्माकं सन्निधौ सर्व्वदा तिष्ठन्ति किन्त्वहं सर्व्वदा युष्माकं
सन्निधौ न तिष्ठामि।

ततः परं यीशुस्तत्रास्तीति वार्त्तां श्रुत्वा बहवो यिहूदीयास्तं ९

श्मशानादुत्थापितम् इलियासरञ्च द्रष्टुं तत्स्थानम् आगच्छन्।
१० तदा प्रधानयाजकास्तम् इलियासरमपि संहर्त्तुम् अमन्त्र-
११ यन्; यतस्तेन बहवो यिहूदीया गत्वा यीशौ व्यश्वसन्।
१२ अनन्तरं यीशु र्यिरूशालम्नगरम् आगच्छतीति वार्त्तां
१३ श्रुत्वा परेऽहनि उत्सवागता बहवो लोकाः खर्ज्जूरपत्राद्या-
नीय तं साक्षात् कर्त्तुं बहिरागत्य जय जयेति वाचं प्रोच्चै
र्वक्तुम् आरभन्त, इस्रायेलो यो राजा परमेश्वरस्य नाम्ना-
१४ गच्छति स धन्यः। तदा 'हे सियोनः कन्ये मा भैषीः पश्याय
१५ तव राजा गर्द्दभशावकम् आरुह्यागच्छति' इति शास्त्रीयव-
१६ चनानुसारेण यीशुरेकं युवगर्द्दभं प्राप्य तदुपर्य्यारोहत्। अस्याः
घटनायास्तात्पर्य्यं शिष्याः प्रथमं नाबुध्यन्त, किन्तु यीशौ महि-
मानं प्राप्ते सति वाक्यमिदं तस्मिन् अकथ्यत लोकाश्च तम्प्रती-
१७ त्यम् अकुर्व्वन् इति ते स्मृतवन्तः। स इलियासरं श्मशानाद्
आगन्तुम् आह्वतवान् श्मशानाच्च उदस्थापयद् ये ये लोका-
१८ स्तत्कर्म्म साक्षाद् अपश्यन् ते प्रमाणं दातुम् आरभन्त। स
एतादृशम् अद्भुतं कर्म्माकरोत् तस्य जनश्रुते र्लोकास्तं साक्षात्
१९ कर्त्तुम् आगच्छन्। ततः फिरूशिनः परस्परं वक्तुम् आरभन्त
युष्माकं सर्व्वाश्चेष्टा वृथा जाताः, इति किं यूयं न बुध्यध्वे?
पश्यत सर्व्वे लोकास्तस्य पश्चाद्वर्त्तिनोऽभवन्।
२० भजनं कर्त्तुम् उत्सवागतानां लोकानां कतिपया जना
२१ अन्यदेशीया आसन्, ते गालीलीयबैत्सैदानिवासिनः फिलिपस्य
समीपम् आगत्य व्याहरन् हे महेच्छ वयं यीशुं द्रष्टुम्
२२ इच्छामः। ततः फिलिपो गत्वा आन्द्रियम् अवदत् पश्चाद्
२३ आन्द्रियफिलिपौ यीशवे वार्त्ताम् अकथयतां। तदा यीशुः

प्रत्युदितवान् मानवसुतस्य महिमप्राप्तिसमय उपस्थितः । अहं २४ युष्मानतियथार्थं वदामि, धान्यबीजं मृत्तिकायां पतित्वा यदि न म्रियते तर्ह्येकाकि तिष्ठति किन्तु यदि म्रियते तर्हि बहुगुणं फलं फलति । यो जनो निजप्राणान् प्रियान् जानाति स २५ तान् हारयिष्यति किन्तु यो जन इहलोके निजप्राणान् अप्रियान् जानाति सोऽनन्तायुः प्राप्तुं तान् रक्षिष्यति । कश्चिद् यदि २६ मम सेवको भवितुं वाञ्छति तर्हि स मम पश्चाद्गामी भवतु, तस्माद् अहं यत्र तिष्ठामि मम सेवकोपि तत्र स्थास्यति ; यो जनो मां सेवते मम पितापि तं सम्मंस्यते ।

साम्प्रतं मम प्राणा व्याकुला भवन्ति, तस्माद् हे पितर् २७ एतस्मात् समयान् मां रक्ष, इत्यहं किं प्रार्थयिष्ये ? किन्त्वहम् एतत्समयार्थम् अवतीर्णवान् । हे पितः स्वनाम्नो महिमानं २८ प्रकाशय ; तेनैव स्वनाम्नो महिमानम् अहं प्राकाशयं पुनरपि प्रकाशयिष्यामि, एषा गगणीया वाणी तस्मिन् समयेऽजायत । तच्छ्रुत्वा समीपस्थलोकानां केचिद् अवदन् मेघोऽगर्जीत्, २९ केचिद् अवदन् स्वर्गीयदूतोऽनेन सह कथामचकथत् । तदा ३० यीशुः प्रत्यवादीत्, मदर्थं शब्दोयं नाभूत् युष्मदर्थमेवाभूत् । अधुना जगतोस्य विचारः सम्पत्स्यते, अधुनास्य जगतः पती ३१ राज्यात् च्योष्यति । यद्यहं पृथिव्या ऊर्द्ध्वे प्रोत्थापितोस्मि तर्हि ३२ सर्व्वान् मानवान् स्वसमीपम् आकर्षिष्यामि । कथं तस्य मृति ३३ र्भविष्यति, एतद् बोधयितुं स इमां कथाम् अकथयत् । तदा लोका अकथयन् सोभिषिक्तः सर्व्वदा तिष्ठतीति व्यव- ३४ स्थाग्रन्थे श्रुतम् अस्माभिः, तर्हि मनुष्यपुत्त्रः प्रोत्थापितो भविष्यतीति वाक्यं कथं वदसि ? मनुष्यपुत्त्रोयं कः ? तदा यीशु- ३५

एकथयद् युष्माभिः सार्द्धम् अल्पदिनानि ज्योतिरास्ते, यथा युष्मान् अन्धकारो नाच्छादयति तदर्थं यावत्कालं युष्माभिः सार्द्धं ज्योतिस्तिष्ठति तावत्कालं गच्छत; यो जनोऽन्धकारे
३६ गच्छति स कुत्र यातीति न जानाति। अतएव यावत्कालं युष्माकं निकटे ज्योतिरास्ते तावत्कालं ज्योतीरूपसन्ताना भवितुं ज्योतिषि विश्वसित; इमां कथां कथयित्वा यीशुः प्रस्थाय तेभ्यः स्वं गुप्तवान्।

३७ यद्यपि यीशुस्तेषां समक्षम् एतावदाश्चर्य्यकर्म्माणि कृतवान्
३८ तथापि ते तस्मिन् न व्यश्वसन्। अतएव

कः प्रत्येति सुसंवादं परेशास्मत्प्रचारितं?

प्रकाशते परेशस्य हस्तः कस्य च सन्निधौ?

यिशयियभविष्यद्वादिना यदेतद् वाक्यमुक्तं तत् सफलम् अभ-
३९ वत्। ते प्रत्येतुं नाशक्नुवन् तस्मिन् यिशयियभविष्यद्वादी
४० पुनरवादीद्, यथा, 'ते नयनै र्न पश्यन्ति बुद्धिभिश्च न बुध्यन्ते तै र्मनःसु परिवर्त्तितेषु च तानहं यथा स्वस्थान् न करोमि तथा स तेषां लोचनान्यन्धानि कृत्वा तेषामन्तःकरणानि
४१ गाढानि करिष्यति।' यिशयियो यदा यीशो र्महिमानं विलोक्य तस्मिन् कथामकथयत् तदा भविष्यद्वाक्यम् ईदृशं प्राकाश-
४२ यत्। तथाप्यधिपतीनां बहवस्तस्मिन् प्रत्यायन्। किन्तु फिरूशि-
नस्तान् भजनगृहाद् दूरीकुर्व्वन्तीति भयात् ते तं न स्वीकृत-
४३ वन्तः। यत ईश्वरस्य प्रशंसातो मानवानां प्रशंसायां तेऽप्रीयन्त।

४४ तदा यीशुरुच्चैःकारम् अकथयद् यो जनो मयि विश्वसिति स केवले मयि विश्वसितीति न, स मत्प्रेरकेऽपि विश्वसिति।
४५ यो जनो मां पश्यति स मत्प्रेरकमपि पश्यति। यो जनो मां

प्रत्येति स यथान्धकारे न तिष्ठति तदर्थम् अहं ज्योतिःस्वरूपो
भूत्वा जगत्यस्मिन् अवतीर्णवान्। मम कथां श्रुत्वा यदि कश्चिन् ४७
न विश्वसिति तर्हि तमहं दोषिणं न करोमि, यतो हेतो
र्जगतो जनानां दोषान् निश्चितान् कर्त्तुं नागत्य तान् परि-
त्रातुम् आगतोस्मि। यः कश्चिन् मां न श्रद्धाय मम कथां ४८
न गृह्णाति, अन्यस्तं दोषिणं करिष्यति वस्तुतस्तु यां कथा-
महम् अचकथं सा कथा चरमेऽह्नि तं दोषिणं करिष्यति।
यतो हेतोरहं स्वतः किमपि न कथयामि, किं किं मया कथ- ४९
यितव्यं किं समुपदेष्टव्यञ्च इति मत्प्रेरयिता पिता मामाज्ञा-
पयत्। तस्य साज्ञा अनन्तायुरित्यहं जानामि, अतएवाहं यत् ५०
कथयामि तत् पिता यथाज्ञापयत् तथैव कथयाम्यहम्।

---

## १३ त्रयोदशोऽध्यायः।

१ ख्रीष्टेन स्वशिष्याणां चरणक्षालनं १२ तस्य तात्पर्य्यं २१ यिहूदा विश्वासघाती भविष्यतीति ज्ञापनं ३१ शिष्येभ्यः ख्रीष्टस्योपदेशः ३६ पितरस्यानङ्गीकारज्ञापनञ्च।

निस्तारोत्सवस्य किञ्चित्कालात् पूर्व्वं पृथिव्याः पितुः १
समीपगमनस्य समयः सन्निकर्षोऽभूद् इति ज्ञात्वा यीशुरा-
प्रथमाद् येषु जगत्प्रवासिष्वात्मीयलोकेषु प्रेम करोति स्म तेषु
शेषं यावत् प्रेम कृतवान्। पिता तस्य हस्ते सर्व्वं समर्पितवान् २
स्वयम् ईश्वरस्य समीपाद् आगच्छद् ईश्वरस्य समीपं यास्यति
च, सर्व्वाण्येतानि ज्ञात्वा रजन्यां भोजने सम्पूर्णे सति, यदा २
शैतान् तं परहस्तेषु समर्पयितुं शिमोनः पुत्रस्य ईष्करियोती-
यस्य यिहूदा अन्तःकरणे कुप्रवृत्तिं समार्पयत्, तदा यीशु ४
र्भोजनासनाद् उत्थाय गात्रवस्त्रं मोचयित्वा गात्रमार्जनवस्त्रं
गृहीत्वा तेन स्वकटिम् अबध्नात्, पश्चाद् एकपात्रे जलम् अभि- ५

षिच्च शिष्याणां पादान् प्रक्षाल्य तेन कटिबद्धगात्रमार्जन-
६ वाससा मार्ष्टुं प्रारभत। ततः शिमोन्पितरस्य समीपमागते
स उक्तवान् हे प्रभो भवान् किं मम पादौ प्रक्षालयिष्यति?
७ यीशुरुदितवान् अहं यत् करोमि तत् सम्प्रति न जानासि
८ किन्तु पश्चाज् ज्ञास्यसि। ततः पितरः कथितवान् भवान्
कदापि मम पादौ न प्रक्षालयिष्यति। यीशुरकथयद् यदि
९ त्वां न प्रक्षालये तर्हि मयि तव कोप्यंशो नास्ति। तदा शिमोन्-
पितरः कथितवान् हे प्रभो तर्हि केवलपादौ न, मम हस्तौ
१० शिरश्च प्रक्षालयतु। ततो यीशुरवदद् यो जनो धौतस्तस्य
सर्व्वाङ्गपरिष्कृतत्वात् पादौ विनान्याङ्गस्य प्रक्षालनापेक्षा
११ नास्ति। यूयं परिष्कृता इति सत्यं किन्तु न सर्व्वे, यतो यो
जनस्तं परकरेषु समर्पयिष्यति तं स ज्ञातवान्; अतएव यूयं
सर्व्वे न परिष्कृता इमां कथां कथितवान्।

१२　इत्थं यीशुस्तेषां पादान् प्रक्षाल्य वस्त्रं परिधायासने समु-
पविश्य कथितवान् अहं युष्मान् प्रति किं कर्म्माकार्षं जानीथ?
१३ यूयं मां गुरुं प्रभुञ्च वदथ तत् सत्यमेव वदथ यतोहं सएव
१४ भवामि। यद्यहं प्रभु र्गुरुश्च सन् युष्माकं पादान् प्रक्षालित-
वान् तर्हि युष्माकमपि परस्परं पादप्रक्षालनम् उचितम्।
१५ अहं युष्मान् प्रति यथा व्यवाहरं युष्मान् तथा व्यवहर्त्तुम् एकं
१६ पन्थानं दर्शितवान्। अहं युष्मानतियथार्थं वदामि, प्रभो र्दासो
१७ न महान् प्रेरकाच्च प्रेरितो न महान्। इमां कथां विदित्वा
यदि तदनुसारतः कर्म्माणि कुरुथ तर्हि यूयं धन्या भविष्यथ।
१८ सर्व्वेषु युष्मासु कथामिमां कथयामि इति न, ये मम मनो-
नीतास्तानहं जानामि, किन्तु,

मम भक्ष्याणि यो भुङ्क्ते मत्प्राणप्रातिकूल्यतः।

उत्थापयति पादस्य मूलं स एष मानवः।

यदेतद् धर्म्मपुस्तकस्य वचनं तदनुसारेणावश्यं घटिष्यते। अहं १९ स जन इत्यत्र यथा युष्माकं विश्वासो जायते तदर्थं एतादृश-घटनात् पूर्व्वम् अहमिदानीं युष्मभ्यमकथयम्। अहं युष्मानतीव २० यथार्थं वदामि, मया प्रेरितं जनं यो गृह्णाति स मामेव गृह्णाति यश्च मां गृह्णाति स मत्प्रेरकं गृह्णाति।

एतां कथां कथयित्वा यीशु र्दुःखी सन् प्रमाणं दत्त्वा २१ कथितवान् अहं युष्मानतियथार्थं वदामि युष्माकम् एको जनो मां परकरेषु समर्पयिष्यति। ततः स कमुद्दिश्य कथामेतां २२ कथितवान् इत्यत्र सन्दिग्धाः शिष्याः परस्परं मुखमालोकयितुं प्रारभन्त। तस्मिन् समये यीशु र्यस्मिन् अप्रीयत स २३ शिष्यस्तस्य वक्षःस्थलम् अवालम्बत। शिमोन्पितरस्तं सङ्केतेना- २४ वदत्, अयं कमुद्दिश्य कथामेताम् कथयतीति पृच्छ। तदा २५ स यीशो र्वक्षःस्थलम् अवलम्ब्य पृष्टवान्, हे प्रभो स जनः कः? ततो यीशुः प्रत्यवदद् एकखण्डं पूपं मज्जयित्वा यस्मै दास्यामि २६ सएव सः; पश्चात् पूपखण्डमेकं मज्जयित्वा शिमोनः पुत्राय ईष्करियोतीयाय यिहूदे दत्तवान्। तस्मिन् दत्ते सति शैतान् २७ तमाश्रयत्; तदा यीशुस्तम् अवदत् त्वं यत् करिष्यसि तत् क्षिप्रं कुरु। किन्तु स येनाशयेन तां कथामकथयत् तम् उपविष्ट- २८ लोकानां कोपि नाबुध्यत; किन्तु यिहूदाः समीपे मुद्रासम्पु- २९ टकस्थितेः केचिद् इत्थम् अबुध्यन्त पार्व्वणासादनार्थं किमपि द्रव्यं क्रेतुं वा दरिद्रेभ्यः किञ्चिद् वितरितुं कथितवान्। तदा ३० पूपखण्डग्रहणात् परं स तूर्णं बहिरगच्छत्; रात्रिश्च समुपस्थिता।

३१ 　यिहूदे वहिर्गते यीशुरकथयद् इदानीं मानवसुतस्य
३२ महिमा प्रकाशते तेनेश्वरस्यापि महिमा प्रकाशते । यदि तेने-
श्वरस्य महिमा प्रकाशते तर्हीश्वरोऽपि स्वेन तस्य महिमानं
३३ प्रकाशयिष्यति तूर्णमेव प्रकाशयिष्यति । हे वत्सा अहं युष्माभिः
सार्द्धं किञ्चित्कालमात्रम् आसे, ततः परं मां मृगयिष्यध्वे
किन्त्वहं यत्स्थानं यामि तत्स्थानं यूयं गन्तुं न शक्ष्यथ, यामिमां
कथां यिहूदीयेभ्यः कथितवान् तथाधुना युष्मभ्यमपि कथ-
३४ यामि । यूयं परस्परं प्रीयध्वम् अहं युष्मासु यथा प्रीये यूय-
मपि परस्परम् तथैव प्रीयध्वं, युष्मान् इमां नवीनाम् आज्ञाम्
३५ आदिशामि । तेनैव यदि परस्परं प्रीयध्वे तर्हि लक्षणेनानेन
यूयं मम शिष्या इति सर्व्वे ज्ञातुं शक्ष्यन्ति ।

३६ 　शिमोनपितरः पृष्टवान् हे प्रभो भवान् कुत्र यास्यति ?
ततो यीशुः प्रत्यवदत्, अहं यत्स्थानं यामि तत्स्थानं साम्प्रतं
३७ मम पश्चाद् गन्तुं न शक्नोषि किन्तु पश्चाद् गमिष्यसि । तदा
पितरः प्रत्युदितवान्, हे प्रभो साम्प्रतं कुतो हेतोस्तव पश्चाद्
३८ गन्तुं न शक्नोमि ? त्वदर्थं प्राणान् दातुं शक्नोमि । ततो यीशुः
प्रत्युक्तवान् मन्निमित्तं किं प्राणान् दातुं शक्नोषि ? त्वामहं
यथार्थं वदामि, कुक्कुटरवणात् पूर्व्वं त्वं त्रि र्माम् अपह्नोष्यसे ।

---

## १४ चतुर्दशोऽध्यायः ।

१ शिष्याणां सान्त्वनं ८ तस्य पितुरैक्यं १५ सहायं तेषां समीपे प्रेरयितुं प्रतिज्ञा
२५ प्रस्थानीया कथा च ।

१ 　मनोदुःखिनो मा भूत ; ईश्वरे विश्वसित मयि च विश्व-
२ सित । मम पितु र्गृहे बहूनि वासस्थानानि सन्ति नो चेत्
पूर्व्वं युष्मान् अज्ञापयिष्यं युष्मदर्थं स्थानं सज्जयितुं गच्छामि ।

यदि गत्वाहं युष्मन्निमित्तं स्थानं सज्जयामि तर्हि पुनरागत्य ३
युष्मान् स्वसमीपं नेष्यामि, ततो यत्राहं तिष्ठामि तत्र यूय-
मपि स्थास्यथ। अहं यत्स्थानं व्रजामि तत्स्थानं यूयं जानीथ ४
तस्य पन्थानमपि जानीथ। तदा थोमा अवदत्, हे प्रभो भवान् ५
कुत्र याति तद्वयं न जानीमः, तर्हि कथं पन्थानं ज्ञातुं शक्नुमः?
यीशुरकथयद् अहमेव सत्यजीवनरूपपथो मया न गन्ता ६
कोपि पितुः समीपं गन्तुं न शक्नोति। यदि माम् अज्ञास्यत ७
तर्हि मम पितरमप्यज्ञास्यत किन्त्वधुनातस्तं जानीथ पश्यथ च।

तदा फिलिपः कथितवान्, हे प्रभो पितरं दर्शय तस्मा- ८
दस्माकं यथेष्टं भविष्यति। ततो यीशुः प्रत्यवादीत्, हे ९
फिलिप युष्माभिः सार्द्धम् एतावद्दिनानि स्थितमपि मां किं न
प्रत्यभिजानासि? यो जनो माम् अपश्यत् स पितरमप्यपश्यत्
तर्हि पितरम् अस्मान् दर्शयेति कथां कथं कथयसि? अहं १०
पितरि तिष्ठामि पिता मयि तिष्ठतीति किं त्वं न प्रत्येषि?
अहं यद्वाक्यं वदामि तत् स्वतो न वदामि किन्तु यः पिता
मयि विराजते स एव सर्व्वकर्म्माणि करोति। अतएव पित- ११
र्य्यहं तिष्ठामि पिता च मयि तिष्ठति ममास्यां कथायां
प्रत्ययं कुरुत, नो चेत् कर्म्महेतोः प्रत्ययं कुरुत। अहं युष्मा- १२
नतियथार्थं वदामि, यो जनो मयि विश्वसिति सोहमिव
कर्म्माणि करिष्यति वरं ततोपि महाकर्म्माणि करिष्यति यतो
हेतोरहं पितुः समीपं गच्छामि। यथा पुत्रेण पितु र्महिमा १३
प्रकाशते तदर्थं मम नाम प्रोच्य यत् प्रार्थयिष्यध्वे तत् सफलं
करिष्यामि। यदि मम नाम्ना यत् किञ्चिद् याचध्वे तर्हि १४
तदहं साधयिष्यामि।

१५ यदि मयि प्रीयध्वे तर्हि ममाज्ञाः समाचरत। ततो मया
१६ पितुः समीपे प्रार्थिते पिता निरन्तरं युष्माभिः सार्द्धं स्थातुम्
इतरमेकं सहायम् अर्थात् सत्यमयम् आत्मानं युष्माकं निकटं
१७ प्रेषयिष्यति। एतज्जगतो लोकास्तं ग्रहीतुं न शक्नुवन्ति यतस्ते
तं नापश्यन् नाजनंश्च किन्तु यूयं जानीथ यतो हेतोः स युष्मा-
१८ कमन्त र्निवसति युष्माकं मध्ये स्थास्यति च। अहं युष्मान्
अनाथान् कृत्वा न यास्यामि पुनरपि युष्माकं समीपम् आग-
१९ मिष्यामि। कियत्कालात् परम् अस्य जगतो लोका मां पुन
र्न द्रक्ष्यन्ति किन्तु यूयं द्रक्ष्यथ; अहं जीविष्यामि तस्मात्
२० कारणाद् यूयमपि जीविष्यथ। पितर्य्यहमस्मि मयि च यूयं
२१ स्थ, तथाहं युष्मास्वस्मि तदपि तदा ज्ञास्यथ। यो जनो ममाज्ञा
गृहीत्वा ता आचरति सएव मयि प्रीयते; यो जनश्च मयि
प्रीयते सएव मम पितुः प्रियपात्रं भविष्यति, तथाहमपि तस्मिन्
२२ प्रीत्वा तस्मै स्वं प्रकाशयिष्यामि। तदा ईष्करियोतीयाद्
अन्यो यिहूदास्तमवदत्, हे प्रभो भवान् जगतो लोकानां
सन्निधौ प्रकाशितो न भूत्वास्माकं सन्निधौ कुतः प्रकाशितो
२३ भविष्यति? ततो यीशुः प्रत्युदितवान्, यो जनो मयि प्रीयते
स ममाज्ञा अपि गृह्लाति, तेन मम पितापि तस्मिन् प्रेष्यते,
२४ आवाञ्च तन्निकटमागत्य तेन सह निवत्स्यावः। यो जनो
मयि न प्रीयते स मम कथा अपि न गृह्लाति पुनश्च यामिमां
कथां यूयं शृणुथ सा कथा केवलस्य मम न किन्तु मम
प्रेरको यः पिता तस्यापि कथा।

२५ इदानीं युष्माकं निकटे विद्यमानोहम् एताः सकलाः
२६ कथाः कथयामि। किन्त्वितः परं पित्रा यः सहायोऽर्थात् पवित्र

आत्मा मम नाम्नि प्रेरयिष्यते स सर्व्वं शिक्षयित्वा मयोक्ताः समस्ताः कथा युष्मान् स्मारयिष्यति। अहं युष्माकं निकटे २७ शान्तिं स्थापयित्वा यामि, निजां शान्तिं युष्मभ्यं ददामि, जगतो लोका यथा ददति तथाहं न ददामि; युष्माकम् अन्तःकरणानि दुःखितानि भीतानि च न भवन्तु। अहं २८ गत्वा पुनरपि युष्माकं समीपम् आगमिष्यामि मयोक्तं वाक्यमिदं यूयम् अश्रौष्ट; यदि मय्यप्रेष्यध्वं तर्ह्यहं पितुः समीपं गच्छामि समाख्यां कथायां यूयम् अह्लादिष्यध्वं यतो मम पिता मत्तोपि महान्। तस्या घटनायाः समये यथा युष्माकं २९ श्रद्धा जायते तदर्थम् अहं तस्या घटनायाः पूर्व्वम् इदानीं युष्मान् एतां वार्त्तां वदामि। इतः परं युष्माभिः सह मम ३० बहव आलापा न भविष्यन्ति यतः कारणाद् एतस्य जगतः पतिरागच्छति किन्तु मया सह तस्य कोपि सम्बन्धो नास्ति। अहं पितरि प्रेम करोमि तथा पितु र्विधिवत् कर्म्माणि करो- ३१ मीति येन जगतो लोका जानन्ति तदर्थम् उत्तिष्ठत वयं स्थानादस्माद् गच्छाम।

---

## १५ पञ्चदशोऽध्यायः।

१ सत्य द्राक्षालतास्वरूपत्वदर्शनं शिष्यगणस्य शाखारूपत्वदर्शनं ८ तेषामनेकफलफलनावश्यकता १७ तेषां भाविताडनासान्त्वनयोः प्रकटनञ्च।

अहं सत्यद्राक्षालतास्वरूपो मम पिता तूद्यानपरिचारक- १ स्वरूपश्च। मम यासु शाखासु फलानि न भवन्ति ताः स २ छिनत्ति तथा फलवत्यः शाखा यथाधिकफलानि फलन्ति तदर्थं ताः परिष्करोति। इदानीं मयोक्तोपदेशेन यूयं परि- ३ ष्कृताः। अतः कारणात् मयि तिष्ठत तेनाहमपि युष्मासु ४

तिष्ठामि, यतो हेतो द्राचालतायाम् असंलग्ना शाखा यथा
फलवती भवितुं न शक्नोति तथा यूयमपि मय्यतिष्ठन्तः
५ फलवन्तो भवितुं न शक्नुथ । अहं द्राचालतास्वरूपो यूयञ्च
शाखास्वरूपाः; यो जनो मयि तिष्ठति यत्र चाहं तिष्ठामि,
स प्रचुरफलैः फलवान् भवति, किन्तु मां विना यूयं किमपि
६ कर्त्तुं न शक्नुथ । यः कश्चिन् मयि न तिष्ठति स शुष्कशाखेव
वहि र्निक्षिप्यते लोकाश्च ता आहृत्य वह्नौ निक्षिप्य दाहयन्ति ।
७ यदि यूयं मयि तिष्ठथ मम कथा च युष्मासु तिष्ठति तर्हि
यद् वाञ्छित्वा याचिष्यध्वे युष्माकं तदेव सफलं भविष्यति ।
८　यदि यूयं प्रचुरफलवन्तो भवथ तर्हि तद्द्वारा मम पितु
र्महिमा प्रकाशिष्यते तथा यूयं मम शिष्या इति परिचायि-
९ ष्यध्वे । पिता यथा मयि प्रीतवान् अहमपि युष्मासु तथा
प्रीतवान् अतो हेतो र्यूयं निरन्तरं मम प्रेमपात्राणि भूत्वा
१० तिष्ठत । अहं यथा पितुराज्ञा गृहीत्वा तस्य प्रेमभाजनं
तिष्ठामि तथैव यूयमपि यदि ममाज्ञा गृह्णीथ तर्हि मम प्रेम-
११ भाजनानि स्थास्यथ । युष्मन्निमित्तं मम य आह्लादः स यथा
चिरं तिष्ठति युष्माकम् आनन्दश्च यथा पूर्य्येत तदर्थं युष्मभ्यम्
१२ एताः कथा अत्रकथम् । अहं युष्मासु यथा प्रीये यूयमपि
१३ परस्परं तथा प्रीयध्वम् एषा ममाज्ञा । मित्राणां कारणात्
स्वप्राणदानपर्य्यन्तं यत् प्रेम तस्मान् महाप्रेम कस्यापि नास्ति ।
१४ अहं यद्यद् आदिशामि तत्तदेव यदि यूयम् आचरत तर्हि
१५ यूयमेव मम मित्राणि । अद्यारभ्य युष्मान् दासान् न वदि-
ष्यामि यतः प्रभु र्यत् करोति दासस्तत् न जानाति; किन्तु
पितुः समीपे यद्यद् अशृणवं तत् सर्व्वं युष्मान् अज्ञापयम्

तत्कारणाद् युष्मान् मित्राणि प्रोक्तवान्। यूयं मां रोचितवन्त १६ इति न, किन्त्वहमेव युष्मान् रोचितवान् यूयं गत्वा यथा फलान्युत्पादयथ तानि फलानि चाक्षयाणि भवन्ति, तदर्थं युष्मान् न्ययुनजं तस्मान् मम नाम प्रोच्य पितरं यत् किञ्चिद् याचिष्यध्वे तदेव स युष्मभ्यं दास्यति।

यूयं परस्परं प्रीयध्वम् अहम् इत्याज्ञापयामि । जगतो १७ लोकै र्युष्मासु ऋतीयितेषु ते पूर्व्वं मामेवार्त्तीयन्त इति यूयं १८ जानीथ। यदि यूयं जगतो लोका अभविष्यत तर्हि जगतो १९ लोका युष्मान् आत्मीयान् बुद्धाप्रेष्यन्त; किन्तु यूयं जगतो लोका न भवथ, अहं युष्मान् अस्माज्जगतोऽरोचयम् एतस्मात् कारणाज्जगतो लोका युष्मान् ऋतीयन्ते । दासः प्रभो २० र्महान् न भवति ममैतत् पूर्व्वीयं वाक्यं स्मरत; ते यदि मामेवाताडयन् तर्हि युष्मानपि ताडयिष्यन्ति, यदि मम वाक्यं गृह्णन्ति तर्हि युष्माकमपि वाक्यं ग्रहीष्यन्ति । किन्तु ते मम २१ नामकारणाद् युष्मान् प्रति तादृशं व्यवहरिष्यन्ति यतो यो मां प्रेरितवान् तं ते न जानन्ति। तेषां सन्निधिम् आगत्य यद्यहं २२ नाकथयिष्यं तर्हि तेषां पापं नाभविष्यत् किन्त्वधुना तेषां पापमाच्छादयितुम् उपायो नास्ति। यो जनो माम् ऋती- २३ यते स मम पितरमपि ऋतीयते। यादृशानि कर्म्माणि केनापि २४ कदापि नाक्रियन्त तादृशानि कर्म्माणि यदि तेषां साक्षाद् अहं नाकरिष्यं तर्हि तेषां पापं नाभविष्यत् किन्त्वधुना ते दृष्ट्वापि मां मम पितरञ्चार्त्तीयन्त। तस्मात् तेऽकारणं माम् २५ ऋतीयन्ते यदेतद् वचनं तेषां शास्त्रे लिखितमास्ते तत् सफ- लम् अभवत्। किन्तु पितु र्निर्गतं यं सहायमर्थात् सत्यमयम् २६

आत्मानं पितुः समीपाद् युष्माकं समीपे प्रेषयिष्यामि स
२७ आगत्य मयि प्रमाणं दास्यति। यूयं प्रथममारभ्य मया सार्द्धं
तिष्ठथ तस्माद्धेतो र्यूयमपि प्रमाणं दास्यथ।

---

## १६ षोडशोऽध्यायः।

१ ख्रीष्टस्य प्रस्थानं सहायस्यागमनं जगज्जनान् प्रति तत्कर्म्मप्रशंसनं १२ शिष्यान् प्रति तस्य कर्म्म १६ तस्य प्रस्थानकथायाः शिष्याणामबोध्यता २५ तत्कथाया ज्ञापनञ्च।

१　युष्माकं यथा बाधा न जायते तदर्थं युष्मान् एतानि
२ सर्व्ववाक्यानि व्याहरं। लोका युष्मान् भजनगृहेभ्यो दूरी-
करिष्यन्ति तथा यस्मिन् समये युष्मान् हत्वा ईश्वरस्य तुष्टि-
३ जनकं कर्म्माकुर्म्म इति मंस्यन्ते स समय आगच्छति। ते
पितरं माञ्च न जानन्ति, तस्माद् युष्मान् प्रतीदृशम् आच-
४ रिष्यन्ति। अतो हेतोः समये समुपस्थिते यथा मम कथा
युष्माकं मनःसुः समुपतिष्ठति तदर्थं युष्मभ्यम् एतां कथां
कथयामि युष्माभिः सार्द्धम् अहं तिष्ठन् प्रथमं तां युष्मभ्यं
५ नाकथयं। साम्प्रतं स्वस्य प्रेरयितुः समीपं गच्छामि तथापि
त्वं क्व गच्छसि कथामेतां युष्माकं कोपि मां न पृच्छति।
६ किन्तु मयोक्ताभिराभिः कथाभि र्युष्माकम् अन्तःकरणानि
७ दुःखेन पूर्णान्यभवन्। तथाप्यहं यथार्थं कथयामि मम गमनं
युष्माकं हितार्थमेव, यतो हेतो र्गमने न कृते सहायो युष्माकं
समीपं नागमिष्यति किन्तु यदि गच्छामि तर्हि युष्माकं
८ समीपे तं प्रेषयिष्यामि। ततः स आगत्य पापपुण्यदण्डेषु जगतो
९ लोकानां प्रबोधं जनयिष्यति। ते मयि न विश्वसन्ति तस्मा-
१० द्धेतोः पापप्रबोधं जनयिष्यति। युष्माकम् अदृश्यः सन्नहं पितुः

समीपं गच्छामि तस्मात् पुण्ये प्रबोधं जनयिष्यति। एतज्जगतो- ११ ऽधिपति र्दण्डाज्ञां प्राप्नोति तस्माद् दण्डे प्रबोधं जनयिष्यति।

युष्मभ्यं कथयितुं ममानेकाः कथा आसते, ताः कथा १२ इदानीं यूयं सोढुं न शक्नुथ; किन्तु सत्यमय आत्मा यदा १३ समागमिष्यति तदा सर्व्वं सत्यं युष्मान् नेष्यति, स स्वतः किमपि न वदिष्यति किन्तु यच्छ्रोष्यति तदेव कथयित्वा भाविकार्य्यं युष्मान् ज्ञापयिष्यति। मम महिमानं प्रकाशयिष्यति यतो १४ मदीयां कथां गृहीत्वा युष्मान् बोधयिष्यति। पितु र्यद्यद् आस्ते १५ तत् सर्व्वं मम तस्मात् कारणाद् अवादिषं स मदीयां कथां गृहीत्वा युष्मान् बोधयिष्यति।

कियत्कालात् परं यूयं मां द्रष्टुं न लप्स्यध्वे किन्तु किय- १६ त्कालात् परं पुन र्द्रष्टुं लप्स्यध्वे यतोहं पितुः समीपं गच्छामि। ततः शिष्याणां कियन्तो जनाः परस्परं वदितुम् आरभन्त, १७ कियत्कालात् परं मां द्रष्टुं न लप्स्यध्वे किन्तु कियत्कालात् परं पुन र्द्रष्टुं लप्स्यध्वे यतोहं पितुः समीपं गच्छामि, इति यद् वाक्यम् अयं वदति तत् किं? ततः कियत्कालात् परम् १८ इति तस्य वाक्यं किं? तस्य वाक्यस्याभिप्रायं वयं बोद्धुं न शक्नुमस्तैरिति निगदिते यीशुस्तेषां प्रश्नेच्छां ज्ञात्वा तेभ्योऽकथ- १९ यत् कियत्कालात् परं मां द्रष्टुं न लप्स्यध्वे, किन्तु कियत्कालात् परं पुन र्द्रष्टुं लप्स्यध्वे, यामिमां कथामकथयं तस्या अभिप्रायं किं यूयं परस्परं मृगयध्वे? युष्मानहम् अतियथार्थं वदामि २० यूयं क्रन्दिष्यथ विलपिष्यथ च, किन्तु जगतो लोका आन- न्दिष्यन्ति; यूयं शोकाकुला भविष्यथ किन्तु शोकात् परं आनन्दयुक्ता भविष्यथ। प्रसवकाल उपस्थिते नारी यथा २१

प्रसववेदनया व्याकुला भवति किन्तु पुत्रे भूमिष्ठे सति मनु-
ष्यैको जन्मना नरलोके प्रविष्ट इत्यानन्दात् तस्यास्तत्सर्व्वं दुःखं
२२ मनसि न तिष्ठति, तथा यूयमपि साम्प्रतं शोकाकुला भवथ
किन्तु पुनरपि युष्मभ्यं दर्शनं दास्यामि तेन युष्माकम् अन्तः-
करणानि सानन्दानि भविष्यन्ति, युष्माकं तम् आनन्दञ्च
२३ कोपि हर्त्तुं न शक्ष्यति। तस्मिन् दिवसे कामपि कथां मां
न प्रक्ष्यथ। युष्मानहम् अतियथार्थं वदामि, मम नाम्ना यत्
२४ किञ्चित् पितरं याचिष्यध्वे तदेव स दास्यति। पूर्व्वं मम नाम्ना
किमपि नायाचध्वं, याचध्वं ततः प्राप्स्यथ तस्माद् युष्माकं
सम्पूर्णानन्दो जनिष्यते।

२५ उपमाकथाभिः सर्व्वाण्येतानि युष्मान् ज्ञापितवान् किन्तु
यस्मिन् समये उपमया नोक्त्वा पितुः कथां स्पष्टं ज्ञापयिष्यामि
२६ समय एतादृश आगच्छति। तदा मम नाम्ना प्रार्थयिष्यध्वे
२७ ऽहं युष्मन्निमित्तं पितरं विनेष्ये कथामिमां न वदामि; यतो
यूयं मयि प्रेम कुरुथ, तथाहम् ईश्वरस्य समीपाद् आगतवान्
इत्यपि प्रतीथ, तस्मात् कारणात् पिता स्वयं युष्मासु प्रीयते।
२८ पितुः समीपाज्जगद् आगतोस्मि जगत् परित्यज्य च पुनरपि
२९ पितुः समीपं गच्छामि। तदा शिष्या अवदन्, हे प्रभो भवान्
३० उपमया नोक्त्वाधुना स्पष्टं वदति। भवान् सर्व्वज्ञः केनचित्
पृष्टो भवितुमपि भवतः प्रयोजनं नास्तीत्यधुनास्माकं स्थिर-
ज्ञानं जातं तस्माद् भवान् ईश्वरस्य समीपाद् आगतवान्
३१ इत्यत्र वयं विश्वसिमः। ततो यीशुः प्रत्यवादीद् इदानीं किं
३२ यूयं विश्वसिथ? पश्यत सर्व्वे यूयं विकीर्णाः सन्तो माम्
एकाकिनं परित्यज्य स्वं स्वं स्थानं गमिष्यथ, एतादृशः समय

आगच्छति वरं प्रायेणोपस्थितवान्; तथाप्यहं नैकाकी भवामि यतः पिता मया सार्द्धम् आस्ते। यथा मया युष्माकं शान्ति ३३ र्जायते तदर्थम् एताः कथा युष्मभ्यम् अचकथं; अस्मिन् जगति युष्माकं क्लेशो घटिष्यते किन्त्वक्षोभा भवत यतो मया जगज्जितं।

---

## १७ सप्तदशोऽध्यायः।

१ खीष्टस्य पितरि प्रार्थनं ६ द्वादशशिष्यार्थं प्रार्थना २० सर्व्वशिष्याणामनन्तसुखार्थं प्रार्थना च।

ततः परं यीशुरेताः कथाः कथयित्वा स्वर्गं विलोक्यैतत् १ प्रार्थयत, हे पितः समय उपस्थितवान्; यथा तव पुत्रस्तव महिमानं प्रकाशयति तदर्थं त्वं निजपुत्रस्य महिमानं प्रकाशय। त्वं याँल्लोकान् तस्य हस्ते समर्पितवान् स यथा तेभ्यो- २ ऽनन्तायु र्ददाति तदर्थं त्वं प्राणिमात्राणाम् अधिपतित्वभारं तस्मै दत्तवान्। यस्त्वम् अद्वितीयः सत्य ईश्वरस्त्वया प्रेरितश्च ३ यीशुः ख्रीष्ट एतयोरुभयोः परिचये प्राप्तेऽनन्तायु र्भवति। त्वं यस्य कर्म्मणो भारं मह्यं दत्तवान्, तत् सम्पन्नं कृत्वा जग- ४ त्यस्मिन् तव महिमानं प्राकाशयं। अतएव हे पित र्जगत्य- ५ विद्यमाने त्वया सह तिष्ठतो मम यो महिमासीत् सम्प्रति तव समीपे मां तं महिमानं प्रापय।

अन्यच्च त्वम् एतज्जगतो याँल्लोकान् मह्यम् अददा अहं ६ तेभ्यस्तव नाम्नस्तत्त्वज्ञानम् अददां, ते तवैवासन्, त्वं तान् मह्यमददाः, तस्मात्ते तवोपदेशम् अगृह्लन्। त्वं मह्यं यत् किञ्चिद् ७ अददास्तत्सर्व्वं त्वत्तो जायते इत्यधुनाजानन्। मह्यं यमुपदेशम् ८ अददा अहमपि तेभ्यस्तमुपदेशम् अददां तेपि तमगृह्लन् त्वत्तोहं निर्गत्य त्वया प्रेरितोभवम् अत्र च व्यश्वसन्। तेषामेव ९

निमित्तं प्रार्थयेऽहं जगतो लोकनिमित्तं न प्रार्थये किन्तु यांल्लोकान् मह्यम् अददास्तेषामेव निमित्तं प्रार्थयेऽहं यतस्ते
१० तवैवासते। ये मम ते तव ये च तव ते मम तथा तै र्मम महिमा
११ प्रकाश्यते। साम्प्रतम् अस्मिन् जगति ममावस्थितेः शेषम् अभवत् अहं तव समीपं गच्छामि किन्तु ते जगति स्थास्यन्ति; हे पवित्र पितरावयो र्यथैकत्वमास्ते तथा तेषामप्येकत्वं भवति
१२ तदर्थं यांल्लोकान् मह्यम् अददास्तान् स्वनाम्ना रक्ष। यावन्ति दिनानि जगत्यस्मिन् तैः सहाहमासं तावन्ति दिनानि तान् तव नाम्नाहं रक्षितवान्; यांल्लोकान् मह्यम् अददास्तान् सर्व्वान् अहमरक्षं, तेषां मध्ये केवलं विनाशपात्रं हारितं तेन धर्म्मपुस्त-
१३ कस्य वचनं प्रत्यक्षं भवति। किन्त्वधुना तव सन्निधिं गच्छामि मया यथा तेषां सम्पूर्णानन्दो भवति तदर्थमहं जगति तिष्ठन्
१४ एताः कथा अकथयम्। तवोपदेशं तेभ्योऽददां जगता सह यथा मम सम्बन्धो नास्ति तथा जजता सह तेषामपि सम्बन्धा-
१५ भावाज् जगतो लोकास्तान् ऋतीयन्ते। त्वं जगतस्तान् गृहाणेति
१६ न प्रार्थये किन्त्वशुभाद् रक्षेति प्रार्थयेहम्। अहं यथा जगत्सम्बन्धीयो न भवामि तथा तेपि जगत्सम्बन्धीया न भवन्ति।
१७ तव सत्यकथया तान् पवित्रीकुरु तव वाक्यमेव सत्यं। त्वं
१८ यथा मां जगति प्रैरयस्तथाहमपि तान् जगति प्रैरयं। तेषां हितार्थं यथाहं स्वं पवित्रीकरोमि तथा सत्यकथया तेपि पवित्रीभवन्तु।

२०　केवलं एतेषामर्थे प्रार्थयेऽहम् इति न किन्त्वेतेषामुपदेशेन
२१ ये जना मयि विश्वसिष्यन्ति तेषामप्यर्थे प्रार्थयेऽहम्। हे पितस्तेषां सर्व्वेषाम् एकत्वं भवतु तव यथा मयि मम च यथा त्वय्येकत्वं

तथा तेषामप्यावयोरेकत्वं भवतु तेन त्वं मां प्रेरितवान् इति
जगतो लोकाः प्रतियन्तु। यथावयोरेकत्वं तथा तेषामप्येकत्वं २२
भवतु तेष्वहं मयि च त्वम् इत्थं तेषां सम्पूर्णमेकत्वं भवतु, त्वं
मां प्रेरितवान् त्वं मयि यथा प्रीयसे च तथा तेष्वपि प्रीतवान्
एतद्यथा जगतो लोका जानन्ति तदर्थं त्वं यं महिमानं मह्यम् २३
अददास्तं महिमानम् अहमपि तेभ्यो दत्तवान्। हे पित र्जगतो २४
निर्म्माणात् पूर्व्वं मयि स्नेहं कृत्वा यं महिमानं दत्तवान् मम तं
महिमानं यथा ते पश्यन्ति तदर्थं यान्लोकान् मह्यं दत्तवान्
अहं यत्र तिष्ठामि तेपि यथा तत्र तिष्ठन्ति ममैषा वाञ्छा।
हे याथार्थिक पित र्जगतो लोकैस्त्वय्यज्ञातेपि त्वामहं जाने त्वं २५
मां प्रेरितवान् इतीमे शिष्या जानन्ति। यथाहं तेषु तिष्ठामि २६
तथा मयि येन प्रेम्ना प्रेमाकरोस्तत् तेषु तिष्ठति तदर्थं तव
नामाहं तान् ज्ञापितवान् पुनरपि ज्ञापयिष्यामि।

---

## १८ अष्टादशोऽध्यायः।

१ यीशोः परकरेषु समर्पितत्वं १२ महायाजकान्तिकं तस्य नयनं १५ तस्य पश्चात् पितरयोहनो र्गमनं १९ तस्य विचारितत्वं २५ तस्मिन् पितरस्यापह्नवः २८ पीलातसमीपं तस्य नयनं ३३ पीलातेन तस्य विचारितत्वञ्च।

ताः कथाः कथयित्वा यीशुः शिष्यानादाय किद्रोन्नामकं १
स्रोत उत्तीर्य्य शिष्यैः सह तत्रत्योद्यानं प्राविशत्। किन्तु विश्वा- २
सघातियिहूदास्तत् स्थानं परिचीयते यतो यीशुः शिष्यैः सार्द्धं
कदाचित् तत् स्थानम् अगच्छत्। तदा स यिहूदाः सैन्यगणं ३
प्रधानयाजकानां फिरूशिनाञ्च पदातिगणञ्च गृहीत्वा प्रदी-
पान् उल्कान् अस्त्राणि चादाय तस्मिन् स्थान उपस्थितवान्।
स्वं प्रति यद् घटिष्यते तज् ज्ञात्वा यीशुरग्रेसरः सन् तान्- ४

५ पृच्छत् कं गवेषयथ? ते प्रत्यवदन्, नासरतीयं यीशुं; ततो यीशुरवादीद् अहमेव सः; तैः सह विश्वासघाती यिहूदाश्चा-
६ तिष्ठत्। तदाहमेव स तस्यैतां कथां श्रुत्वैव ते पश्चादेत्य भूमौ
७ पतिताः। ततो यीशुः पुनरपि पृष्टवान् कं गवेषयथ? ततस्ते
८ प्रत्यवदन् नासरतीयं यीशुं। तदा यीशुः प्रत्युदितवान् अह-मेव स इमां कथामचकथम्; यदि मामन्विच्छथ तर्हीमान्
९ गन्तुं मा वारयत। इत्थं भूते मह्यं याल्लोकान् अददास्तेषाम् एकमपि नाहारयम् इमां यां कथां स स्वयमकथयत् सा
१० कथा सफला जाता। तदा शिमोन्पितरस्य निकटे खड्गस्थितेः स तं निष्कोषं कृत्वा महायाजकस्य माल्खनामानं दासम्
११ आहत्य तस्य दक्षिणकर्णं छिन्नवान्। ततो यीशुः पितरम् अव-दत्, खड्गं कोषे स्थापय मम पिता मह्यं पातुं यं कंसम् अद-दात् तेनाहं किं न पास्यामि?

१२ तदा सैन्यगणः सेनापति र्यिहूदीयानां पदातयश्च यीशुं धृत्वा बद्ध्वा हानन्नाम्नः कियफाः श्वशुरस्य समीपं प्रथमम् अन-
१३ यन्। स कियफास्तस्मिन् वत्सरे महायाजत्वपदे नियुक्तः सन्
१४ साधारणलोकानां मङ्गलार्थम् एकजनस्य मरणमुचितम् इति यिहूदीयैः सार्द्धम् अमन्त्रयत्।

१५ तदा शिमोन्पितरोऽन्यैकशिष्यश्च यीशोः पश्चाद् अगच्छतां तस्यान्यशिष्यस्य महायाजकेन परिचितत्वात् स यीशुना सह
१६ महायाजकस्याट्टालिकां प्राविशत्। किन्तु पितरो बहिर्द्वारस्य समीपेऽतिष्ठद् अतएव महायाजकेन परिचितः स शिष्यः पुन-र्बहिर्गत्वा दौवारिकायै कथयित्वा पितरम् अभ्यन्तरम् आन-
१७ यत्। तदा सा द्वाररक्षिका पितरम् अवदत् त्वं किं न तस्य

मानवस्य शिष्यः? ततः सोवदद् अहं न भवामि। ततः परं १८
यत्स्थाने दासाः पदातयश्च शीतहेतोरङ्गारै र्वह्निं प्रज्वाल्य
तापं सेवितवन्तस्तत्स्थाने पितरस्तिष्ठन् तैः सह वह्नितापं
सेवितुम् आरभत।

तदा शिष्येषूपदेशे च महायाजकेन यीशुः पृष्टः सन् प्रत्युक्त- १९
वान् सर्व्वलोकानां समक्षं कथामकथयं गुप्तं कामपि कथां २०
न कथयित्वा यत् स्थानं यिहूदीयाः सततं गच्छन्ति तत्र
भजनगेहे मन्दिरे चाशिक्षयं। मत्तः कुतः पृच्छसि? ये २१
जना मदुपदेशम् अशृण्वन् तानेव पृच्छ यद्यद् अवदं ते तत्
जानन्ति। तदेत्थं प्रत्युदितत्वात् निकटस्थपदाति र्यीशुं चपेटे- २२
नाहत्य व्याहरत् महायाजकम् एवं प्रतिवदसि? ततो यीशुः २३
प्रतिगदितवान् यद्ययथार्थम् अचकथं तर्हि तस्यायथार्थस्य
प्रमाणं देहि, किन्तु यदि यथार्थं तर्हि कुतो हेतो र्माम्
अताडयः? पूर्व्वं हानन् सबन्धनं तं कियफामहायाजकस्य २४
समीपं प्रैषयत्।

शिमोन्पितरस्तिष्ठन् वह्नितापं सेवते, एतस्मिन् समये २५
कियन्तस्तम् अपृच्छन् त्वं किम् एतस्य जनस्य शिष्यो न? ततः
सोपह्नुत्याब्रवीद् अहं न भवामि। तदा महायाजकस्य यस्य २६
दासस्य पितरः कर्णमच्छिनत् तस्य कुटुम्बः प्रत्युदितवान् उद्याने
तेन सह तिष्ठन्तं त्वां किं नापश्यं? किन्तु पितरः पुनरपह्नुत्य २७
कथितवान्; तदानीं कुक्कुटोऽरौत्।

तदनन्तरं प्रत्यूषे ते कियफागृहाद् अधिपते र्गृहं यीशुम् २८
अनयन् किन्तु यस्मिन् अशुचित्वे जाते तै र्निस्तारोत्सवे न
भोक्तव्यं, तस्य भयाद् यिहूदीयास्तद्गृहं नाविशन्। अपरं २९

पीलातो बहिरागत्य तान् पृष्टवान् एतस्य मनुष्यस्य कं दोषं
३० वदथ? तदा ते प्रत्यवदन् दुष्कर्म्मकारिणि न सति भवतः
३१ समीपे नैनं समार्पयिष्यामः। ततः पीलातोऽवदद् यूयमेनं
गृहीत्वा स्वेषां व्यवस्थया विचारयत। तदा यिहूदीयाः
प्रत्यवदन् कस्यापि मनुष्यस्य प्राणदण्डं कर्त्तुं नास्माकम् अधि-
३२ कारोऽस्ति। एवं सति यीशुः स्वस्य मृत्यौ यां कथां कथित-
वान् सा सफलाभवत्।

३३ तदनन्तरं पीलातः पुनरपि तद् राजगृहं गत्वा यीशुमाहूय
३४ पृष्टवान् त्वं किं यिहूदीयानां राजा? यीशुः प्रत्यवदत् त्वम्
एतां कथां स्वतः कथयसि किमन्यः कश्चिन् मयि कथितवान्?
३५ पीलातोऽवदद् 'अहं किं यिहूदीयः? तव स्वदेशीया विशेषतः
प्रधानयाजका मम निकटे त्वां समार्पयन्, त्वं किं कृतवान्?
३६ यीशुः प्रत्यवदत् मम राज्यम् एतज्जगत्सम्बन्धीयं न भवति
यदि मम राज्यं जगत्सम्बन्धीयम् अभविष्यत् तर्हि यिहूदीयानां
हस्तेषु यथा समर्पितो नाभवं तदर्थं मम सेवका अयोत्स्यन्
३७ किन्तु मम राज्यम् ऐहिकं न। तदा पीलातः कथितवान्,
तर्हि त्वं राजा भवसि? यीशुः प्रत्युक्तवान् त्वं सत्यं कथयसि,
राजाहं भवामि; सत्यतायां साक्ष्यं दातुं जनिं गृहीत्वा जग-
त्यस्मिन् अवतीर्णवान्, तस्मात् सत्यधर्म्मपक्षपातिनो मम कथां
३८ शृण्वन्ति। तदा सत्यं किं? एतां कथां पृष्ट्वा पीलातः पुनरपि
बहिर्गत्वा यिहूदीयान् अभाषत, अहं तस्य कमप्यपराधं न
३९ प्राप्नोमि। निस्तारोत्सवसमये युष्माभिरभिरुचित एको जनो
मया मोचयितव्य एषा युष्माकं रीतिरस्ति, अतएव युष्माकं
निकटे यिहूदीयानां राजानं किं मोचयामि, युष्माकम् इच्छा

का ? तदा ते सर्व्वे रुवन्तो व्याहरन् एनं मानुषं नहि बरब्बां ४०
मोचय। किन्तु स बरब्बा दस्युरासीत्।

---

## १९ ऊनविंशोऽध्यायः।

१ पीलातेन यीशुं निर्दोषं प्राप्यापि तस्य कशाप्रहारणं मस्तके कण्टकमुकुटस्य च दानं ८ यीशुं मोचयितुं पीलातस्य चेष्टा १२ यिहूदीयानां तुष्ट्यर्थं तं क्रुशे वेधितुम् आज्ञापनं १७ तस्य क्रुशे वेधनं २३ तस्य वस्त्राणां विभागः २५ स्वमातरं प्रति तस्य कथा २८ तस्य मृत्युः ३१ तस्य पार्श्वे शूलाघातः ३८ तस्य श्मशाने स्थापनञ्च।

पीलातो यीशुम् आनीय कशया प्राहारयत्। पश्चात् सेना- १
गणः कण्टकनिर्म्मितं मुकुटं तस्य मस्तके समर्प्य वार्त्ताकीवर्णं २
राजपरिच्छदं परिधाप्य, हे यिहूदीयानां राजन् नमस्कार ३
इत्युक्त्वा तं चपेटेनाहन्तुम् आरभत। तदा पीलातः पुनरपि ४
बहिर्गत्वा लोकान् अवदत्, अस्य कमप्यपराधं न लभेऽहं, पश्यत
तद् युष्मान् ज्ञापयितुं युष्माकं सन्निधौ बहिरेनम् आनयामि।
ततः परं यीशुः कण्टकमुकुटवान् वार्त्ताकीवर्णवसनवांश्च बहि- ५
रागच्छत्। ततः पीलात उक्तवान् एनं मनुष्यं पश्यत। तदा ६
प्रधानयाजकाः पदातयश्च तं दृष्ट्वा, एनं क्रुशे विध, एनं क्रुशे
विध, इत्युक्त्वा रवितुं आरभन्त। ततः पीलातः कथितवान्
यूयं स्वयम् एनं नीत्वा क्रुशे विधत, अहम् एतस्य कमप्यपराधं
न प्राप्तवान्। यिहूदीयाः प्रत्यवदन् अस्माकं या व्यवस्थास्ते ७
तदनुसारेणास्य प्राणहननम् उचितं यतोयं स्वम् ईश्वरस्य पुत्त्र-
मवदत्।

पीलात इमां कथां श्रुत्वा महात्रासयुक्तः सन् पुनरपि ८
राजगृह आगत्य यीशुं पृष्टवान् त्वं कुत्रत्यो लोकः? किन्तु ९
यीशुस्तस्य किमपि प्रत्युत्तरं नावदत्। ततः पीलातः कथितवान १०

त्वं किं मया सार्द्धं न संलपिष्यसि ? त्वां क्रुशे वेधितुं वा
११ मोचयितुं शक्ति र्ममास्ते इति किं त्वं न जानासि ? तदा
यीशुः प्रत्यवदद् ईश्वरेणादत्तं ममोपरि तव किमप्यधिपतित्वं
न विद्यते, तथापि यो जनो मां तव हस्ते समार्पयत् तस्य
१२ महापातकं जातम् । तदारभ्य पीलातस्तं मोचयितुं चेष्टितवान्
किन्तु यिहूदीया रुवन्तो व्याहरन् यदीमं मानवं त्यजसि
तर्हि त्वं कैसरस्य मित्रं न भवसि, यो जनः स्वं राजानं वक्ति
सएव कैसरस्य विरुद्धां कथां कथयति ।

१३　एतां कथां श्रुत्वा पीलातो यीशुं बहिरानीय निस्तारो-
त्सवस्य आसादनदिनस्य द्वितीयप्रहरात् पूर्व्वं प्रस्तरबन्धननाम्नि
स्थाने ऽर्थात् इब्रीयभाषया यद् गब्बिथा कथ्यते तस्मिन्
१४ स्थाने विचारासन उपाविशत्। अनन्तरं पीलातो यिहूदी-
१५ यान् अवदत्, युष्माकं राजानं पश्यत । किन्तु एनं दूरीकुरु,
एनं दूरीकुरु, एनं क्रुशे विध, इति कथां कथयित्वा ते रवितुम्
आरभन्त ; तदा पीलातः कथितवान् युष्माकं राजानं किं
क्रुशे वेधिष्यामि? प्रधानयाजका उत्तरम् अवदन् कैसरं विना
१६ कोपि राजास्माकं नास्ति । ततः पीलातो यीशुं क्रुशे वेधितुं
तेषां हस्तेषु समार्पयत्, ततस्ते तं धृत्वा नीतवन्तः ।

१७　ततः परं यीशुः क्रुशं वहन् शिरःकपालम् अर्थाद् यद्
इब्रीयभाषया गुल्गल्तां वदन्ति तस्मिन् स्थान उपस्थितः ।
१८ ततस्ते मध्यस्थाने तं तस्योभयपार्श्वे द्वावपरौ क्रुशेऽविधन् ।
१९ अपरम् एष यिहूदीयानां राजा नासरतीययीशुः, इति
२० विज्ञापनं लिखित्वा पीलातस्तस्य क्रुशोपरि समयोजयत्। सा
लिपिः इब्रीययूनानीयरोमीयभाषाभि र्लिखिता ; यीशोः

क्रुशवेधनस्थानं नगरस्य समीपं, तस्माद् बहवो यिहूदीयास्तां पठितुम् आरभन्त। यिहूदीयानां प्रधानयाजकाः पीलात- २१ मिति न्यवेदयन् यिहूदीयानां राजेति वाक्यं न किन्तु एष स्वं यिहूदीयानां राजानम् अवदद् इत्थं लिखतु। ततः २२ पीलात उत्तरं दत्तवान् यल्लेखनीयं तल्लिखितवान्।

इत्थं सेनागणो यीशुं क्रुशे विधित्वा तस्य परिधेयवस्त्रं २३ चतुरो भागान् कृत्वा एकैकसेना एकैकभागम् अगृह्लत् तस्यो- त्तरीयवस्त्रञ्चागृह्लत्। किन्तूत्तरीयवस्त्रं सूचिसेवनं विना सर्व्वम् ऊतं। तस्मात्ते व्याहरन् एतत् कः प्राप्स्यति? तन्न खण्ड- २४ यित्वा तत्र गुटिकापातं करवाम।

विभजन्तेऽधरीयं मे वसनं ते परस्परं।

ममोत्तरीयवस्त्रार्थं गुटिकां पातयन्ति च।

इति यद्वाक्यं धर्म्मपुस्तके लिखितमास्ते तत् सेनागणेनेत्थं व्यव- हरणात् सिद्धमभवत्।

तदानीं यीशो र्माता मातु र्भगिनी च या क्लियपा भार्य्या २५ मरियम् मग्दलीनी मरियम् च एतास्तस्य क्रुशस्य सन्निधौ समतिष्ठन्। ततो यीशुः स्वमातरं प्रियतमशिष्यञ्च समीपे दण्डा- २६ यमानौ विलोक्य मातरम् अवदत्, हे योषिद् एनं तव पुत्रं पश्य, शिष्यन्त्ववदत्, एनां तव मातरं पश्य। ततः स शिष्यस्तद्- २७ घटिकायां तां निजगृहं नीतवान्।

अनन्तरं सर्व्वं कर्म्माधुना सम्पन्नमभूत् यीशुरिति ज्ञात्वा २८ धर्म्मपुस्तकस्य वचनं यथा सिद्धं भवति तदर्थम् अकथयत् मम पिपासा जाता। ततस्तस्मिन् स्थाने अम्लरसेन पूर्णपात्रस्थितत्वा २९ ते स्पञ्जमेकं तदम्लरसेनार्द्रीकृत्य एसोब्नले तद् योजयित्वा तस्य

३० मुखस्य सन्निधावस्थापयन्। तदा यीशुरम्लरसं गृहीत्वा सर्व्वं सि-
द्धम् इति कथां कथयित्वा मस्तकं नमयन् प्राणान् पर्य्यत्यजत्।

३१　तद्दिनम् आसादनदिनं तस्मात् परेऽहनि विश्रामवारे
देहा यथा क्रुशोपरि न तिष्ठन्ति, यतः स विश्रामवारो महा-
दिनमासीत्, तस्माद् यिहूदीयाः पीलातनिकटं गत्वा तेषां
३२ पादभञ्जनस्य स्थानान्तरनयनस्य चानुमतिं प्रार्थयन्त। अतः
सेना आगत्य यीशुना सह क्रुशे हतयोः प्रथमद्वितीयचोरयोः
३३ पादान् अभञ्जन्; किन्तु यीशोः सन्निधिं गत्वा स मृत इति
३४ दृष्ट्वा तस्य पादौ नाभञ्जन्। पश्चाद् एको योद्धा शूला-
घातेन तस्य कुक्षिम् अविधत् तत्क्षणात् तस्माद् रक्तं जलञ्च
३५ निरगच्छत्। यो जनोऽस्य साक्ष्यं ददाति स स्वयं दृष्टवान्
तस्येदं साक्ष्यं सत्यं तस्य कथा युष्माकं विश्वासं जनयितुं योग्या
३६ तत् स जानाति। 'तस्यैकम् अस्थ्यपि न भंक्ष्यते,' इदं धर्म्म-
पुस्तकस्य वचनं यथा सफलं भवति तदर्थम् एताः सर्व्वघटना
३७ अभवन्। तद्वद् अन्यशास्त्रेपि लिख्यते, यथा,

　　दृष्टिपातं करिष्यन्ति तेऽविधन् यन्तु तम्प्रति।

३८　अरिमथीयनगरस्य यूषफ्नामा शिष्य एक आसीत् किन्तु
यिहूदीयेभ्यो भयात् प्रकाशितो न भवति; स यीशो र्देहं
नेतुं पीलातस्यानुमतिं प्रार्थयत, ततः पीलातेनानुमते सति स
३९ गत्वा यीशो र्देहम् अनयत्। अपरं यो निकदीमो रात्रौ
यीशोः समीपम् अगच्छत् सोपि गन्धरसेन मिश्रितं प्रायेण
४० पञ्चाशत्सेटकमगुरुं गृहीत्वागच्छत्। ततस्ते यिहूदीयानां
श्मशाने स्थापनरीत्यनुसारेण तत्सुगन्धिद्रव्येण सहितं तस्य देहं
४१ वस्त्रेणावेष्टयन्। अपरञ्च यत्र स्थाने तं क्रुशेऽविधन् तस्य निकट-

श्मशाने यत्र किमपि मृतदेहं कदापि नास्थाप्यत तादृशम् एकं नूतनं श्मशानम् आसीत्। यिहूदीयानाम् आसादनदिना- ४२ गमनात् ते तस्मिन् समीपस्थश्मशाने यीशुम् अशाययन्।

## २० विंशोऽध्यायः।

१ यीशोरुत्थानस्य प्रकाशः ११ मग्दलीनीमरियमे तस्य दर्शनदानं १९ शिष्येभ्यो दर्शनदानं २४ थोमै दर्शनदानं ३० सुसंवादलेखकस्याभिप्रायश्च।

अनन्तरं सप्ताहस्य प्रथमदिने ऽतिप्रत्यूषे ऽन्धकारे तिष्ठति १ मग्दलीनी मरियम् तस्य श्मशानस्य निकटं गत्वा श्मशानस्य मुखात् प्रस्तरमपसारितम् अपश्यत्। पश्चाद् धावित्वा शिमोन्- २ पितराय यीशोः प्रियतमशिष्याय चेदम् अकथयत्, लोकाः श्मशानात् प्रभुं नीत्वा कुत्रास्थापयन् तद् वक्तुं न शक्नोमि। अतः ३ पितरः सोऽन्यशिष्यश्च वहिर्भूत्वा श्मशानस्थानं गन्तुम् आरभेतां। उभयोर्धावतोः सोऽन्यशिष्यः पितरं पश्चात् त्यक्त्वा पूर्व्वं श्मशा- ४ नस्थान उपस्थितवान्। तदा प्रह्वीभूय स्थापितवस्त्राणि दृष्टवान् ५ किन्तु न प्राविशत्। अपरं शिमोन्पितर आगत्य श्मशानस्थानं ६ प्रविश्य स्थापितवस्त्राणि मस्तकस्य वस्त्रञ्च पृथक् स्थानान्तरे ७ स्थापितं दृष्टवान्। ततः श्मशानस्थानं पूर्व्वम् आगतो योऽन्यशिष्यः ८ सोऽपि प्रविश्य तादृशं दृष्ट्वा व्यश्वसीत्। यतः श्मशानात् स उत्था- ९ पयितव्य एतस्य धर्म्मपुस्तकवचनस्य भावं ते तदा बोद्धुं नाशक्नु- वन्। अनन्तरं तौ द्वौ शिष्यौ स्वं स्वं गृहं परावृत्यागच्छताम्। १०

ततः परं मरियम् श्मशानद्वारस्य वहिः स्थित्वा रोदितुम् ११ आरभत ततो रुदती प्रह्वीभूय श्मशानं विलोक्य यीशोः १२ शयनस्थानस्य शिरःस्थाने पदतले च द्वयो र्दिशो र्द्वौ स्वर्गीय- दूतावुपविष्टौ समपश्यत्। तौ पृष्टवन्तौ हे नारि कुतो रोदिषि? १३ सावदत् लोका मम प्रभुं नीत्वा कुत्रास्थापयन् इति न जा-

१४ नामि। इत्युक्त्वा मुखं परावृत्य यीशुं दण्डायमानम् अपश्यत्
१५ किन्तु स यीशुरिति सा ज्ञातुं नाशक्नोत्। तदा यीशुस्ताम्
अपृच्छत् हे नारि कुतो रोदिषि? कं वा मृगयसे? ततः सा
तम् उद्यानसेवकं ज्ञात्वा व्याहरत्, हे महेच्छ त्वं यदीतः स्था-
नात् तं नीतवान् तर्हि कुत्रास्थापयस्तद् वद तत्स्थानात् तम्
१६ आनयामि। तदा यीशुस्ताम् अवदत् हे मरियम्। ततः सा
१७ परावृत्य प्रत्यवदत् हे रब्बूनी अर्थात् हे गुरो। तदा यीशुर-
वदत् मां मा धर, इदानीं पितुः समीपे ऊर्द्ध्वगमनं न करोमि
किन्तु यो मम युष्माकञ्च पिता मम युष्माकञ्चेश्वरस्तस्य निकट
ऊर्द्ध्वगमनं कर्त्तुम् उद्यतोस्मि, इमां कथां त्वं गत्वा मम भ्रातृगणं
१८ ज्ञापय। ततो मग्दलीनीमरियम् तत्क्षणाद् गत्वा प्रभुस्तस्यै दर्शनं
दत्त्वा कथा एता अकथयद् इति वार्त्तां शिष्येभ्योऽकथयत्।

१९ ततः परं सप्ताहस्य प्रथमदिनस्य सन्ध्यासमये शिष्या एकत्र
मिलित्वा यिहूदीयेभ्यो भिया द्वाररुद्धम् अकुर्व्वन्, एतस्मिन्
काले यीशुस्तेषां मध्यस्थाने तिष्ठन् अकथयद् युष्माकं कल्याणं
२० भूयात्। इत्युक्त्वा निजहस्तं कुक्षिञ्च दर्शितवान्, ततः शिष्याः
२१ प्रभुं दृष्ट्वा हृष्टा अभवन्। यीशुः पुनरवदद् युष्माकं कल्याणं
भूयात् पिता यथा मां प्रैषयत् तथाहमपि युष्मान् प्रेषयामि।
२२ इत्युक्त्वा स तेषामुपरि दीर्घप्रश्वासं दत्त्वा कथितवान् पवित्रम्
२३ आत्मानं गृह्लीत। यूयं येषां पापानि मोचयिष्यथ ते मोच-
यिष्यन्ते येषाञ्च पापाति न मोचयिष्यथ ते न मोचयिष्यन्ते।
२४ द्वादशमध्ये गणितो यमजो थोमानामा शिष्यो यीशोरागमन-
२५ काले तैः सार्द्धं नासीत्। अतो वयं प्रभुम् अपश्यामेति वाक्येऽन्य-
शिष्यैरुक्ते सोवदत्, तस्य हस्तयो र्लौहकीलकानां चिह्नं न विलोक्य

तच्छिद्रम् अङ्गुल्या न स्पृष्ट्वा तस्य कुक्षौ हस्तं नारोप्य चाहं न विश्व-
सिष्यामि। अपरम् अष्टमेऽह्नि गते सति थोमासहितः शिष्यगण २६
एकत्र मिलित्वा द्वारं रुद्धाभ्यन्तर आसीत्, एतर्हि यीशुस्तेषां
मध्यस्थाने तिष्ठन् अकथयत्, युष्माकं कुशलं भूयात्। पश्चात् २७
थोमै कथितवान् त्वम् अङ्गुलीम् अत्रार्पयित्वा मम करौ पश्य
करं प्रसार्य्य मम कुक्षावर्पय नाविश्वस्य विश्वसिहि। तदा थोमा २८
अवदत्, हे मम प्रभो हे मदीश्वर। यीशुरकथयत्, हे थोमा २९
मां निरीक्ष्य विश्वसिषि ये न दृष्ट्वा विश्वसन्ति तएव धन्याः।

एतदन्यानि पुस्तकेऽस्मिन् अलिखितानि बह्वन्याश्चर्य्यकर्म्माणि ३०
यीशुः शिष्याणां पुरस्ताद् अकरोत्। किन्तु यीशुरीश्वरस्या- ३१
भिषिक्तः सुत एवेति यथा यूयं विश्वसिथ विश्वस्य च तस्य नाम्ना
परमायुः प्राप्नुथ तदर्थम् एतानि सर्व्वाण्यलिख्यन्त।

## २१ एकविंशोऽध्यायः।

१ तिविरियाह्रदे अर्थाद् गालील्सिन्धौ शिष्येभ्यो दर्शनदानं १५ पितरेण सह यीशोः कथनं २० योहनि तस्य कथा २४ समाप्तेः कथा च।

ततः परं तिविरियाजलधेस्तटे यीशुः पुनरपि शिष्येभ्यो १
दर्शनं दत्तवान् दर्शनस्याख्यानमिदम्। शिमोन्पितरः यम- २
जथोमा गालीलीयकान्नानगरनिवासी निथनेल् सिवदेः पुत्रा-
वन्यौ द्वौ शिष्यौ चैतेष्वेकत्र मिलितेषु शिमोन्पितरोऽकथयत्
मत्स्यान् धर्तुं यामि। ततस्ते व्याहरन् तर्हि वयमपि त्वया सार्द्धं ३
यामः तदा ते वहिर्गताः सन्तः चिप्रं नावम् आरोहन् किन्तु
तस्यां रजन्याम् एकमपि न प्राप्नुवन्। प्रभाते सति यीशुस्तटे ४
स्थितवान् किन्तु स यीशुरिति शिष्या ज्ञातुं नाशक्नुवन्। तदा ५
यीशुरपृच्छत्, हे वत्सा युष्माकं सन्निधौ किञ्चित् खाद्यद्रव्यम्
आस्ते? तेऽवदन् किमपि नास्ति। तदा सोऽवदत् नौकाया दक्षि- ६

णपार्श्वे जालं निक्षिपत ततो लप्स्यध्वे, तस्मात् तै र्निक्षिप्ते जाले
मत्स्या एतावन्तोऽपतन् येन ते जालमाकृष्य नोत्तोलयितुं
७ शक्ताः। तस्माद् यीशोः प्रियतमशिष्यः पितरायाकथयत् एष
प्रभु र्भवेत्, एष प्रभुरिति वाचं श्रुत्वैव शिमोन् नग्नताहेतो र्मत्स्य-
८ धारिण उत्तरीयवस्त्रं परिधाय ह्रदं प्रत्युदलम्फयत्। अपरे
शिष्या मत्स्यैः सार्द्धं जालम् आकर्षन्तः क्षुद्रनौकां वाहयित्वा
कूलमानयन् ते कूलाद् अतिदूरे नासन् द्विशतहस्तेभ्यो दूर
९ आसन् इत्यनुमीयते। तीरं प्राप्तैस्तैस्तत्र प्रज्वलिताग्निस्तदुपरि
१० मत्स्याः पूपाश्च दृष्टाः। ततो यीशुरकथयद् यान् मत्स्यान्
११ अधरत तेषां कतिपयान् आनयत। अतः शिमोन्पितरः
परावृत्य गत्वा बृहद्भिस्त्रिपञ्चाशदधिकशतमत्स्यैः परिपूर्णं
तज्जालम् आकृष्योदतोलयत् किन्त्वेतावद्भि र्मत्स्यैरपि जालं
१२ नाछिद्यत। अनन्तरं यीशुस्तान् अवादीत् यूयमागत्य भुंग्ध्वं;
तदा सएव प्रभुरिति ज्ञातत्वात् त्वं कः? इति प्रष्टुं शिष्याणां
१३ कस्यापि प्रगल्भता नाभवत्। ततो यीशुरागत्य पूपान् मत्स्यांश्च
१४ गृहीत्वा तेभ्यः पर्य्यवेषयत्। इत्थं श्मशानादुत्थानात् परं यीशुः
शिष्येभ्यस्तृतीयवारं दर्शनं दत्तवान्।

१५ भोजने समाप्ते सति यीशुः शिमोन्पितरं पृष्टवान्, हे
यूनसः पुत्र शिमोन् त्वं किम् एतेभ्योधिकं मयि प्रीयसे? ततः
स उदितवान् सत्यं प्रभो त्वयि प्रीयेऽहं तद् भवान् जानाति;
१६ तदा यीशुरकथयत् तर्हि मम मेषशावकगणं पालय। ततः स
द्वितीयवारं पृष्टवान् हे यूनसः पुत्र शिमोन् त्वं किं मयि प्रीयसे?
ततः स उक्तवान् सत्यं प्रभो त्वयि प्रीयेऽहं तद् भवान् जानाति;
१७ तदा यीशुरकथयत तर्हि मम मेषगणं पालय। पश्चात् स

तृतीयवारं पृष्टवान्, हे यूनसः पुत्र शिमोन् त्वं किं मयि प्रीयसे? एतद्वाक्यं तृतीयवारं पृष्टवान् तस्मात् पितरो दुःखितो भूत्वाऽकथयत् हे प्रभो भवतः किमप्यगोचरं नास्ति त्वय्यहं प्रीये तद् भवान् जानाति; ततो यीशुरवदत् तर्हि मम मेषगणं पालय। अहं तुभ्यं यथार्थं कथयामि यौवनकाले स्वयं बद्धकटि १८ र्यत्रेच्छा तत्र यातवान् किन्त्वितः परं वृद्धे वयसि हस्तं विस्तारयिष्यसि, अन्यजनस्त्वां बद्ध्वा यत्र गन्तुं तवेच्छा न भवति त्वां धृत्वा तत्र नेष्यति। फलतः कीदृशेन मरणेन स ईश्वरस्य १९ महिमानं प्रकाशयिष्यति तद् बोधयितुं स इति वाक्यं प्रोक्तवान्। इत्युक्ते सति स तमवोचत् मम पश्चाद् आगच्छ।

यो जनो रात्रिकाले यीशो र्वक्षोऽवलम्ब्य, हे प्रभो को भवन्तं २० परकरेषु समर्पयिष्यतीति वाक्यं पृष्टवान्, तं यीशोः प्रियतमशिष्यं पश्चाद् आगच्छन्तं पितरो मुखं परावर्त्त्य विलोक्य यीशुं पृष्ट- २१ वान्, हे प्रभो एतस्य मानवस्य कीदृशी गति र्भविष्यति? स प्रत्य- २२ वदत्, मम पुनरागमनपर्य्यन्तं यदि तं स्थापयितुम् इच्छामि तत्र तव किं? त्वं मम पश्चाद् आगच्छ। तस्मात् स शिष्यो न २३ मरिष्यतीति भ्रातृगणमध्ये किंवदन्ती जाता किन्तु स न मरिष्यतीति वाक्यं यीशु र्नावदत् केवलं मम पुनरागमनपर्य्यन्तं यदि तं स्थापयितुम् इच्छामि तत्र तव किं? इति वाक्यम् उक्तवान्।

यो जन एतानि सर्व्वाणि लिखितवान् अत्र साक्ष्यञ्च २४ दत्तवान् सएव स शिष्यः, तस्य साक्ष्यं प्रमाणमिति वयं जानीमः। यीशुरेतेभ्योऽपराण्यपि बहूनि कर्म्माणि कृतवान् तानि २५ सर्व्वाणि यद्येकैकं कृत्वा लिख्यन्ते तर्हि ग्रन्था एतावन्तो भवन्ति तेषां धारणे पृथिव्यां स्थानं न भवति। इति॥

# प्रेरितानां कर्म्मणामाख्यानं।

## १ प्रथमोऽध्यायः।

शिष्येभ्यो यीशो र्दर्शनदानम् आज्ञापनं तस्य स्वर्गारोहणञ्च १२ शिष्याणां यिरूशा-लमृगमनं प्रार्थनायां प्रवर्त्तनं १५ यिहूदास्थाने मतथिनियोजनञ्च।

१ हे थियफिल, यीशुः स्वमनोनीतान् प्रेरितान् पवित्रेणा-
२ त्मना समादिश्य यस्मिन् दिने स्वर्गमारोहत् तद्दिनपर्य्यन्तं यां
यां क्रियामकरोत् यद्यद् उपादिशच्च तानि सर्व्वाणि पूर्व्वं मया
३ लिखितानि। स स्वनिधनदुःखभोगात् परम् अनेकप्रत्यक्ष-
प्रमाणैः स्वं सजीवं दर्शयित्वा चत्वारिंशद्दिनानि यावत् तेभ्यः
प्रेरितेभ्यो दर्शनं दत्त्वेश्वरीयराज्यस्य वर्णनम् अकरोत्।
४ अनन्तरं तेषां सभां कृत्वा इत्याज्ञापयत्, यूयं यिरूशालमो-
ऽन्यत्र गमनमकृत्वा यस्मिन् पित्राङ्गीकृते मम वदनात् कथा
५ अशृणुत तत्प्राप्तिम् अपेक्ष्य तिष्ठत। योहन् जले मज्जितवान्
किन्त्वल्पदिनमध्ये यूयं पवित्र आत्मनि मज्जिता भविष्यथ।
६ पश्चात् ते सर्व्वे मिलित्वा तम् अपृच्छन् हे प्रभो भवान्
किमिदानीं पुनरपि राज्यम् इस्रायेलीयलोकानां करेषु सम-
७ र्पयिष्यति? ततः सोवदत् यान् सर्व्वान् कालान् समयांश्च
पिता स्ववशेऽस्थापयत् तान् ज्ञातुं युष्माकम् अधिकारो न
८ जायते। किन्तु युष्मासु पवित्रस्यात्मन आविर्भावे सति यूयं शक्तिं
प्राप्य यिरूशालमि समस्तयिहूदाशोमिरोणदेशयोः पृथिव्याः
सीमां यावद् यावन्तो देशास्तेषु सर्व्वेषु च मयि साक्ष्यं
९ दास्यथ। इति वाक्यमुक्त्वा स तेषां समक्षं स्वर्गं नीतोऽभवत्,

ततो मेघमारुह्य तेषां दृष्टेरगोचरोऽभवत्। यस्मिन् समये १० ते विहायसं प्रत्यनन्यदृष्ट्या तस्य तादृशम् ऊर्द्धगमनम् अपश्यन् तस्मिन्नेव समये शुक्लवस्त्रौ द्वौ जनौ तेषां सन्निधौ दण्डाय-मानौ कथितवन्तौ, हे गालीलीयलोका यूयं किमर्थं गगणं ११ प्रति निरीक्ष्य दण्डायमानास्तिष्ठथ? युष्माकं समीपात् स्वर्गं नीतो यो यीशुस्तं यूयं यथा स्वर्गम् आरोहन्तम् अदर्शत तथा स पुनश्चागमिष्यति।

ततः परं ते जैतुननाम्नः पर्व्वताद् विश्रामवारस्य पथः १२ परिमाणम् अर्थात् प्रायेणार्द्धक्रोशं दूरस्थं यिरूशालम्नगरं परावृत्यागच्छन्। नगरं प्रविश्य पितरो याकूब् योहन् १३ आन्द्रियः फिलिपः थोमा बर्थलमयो मथिराल्फीयपुत्रो याकूब् उद्योगी शिमोन् याकूबो भ्राता यिहूदा एते सर्व्वे यत्र स्थाने प्रवसन्ति तस्मिन् उपरितनप्रकोष्ठे प्राविशन्। पश्चाद् इमे १४ कियत्यः स्त्रियश्च यीशो र्माता मरियम् तस्य भ्रातरश्चैते सर्व्वे एकचित्तीभूय सततं विनयेन प्रार्थयन्त।

तस्मिन् समये तत्र स्थाने साकल्येन विंशत्यधिकशतं शिष्या १५ आसन्। ततः पितरस्तेषां मध्ये तिष्ठन् उक्तवान् हे भ्रातृगण १६ यीशुधारिणां लोकानां पथदर्शको यो यिहूदास्तस्मिन् दायूदा पवित्र आत्मा यां कथां कथयामास तस्याः प्रत्यक्षीभवन-स्यावश्यकत्वम् आसीत्। स जनोऽस्माकं मध्यवर्त्ती सन् अस्याः १७ सेवाया अंशम् अलभत। तदनन्तरं कुकर्म्मणा लब्धं यन्मूल्यं १८ तेन क्षेत्रमेकं क्रीतम् अपरं तस्मिन् अधोमुखे भूमौ पतिते सति तस्योदरस्य विदीर्णत्वात् सर्व्वा नाड्यो निरगच्छन्। एतां १९ कथां यिरूशालम्निवासिनः सर्व्वे लोका विदन्ति; तेषां

निजभाषया तत्क्षेत्रञ्च हकल्दामा, अर्थात् रक्तक्षेत्रमिति
२० विख्यातमास्ते। अन्यच्च,

निकेतनं तदीयन्तु शून्यमेव भविष्यति।
तस्य दूष्ये निवासार्थं कोपि स्थास्यति नैव हि।
अन्य एव जनस्तस्य पदं संप्राप्स्यति ध्रुवं।

२१ इत्थं गीतपुस्तके लिखितमास्ते। अतो योहनो मज्जनम्
आरभ्यास्माकं समीपात् प्रभो र्यीशोः स्वर्गारोहणदिनं यावत्
२२ सोस्माकं मध्ये यावन्ति दिनानि यापितवान् तावन्ति दिनानि
ये मानवा अस्माभिः सार्द्धं तिष्ठन्ति तेषाम् एकेन जनेना-
२३ स्माभिः सार्द्धं यीशोरुत्थाने साक्षिणा भवितव्यं। अतो यस्य
रूढि र्युष्टो यं बर्शब्बेत्युक्त्वाकारयन्ति स यूषफ् मतथिश्च द्वावेतौ
२४ पृथक् कृत्वा त ईश्वरस्य सन्निधौ प्रार्थ्य कथितवन्तः, हे
सर्व्वान्तर्य्यामिन् परमेश्वर, यिहूदाः सेवनप्रेरितत्वपदच्युतः
२५ सन् निजस्थानम् अगच्छत्, तत्पदं लब्धुम् एनयो र्जनयो र्मध्ये
२६ भवता कोऽभिरुचितस्तदस्मान् दर्श्यतां। ततो गुटिकापाटे कृते
मतथिर्निरचीयत तस्मात् सोन्येषाम् एकादशानां प्रेरितानां
मध्ये गणितोभवत्।

---

## २ द्वितीयोऽध्यायः।

१ पवित्रस्यात्मन आविर्भावः ५ तेन प्रेरितानां नानाभाषाकथनं ततो लोकानाम् आश्चर्य्यमननं १४ पितरस्योपदेशवाक्यं ३७ तेन वाक्येन बहुलोकानां मनःपरावृत्तिः ४१ तेषां मज्जनं सदाचरणञ्च।

१ अपरञ्च निस्तारोत्सवात् परं पञ्चाशत्तमे दिने समुपस्थिते
सति ते सर्व्वे एकचित्तीभूय स्थान एकस्मिन् मिलिता आसन्।
२ एतस्मिन्नेव समयेऽकस्माद् आकाशात् प्रचण्डात्युग्रवायोः शब्द-

वद् एकः शब्द आगत्य यस्मिन् गृहे त उपाविशन् तद् गृहं समस्तं व्याप्नोत्। ततः परं वह्निशिखास्वरूपा जिह्वाः प्रत्य- ३ क्षीभूय विभक्ताः सत्यः प्रतिजनोर्द्धे स्थगिता अभूवन्। तस्मात् ४ सर्व्वे पवित्रेणात्मना परिपूर्णाः सन्त आत्मा यथा वाचितवान् तदनुसारेणान्यदेशीयानां भाषा उक्तवन्तः।

तस्मिन् समये पृथिवीस्थसर्व्वदेशेभ्यो यिहूदीयमतावल- ५ म्बिनो भक्तलोका यिरूशालमि प्रावसन्; तस्याः कथायाः ६ किंवदन्त्या जातत्वात् सर्व्वे लोका मिलित्वा निजनिजभाषया शिष्याणां कथाकथनं श्रुत्वा समुद्विग्ना अभवन्। सर्व्वएव ७ विस्मयापन्ना आश्चर्य्यान्विताश्च सन्तः परस्परं उक्तवन्तः पश्यत ये कथां कथयन्ति ते सर्व्वे गालीलीयलोकाः किं न भवन्ति? तर्हि वयं प्रत्येकशः स्वस्वजन्मदेशीयभाषाभिः कथा एतेषां ८ शृणुमः किमिदं? पार्थी-मादी-पार्शी-अराम्नहरयिम्देशनि- ९ वासिनो यिहूदा-कप्पदकिया-पन्त-आशिया-फ्रुगिया-पम्फु- १० लिया-मिसरनिवासिनः कुरीणीनिकटवर्त्तिलूबीयप्रदेशनिवासिनो रोमनगराद् आगता यिहूदीयलोका यिहूदीयमतग्राहिणः क्रीतीया अराबीयादयो लोकाश्च ये वयम् अस्माकं ११ निजनिजभाषाभिरेतेषाम् ईश्वरीयमहाकर्म्मव्याख्यानं शृणुमः। इत्थं ते सर्व्वएव विस्मयापन्नाः सन्दिग्धचित्ताः सन्तः परस्पर- १२ मूचुः, अस्य को भावः ? अपरे केचित् परिहस्य कथितवन्त १३ एते नवीनद्राक्षारसेन मत्ता अभवन्।

तदा पितर एकादशभि र्जनैः साकं तिष्ठन् ताल्लोकान् १४ उच्चैःकारम् अवदत्, हे यिहूदीया हे यिरूशालम्निवासिनः सर्व्वे, अवधानं कृत्वा मदीयवाक्यं बुध्यध्वं । इदानीम् एक- १५

यामाद् अधिका वेला नास्ति तस्माद् यूयं यद् अनुमाथ मानवा
१६ इमे मद्यपानेन मत्तास्तन्न। किन्तु योयेल्भविष्यद्वक्त्रैतद्वाक्य-
मुक्तं यथा,

१७ ईश्वरः कथयामास युगान्तसमये त्वहम्।
वर्षिष्यामि स्वमात्मानं सर्व्वप्राण्युपरि ध्रुवम्।
भाविवाक्यं वदिष्यन्ति कन्याः पुत्त्राश्च वस्तुतः।
प्रत्यादेशञ्च प्राप्स्यन्ति युष्माकं युवमानवाः।
तथा प्राचीनलोकास्तु स्वप्नान् द्रक्ष्यन्ति निश्चितं।
१८ वर्षिष्यामि तदात्मानं दासदासीजनोपरि।
तेनैव भाविवाक्यं ते वदिष्यन्ति हि सर्व्वशः।
१९ ऊर्द्ध्वस्थे गगणे चैव नीचस्थे पृथिवीतले।
शोणितानि वृहद्भानून् घनधूमादिकानि च।
चिह्नानि दर्शयिष्यामि महाश्चर्य्यक्रियास्तथा।
२० महाभयानकस्यैव तद्दिनस्य परेशितुः।
पुरागमाद् रविः कृष्णो रक्तश्चन्द्रो भविष्यतः।
२१ किन्तु यः परमेशस्य नाम्नि सम्प्रार्थयिष्यते।
सएव मनुजो नूनं परित्राता भविष्यति॥

२२ अतो हे इस्रायेल्वंशीयलोकाः सर्व्वे कथायामेतस्याम् मनो
निधद्ध्वं नासरतीयो यीशुरीश्वरस्य मनोनीतः पुमान् एतद्
ईश्वरस्तत्कृतैराश्चर्य्याद्भुतकर्म्मभि र्लक्षणैश्च युष्माकं साक्षादेव
२३ प्रतिपादितवान् इति यूयं जानीथ। तस्मिन् यीशौ ईश्वरस्य
पूर्व्वनिश्चितमन्त्रणानिरूपणानुसारेण मृत्यौ समर्पिते सति यूयं
२४ तं धृत्वा दुष्टलोकानां हस्तैः क्रुशे विधित्वाहत। किन्त्वीश्वरस्तं
निधनस्य बन्धनान्मोचयित्वा उदस्थापयत् यतः स मृत्युना

बद्धस्तिष्ठतीति न सम्भवति। एतस्मिन् दायूदपि कथितवान् २५ यथा,

सर्व्वदा मम साक्षात्तं स्थापये परमेश्वरं।
स्थिते मद्दक्षिणे तस्मिन् स्खलिष्यामि त्वहं नहि।
आनन्दिष्यति तद्धेतो र्मामकीनं मनस्तु वै। २६
आह्लादिष्यति जिह्वापि मदीया तु तथैव च।
प्रत्याशया शरीरन्तु मदीयं वै शयिष्यते।
परलोके यतो हेतोस्त्वं मां नैव हि त्यक्ष्यसि। २७
स्वकीयं पुण्यवन्तं त्वं क्षयितुं नैव दास्यसि।
एवं जीवनमार्गं त्वं मामेव दर्शयिष्यसि। २८
स्वसम्मुखे य आनन्दो दक्षिणे स्वस्य यत् सुखं।
अनन्तं तेन मां पूर्णं करिष्यसि न संशयः॥

हे भ्रातरोऽस्माकं तस्य पूर्व्वपुरुषस्य दायूदः कथां स्पष्टं कथ- २९ यितुं माम् अनुमन्यध्वं, स प्राणान् त्यक्त्वा श्मशाने स्थापितो- भवद् अद्यापि तत् श्मशानम् अस्माकं सन्निधौ विद्यते। फलतो ३० लौकिकभावेन दायूदो वंशे ख्रीष्टं जन्म ग्राहयित्वा तस्यैव सिंहासने समुपवेष्टुं तमुत्थापयिष्यति परमेश्वरः शपथं कृत्वा दायूदः समीप इमम् अङ्गीकारं कृतवान्, इति ज्ञात्वा दायूद् ३१ भविष्यद्वादी सन् भविष्यत्कालीयज्ञानेन ख्रीष्टोत्थाने कथा- मिमां कथयामास यथा तस्यात्मा परलोके न त्यक्ष्यते तस्य शरीरञ्च न क्षेष्यति; अतः परमेश्वर एनं यीशुं श्मशानाद् ३२ उदस्थापयत् तत्र वयं सर्व्वे साक्षिण आस्महे। स ईश्वरस्य ३३ दक्षिणकरेणोन्नतिं प्राप्य पवित्र आत्मनि पिता यमङ्गीकारं कृतवान् तस्य फलं प्राप्य यत् पश्यथ शृणुथ च तदवर्षत्।

३४ यतो दायूद् स्वर्गं नारुरोह किन्तु स्वयम् इमां कथाम् अकथयद् यथा,

मम प्रभुमिदं वाक्यमवदत् परमेश्वरः।

३५ तव शत्रूनहं यावत् पादपीठं करोमि न।

तावत् कालं मदीये त्वं दक्षपार्श्व उपाविश।

३६ अतो यं यीशुं यूयं क्रुशेऽहत परमेश्वरस्तं प्रभुत्वाभिषिक्तत्वपदे न्ययुंक्तेति इस्रायेलीया लोका निश्चितं जानन्तु।

३७ एतादृशीं कथां श्रुत्वा तेषां हृदयानां विदीर्णत्वात् ते पितराय तदन्यप्रेरितेभ्यश्च कथितवन्तः, हे भ्रातृगण वयं किं

३८ करिष्यामः? ततः पितरः प्रत्यवदद् यूयं सर्व्वे स्वं स्वं मनः परिवर्त्तयध्वं तथा पापमोचनार्थं यीशुख्रीष्टस्य नाम्ना मज्जिताश्च भवत, तस्माद् दानरूपं परित्रम् आत्मानं लप्स्यथ।

३९ यतो युष्माकं युष्मत्सन्तानानाञ्च दूरस्थसर्व्वलोकानाञ्च निमित्तम् अर्थाद् अस्माकं प्रभुः परमेश्वरो यावतो लोकान् आह्वास्यति तेषां सर्व्वेषां निमित्तम् अयमङ्गीकार आस्ते।

४० एतदन्याभि र्बहुकथाभिः प्रमाणं दत्त्वाकथयत् एतेभ्यो विपथगामिभ्यो वर्त्तमानलोकेभ्यः स्वान् रक्षत।

४१ ततः परं ये सानन्दास्तां कथाम् अगृह्लन् ते मज्जिता अभवन्। तस्मिन् दिवसे प्रायेण त्रीणि सहस्राणि लोकास्तेषां

४२ सपक्षाः सन्तः प्रेरितानाम् उपदेशे सङ्गतौ पूपभञ्जने प्रार्थनासु

४३ च मनःसंयोगं कृत्वातिष्ठन्। प्रेरितै र्नानाप्रकारलक्षणेषु

४४ महाश्चर्य्यकर्म्मसु च दर्शितेषु सर्व्वलोकानां भयमुपस्थितं। विश्वासकारिणः सर्व्वे च सह तिष्ठन्तः स्वेषां सर्व्वाः सम्पत्तीः साधा-

४५ रणेन स्थापयित्वाभुञ्जत। फलतो गृहाणि द्रव्याणि च सर्व्वाणि

विक्रीय सर्व्वेषां स्वस्वप्रयोजनानुसारेण विभज्य सर्व्वेभ्योऽददन्।
सर्व्वे एकचित्तीभूय दिने दिने मन्दिरे सन्तिष्ठमाना गृहे गृहे ४६
च पूपानभञ्जन्त ईश्वरस्य धन्यवादं कुर्व्वन्तो लोकैः समादृताः
परमानन्देन सरलान्तःकरणेन भोजनं पानञ्चाकुर्व्वन्। पर- ४७
मेश्वरो दिने दिने परित्राणभाजनै र्मण्डलीम् अवर्द्धयत्।

---

## ३ तृतीयोऽध्यायः।

१ पितरेण खञ्जस्य स्वास्थ्यं १२ मनःपरावर्त्तनाय पितरस्योपदेशकथा च।

तृतीययामवेलायां सत्यां प्रार्थनायाः समये पितरयोहनौ १
सम्भूय मन्दिरं गच्छतः। तस्मिन्नेव समये मन्दिरप्रवेशकानां २
समीपे भिक्षाकरणार्थं यं जन्मखञ्जमानुषं लोका मन्दिरस्य
सुन्दरनाम्नि द्वारे प्रतिदिनम् अस्थापयन् तं वहन्तस्तद्द्वारं
आनयन्। तदा पितरयोहनौ मन्दिरं प्रवेष्टुम् उद्यतौ विलोक्य ३
स खञ्जस्तौ किञ्चिद् भिक्षितवान्। तस्माद् योहना सहितः ४
पितरस्तम् अनन्यदृष्ट्या निरीक्ष्य प्रोक्तवान् आवां प्रति दृष्टिं
कुरु। ततः स किञ्चित् प्राप्त्याशया तौ प्रति दृष्टिं कृतवान्। ५
तदा पितरो गदितवान् मम निकटे स्वर्णरूप्यादि किमपि ६
नास्ति किन्तु यदास्ते तद् ददामि नासरतीयस्य यीशुख्रीष्टस्य
नाम्ना त्वमुत्थाय गमनागमने कुरु। ततः परं स तस्य दक्षि- ७
णकरं धृत्वा तम् उदतोलयत्; तेन तत्क्षणात् तस्य जनस्य
पादगुल्फयोः सबलत्वात् स उल्लम्फ्य प्रोत्थाय गमनागमने
ऽकरोत्। ततो गमनागमने कुर्व्वन् उल्लम्फन् ईश्वरं धन्यं वदन् ८
ताभ्यां सार्द्धं मन्दिरं प्राविशत्। ततः सर्व्वे लोकास्तं गमना- ९
गमने कुर्व्वन्तम् ईश्वरं धन्यं वदन्तञ्च विलोक्य मन्दिरस्य १०

सुन्दरे द्वारे य उपविश्य भिक्षितवान् सएवायम् इति ज्ञात्वा
११ तं प्रति तया घटनया चमत्कृता विस्मयापन्नाश्चाभवन्। यः
खञ्जः स्वस्थोभवत् तेन पितरयोहनोः करयोर्धृतयोः सतोः
सर्व्वे लोका असम्भवं मन्यमानाः सुलेमानोऽलिन्दं धावन्त-
स्तेषां सन्निधिम् आगच्छन्।

१२ तद् दृष्ट्वा पितरस्तेभ्योऽकथयत्, हे इस्रायेलीयलोका यूयं
कुतो ऽनेनाश्चर्य्यं मन्यध्वे? आवां निजशक्त्या यद्वा निजपुण्येन
खञ्जमनुष्यमेनं गमितवन्ताविति चिन्तयित्वा आवां प्रति
१३ कुतोऽनन्यदृष्टिं कुरुथ? यं यीशुं यूयं परकरेषु समार्पयत ततो
यं पीलातो मोचयितुम् ऐच्छत् तथापि यूयं तस्य साक्षान्
नाङ्गीकृतवन्त इब्राहीम इस्हाको याकूबश्चेश्वरोऽर्थाद् अस्माकं
पूर्व्वपुरुषाणाम् ईश्वरः स्वपुत्रस्य तस्य यीशो र्महिमानं प्राका-
१४ शयत्। किन्तु यूयं तं पवित्रं धार्म्मिकं पुमांसं नाङ्गीकृत्य
१५ हत्याकारिणमेकं स्वेभ्यो दातुम् अयाचध्वं। पश्चात् तं जीव-
नस्याधिपतिम् अहत किन्त्वीश्वरः श्मशानात् तम् उदस्थापयत
१६ तत्र वयं साक्षिण आस्महे। इमं यं मानुषं यूयं पश्यथ परि-
चिनुथ च स तस्य नाम्नि विश्वासकरणात् चलनशक्तिं लब्धवान्
तस्मिन् तस्य यो विश्वासः स तं युष्माकं सर्व्वेषां साक्षात् सम्पूर्ण-
१७ रूपेण स्वस्थम् अकार्षीत्। हे भ्रातरो यूयं युष्माकम् अधि-
पतयश्च अज्ञात्वा कर्म्माण्येतानि कृतवन्त इदानीं ममैष बोधो
१८ जायते। किन्त्वीश्वरः ख्रीष्टस्य दुःखभोगे भविष्यद्वादिनां
मुखेभ्यो यां यां कथां पूर्व्वमकथयत् ताः कथा इत्थं सिद्धा
१९ अकरोत्। अतः स्वेषां पापमोचनार्थं खेदं कृत्वा मनांसि परि-
वर्त्तयध्वं, तस्माद् ईश्वरात् सान्त्वनाप्राप्तेः समय उपस्थास्यति;

पुनश्च पूर्व्वकालम् आरभ्य प्रचारितो यो यीशुख्रीष्टस्तम् ईश्वरो २० युष्मान् प्रति प्रेषयिष्यति। किन्तु जगतः सृष्टिमारभ्य ईश्वरो २१ निजपवित्रभविष्यद्वादिगणेन यथा कथितवान् तदनुसारेण सर्व्वेषां कार्य्याणां सिद्धिपर्य्यन्तं तेन स्वर्गे वासः कर्त्तव्यः। 'युष्माकं प्रभुः परमेश्वरो युष्माकं भ्रातृगणमध्यात् मत्सदृशं २२ भविष्यद्वक्तारम् उत्पादयिष्यति, ततः स यत् किञ्चित् कथयिष्यति तत्र यूयं मनांसि निधद्ध्वं। किन्तु यः कश्चित् प्राणी २३ तस्य भविष्यद्वादिनः कथां न ग्रहीष्यति स निजलोकानां मध्याद् उच्छेत्स्यते,' इमां कथाम् अस्माकं पूर्व्वपुरुषेभ्यः केवलो मूसाः कथयामास इति नहि, शिमूयेल्भविष्यद्वादिनम् २४ आरभ्य यावन्तो भविष्यद्वादिनो भविष्यद्वाक्यम् अकथयन् ते सर्व्वएव समयस्यैतस्य कथाम् अकथयन्। यूयमपि तेषां भवि- २५ ष्यद्वादिनां सन्तानाः, 'तव वंशोद्भवपुंसा सर्व्वदेशीया लोका आशिषं प्राप्ता भविष्यन्ति', इत्थाहीमे कथामेतां कथयित्वा ईश्वरोऽस्माकं पूर्व्वपुरुषैः सार्द्धं यं नियमं स्थिरीकृतवान् तस्य नियमस्याधिकारिणोऽपि यूयं भवथ। अत ईश्वरो निजपुत्रं २६ यीशुम् उत्थाप्य युष्माकं सर्व्वेषां स्वस्वपापात् परावर्त्त्य युष्मभ्यम् आशिषं दातुं प्रथमतस्तं युष्माकं निकटं प्रेषितवान्।

---

## ४ चतुर्थोऽध्यायः।

१ पितरस्योपदेशेन महायाजकानां क्रोधः पितरयोहनोः कारायां स्थापनं ५ पितरे योहनि च राजविचारः पितरस्योत्तरं १२ पितरयोहनौ प्रति ख्रीष्टनाम-प्रचारनिषेधनं २३ तेषां मण्डल्यागमनं प्रार्थनञ्च ३२ प्रार्थनया पवित्रात्मप्राप्तिः शिष्याणामेकत्वं धनविभागश्च।

यस्मिन् समये पितरयोहनौ लोकान् उपदिशतस्तस्मिन् १ समये याजका मन्दिरस्य सेनापतयः सिदूकीगणश्च तयोर् २

उपदेशकरणे ख्रीष्टस्योत्थानम् उपलक्ष्य सर्व्वेषां मृतानाम्
३ उत्थानप्रस्तावे च व्यग्राः सन्तस्तावुपागमन्। तौ धृत्वा दिना-
४ वसानकारणात् परदिनपर्य्यन्तं रुद्धा स्थापितवन्तः। तथापि
ये लोकास्तयोरुपदेशम् अशृण्वन् तेषां प्रायेण पञ्चसहस्राणि
जना व्यश्वसन्।

५ परेऽहनि अधिपतयः प्राचीना अध्यापकाश्च हाननामा
६ महायाजकः कियफा योहन् सिकन्दर इत्यादयो महायाज-
७ कस्य ज्ञातयः सर्व्वे यिरूशालम्नगरे मिलिताः। अनन्तरं
प्रेरितौ मध्ये स्थापयित्वापृच्छन् युवां कया शक्त्या वा केन
८ नाम्ना कर्म्माण्येतानि कुरुथः? तदा पितरः पवित्रेणात्मना
परिपूर्णः सन् प्रत्यवादीत्, हे लोकानाम् अधिपतिगण हे
९ इस्रायेलीयप्राचीनाः, एतस्य दुर्ब्बलमानुषस्य हितं यत् कर्म्मा-
क्रियत, अर्थात् स येन प्रकारेण स्वस्थोभवत् तच्चेद् अद्यावां
१० पृच्छथ, तर्हि सर्व्व इस्रायेलीयलोका यूयं जानीत नासरतीयो
यो यीशुख्रीष्टः क्रुशे युष्माभिरविध्यत यश्चेश्वरेण श्मशानाद्
उत्थापितः, तस्य नाम्ना जनोयं स्वस्थः सन् युष्माकं सम्मुखे
११ प्रोत्तिष्ठति। निचेतृभि र्युष्माभिरयं यः प्रस्तरोऽवज्ञातोऽभवत्
१२ स प्रधानकोणस्य प्रस्तरोऽभवत्। तद्भिन्नादपरात् कस्मादपि
परित्राणं भवितुं न शक्नोति, येन त्राणं प्राप्येत भूमण्डलस्थ-
लोकानां मध्ये तादृशं किमपि नाम नास्ति।

१३ तदा पितरयोहनोरेतादृशीम् अक्षोभतां दृष्ट्वा ताववि-
द्वांसौ नीचलोकाविति बुद्ध्वा आश्चर्य्यम् अमन्यन्त तौ च
१४ यीशोः सङ्गिनौ जाताविति ज्ञातुम् अशक्नुवन्। किन्तु ताभ्यां
सार्द्धं तं स्वस्थमानुषं तिष्ठन्तं दृष्ट्वा ते कामप्यपराम् आपत्तिं

कर्त्तुं नाशक्नुवन्। तदा ते सभातः स्थानान्तरं गन्तुं तान् १५
आज्ञाप्य स्वयं परस्परम् इति मन्त्रणामकुर्व्वन् तौ मानवौ प्रति १६
किं कर्त्तव्यं? तावेकं प्रसिद्धम् आश्चर्य्यं कर्म्म कृतवन्तौ तद्
यिरूशालम्निवासिनां सर्व्वेषां लोकानां समीपे प्राकाशत तच्च
वयमपह्नोतुं न शक्नुमः। किन्तु लोकानां मध्यम् एतद् यथा न १७
व्याप्नोति तदर्थं तौ भयं प्रदर्श्य तेन नाम्ना कमपि मनुष्यं
नोपदिशतम् इति दृढं निषेधामः। ततस्ते प्रेरितावाहूय १८
एतदाज्ञापयन् इतः परं यीशो र्नाम्ना कदापि कामपि कथां
मा कथयतं किमपि नोपदिशतञ्च। ततः पितरयोहनौ प्रत्य- १९
वदताम् ईश्वरस्याज्ञाग्रहणं वा युष्माकम् आज्ञाग्रहणम् एतयो
र्मध्ये ईश्वरस्य गोचरे किं विहितं? यूयं तस्य विवेचनां कुरुत।
वयं यद् अपश्याम यदशृणुम च तन्न प्रचारयिष्याम एतत् २०
कदापि भवितुं न शक्नोति। यदघटत तद् दृष्टा सर्व्वे लोका २१
ईश्वरस्य गुणान् अन्ववदन् तस्मात् लोकभयात् तौ दण्डयितुं
कमप्युपायं न प्राप्य ते पुनरपि तर्जयित्वा तावत्यजन्। यस्य २२
मानुषस्यैतत् स्वास्थ्यकरणम् आश्चर्य्यं कर्म्माक्रियत तस्य वयश्च-
त्वारिंशद्वत्सरा व्यतीताः।

ततः परं तौ विसृष्टौ सन्तौ स्वसङ्गिनां सन्निधिं गत्वा प्रधा- २३
नयाजकैः प्राचीनलोकैश्च प्रोक्ताः सर्व्वाः कथा ज्ञापितवन्तौ।
तच्छ्रुत्वा सर्व्व एकचित्तीभूय ईश्वरमुद्दिश्य प्रोच्चैरेतत् प्रार्थयन्त, २४
हे प्रभो गगणपृथिवीपयोधीनां तेषु च यद्यद् आस्ते तेषां
स्रष्टेश्वरस्त्वं। त्वं निजसेवकेन दायूदा वाक्यमिदम् उवचिथ, २५

मनुष्या अन्यदेशीयाः कुर्व्वन्ति कलहं कुतः।
लोकाः सर्व्वे किमर्थं वा चिन्तां कुर्व्वन्ति निष्फलां।

२६　　परमेशस्य तेनैवाभिषिक्तस्य जनस्य च।
　　विरुद्धमभितिष्ठन्ति पृथिव्याः पतयः कुतः॥

२७ फलतस्तव हस्तेन मन्त्रणया च पूर्व्वं यद्यत् स्थिरीकृतं तद् यथा सिद्धं भवति तदर्थं त्वं यम् अभिषिक्तवान् स तव पवित्रो
२८ यीशुस्तस्य प्रातिकूल्येन हेरोद् पन्तीयपीलातो ऽन्यदेशीयलोका
२९ इस्रायेल्लोकाश्च सर्व्वे एते सभायाम् अतिष्ठन्। हे परमेश्वर
३० अधुना तेषां तर्जनं गर्जनञ्च शृणु; तथा स्वास्थ्यकरणकर्म्मणा तव बाहुबलप्रकाशपूर्व्वकं तव सेवकान् निर्भयेन तव वाक्यं प्रचारयितुं तव पवित्रपुत्रस्य यीशो र्नाम्ना आश्चर्य्याण्यसम्भवानि
३१ च कर्म्माणि कर्त्तुञ्चाज्ञापय। इत्थं प्रार्थनया यत्र स्थाने ते सभायाम् आसन् तत् स्थानं प्राकम्पत; ततः सर्व्वे पवित्रेणात्मना परिपूर्णाः सन्त ईश्वरस्य कथाम् अक्षोभेण प्राचारयन्।

३२　अपरञ्च प्रत्ययकारिलोकसमूहा एकमनस एकचित्ती-भूय स्थिताः। तेषां केपि निजसम्पत्तिं स्वीयां नाजानन् किन्तु
३३ तेषां सर्व्वाः सम्पत्तयः साधारणेन स्थिताः। अन्यच्च प्रेरिता महाशक्तिप्रकाशपूर्व्वकं प्रभो र्यीशोरुत्थाने साक्ष्यम् अददुः,
३४ तेषु सर्व्वेषु महानुग्रहोऽभवच्च। तेषां मध्ये कस्यापि द्रव्यन्यू-नता नाभवद् यतस्तेषां गृहभूम्याद्या याः सम्पत्तय आसन् ता
३५ विक्रीय तन्मूल्यमानीय प्रेरितानां चरणेषु तैः स्थापितं; ततः
३६ प्रत्येकशः प्रयोजनानुसारेण दत्तमभवत्। विशेषतः कुप्रोप-द्वीपीयो योसिनामको लेविवंशजात एको जनो भूम्यधिकारी, यं प्रेरिता बर्णब्बा अर्थात् सान्त्वनादायक इत्युक्त्वा समाह्व-
३७ यन्, स जनो निजभूमिं विक्रीय तन्मूल्यमानीय प्रेरितानां चरणेषु स्थापितवान्।

# ५ पञ्चमोऽध्यायः।

१ धनविभागे कापट्यकरणाद् अनानियसफीरयोर्मरणं १२ प्रेरितानां बह्वाश्चर्य्यकर्म्मकरणं १७ तेषां कारायां स्थापनं दिव्यदूतेस्तेषां मोचनं महायाजकस्य समीपे पितरस्योत्तरं ३३ तेनोत्तरेण सभास्थानां कोपित्वं गमिलीयेलमन्त्रणया प्रेरितानां प्रहारेण विसर्जनञ्च।

तदा अनानियनामक एको जनो यस्य भार्य्याया नाम १ सफीरा स स्वाधिकारं विक्रीय स्वभार्य्यां ज्ञापयित्वा तन्मूल्यस्यै- २ कांशं सङ्गोप्य स्थापयित्वा तदन्यांशमात्रमानीय प्रेरितानां चरणेषु समर्पितवान्। तस्मात् पितरोऽकथयत् हे अनानिय ३ भूमे र्मूल्यं किञ्चित् सङ्गोप्य स्थापयितुं पवित्रस्यात्मनः सन्निधौ मृषावाक्यं कथयितुञ्च शैतान् कुतस्तवान्तःकरणे प्रवृत्तिमजनयत्? सा भूमि र्यदा तव हस्तगता तदा किं तव स्वीया ४ नासीत्? विक्रीतायां सत्यां तन्मूल्ये किं तव स्वाधिकारो नासीत्? तर्हि स्वान्तःकरणे कुत एतादृशी कुकल्पना त्वया कृता? त्वं केवलमनुष्यस्य निकटे मृषावाक्यं नावादीः किन्त्वीश्वरस्य निकटेऽपि। एतां कथां श्रुत्वैव सोऽनानियो भूमौ पतन् ५ प्राणान् अत्यजत्, तद्वृत्तान्तं यावन्तो लोका अशृण्वन् तेषां सर्व्वेषां महाभयम् अजायत। तदा युवलोकास्तं वस्त्रेणाच्छाद्य ६ बहि र्नीत्वा श्मशानेऽस्थापयन्। ततः प्रहरैकानन्तरं किं वृत्तं ७ तन्नावगत्य तस्य भार्य्यापि तत्र समुपस्थिता। ततः पितरस्ताम् ८ अपृच्छत्, युवाभ्याम् एतावन्मुद्राभ्यो भूमि र्विक्रीता न वा? एतत्त्वं वद; तदा सा प्रत्यवादीत् सत्यम् एतावद्भ्यो मुद्राभ्य एव। ततः पितरोऽकथयत् युवां कथं परमेश्वरस्यात्मानं ९ परीक्षितुम् एकमन्त्रणावभवतां? पश्य ये तव पतिं श्मशाने स्थापितवन्तस्ते द्वारस्य समीपे समुपतिष्ठन्ति त्वामपि बहि र्ने-

१० ष्यन्ति। ततः सापि तस्य चरणसन्निधौ पतित्वा प्राणान् अत्याक्षीत्। पश्चात् ते युवानोऽभ्यन्तरम् आगत्य तामपि मृतां दृष्ट्वा वहि र्नीत्वा तस्याः पत्युः पार्श्वे श्मशाने स्थापितवन्तः।
११ तस्मात् मण्डल्याः सर्व्वे लोका अन्यलोकाश्च तां वार्त्तां श्रुत्वा साध्वसं गताः।

१२  ततः परं प्रेरितानां हस्तै र्लोकानां मध्ये बह्वाश्चर्य्याण्यद्भुतानि कर्म्माण्यक्रियन्त; तदा शिष्याः सर्व्वे एकचित्तीभूय
१३ सुलेमानोऽलिन्दे सम्भूयासन्। तेषां सङ्घान्तर्गो भवितुं कोपि
१४ प्रगल्भतां नागमत् किन्तु लोकास्तान् समाद्रियन्त। स्त्रियः
१५ पुरुषाश्च बहवो लोका विश्वस्य प्रभुं शरणमापन्नाः। पितरस्य गमनागमनाभ्यां केनापि प्रकारेण तस्य छाया कस्मिंश्चिज्जने लगिष्यतीत्याशया लोका रोगिणः शिविकया खट्टया
१६ चानीय पथि पथि स्थापितवन्तः। चतुर्दिक्स्थनगरेभ्यो बहवो लोकाः सम्भूय रोगिणोऽपवित्रभूतग्रस्तांश्च यिरूशालमम् आनयन् ततः सर्व्वे स्वस्था अक्रियन्त।

१७  अनन्तरं महायाजकः सिदूकिनां मतग्राहिणस्तेषां सह-
१८ चराश्च महाक्रोधान्विताः सन्तः प्रेरितान् धृत्वा नीचलोकानां
१९ कारायां बद्ध्वा स्थापितवन्तः। किन्तु रात्रौ परमेश्वरस्य दूतः
२० काराया द्वारं मोचयित्वा तान् वहिरानीयाकथयत्, यूयं गत्वा मन्दिरे दण्डायमानाः सन्तो लोकान् प्रतीमां जीव-
२१ नदायिकां सर्व्वां कथां प्रचारयत। इति श्रुत्वा ते प्रत्यूषे मन्दिर उपस्थाय उपदिष्टवन्तः। तदा सहचरगणेन सहितो महायाजक आगत्य मन्त्रिगणम् इस्रायेल्वंशस्य सर्व्वान् राजसभासदः सभास्थान् कृत्वा कारायास्तान् आनयितुं पदाति-

गणं प्रेरितवान्। ततस्ते गत्वा कारायां तान् अप्राप्य प्रत्या- २२
गत्य इति वार्त्ताम् अवादिषुः, वयं तत्र गत्वा निर्व्विघ्नं २३
कारायाा द्वारं रुद्धं रक्षकांश्च द्वारस्य वहिर्दण्डायमानान्
अदर्शाम एव किन्तु द्वारं मोचयित्वा तन्मध्ये कमपि द्रष्टुं न
प्राप्ताः। एतां कथां श्रुत्वा महायाजको मन्दिरस्य सेनापतिः २४
प्रधानयाजकाश्च, इतः परं किमपरं भविष्यतीति चिन्तयित्वा
सन्दिग्धचित्ता अभवन्। एतस्मिन्नेव समये कश्चित् जन आगत्य २५
वार्त्तामेताम् अवदत् पश्यत यूयं यान् मानवान् कारायाम्
अस्थापयत ते मन्दिरे तिष्ठन्तो लोकान् उपदिशन्ति। तदा २६
मन्दिरस्य सेनापतिः पदातयश्च तत्र गत्वा चेल्लोकाः पाषाणान्
निक्षिप्यास्मान् मारयन्तीति भिया विनत्याचारं तान् आन-
यन्। ते महासभाया मध्ये तान् अस्थापयन् ततः परं महा- २७
याजकस्तान् अपृच्छत्, अनेन नाम्ना समुपदेष्टुं वयं किं दृढं २८
न न्यषेधाम? तथापि पश्यत यूयं स्वेषां तेनोपदेशेन यिरू-
शालमं परिपूर्णं कृत्वा तस्य जनस्य रक्तपातजनितापराधम्
अस्मान् प्रत्यानेतुं चेष्टध्वे। ततः पितरोन्यप्रेरिताश्च प्रत्यवदन् २९
मानुषस्याज्ञाग्रहणाद् ईश्वरस्याज्ञाग्रहणम् अस्माकमुचितम्।
यं यीशुं यूयं क्रुशे वेधित्वाहत तम् अस्माकं पैतृक ईश्वर ३०
उत्थाप्य इस्रायेल्वंशानां मनःपरिवर्त्तनं पापक्षमाञ्च कर्त्तुं ३१
राजानं परित्रातारञ्च कृत्वा स्वदक्षिणपार्श्वे तस्यान्नतिम्
अकरोत्। एतस्मिन् वयमपि साक्षिण आस्महे, तत् केवलं न ३२
हि, ईश्वर आज्ञाग्राहिभ्यो यं पवित्रम् आत्मानं दत्तवान्
सोपि साक्ष्यस्ति।

एतद्वाक्ये श्रुते तेषां हृदयानि विद्धान्यभवन् ततस्ते तान् ३३

३४ हन्तुं मन्त्रितवन्तः । एतस्मिन्नेव समये तत्सभास्थानां सर्व्व-
लोकानां मध्ये सुख्यातो गमिलीयेल्नामक एको जनो
व्यवस्थापकः फिरूशिलोक उत्थाय प्रेरितान् क्षणार्थं स्थाना-
३५ न्तरं गन्तुम् आदिश्य कथितवान्, हे इस्रायेल्वंशीयाः सर्व्वे
यूयम् एतान् मानुषान् प्रति यत् कर्त्तुम् उद्यतास्तस्मिन्
३६ सावधाना भवत। इतः पूर्व्वं थूदानामैको जन उपस्थाय स्वं
कमपि महापुरुषम् अवदत्, ततः प्रायेण चतुःशतलोकास्तस्य
मतग्राहिणोभवन् पश्चात् स हतोभवत् तस्याज्ञाग्राहिणो
यावन्तो लोकास्ते सर्व्वे विकीर्णाः सन्तो ऽकृतकार्य्या अभवन्।
३७ तस्माज्जनात् परं नामलेखनसमये गालीलीययिहूदानामैको
जन उपस्थाय बहूल्लोकान् स्वमतं ग्राहीतवान् ततः सोपि
व्यनश्यत् तस्याज्ञाग्राहिणो यावन्तो लोका आसन् ते सर्व्वे
३८ विकीर्णा अभवन् । अधुना वदामि, यूयम् एतान् मनु-
ष्यान् प्रति किमपि न कृत्वा क्षान्ता भवत, यत एष सङ्कल्प
३९ एतत् कर्म्म च यदि मनुष्यादभवत् तर्हि विफलं भविष्यति।
यदीश्वरादभवत् तर्हि यूयं तस्यान्यथा कर्त्तुं न शक्ष्यथ,
४० वरम् ईश्वररोधका भविष्यथ। तदा तस्य मन्त्रणां स्वीकृत्य
ते प्रेरितान् आहूय प्रहृत्य यीशो र्नाम्ना कामपि कथां
४१ कथयितुं निषिध्य व्यसर्जन् । किन्तु तस्य नामार्थं वयं
लज्जाभोगस्य योग्यत्वेन गणिता इत्यत्र ते सानन्दाः सन्तः
४२ सभास्थानां साक्षाद् अगच्छन्। ततः परं प्रतिदिनं मन्दिरे
गृहे गृहे चाविश्रामम् उपदिश्य यीशुख्रीष्टस्य सुसंवादं
प्रचारितवन्तः ।

## ६ षष्ठोऽध्यायः।

१ दरिद्रगणार्थं सप्तसहकारिणां नियोजनं ५ तेषां सप्तानां मध्ये स्तिफानस्य कथा ८ अविश्वासिभिः सह विवादे स्तिफानस्यापवादित्वं।

तस्मिन् समये शिष्याणां बाहुल्यात् प्रात्यहिकदानस्य १
विश्राणनै भिन्नदेशीयानां विधवास्त्रीगण उपेक्षिते सति इब्री-
यलोकैः सहान्यदेशीयानां विवाद उपातिष्ठत्। तदा द्वाद- २
शप्रेरिताः सर्व्वान् शिष्यान् संगृह्याकथयन् ईश्वरस्य कथा-
प्रचारं परित्यज्य भोजनगवेषणम् अस्माकम् उचितं न हि।
अतो हे भ्रातृगण वयम् एतत्कर्म्मणो भारं येभ्यो दातुं शक्नुम ३
एतादृशान् सुख्यात्यापन्नान् पवित्रेणात्मना ज्ञानेन च पूर्णान्
सप्तजनान् यूयं स्वेषां मध्ये मनोनीतान् कुरुत, किन्तु वयं ४
प्रार्थनायां कथाप्रचारकर्म्मणि च नित्यप्रवृत्ताः स्थास्यामः।

एतस्यां कथायां सर्व्वे लोकाः सन्तुष्टाः सन्तः स्वेषां मध्यात् ५
स्तिफानः फिलिपः प्रखरो निकानोर् तीमन् पर्म्मिणा यिहू-
दिमतग्राही-आन्तियखियानगरीयो निकला एतान् परम-
भक्तान् पवित्रेणात्मना परिपूर्णान् सप्त जनान् प्रेरितानां सम- ६
क्षम् आनयन्, ततस्ते प्रार्थनां कृत्वा तेषां शिरःसु हस्तान् आर्प-
यन्। अपरञ्च ईश्वरस्य कथा देशं व्याप्नोत् विशेषतो यिरू- ७
शालमि नगरे शिष्याणां संख्या प्रभूतरूपेणावर्द्धत याजकानां
मध्येपि बहवः ख्रीष्टमतग्राहिणोऽभवन्।

स्तिफानो विश्वासेन पराक्रमेण च परिपूर्णः सन् लोकानां ८
मध्ये बहुविधम् अद्भुतम् आश्चर्य्यं कर्म्माकरोत्। तेन लिब- ९
र्त्तिनीयनाम्ना विख्यातसङ्घस्य कतिपयजनाः कुरीणीय-
सिकन्दरीय-किलिकीयाशीयादेशीयाः कियन्तो जनास्सोत्थाय
स्तिफानेन सार्द्धं व्यवदन्त। किन्तु स्तिफानो ज्ञानेन पवित्रे- १०

णात्मना च ईदृशीं कथां कथितवान् यस्मात्ते आपत्तिं कर्त्तुं
११ नाशक्नुवन्। पश्चात् ते लोभिताः कतिपयजनाः कथामेनाम्
अकथयन्, वयं तस्य मुखतो मूसा ईश्वरस्य च निन्दावाक्यम्
१२ अश्रौष्म। ते लोकानां लोकप्राचीनानाम् अध्यापकानाञ्च
प्रवृत्तिं जनयित्वा स्तिफानस्य सन्निधिम् आगत्य तं धृत्वा महा-
१३ सभामध्यम् आनयन्। तदनन्तरं कतिपयजनेषु मिथ्यासाक्षिषु
समानीतेषु तेऽकथयन् एष जन एतत्पुण्यस्थानव्यवस्थयो
१४ र्निन्दातः कदापि न निवर्त्तते। फलतो नासरतीययीशुः
स्थानमेतद् उच्छिन्नं करिष्यति मूसासमर्पितम् अस्माकं व्यव-
हरणम् अन्यरूपं करिष्यति तस्यैतादृशीं कथां वयम् अशृणुम।
१५ तदा महासभास्थाः सर्व्वे तं प्रति स्थिरां दृष्टिं कृत्वा स्वर्गदूत-
मुखसदृशं तस्य मुखम् अपश्यन्।

---

## ७ सप्तमोऽध्यायः।

१ महायाजकं प्रति स्तिफानस्योत्तरं ९ पूर्व्वपुरुषाणां वृत्तान्तकथनं १७ मूसाख्यान-
कथनं ३७ सुलेमानः समयं यावत् लोकानां कथा ५१ यिहूदीयान् प्रति स्तिफा-
नतर्जनं ५४ प्रस्तराघातेन स्तिफानस्य बधश्च।

१ ततः परं महायाजकः पृष्टवान्, एषा कथा किं सत्या?
२ ततः स प्रत्यवदत्, हे पितरो हे भ्रातरः सर्व्वे लोका मनांसि
निधद्ध्वं। अस्माकं पूर्व्वपुरुष इब्राहीम् हारण्नगरे वासक-
रणात् पूर्व्वं यदा अराम्-नहरयिमदेशे आसीत् तदा
३ तेजोमय ईश्वरो दर्शनं दत्त्वा तमवदत् त्वं स्वदेशज्ञातिमित्राणि
४ परित्यज्य यं देशमहं दर्शयिष्यामि तं देशं व्रज। अतः स
कस्दीयदेशं विहाय हारण्नगरे न्यवसत्, तदनन्तरं तस्य
पितरि मृते यत्र देशे यूयं निवसथ स एनं देशमागच्छत्।

किन्त्वीश्वरस्तस्मै कमप्यधिकारम् अर्थाद् एकपदपरिमितां ५ भूमिमपि नाददात्; तदा तस्य कोपि सन्तानो नासीत् तथापि सन्तानैः सार्द्धम् एतस्य देशस्याधिकारी त्वं भविष्यसीति तम्प्रत्यङ्गीकृतवान्। ईश्वर इत्थम् अपरमपि कथितवान् तव ६ सन्तानाः परदेशे निवत्स्यन्ति ततस्तद्देशीयलोकाश्चतुःशतवत्सरान् यावत् तान् दासत्वे स्थापयित्वा तान् प्रति कुव्यवहारं करिष्यन्ति। अपरम् ईश्वर एनां कथामपि कथितवान्, ७ ये लोकास्तान् दासत्वे स्थापयिष्यन्ति तान्लोकान् अहं दण्डयिष्यामि, ततः परं ते वहिर्गताः सन्तो माम् अत्र स्थाने सेविष्यन्ते। पश्चात् स तस्मै त्वक्छेदस्य नियमं दत्तवान्, अत ८ इस्हाकनाम्नि इब्राहीम एकपुत्रे जाते, अष्टमदिने तस्य त्वक्छेदम् अकरोत्। तस्य इस्हाकः पुत्रो याकूब्, ततस्तस्य याकूबोऽस्माकं द्वादश पूर्व्वपुरुषा अजायन्त।

ते पूर्व्वपुरुषा ईर्ष्यया परिपूर्णा मिसरदेशं प्रेषयितुं यूषफं ९ व्यक्रीणन्। किन्त्वीश्वरस्तस्य सहायो भूत्वा सर्व्वस्या दुर्गते रक्षित्वा १० तस्मै बुद्धिं दत्त्वा मिसरदेशस्य राज्ञः फिरौणः प्रियपात्रं कृतवान् ततो राजा मिसरदेशस्य स्वीयसर्व्वपरिवारस्य च शासनपदं तस्मै दत्तवान्। तस्मिन् समये मिसर-किनानदेशयो ११ र्दुर्भिक्षहेतोरतिक्लिष्टत्वात् नः पूर्व्वपुरुषा भक्ष्यद्रव्यं नालभन्त। किन्तु मिसरदेशे शस्यानि सन्ति, याकूब् इमां वार्त्तां श्रुत्वा १२ प्रथमम् अस्माकं पूर्व्वपुरुषान् मिसरं प्रेषितवान्। ततो द्विती- १३ यवारगमने यूषफ् स्वभ्रातृभिः परिचितोऽभवत्; यूषफो भ्रातरः फिरौण्राजेन परिचिता अभवन्। अनन्तरं यूषफ् १४ भ्रातृगणं प्रेष्य निजपितरं याकूबं निजान् पञ्चाधिकसप्ततिं-

१५ संख्यकान् ज्ञातिजनांश्च समाहूतवान्। तस्माद् याकूब् मिसर-
देशं गत्वा स्वयम् अस्माकं पूर्व्वपुरुषाश्च तस्मिन् स्थानेऽम्रि-
१६ यन्त। ततस्ते शिखिमं नीता यत् श्मशानम् इब्राहीम् मुद्रा
दत्त्वा शिखिमः पितु र्हमोरः पुत्रेभ्यः क्रीतवान् तत्श्मशाने
स्थापयाञ्चक्रिरे।

१७ ततः परम् ईश्वर इब्राहीमः सन्निधौ शपथं कृत्वा यां
प्रतिज्ञां कृतवान् तस्याः प्रतिज्ञायाः फलनसमये निकटे सति
१८ इस्रायेल्लोका मिसरदेशे वर्द्धमाना बहुसंख्या अभवन्। शेषे
१९ यूषफं यो न परिचिनोति तादृश एको नरपतिरुपस्थाया-
स्माकं ज्ञातिभिः सार्द्धं धूर्त्ततां विधाय पूर्व्वपुरुषान् प्रति
कुव्यवहरणपूर्व्वकं तेषां वंशनाशनाय तेषां नवजातान् शिशून्
२० बहि र्निरक्षेपयत्। एतस्मिन् समये मूसा जज्ञे, स तु परमसु-
न्दरोऽभवत् तथा पितृगृहे मासत्रयपर्य्यन्तं पालितोऽभवत्।
२१ किन्तु तस्मिन् बहिर्निक्षिप्ते सति फिरौणराजस्य कन्या तम्
२२ उत्तोल्य नीत्वा दत्तकपुत्रं कृत्वा पालितवती। तस्मात् स मूसा
मिसरदेशीयायाः सर्व्वविद्यायाः पारदृश्वा सन् वाक्ये क्रिया-
२३ याञ्च शक्तिमान् अभवत्। स सम्पूर्णचत्वारिंशद्वत्सरवयस्को
२४ भूत्वा इस्रायेलीयवंशनिजभ्रातॄन् साक्षात् कर्त्तुं मतिं चक्रे। तेषां
जनमेकं हिंसितं दृष्ट्वा तस्य सपक्षः सन् हिंसितजनम् उपकृत्य
२५ मिसरीयजनं जघान। तस्य हस्तेनेश्वरस्तान् उद्धरिष्यति तस्य
भ्रातृगण इति ज्ञास्यति स इत्यनुमानं चकार, किन्तु ते न
२६ बुबुधिरे। तत्परे ऽहनि तेषाम् उभयो र्जनयो र्वाक्कलह
उपस्थिते सति मूसाः समीपं गत्वा तयो र्मेलनं कर्त्तुं मतिं
कृत्वा कथयामास, हे महाशयौ युवां भ्रातरौ परस्परम्

अन्यायं कुतः कुरुथः? ततः समीपवासिनं प्रति यो जनोऽन्यायं २७ चकार स तं दूरीकृत्य कथयामास, अस्माकमुपरि शास्तृत्व-विचारयितृत्वपदयोः कस्त्वां नियुक्तवान्? ह्यो यथा मिसरीयं २८ हतवान् तथा किं मामपि हनिष्यसि? तदा मूसा एतादृशीं २९ कथां श्रुत्वा पलायनं चक्रे, ततो मिदियनदेशं गत्वा प्रवासी सन् तस्थौ, ततस्तत्र तस्य द्वौ पुत्रौ जज्ञाते। अनन्तरं चत्वा- ३० रिंशद्वत्सरेषु गतेषु सीनयपर्व्वतस्य प्रान्तरे प्रज्वलितस्तम्बस्य वह्निशिखायां परमेश्वरदूतस्तस्मै दर्शनं ददौ। मूसास्तस्मिन् ३१ दर्शने विस्मयं मत्वा विशेषं ज्ञातुं निकटं गच्छति, एतस्मिन् ३२ समये, अहं तव पूर्व्वपुरुषाणाम् ईश्वरोऽर्थाद् इब्राहीम ईश्वर इस्हाक ईश्वरो याकूब ईश्वरश्च, मूसामुद्दिश्य परमेश्वरस्यैता-दृशी विहायसीया वाणी बभूव; ततः स कम्पान्वितः सन् पुन र्निरीक्षितुं प्रगल्भो न बभूव। परमेश्वरस्तं जगाद, तव ३३ पादयोः पादुके मोचय यत्र तिष्ठसि सा पवित्रभूमिः। अहं ३४ मिसरदेशस्थानां निजलोकानां दुर्दशां नितान्तम् अपश्यं, तेषां कातर्य्योक्तिञ्च श्रुतवान् तस्मात् तान् उद्धर्त्तुम् अवरुह्या-गमम्; इदानीम् आगच्छ मिसरदेशं त्वां प्रेषयामि। कस्त्वां ३५ शास्तृत्वविचारयितृत्वपदयो र्नियुक्तवान्, इति वाक्यमुक्त्वा तै र्यो मूसा अवज्ञातस्तमेव ईश्वरः स्तम्बमध्ये दर्शनदात्रा तेन दूतेन शास्तारं मुक्तिदातारञ्च कृत्वा प्रेषयामास। स च ३६ मिसरदेशे सूफ्नाम्नि समुद्रे च पश्चात् चत्वारिंशद्वत्सरान् यावत् महाप्रान्तरे नानाप्रकाराण्यद्भुतानि कर्म्माणि लक्षणानि च दर्शयित्वा तान् वहिः कृत्वा समानिनाय।

प्रभुः परमेश्वरो युष्माकं भ्रातृगणस्य मध्ये मादृशम् एकं ३७

भविष्यद्वक्तारम् उत्पादयिष्यति तस्य कथायां यूयं मनो निधास्यथ, यो जन इस्रायेलः सन्तानेभ्य एनां कथां कथया-
३८ मास स एष मूसाः। महाप्रान्तरस्थमण्डलीमध्येऽपि स एव सीनयपर्व्वतोपरि तेन सार्द्धं संलापिनो दूतस्य चास्मत्पितृगणस्य मध्यस्थः सन् अस्मभ्यं दातव्यानि जीवनदायकानि वाक्यानि
३९ लेभे। अस्माकं पूर्व्वपुरुषास्तम् अमान्यं कृत्वा स्वेभ्यो दूरीकृत्य
४० मिसरदेशं परावृत्य गन्तुं मनोभिरभिलष्य हारोणं जगदुः, अस्माकम् अग्रेऽग्रे गन्तुम् अस्मदर्थं देवगणं निर्म्माहि यतो यो मूसा अस्मान् मिसरदेशाद् वहिः कृत्वानीतवान् तस्य किं जातं
४१ तदस्माभि र्न ज्ञायते। तस्मिन् समये ते गोवत्साकृतिं प्रतिमां निर्म्माय तामुद्दिश्य नैवेद्यमुत्सृज्य स्वहस्तकृतवस्तुना आनन्दित-
४२ वन्तः। तस्माद् ईश्वरस्तेषां प्रति विमुखः सन् आकाशस्थं ज्योतिर्गणं पूजयितुं तेभ्योऽनुमतिं ददौ, यादृशं भविष्यद्वादिनां ग्रन्थेषु लिखितमास्ते, यथा,

इस्रायेलीयवंशा रे चत्वारिंशत्समान् पुरा।
महति प्रान्तरे संस्था यूयन्तु यानि यानि च।
बलिहोमादिकर्म्माणि कृतवन्तस्तु तानि किं।
मां समुद्दिश्य युष्माभिः प्रकृतानीति नैव च।
४३ किन्तु वो मोलकाख्यस्य देवस्य दूष्यमेव च।
युष्माकं रिम्फनाख्याया देवतायाश्च तारका।
एतयोरुभयो र्मूर्त्ती युष्माभिः परिपूजिते।
अतो युष्मांस्तु बाबेलः पारं नेष्यामि निश्चितं।

४४ अपरञ्च यन्निदर्शनम् अपश्यस्तदनुसारेण दूष्यं निर्म्माहि यस्मिन् ईश्वरो मूसाम् एतद्वाक्यं बभाषे तत् तस्य निरूपितं

साच्यस्वरूपं दूष्यम् अस्माकं पूर्व्वपुरुषैः सह प्रान्तरे तस्थौ। पश्चाद् यिहोशूयेन सहितैस्तेषां वंशजातैरस्मत्पूर्व्वपुरुषैः स्तेषां ४५ सम्मुखाद् ईश्वरेण दूरीकृतानाम् अन्यदेशीयानां देशाधिकृतिकाले समानीतं तद् दूष्यं दायूदोधिकारं यावत् तत्र स्थान आसीत्। स दायूद् परमेश्वरस्यानुग्रहं प्राप्य याकूब ईश्वरा- ४६ र्थम् एकं दूष्यं निर्म्मातुं ववाञ्छ; किन्तु सुलेमान् तदर्थं ४७ मन्दिरम् एकं निर्म्मितवान्। तथापि यः सर्व्वोपरिस्थः स ४८ कस्मिंश्चिद् हस्तकृते मन्दिरे निवसतीति नहि, भविष्यद्वादी कथामेतां कथयति, यथा,

परेशो वदति स्वर्गो राजसिंहासनं मम। ४९
मदीयं पादपीठञ्च पृथिवी भवति ध्रुवं।
तर्हि यूयं कृते मे किं प्रनिर्म्मास्यथ मन्दिरं।
विश्रामाय मदीयं वा स्थानं किं विद्यते त्विह।
सर्व्वाण्येतानि वस्तूनि किं मे हस्तकृतानि न॥ ५०

हे अनाज्ञाग्राहका अन्तःकरणे श्रवणे चापवित्रलोकाः ५१ यूयम् अनवरतं पवित्रस्यात्मनः प्रातिकूल्यम् आचरथ, युष्माकं पूर्व्वपुरुषा यादृशा यूयमपि तादृशाः। युष्माकं पूर्व्वपुरुषाः ५२ कं भविष्यद्वादिनं नाताडयन्? ये तस्य धार्म्मिकस्य जनस्यागमनकथां कथितवन्तस्तान् अघ्नन् यूयम् अधुना विश्वासघातिनो भूत्वा तं धार्म्मिकं जनम् अहत। यूयं स्वर्गीयदूतगणेन ५३ व्यवस्थां प्राप्यापि तां नाचरथ।

इमां कथां श्रुत्वा ते मनःसु बिद्धाः सन्तस्तं प्रति दन्तघ- ५४ र्षणम् अकुर्व्वन्। किन्तु स्तिफानः पवित्रेणात्मना पूर्णो भूत्वा ५५ गगणं प्रति स्थिरदृष्टिं कृत्वा ईश्वरस्य दक्षिणे दण्डायमानं

५६ यीशुञ्च विलोक्य कथितवान्; पश्य, मेघद्वारं मुक्तम् ईश्वरस्य
५७ दक्षिणे स्थितं मानवसुतञ्च पश्यामि । तदा ते प्रोच्चैः शब्दं
कृत्वा कर्णेष्वङ्गुली र्निधाय एकचित्तीभूय तम् आक्रमन् ।
५८ पश्चात् तं नगराद् बहिः कृत्वा प्रस्तरैराघ्नन् साक्षिणो लोकाः
शौलनाम्नो यूनश्चरणसन्निधौ निजवस्त्राणि स्थापितवन्तः ।
५९ अनन्तरं हे प्रभो यीशो मदीयमात्मानं गृहाण स्तिफानस्येति
६० प्रार्थनवाक्यवदनसमये ते तं प्रस्तरैराघ्नन् । तस्मात् स जानुनी
पातयित्वा प्रोच्चैः शब्दं कृत्वा, हे प्रभो पापमेतद् एतेषु मा
स्थापय, इत्युक्त्वा महानिद्रां प्राप्नोत् । तस्य हत्याकरणं
शौलोपि सममन्यत ।

---

## ८ अष्टमोऽध्यायः ।

१ ताडनाभि र्मण्डलीयलोकेषु विकीर्णेषु फिलिपस्य शोमिरोण्नगरगमनं तत्रानेकाश्चर्य्यक्रियाकरणं ९ मायाविशिमोनो विश्वसनं १४ मुद्राभिः पवित्रमात्मानं क्रेतुं चेष्टायां शिमोनापराधः २६ फिलिपस्य कूशदेशीयक्लीवस्य वृत्तान्तश्च ।

१ तस्मिन् समये यिरूशालम्नगरस्थां मण्डलीं प्रति महाताडनायां जातायां प्रेरितलोकान् हित्वा सर्व्वेऽपरे यिहू-
२ दाशोमिरोणदेशयो र्नानास्थाने विकीर्णाः सन्तो गताः । अन्यच्च
भक्तलोकास्तं स्तिफानं श्मशाने स्थापयित्वा बहु व्यलपन् ।
३ किन्तु शौलो गृहे गृहे भ्रमित्वा स्त्रियः पुरुषांश्च धृत्वा कारायां
४ बद्ध्वा मण्डल्या महोत्पातं कृतवान् । अन्यच्च ये विकीर्णा अभ-
५ वन् ते सर्व्वत्र भ्रमित्वा सुसंवादं प्राचारयन् । तदा फिलिपः
६ शोमिरोण्नगरं गत्वा ख्रीष्टाख्यानं प्राचारयत्; ततोऽशुचि-
भूतग्रस्तलोकेभ्यो भूताश्चीत्कृत्यागच्छन् तथा बहवः पक्षा-
७ घातिनः खञ्जा लोकाश्च स्वस्था अभवन् । तस्मात् लोका

ईदृशं तस्याश्चर्य्यं कर्म्म विलोक्य निशम्य च सर्व्वे एकचित्तीभूय तेनोक्ताख्याने मनांसि न्यदधुः। तस्मिन्नगरे महानन्दश्चाभवत्। ८

ततः पूर्व्वं तस्मिन्नगरे शिमोन्नामा कश्चिज्जनो बह्वी ९ मायाक्रियाः कृत्वा स्वं कञ्चन महापुरुषं प्रोच्य शोमिरोणीयानां मोहं जनयामास। तस्मात् स मानुष ईश्वरस्य महाशक्तिस्वरूप १० इत्युक्त्वा बालवृद्धवनिताः सर्व्वे लोकास्तस्मिन् मनांसि न्यदधुः। स बहुकालान् मायाविक्रियया सर्व्वान् अतीव मोहयाञ्चकार, ११ तस्मात् ते तं मेनिरे। किन्त्वीश्वरस्य राज्यस्य यीशुख्रीष्टस्य १२ नाम्नश्चाख्यानप्रचारिणः फिलिपस्य कथायां विश्वस्य तेषां स्त्रीपुरुषोभयलोका मज्जिता अभवन्। शेषे स शिमोनपि स्वयं १३ प्रत्यैत् ततो मज्जितः सन् फिलिपेन कृताम् आश्चर्य्यक्रियां लक्षणञ्च विलोक्यासम्भवं मन्यमानस्तेन सह स्थितवान्।

इत्थं शोमिरोण्देशीयलोका ईश्वरस्य कथाम् अगृह्लन् १४ इति वार्त्तां यिरूशालम्नगरस्थप्रेरिताः प्राप्य पितरं योहनञ्च तेषां निकटे प्रेषितवन्तः। ततस्तौ तत् स्थानम् उपस्थाय लोका १५ यथा पवित्रम् आत्मानं प्राप्नुवन्ति तदर्थं प्रार्थयेतां। यतस्ते १६ पुरा केवलप्रभुयीशो र्नाम्ना मज्जितमात्रा अभवन्, न तु तेषां मध्ये कमपि प्रति पवित्रस्यात्मन आविर्भावो जातः। किन्तु १७ प्रेरिताभ्यां तेषां गात्रेषु करेष्वर्पितेषु सत्सु ते पवित्रम् आत्मा-नम् प्राप्नुवन्। इत्थं लोकानां गात्रेषु प्रेरितयोः करार्पणेन १८ तान् पवित्रम् आत्मानं प्राप्तान् दृष्ट्वा स शिमोन् तयोः समीपे मुद्रा आनीय कथितवान्; अहं यस्य गात्रे हस्तम् अर्पयि- १९ ष्यामि तस्यापि यथेत्थं पवित्रात्मप्राप्ति र्भवति तादृशीं शक्तिं मह्यं दत्तं। किन्तु पितरस्तं प्रत्यवदत् तव मुद्रास्त्वया सह २०

विनश्यन्तु यत ईश्वरस्य दानं मुद्राभिः क्रीयते त्वमित्थं बुद्ध-
२१ वान्; ईश्वराय तवान्तःकरणं सरलं नहि, तस्माद् अत्र तवां-
२२ शोऽधिकारश्च कोपि नास्ति । अत एतत्पापहेतोः खेदान्वितः
सन् केनापि प्रकारेण तव मनस एतस्याः कुकल्पनायाः क्षमा
२३ भवति, एतदर्थम् ईश्वरे प्रार्थनां कुरु; यतस्त्वं तिक्तपित्ते
२४ पापस्य बन्धने च यदसि तन्मया बुद्धम् । तदा शिमोन् अक-
थयत् तर्हि युवाभ्यामुदिता कथा मयि यथा न फलति तदर्थं
२५ युवां मन्निमित्तं प्रभौ प्रार्थनां कुरुतं । अनेन प्रकारेण तौ
साक्ष्यं दत्त्वा प्रभोः कथां प्रचारयन्तौ शोमिरोणीयानाम्
अनेकग्रामेषु सुसंवादञ्च प्रचारयन्तौ यिरूशालम्नगरं परा-
वृत्य गतौ ।

२६ ततः परम् ईश्वरस्य दूतः फिलिपम् इत्यादिशत्, त्वमुत्थाय
दक्षिणस्यां दिशि यो मार्गो प्रान्तरस्य मध्येन यिरूशालमो
२७ ऽसानगरं याति तं मार्गं गच्छ । ततः स उत्थाय गतवान्;
तदा कन्दाकीनाम्नः कूश्लोकानां राज्ञ्याः सर्व्वसम्पत्तेरधीशः
कूशदेशीय एकः षण्डो भजनार्थं यिरूशालम्नगरम् आगत्य
२८ पुनरपि रथमारुह्य यिशयियनाम्नो भविष्यद्वादिनो ग्रन्थं पठन्
२९ प्रत्यागच्छति । एतस्मिन् समये आत्मा फिलिपम् अवदत्,
३० त्वम् एतस्य रथस्य समीपं गत्वा तेन सार्द्धं मिल । तस्मात् स
धावन् तस्य सन्निधावुपस्थाय तेन पठ्यमानं यिशयियभविष्य-
द्वादिनो वाक्यं श्रुत्वा पृष्टवान् यत् पठसि तत् किं बुध्यसे?
३१ ततः स कथितवान् केनचिन्न बोधितोहं कथं बुध्येय? ततः स
३२ फिलिपं रथमारोढुं स्वेन सार्द्धम् उपवेष्टुञ्च न्यवेदयत् । स
शास्त्रस्यैतद्वाक्यं पठितवान्, यथा,

समानीयत घाताय स यथा मेषशावकः।
लोमच्छेदकसाचाच्च मेषश्च नीरवो यथा।
आबध्य वदनं स्वीयं तथा स समतिष्ठत।
अन्यायेन विचारेण स उच्छिन्नोऽभवत् तदा। ३३
तत्कालीनमनुष्यान् को जनो वर्णयितुं चमः।
यतो जीवन्नृणां देशात् स उच्छिन्नोऽभवत् ध्रुवं।

अनन्तरं स फिलिपम् अवदत् निवेदयामि, भविष्यद्वादी या- ३४ मिमां कथां कथयामास सा किं स्वस्मिन् वा कस्मिंश्चिद् अन्यस्मिन्? ततः फिलिपस्तत्प्रकरणम् आरभ्य यीशोरुपाख्यानं ३५ तस्याग्रे प्रास्तौत्। इत्थं मार्गेण गच्छन्तौ जलाशयस्य समीप ३६ उपस्थितौ; तदा क्लीबोऽवादीत् पश्यात्र स्थाने जलमास्ते मम मज्जने का बाधा? ततः फिलिप उत्तरं व्याहरत् स्वान्तः- ३७ करणेन साकं यदि प्रत्येषि तर्हि बाधा नास्ति। ततः स कथितवान् यीशुख्रीष्ट ईश्वरस्य पुत्र इत्यहं प्रत्येमि। तदा रथं स्थगितं ३८ कर्त्तुम् आदिष्टे फिलिपक्लीबौ द्वौ जलम् अवारुहतां; तदा फिलिपस्तम् मज्जयामास। तत्पश्चात् जलमध्याद् उत्थितयोः ३९ सतोः परमेश्वरस्यात्मा फिलिपं हृत्वा नीतवान्, तस्मात् क्लीवः पुनस्तं न दृष्टवान् तथापि हृष्टचित्तः सन् स्वमार्गेण गतवान्। फिलिपश्चास्दोद्नगरम् उपस्थाय तस्मात् कैसरियानगर उप- ४० स्थितिकालपर्य्यन्तं सर्व्वस्मिन्नगरे सुसंवादं प्रचारयन् गतवान्।

## ९ नवमोऽध्यायः।

१ दम्मेषक्नगरे ख्रीष्टीयान् लोकान् ताडयितुं शौलगमनं मार्गमध्ये ख्रीष्टस्य दर्शनञ्च १० अननियस्य तस्मै चक्षुर्दानं तस्य मज्जनञ्च १९ शौलेन भजनभवने ख्रीष्टस्य सुसंवादप्रचारणं २६ तं प्रति यिहूदीयानां विपक्षता ३१ मण्डल्याः शान्तिः ३२ पितरस्लैनेयस्यारोग्यकरणं ३६ पितरेण दर्कायै जीवनदानञ्च।

१　तत्कालपर्य्यन्तं शौलः प्रभोः शिष्याणां प्रातिकूल्येन ताड-
२ नावधयोः कथां निःसारयन् महायाजकस्य सन्निधिं गत्वा
स्त्रियं पुरुषञ्च तन्मतग्राहिणं यं कञ्चित् पश्यति तान् धृत्वा बद्धा
यिरूशालमम् आनयतीत्याशयेन दम्मेषक्नगरीयं धर्म्मसमा-
३ जान् प्रति पत्रं याचितवान्। गच्छन् तु दम्मेषक्नगरनिकट
उपस्थितवान्; ततोऽकस्माद् आकाशात् तस्य चतुर्दिक्षु तेजसः
४ प्रकाशनात् स भूमावपतत्। पश्चात् हे शौल हे शौल कुतो
मां ताडयसि? स्वं प्रति प्रोक्तम् एतं शब्दं श्रुत्वा स पृष्टवान्,
५ हे प्रभो भवान् कः? तदा प्रभुरकथयत् यं यीशुं त्वं ताडयसि
६ स एवाहं; कण्टकस्य मुखे पदाघातकरणं तव कष्टम्। तदा
कम्पमानो विस्मयापन्नश्च सोवदत् हे प्रभो मया किं कर्त्तव्यं?
भवत इच्छा का? ततः प्रभुराज्ञापयद् उत्थाय नगरं गच्छ
७ तत्र त्वया यत् कर्त्तव्यं तद् वदिष्यते। तस्य सङ्गिनो लोका अपि
तं शब्दं श्रुतवन्तः किन्तु कमपि न दृष्ट्वा स्तब्धाः सन्तः स्थित-
८ वन्तः। अनन्तरं शौलो भूमित उत्थाय चक्षुषी उन्मील्य कमपि
न दृष्टवान्। तदा लोकास्तस्य हस्तौ धृत्वा दम्मेषक्नगरम्
९ आनयन्। ततः स दिनत्रयं यावद् अन्धो भूत्वा न भुक्तवान्
पीतवांश्च।

१०　तदनन्तरं प्रभुस्तद्दम्मेषक्नगरवासिन एकस्मै शिष्याय दर्शनं
दत्त्वा आहूतवान् हे अननिय। ततः स प्रत्यवादीत्, हे प्रभो
११ पश्य शृणोमि। तदा प्रभुस्तमाज्ञापयत् त्वमुत्थाय सरलना-
मानं मार्गं गत्वा यिहूदानिवेशने तार्षनगरीयं शौलनामानं
१२ जनं गवेषयन् पृच्छ; पश्य स प्रार्थयते, तथा अननियनामक
एको जनस्तस्य समीपम् आगत्य तस्य गात्रे हस्तार्पणं कृत्वा

दृष्टिं ददातीत्थं स्वप्ने दृष्टवान्। तस्माद् अननियः प्रत्यवदत् १३ हे प्रभो यिरूशालमि पवित्रलोकान् प्रति सोऽनेकहिंसां कृतवान्; अत्र स्थाने च ये लोकास्तव नाम्नि प्रार्थयन्ति तानपि १४ बद्धुं स प्रधानयाजकेभ्यः शक्तिं प्राप्तवान्, इमां कथाम् अहम् अनेकेषां मुखेभ्यः श्रुतवान्। किन्तु प्रभुरकथयत्, याहि भिन्न- १५ देशीयलोकानां भूपतीनाम् इस्रायेल्लोकानाञ्च निकटे मम नाम प्रचारयितुं स जनो मम मनोनीतपात्रमास्ते। मम १६ नामनिमित्तञ्च तेन कियान् महान् क्लेशो भोक्तव्य एतत् तं दर्शयिष्यामि। ततो ऽननियो गत्वा गृहं प्रविश्य तस्य गात्रे १७ हस्तार्पणं कृत्वा कथितवान्, हे भ्रातः शौल त्वं यथा दृष्टिं प्राप्नोषि पवित्रेणात्मना परिपूर्णो भवसि च, तदर्थं तवागमनकाले यः प्रभुयीशुस्तुभ्यं दर्शनम् अददात् स मां प्रेषितवान्। इत्युक्तमात्रे तस्य चक्षुर्भ्याम् मीनशल्कवद् वस्तुनि निर्गते १८ तत्क्षणात् स प्रसन्नचक्षु र्भूत्वा प्रोत्थाय मज्जितोऽभवत् भुक्त्वा पीत्वा सबलोभवच्च।

ततः परं शौलः शिष्यैः सह कतिपयदिवसान् तस्मिन् १९ दम्मेषकनगरे स्थित्वाऽविलम्बं सर्व्वभजनभवनानि गत्वा यीशु- २० रीश्वरस्य पुत्र इमां कथां प्राचारयत्। तस्मात् सर्व्वे श्रोता- २१ रश्चमत्कृत्य कथितवन्तो यो यिरूशालम्नगर एतन्नाम्ना प्रार्थयितृलोकान् विनाशितवान् एवम् एतादृशलोकान् बद्धा प्रधानयाजकनिकटं नयतीत्याशया एतत्स्थानमप्यागच्छत् सएव किमयं न भवति? किन्तु शौलः क्रमश उत्साहवान् भूत्वा २२ यीशुरीश्वरेणाभिषिक्तो जन एतस्मिन् प्रमाणं दत्त्वा दम्मेषक्निवासियिहूदीयलोकान् निरुत्तरान् अकरोत्। इत्थं बहुतिथे २३

२४ काले गते यिहूदीयलोकास्तं हन्तुं मन्त्रयामासुः किन्तु शौल-
स्तेषामेतस्या मन्त्रणाया वार्त्तां प्राप्तवान्। ते तं हन्तुं तु
२५ दिवानिशं गुप्ताः सन्तो नगरस्य द्वारेऽतिष्ठन्; तस्मात् शिष्या-
स्तं नीत्वा रात्रौ पिटके निधाय प्राचीरेणावारोहयन्।
२६ ततः परं शौलो यिरूशालमं गत्वा शिष्यगणेन सार्द्धं स्थातुम्
ऐहत्, किन्तु सर्व्वे तस्मादबिभयुः स शिष्य इति च न प्रत्य-
२७ यन्। एतस्माद् बर्णब्बास्तं गृहीत्वा प्रेरितानां समीपमानीय
मार्गमध्ये प्रभुः कथं तस्मै दर्शनं दत्तवान् याः कथाश्च कथि-
तवान् स च यथाक्षोभः सन् दम्मेषक्नगरे यीशो र्नाम प्राचा-
२८ रयत् एतान् सर्व्ववृत्तान्तान् तान् ज्ञापितवान्। ततः शौलस्तैः
सह यिरूशालमि कालं यापयन् निर्भयं प्रभो र्यीशो र्नाम
२९ प्राचारयत्। तस्माद् अन्यदेशीयलोकैः सार्द्धं विवादस्योपस्थि-
३० तत्वात् ते तं हन्तुम् अचेष्टन्त। किन्तु भ्रातृगणस्तज्ज्ञात्वा
तं कैसरियानगरं नीत्वा तार्षनगरं प्रेषितवान्।
३१ इत्थं सति यिहूदियागालील्शोमिरोण्देशीयाः सर्व्वा
मण्डल्यो विश्रामं प्राप्तास्ततस्तासां निष्ठाभवत् प्रभो र्भिया पवि-
त्रस्यात्मनः सान्त्वनया च कालं क्षेपयित्वा बहुसंख्या अभवन्।
३२ ततः परं पितरः स्थाने स्थाने भ्रमित्वा शेषे लोद्नगर-
३३ निवासिपवित्रलोकानां समीपे स्थितवान्। तदा तत्र पक्षा-
घातव्याधिनाष्टौ वत्सरान् शय्यागतम् ऐनेयनामानं मनुष्यं
३४ साक्षात् प्राप्य तमवदत्, हे ऐनेय यीशुख्रीष्टस्त्वां स्वस्थम्
अकार्षीत्, त्वमुत्थाय स्वशय्यां निक्षिप, इत्युक्तमात्रे स उदति-
३५ ष्ठत्। एतादृशं दृष्ट्वा लोद्शारोणनिवासिनो लोकाः प्रभुं
प्रति परावर्त्तन्त।

अपरञ्च भिक्षादानादिषु नानाक्रियासु नित्यं प्रवृत्ता ३६ या याफोनगरनिवासिनी टाबिथानामा शिष्या यां दर्क्कां अर्थाद् हरिणीमप्युक्त्वा आह्वयन् सा नारी तस्मिन् समये रुग्ना ३७ सती प्राणान् अत्यजत्, ततो लोकास्तां प्रक्षाल्योपरिस्थप्रकोष्ठे शाययित्वास्थापयन्। लोद्नगरं याफोनगरस्य समीपस्थं ३८ तस्मात्तत्र पितर आस्ते, इति वार्त्तां श्रुत्वा तूर्णं तस्यागमनार्थं तस्मिन् विनयमुक्त्वा शिष्यगणो द्वौ मनुजौ प्रेषितवान्। तस्मात् पितर उत्थाय ताभ्यां सार्द्धम् आगच्छत्, तत्र तस्मिन् ३९ उपस्थित उपरिस्थप्रकोष्ठं समानीते च विधवाः स्वाभिः सह स्थितिकाले दर्क्कया कृतानि यान्युत्तरीयाणि परिधेयानि च तानि सर्व्वाणि तं दर्शयित्वा रुदत्यश्चतसृषु दिक्ष्वतिष्ठन्। किन्तु पितरस्ताः सर्व्वा वहिः कृत्वा जानुनी पातयित्वा प्रार्थित- ४० वान्; पश्चात् शवं प्रति दृष्टिं कृत्वा कथितवान्, हे टाबीथे त्वमुत्तिष्ठ, इति वाक्य उक्ते सा स्त्री चक्षुषी प्रोन्मील्य पितरम् अवलोक्योत्थायोपाविशत्। ततः पितरस्तस्याः करौ धृत्वा ४१ उत्तोल्य पवित्रलोकान् विधवाश्चाहूय तेषां निकटे सजीवां तां समार्पयत्। एषा कथा समस्तयाफोनगरं व्याप्ता तस्माद् ४२ अनेके लोकाः प्रभौ व्यश्वसन्। अपरञ्च पितरस्तद्याफोनग- ४३ रीयस्य कस्यचित् शिमोन्नाम्नश्चर्म्मकारस्य गृहे बहुदिनानि न्यवसत्।

---

## १० दशमोऽध्यायः।

१ स्वर्गीयदूतेनादिष्टस्य कर्णीलियस्य पितरमाह्वातुं लोकप्रेषणं ९ पितरस्य स्वप्न-दर्शनं १७ पितरं प्रति प्रेषितानां लोकानामुपस्थितिः २४ तैः सह पितरस्य गमनं तेन सार्द्धं कर्णीलियस्य सम्भाषणं ३४ पितरस्य प्रत्युत्तरं सुसंवादप्रचारणञ्च ४४ कर्णीलियं तदीयलोकांश्च प्रति पवित्रस्यात्मनोऽवरोहणं तेषां मज्जनञ्च।

१ कैसरियानगर इतालियाख्यसैन्यान्तर्गतः कर्णीलियनामा
२ सेनापतिरासीत् स सपरिवारो भक्त ईश्वरपरायणश्चासीत्;
लोकेभ्यो बहूनि दानादीनि दत्त्वा निरन्तरम् ईश्वरे प्रार्थ-
३ याञ्चक्रे। एकदा तृतीयप्रहरवेलायां स दृष्टवान् ईश्वरस्यैको
दूतः सप्रकाशं तत्समीपम् आगत्य कथितवान्, हे कर्णीलिय।
४ किन्तु स तं दृष्ट्वा भीतोऽकथयत्, हे प्रभो किं? तदा तमवदत्
तव प्रार्थना दानादि च साक्षिस्वरूपं भूत्वेश्वरस्य गोचरम-
५ भवत्। इदानीं याफोनगरं प्रति लोकान् प्रेष्य समुद्रतीरे
शिमोन्नाम्नश्चर्म्मकारस्य गृहे प्रवासकारी पितरनाम्ना विख्यातो
६ यः शिमोन् तम् आह्वायय; तस्मात् त्वया यद्यत् कर्त्तव्यं
७ तत्तत् स वदिष्यति। इत्युपदिश्य दूते प्रस्थिते सति कर्णीलियः
स्वगृहस्थानां दासानां द्वौ जनौ नित्यं स्वसङ्गिनां सैन्यानाम्
८ एकां भक्तसेनाञ्चाहूय सकलमेतं वृत्तान्तं विज्ञाप्य याफो-
नगरं तान् प्राहिणोत्।

९ परस्मिन् दिने ते यात्रां कृत्वा यदा नगरस्य समीप उपा-
तिष्ठन्, तदा पितरो द्वितीयप्रहरवेलायां प्रार्थयितुं गृह-
१० पृष्ठम् आरोहत्। एतस्मिन् समये क्षुधार्त्तः सन् किञ्चिद्
भोक्तुम् ऐच्छत् किन्तु तेषाम् अन्नासादनसमये स मूर्च्छितः
११ सन्नपतत्। ततो मेघद्वारं मुक्तं चतुर्भिः कोणै र्लम्बितं वृह-
द्वस्त्रमिव किञ्चन भाजनम् आकाशात् पृथिवीम् अवारोह-
१२ तीति दृष्टवान्। तन्मध्ये नानाप्रकारा ग्राम्यवन्यपशवः खेच-
१३ रोरोगामिप्रभृतयो जन्तवश्चासन्। अनन्तरं हे पितर उत्थाय
१४ हत्वा भुंक्ष्व तम्प्रतीयं गगणीया वाणी जाता। तदा पितरः
प्रत्यवदत्, हे प्रभो ईदृशं मा भवतु, अहम् एतत् कालं

यावत् निषिद्धम् अशुचि वा द्रव्यं किञ्चिदपि न भुक्तवान्।
ततः पुनरपि तादृशी विहायसीया वाणी जाता यद् ईश्वरः १५
शुचि कृतवान् तत् त्वं निषिद्धं न जानीहि। इत्थं त्रिः सति १६
तत् पात्रं पुनराकृष्टं आकाशम् अगच्छत्।

ततः परं यद् दर्शनं प्राप्तवान् तस्य को भाव इत्यत्र १७
पितरो मनसा सन्देग्धि, एतस्मिन् समये कर्णीलियस्य ते प्रेषिता
मनुष्या द्वारस्य सन्निधावुपस्थाय, शिमोनो गृहमन्विच्छन्तः १८
सम्पृच्छ्याहूय कथितवन्तः पितरनाम्ना विख्यातो यः शिमोन्
स किमत्र प्रवसति? यदा पितरस्तद्दर्शनस्य भावं मनसान्दो- १९
लयति तदात्मा तमवदत्, पश्य त्रयो जनास्त्वां मृगयन्ते।
त्वम् उत्थायावरुह्य निःसन्देहं तैः सह गच्छ मयैव ते प्रेषिताः। २०
तस्मात् पितरोऽवरुह्य कर्णीलियप्रेरितलोकानां निकटमागत्य २१
कथितवान् पश्यत यूयं यं मृगयध्वे स जनोहं, यूयं किन्नि-
मित्तम् आगताः? ततस्ते प्रत्यवदन् कर्णीलियनामा शुद्ध- २२
सत्त्व ईश्वरपरायणो यिहूदीयदेशस्थानां सर्व्वेषां सन्निधौ
सुख्यात्यापन्न एकः सेनापति र्निजगृहं त्वामाहूय नेतुं त्वत्तः
कथां श्रोतुञ्च पवित्रदूतेन समादिष्टः। तदा पितरस्तानभ्य- २३
न्तरं नीत्वा तेषामातिथ्यं कृतवान्, परेऽहनि तैः सार्द्धं यात्रा-
मकरोत्, याफोनिवासिनां भ्रातृणां कियन्तो जनाश्च तेन
सह गताः।

परस्मिन् दिवसे कैसरियानगरमध्यप्रवेशसमये कर्णीलियो २४
ज्ञातिबन्धून् आहूयानीय तान् अपेक्ष्य स्थितः। पितरे गृह २५
उपस्थिते कर्णीलियस्तं साक्षात्कृत्य चरणयोः पतित्वा प्रण-
मत्। पितरस्तमुत्थाप्य कथितवान्, उत्तिष्ठाहमपि मानुषः। २६

२७ तदा कर्णीलियेन साकम् आलपन् गृहं प्राविशत् तन्मध्ये च
२८ बहुलोकानां समागमं दृष्ट्वा तान् अवदत्, अन्यजातीयलोकैः
सहालपनं वा तेषां गृहमध्ये प्रवेशनं यिहूदीयानां निषि-
द्धम् अस्तीति यूयम् अवगच्छथ; किन्तु कमपि मानुषम्
अव्यवहार्य्यम् अशुचिं वा ज्ञातुं मम नोचितम् इति परमेश्वरो
२९ मां ज्ञापितवान्। इति हेतोराह्वानश्रवणमात्रात् काञ्चना-
पत्तिम् अकृत्वा युष्माकं समीपम् आगतोस्मि; पृच्छामि यूयं
३० किन्निमित्तं माम् आह्वयत? तदा कर्णीलियः कथितवान्,
अद्य चत्वारि दिनानि जातानि एतावद्वेलां यावद् अहम्
अनाहार आसम् ततस्तृतीयप्रहरे सति गृहे प्रार्थनसमये
तेजोमयवस्त्रभृद् एको जनो मम समक्षं तिष्ठन् एतां कथाम्
३१ अकथयत्, हे कर्णीलिय त्वदीया प्रार्थना ईश्वरस्य कर्णगोच-
रीभूता तव दानादि च साक्षिस्वरूपं भूत्वा तस्य दृष्टिगोचर-
३२ मभवत्। अतो याफोनगरं प्रति लोकान् प्रहित्य तत्र समु-
द्रतीरे शिमोन्नाम्नः कस्यचिच्चर्म्मकारस्य गृहे प्रवासकारी
पितरनाम्ना विख्यातो यः शिमोन् तमाह्वायय; ततः स आगत्य
३३ त्वाम् उपदेक्ष्यति। इति कारणात् तत्क्षणात् तव निकटे
लोकान् प्रेषितवान्, त्वमागतवान् इति भद्रं कृतवान्। ईश्वरो
यान्याख्यानानि कथयितुम् आदिशत् तानि श्रोतुं वयं सर्व्वे
साम्प्रतम् ईश्वरस्य साक्षाद् उपस्थिताः स्मः।

३४ तदा पितर इमां कथां कथयितुम् आरब्धवान्, ईश्वरो
३५ मनुष्याणाम् अपक्षपाती सन् यस्य कस्यचिद् देशस्य यो लोक-
स्तस्माद्भीत्वा सत्कर्म्म करोति स तस्य ग्राह्यो भवति, एतस्य
३६ निश्चयम् उपलब्धवानहम्। सर्व्वेषां प्रभु र्यो यीशुख्रीष्टस्तेन

ईश्वर इस्रायेल्वंशानां निकटे सुसंवादं प्रेष्य सम्मेलनस्य यं संवादं प्राचारयत् तं संवादं यूयं श्रुतवन्तः। यतो योहना ३७ मज्जने प्रचारिते सति स गालीलदेशमारभ्य समस्तयिहूदी-यदेशं व्याप्नोत्; फलत ईश्वरेण पवित्रेणात्मना शक्त्या चाभि- ३८ षिक्तो नासरतीययीशुः स्थाने स्थाने भ्रमन् सुक्रियां कुर्व्वन् शैताना क्लिष्टान् सर्व्वलोकान् स्वस्थान् अकरोत्, यत ईश्वरस्तस्य सहाय आसीत्; वयञ्च यिहूदीयदेशे यिरूशालम्नगरे च ३९ तेन कृतानां सर्व्वेषां कर्म्मणां साक्षिणो भवामः। लोकास्तं क्रुशे विद्धा हतवन्तः, किन्तु तृतीयदिवसे ईश्वरस्तमुत्थाप्य ४० सप्रकाशम् अदर्शयत्। सर्व्वलोकानां निकट इति न हि, किन्तु ४१ तस्मिन् श्मशानादुत्थिते सति तेन सार्द्धं भोजनं पानञ्च कृत-वन्त एतादृशा ईश्वरस्य मनोनीताः साक्षिणो ये वयम् अस्माकं निकटे तमदर्शयत्। जीवितमृतोभयलोकानां ४२ विचारं कर्त्तुम् ईश्वरो यं नियुक्तवान् स एव स जनः, इमां कथां प्रचारयितुं तस्मिन् प्रमाणं दातुञ्च सोऽस्मान् आज्ञाप-यत्। यस्तस्मिन् विश्वसिति स तस्य नाम्ना पापान्मुक्तो भविष्यति ४३ तस्मिन् सर्व्वे भविष्यद्वादिनोपि एतादृशं साक्ष्यं ददति।

पितरस्यैतत्कथाकथनकाले सर्व्वेषां श्रोतृणामुपरि पवित्र ४४ आत्मावारोहत्। ततः पितरेण सार्द्धम् आगतास्त्वक्छेदिनो ४५ विश्वासिनो लोका अन्यदेशीयेभ्यः पवित्र आत्मनि दत्ते सति ते नानाजातीयभाषाभिः कथां कथयन्त ईश्वरं प्रशंसन्ति, ४६ इति दृष्ट्वा श्रुत्वा च विस्मयम् आपद्यन्त। तदा पितरः कथि- ४७ तवान्, वयमिव ये पवित्रम् आत्मानं प्राप्तास्तेषां जलमज्जनं किं कोपि निषेद्धुं शक्नोति? ततः प्रभो र्नाम्ना मज्जिता ४८

भवतेति तानाज्ञापयत्। अनन्तरं ते स्वैः सार्द्धं कतिपयदि-
नानि स्थातुं तं प्रार्थयन्त।

---

## ११ एकादशोऽध्यायः।

१ अत्वक्छेदिनः प्रति सुसंवादं प्रचारयितुं पितरं प्रति त्वक्छेदिनां तर्जनं तान् प्रति तस्योत्तरं १९ आन्तियखियानगरं प्रति बर्णब्बाः प्रेरणं २५ पौलान्वेषणं बर्णब्बासार्षनगरगमनं २७ दुर्भिक्षकारणाद् बर्णब्बापौलाभ्यां यिरूशालमे धनप्रेषणञ्च।

१ इत्थं भिन्नदेशीयलोका अपीश्वरस्य वाक्यम् अगृह्लन् इमां
२ वार्त्तां यिहूदीयदेशस्थप्रेरिता भ्रातृगणश्च श्रुतवन्तः। ततः
पितरे यिरूशालम्नगरं गतवति त्वक्छेदिनो लोकास्तेन सह
३ विवदमाना अवदन्, त्वम् अत्वक्छेदिलोकानां गृहं गत्वा तैः
४ सार्द्धं भुक्तवान्। ततः पितर आदितः क्रमशस्तत्कार्य्यस्य सर्व्व-
५ वृत्तान्तमाख्यातुम् आरब्धवान्। याफोनगर एकदाहं प्रार्थ-
यमानो मूर्च्छितः सन् दर्शनेन चतुर्षु कोणेषु लम्बमानं वृह-
द्वस्त्रमिव पात्रमेकम् आकाशादवरुह्य मन्निकटम् आगच्छद्
६ अपश्यम्। पश्चात् तद् अनन्यदृष्ट्या दृष्ट्वा विविच्य तस्य मध्ये
नानाप्रकारान् ग्राम्यवन्यपशून् उरोगामिखेचरांश्च दृष्टवान्;
७ हे पितर त्वमुत्थाय गत्वा भुंक्ष्व मां सम्बोध्य कथयन्तं शब्दमेकं
८ श्रुतवांश्च। ततोहं प्रत्यवदं, हे प्रभो नेत्थं भवतु, यतः किञ्चन
निषिद्धम् अशुचि द्रव्यं वा मम मुखमध्यं कदापि न प्राविशत्।
९ अपरम् ईश्वरो यत् शुचि कृतवान् तन्निषिद्धं न जानीहि द्वि
१० र्मां प्रतीदृशी विहायसीया वाणी जाता। त्रिरित्थं सति
११ तत् सर्व्वं पुनराकाशम् आकृष्टं। पश्चात् कैसरियानगरात् त्रयो
जना मन्निकटं प्रेषिता यत्र निवेशने स्थितोहं तस्मिन् समये
१२ तत्रोपातिष्ठन्। तदा निःसन्देहं तैः सार्द्धं यातुम् आत्मा

मामादिष्टवान्; ततः परं मया सहैतेषु षड्भ्रातृषु गतेषु वयं तस्य मनुजस्य गृहं प्राविशाम। सोस्माकं निकटे कथामेताम् १३ अकथयत् एकदा दूत एकः प्रत्यक्षीभूय मम गृहमध्ये तिष्ठन् मामित्याज्ञापितवान्, याफोनगरं प्रति लोकान् प्रहित्य पित-रनाम्ना विख्यातं शिमोनम् आह्वायय; ततस्तव त्वदीयपरिवा- १४ राणाञ्च येन परित्राणं भविष्यति तत् स उपदेक्ष्यति। अहं १५ तां कथामुत्थाप्य कथितवान् तेन प्रथमम् अस्माकम् उपरि यथा पवित्र आत्मावरूढवान् तथा तेषामप्युपरि समवरूढ-वान्। तेन योहन् जले मज्जितवान् इति सत्यं किन्तु यूयं १६ पवित्र आत्मनि मज्जिता भविष्यथ, इति यद्वाक्यं प्रभुरुदितवान् तत् तदा मया स्मृतम्। अतः प्रभौ यीशुख्रीष्टे प्रत्ययकारिणो १७ ये वयम् अस्मभ्यम् ईश्वरो यद् दत्तवान् तत् तेभ्यो लोके-भ्योपि दत्तवान् ततः कोहं? किमहम् ईश्वरं वारयितुं शक्नोमि? कथामेतां श्रुत्वा ते क्षान्ता ईश्वरस्य गुणान् अनुकीर्त्य १८ कथितवन्तः, तर्हि परमायुःप्राप्तिनिमित्तम् ईश्वरोन्यदेशी-यलोकेभ्योपि मनःपरिवर्त्तनरूपं दानम् अदात्।

स्तिफानं प्रति उपद्रवे घटिते ये विकीर्णा अभवन् ते फैनी- १९ कीकुप्रान्तियखियासु भ्रमित्वा केवलयिहूदीयलोकान् विना कस्याप्यन्यस्य समीप ईश्वरस्य कथां न प्राचारयन्। अपरं तेषां २० कुप्रीयाः कुरीनीयाश्च कियन्तो जना आन्तियखियानगरं गत्वा यूनानीयलोकानां समीपेपि प्रभोर्यीशोः कथां प्राचारयन्। प्रभोः करस्तेषां सहाय आसीत् तस्माद् अनेके लोका विश्वस्य २१ प्रभुं प्रति परावर्त्तन्त। इति वार्त्तायां यिरूशालमस्थमण्ड- २२ लीयलोकानां कर्णगोचरीभूतायाम् आन्तियखियानगरं गन्तुं

२३ ते बर्णब्बां प्रेरयन्। ततो बर्णब्बास्तत्र उपस्थितः सन् ईश्वर-
२४ स्यानुग्रहस्य फलं दृष्ट्वा सानन्दो जातः, स स्वयं साधु विश्वा-
सेन पवित्रेणात्मना च परिपूर्णः सन् मनोनिष्ठया प्रभावाश्रयं
कर्त्तुं सर्व्वान् उपदिष्टवान् तेन प्रभोः शिष्या अनेके बभूवुः।
२५ 　शेषे शौलं मृगयितुं बर्णब्बास्तार्षनगरं प्रस्थितवान्। तत्र
२६ तस्योद्देशं प्राप्य तम् आन्तियखियानगरम् आनयत्; ततस्तौ
मण्डलीस्थलोकैः सभां कृत्वा संवत्सरमेकं यावद् बहुलोकान्
उपादिशतां; तस्मिन् आन्तियखियानगरे शिष्याः प्रथमं
ख्रीष्टीयनाम्ना विख्याता अभवन्।
२७ 　ततः परं भविष्यद्वादिगणे यिरूशालम आन्तियखियान-
२८ गरम् आगते सति आगाबनामा तेषामेक उत्थाय आत्मनः
शिक्षया सर्व्वदेशे दुर्भिक्षं भविष्यतीति ज्ञापितवान्; ततः
२९ क्लौदियकैसरस्याधिकारे सति तत् प्रत्यक्षम् अभवत्। तस्मात्
शिष्या एकैकशः स्वस्वशक्त्यनुसारतो यिहूदीयदेशनिवासिनां
भ्रातॄणां दिनयापनार्थं धनं प्रेषयितुं निश्चित्य बर्णब्बाशौलयो
र्द्वारा प्राचीनलोकानां समीपं तत् प्रेषितवन्तः।

---

## १२ द्वादशोऽध्यायः।

१ हेरोद्राजेन पितरस्य कारायां बन्धनं दूतेन तस्य मोचनञ्च १२ मरियमो गृहे पितरस्य गमनं रक्षकान् हन्तुं हेरोद आज्ञा च २० अभिमानाद् हेरोद्राजस्य विनाश ईश्वरस्य कथायाः सफलता च।

१ 　तस्मिन् समये हेरोद्राजो मण्डल्याः कियज्जनेभ्यो दुःखं
२ दातुं प्रारभत। विशेषतो योहनः सोदरं याकूबं करवा-
३ लाघातेन हतवान्। तस्माद् यिहूदीयाः सन्तुष्टा अभवन् इति
विज्ञाय स पितरमपि धर्त्तुं गतवान्। तदा किण्वशून्यपूपो-

त्सवसमय उपातिष्ठत्; अत उत्सवे गते सति लोकानां समक्षं तं ४
वहिरानेष्यामीति मनसि स्थिरीकृत्य स तं धारयित्वा रक्ष-
णार्थम् येषाम् एकैकसंघे चत्वारो जनाः सन्ति तेषां चतुर्णां
रक्षकसंघानां समीपे तं समर्प्य कारायां स्थापितवान्। किन्तु ५
पितरस्य कारास्थितिकारणात् मण्डल्या लोका अविश्रामम्
ईश्वरस्य समीपे प्रार्थयन्त। अनन्तरं हेरोदि तं वहिरानायितुं ६
उद्यते सति तस्यां रात्रौ पितरो रक्षकद्वयमध्यस्थाने शृङ्ख-
लद्वयेन बद्धः सन् निद्रित आसीत्, दौवारिकाश्च कारायाः
सम्मुखे तिष्ठन्तो द्वारम् अरक्षिषुः। एतस्मिन् समये परमे- ७
श्वरस्य दूते समुपस्थिते कारा दीप्तिमती जाता; ततः स दूतः
पितरस्य कुक्षावाघातं कृत्वा तं जागरयित्वा भाषितवान् तूर्ण-
मुत्तिष्ठ; ततस्तस्य हस्तस्थशृङ्खलद्वयं गलत् पतितं। स दूत- ८
स्तमवदत्, बद्धकटिः सन् पादयोः पादुके अर्पय; तेन तथा
कृते सति दूतस्तस् उक्तवान् गात्रीयवस्त्रं गात्रे निधाय मम
पश्चाद् एहि। ततः पितरस्तस्य पश्चाद् व्रजन् वहिरगच्छत्, ९
किन्तु दूतेन कर्म्मैतत् कृतमिति सत्यमज्ञात्वा स्वप्नदर्शनं ज्ञात-
वान्। इत्थं तौ प्रथमां द्वितीयाञ्च कारां लङ्घित्वा येन १०
लौहनिर्म्मितद्वारेण नगरं गम्यते तत्समीपं प्राप्नुतां; ततस्तस्य
कवाटं स्वयं मुक्तमभवत् ततस्तौ तत्स्थानाद् वहि र्भूत्वा मार्गै-
कस्य सीमां यावद् गतौ; ततोऽकस्मात् स दूतः पितरं
त्यक्तवान्। तदा स चेतनां प्राप्य कथितवान् निजदूतं प्रहित्य ११
परमेश्वरो हेरोदो हस्ताद् यिहूदीयलोकानां सर्व्वाशायाश्च
मां समुद्धृतवान् इत्यहं निश्चयं ज्ञातवान्।

स विविच्य मार्कनाम्ना विख्यातस्य योहनो मातु र्मरियमो १२

१३ यस्मिन् गृहे बहवः सम्भूय प्रार्थयन्त तन्निवेशनं गतः। पितरेण बहिर्द्वारे आहते सति रोदानामा बालिका द्रष्टुं गता।
१४ ततः पितरस्य स्वरं श्रुत्वा सा हर्षयुक्ता सती द्वारं न मोचयित्वा पितरो द्वारे तिष्ठतीति वार्त्तां वक्तुम् अभ्यन्तरं धावित्वा
१५ गतवती। ते प्रावोचन् त्वमुन्मत्ता जातासि किन्तु सा मुहुर्मुहुरुक्तवती सत्यमेवैतत्। तदा ते कथितवन्तस्तर्हि तस्य दूतो
१६ भवेत्। पितरो द्वारमाहतवान् एतस्मिन्नन्तरे ते द्वारं मोच-
१७ यित्वा पितरं दृष्ट्वा विस्मयं प्राप्ताः। ततः पितरो निःशब्दं स्थातुं तान् प्रति हस्तेन सङ्केतं कृत्वा परमेश्वरो येन प्रकारेण तं कारायाा उद्धृत्यानीतवान् तस्य वृत्तान्तं तानज्ञापयत्, यूयं गत्वा याकुबं भ्रातृगणञ्च वार्त्तामेतां वदतेत्युक्त्वा स्थाना-
१८ न्तरं प्रस्थितवान्। प्रभाते सति पितरः क्व गत इत्यत्र रक्ष-
१९ काणां मध्ये महान् कलहो जातः। हेरोद् बहु मृगयित्वा तस्योद्देशे न प्राप्ते सति रक्षकान् संपृच्छ्य तेषां प्राणान् हन्तुम् आदिष्टवान्। पश्चात् स यिहूदीयप्रदेशात् कैसरियानगरं गत्वा तत्रावातिष्ठत्।

२० सोरसीदोनदेशयो र्लोकेभ्यो हेरोदि युयुत्सौ सति ते सर्व्वे एकमन्त्रणाः सन्तस्तस्य समीप उपस्थाय ब्लास्तनामानं तस्य वस्त्रगृहाधीशं सहायं कृत्वा हेरोदा सार्द्धं सन्धिं प्रार्थयन्त
२१ यतस्तस्य राज्ञो देशेन तेषां देशीयानां भरणम् अभवत्। अतः कुत्रचिन् निरूपितदिने हेरोद् राजकीयं परिच्छदं परिधाय
२२ सिंहासने समुपविश्य तान् प्रति कथाम् उक्तवान्। ततो लोका उच्चैःकारं प्रत्यवदन्, एष मनुजरवो न हि, ईश्वरीयरवः।
२३ तदा हेरोद् ईश्वरस्य सम्मानं नाकरोत्; तस्माद्धेतोः परमे-

श्वरस्य दूतो हठात् तं प्राहरत् तेनैव स कीटैः क्षीणः सन्
प्राणान् अजहात्। किन्त्वीश्वरस्य कथा देशं व्याप्य प्रबलाभ- २४
वत्। ततः परं बर्णब्बाशौलौ यस्य कर्म्मणो भारं प्राप्नुतां २५
ताभ्यां तस्मिन् सम्पादिते सति मार्कनाम्ना विख्यातो यो
योहन् तं सङ्गिनं कृत्वा यिरूशालम्नगरात् प्रत्यागतौ।

---

## १३ त्रयोदशोऽध्यायः।

१ अन्यदेशीयान् प्रति बर्णब्बापौलयोः प्रेरणं ४ सर्जियपौलस्य मायाविबर्यीशोश्च वृत्तान्तः १३ आन्तियखियानगरे पौलस्य खीष्टकथाप्रचारः १६ परित्राणकथाग्रहणाय तस्य विनयः ४२ बहुलोकैः कथाग्रहणं ४४ यिहूदीयलोकानां विपरीतत्वञ्च।

अपरञ्च बर्णब्बाः, शिमोन् यं निग्रं वदन्ति, कुरीनीयलू- १
कियो हेरोदा राज्ञा सह कृतविद्याभ्यासो मिनहेम्, शौलश्चैते
ये कियन्तो जना भविष्यद्वादिन उपदेष्टारश्चान्तियखिया-
नगरस्थमण्डल्याम् आसन्, ते यदोपवासं कृत्वेश्वरम् असेवन्त २
तस्मिन् समये पवित्र आत्मा कथितवान् अहं यस्मिन् कर्म्मणि
बर्णब्बाशौलौ नियुक्तवान् तत्कर्म्म कर्त्तुं तौ पृथक् कुरुत।
ततस्तैरुपवासप्रार्थनयोः कृतयोः सतोस्ते तयो र्गात्रयो र्हस्ता- ३
र्पणं कृत्वा तौ व्यसृजन्।

ततः परं तौ पवित्रेणात्मना प्रेरितौ सन्तौ सिलूकिया- ४
नगरम् उपस्थाय समुद्रपथेन कुप्रोपद्वीपम् अगच्छतां। ततः ५
सालामीनगरम् उपस्थाय तत्र यिहूदीयानां भजनभवनानि
गत्वेश्वरस्य कथां प्राचारयतां; योहनपि तत्सहचरोऽभवत्।
इत्थं ते तस्योपद्वीपस्य सर्व्वत्र भ्रमन्तः पाफनगरम् उपस्थिताः; ६
तत्र सुविवेचकेन सर्जियपौलनाम्ना तद्देशाधिपतिना सह
भविष्यद्वादिनो वेशधारी बर्यीशुनामा यो मायावी यिहूदी

७ आसीत् तं साक्षात् प्राप्तवन्तः। तद्देशाधिप ईश्वरस्य कथां श्रोतुं
८ वाञ्छन् पौलबर्णब्बौ न्यमन्त्रयत्। किन्त्विलुमा यं मायाविनं
वदन्ति स देशाधिपतिं धर्म्ममार्गाद् वहिर्भूतं कर्त्तुम् अयतत।
९ तस्मात् शौलोऽर्थात् पौलः पवित्रेणात्मना परिपूर्णः सन् तं
१० मायाविनं प्रत्यनन्यदृष्टिं कृत्वाकथयत्, हे नरकिन् धर्म्मद्वेषिन्
कौटिल्यदुष्कर्म्मपरिपूर्ण, त्वं किं प्रभोः सत्यपथस्य विपर्य्ययकर-
११ णात् कदापि न निवर्त्तिष्यसे? अधुना परमेश्वरस्तव समुचितं
करिष्यति तेन कतिपयदिनानि त्वम् अन्धः सन् सूर्य्यमपि न
द्रक्ष्यसि। तत्क्षणाद् रात्रिवद् अन्धकारस्तस्य दृष्टिम् आच्छा-
दितवान्; तस्मात् तस्य हस्तं धर्त्तुं स लोकमन्विच्छन् इतस्ततो
१२ भ्रमणं कृतवान्। एनां घटनां दृष्ट्वा स देशाधिपतिः प्रभू-
पदेशाद् विस्मित्य विश्वासं कृतवान्।

१३　तदनन्तरं पौलस्तत्सङ्गिनौ च पाफनगरात् पोतं चालयित्वा
पम्फुलियादेशस्य पर्गीनगरम् अगच्छन् किन्तु योहन् तयोः
१४ समीपाद् एत्य यिरूशालमं प्रत्यागच्छत्। पश्चात् तौ पर्गीतो
यात्रां कृत्वा पिसिदियादेशस्य आन्तियखियानगरम् उपस्थाय
१५ विश्रामवारे भजनभवनं प्रविश्य समुपाविशतां। व्यवस्थाभवि-
ष्यद्वाक्ययोः पठितयोः सतो र्हे भ्रातरौ लोकान् प्रति युवयोः
काचिद् उपदेशकथा यद्यस्ति तर्हि तां वदतं तौ प्रति तस्य
१६ भजनभवनस्याधिपतयः कथाम् एतां कथयित्वा प्रैषयन्। अतः
पौल उत्तिष्ठन् हस्तेन सङ्केतं कुर्व्वन् कथितवान् हे इस्राये-
१७ लीयमनुष्या ईश्वरपरायणाः सर्व्वे लोका यूयम् अवधद्धं। एते-
षामिस्रायेल्लोकानाम् ईश्वरोऽस्माकं पूर्व्वपुरुषान् मनोनीतान्
कृत्वा गृहीतवान् ततो मिसरि देशे प्रवसनकाले तेषामुन्नतिं

कृत्वा तस्मात् स्वीयबाहुबलेन तान् वहिः कृत्वा समानयत्।
चत्वारिंशद्वत्सरान् यावच्च महाप्रान्तरे तेषां भरणं कृत्वा किना- १८
न्देशान्तर्व्वर्त्तीनि सप्तराज्यानि नाशयित्वा गुटिकापातेन तेषु १९
सर्व्वदेशेषु तेभ्योऽधिकारं दत्तवान्। पञ्चाशदधिकचतुःशतेषु २०
वत्सरेषु गतेषु च शिमूयेल्भविष्यद्वादिपर्य्यन्तं तेषामुपरि विचा-
रयितृन् नियुक्तवान्। तैश्च राज्ञि प्रार्थिते, ईश्वरो विन्यामीनो २१
वंशजातस्य कीशः पुत्त्रं शौलं चत्वारिंशद्वर्षपर्य्यन्तं तेषामुपरि
राजानं कृतवान्। पश्चात् तं पदच्युतं कृत्वा यो मदिष्टक्रियाः २२
सर्व्वाः करिष्यति तादृशं मम मनोभिमतम् एकं जनं यिशयः
पुत्त्रं दायूदं प्राप्तवान् इदं प्रमाणं यस्मिन् दायूदि स दत्तवान्
तं दायूदं तेषामुपरि राजत्वं कर्त्तुम् उत्पादितवान्। तस्य २३
स्वप्रतिश्रुतस्य वाक्यस्यानुसारेण इस्रायेल्लोकानां निमित्तं
तेषां मनुष्याणां वंशाद् ईश्वर एकं यीशुं (त्रातारम्) उद-
पादयत्। तस्य प्रकाशनात् पूर्व्वं योहन् इस्रायेल्लोकानां सन्निधौ २४
मनःपरावर्त्तनरूपं मज्जनं प्राचारयत्। यस्य च कर्म्मणो भारं २५
प्राप्तवान् योहन् तन् निष्पादयन् एतां कथां कथितवान्, यूयं
मां कं जनं जानीथ? अहम् अभिषिक्तत्राता नहि, किन्तु पश्यत
यस्य पादयोः पादुकयो र्बन्धने मोचयितुमपि योग्यो न
भवामि तादृश एको जनो मम पश्चाद् उपतिष्ठति।

हे इब्राहीमो वंशजाता भ्रातरो हे ईश्वरभीताः सर्व्वलोका २६
युष्मान् प्रति परित्राणस्य कथैषा प्रेरिता। यिरूशालम्नि- २७
वासिनस्तेषाम् अधिपतयश्च तस्य यीशोः परिचयं न प्राप्य
प्रतिविश्रामवारं पठ्यमानानां भविष्यद्वादिकथानाम् अभि-
प्रायम् अबुद्ध्वा च तस्य बधेन ताः कथाः सफला अकुर्व्वन्।

२८ प्राणहननस्य कमपि हेतुम् अप्राप्यापि पीलातस्य निकटे तस्य
२९ वधं प्रार्थयन्त। तस्मिन् याः कथा लिखिताः सन्ति तदनुसा-
रेण कर्म्म सम्पाद्य तं क्रुशाद् अवतार्य्य श्मशाने शायितवन्तः।
३० किन्त्वीश्वरः श्मशानात् तमुदस्थापयत्, पुनश्च गालीलप्रदेशाद्
३१ यिरूशालमनगरं तेन सार्द्धं ये लोका आगच्छन् स बहु-
दिनानि तेभ्यो दर्शनं दत्तवान्, अतस्त इदानीं लोकान् प्रति
३२ तस्य साक्षिणः सन्ति। अस्माकं पूर्व्वपुरुषाणां समक्षम् ईश्वरो
यस्मिन् प्रतिज्ञातवान् यथा,

त्वं मे पुत्त्रोसि चाद्य त्वां समुत्थापितवानहम्।

३३ इदं यद्वचनं द्वितीयगीते लिखितमास्ते तद् यीशोरुत्थानेन
तेषां सन्ताना ये वयम् अस्माकं सन्निधौ तेन प्रत्यक्षी कृतं,
३४ युष्मान् इमं सुसंवादं ज्ञापयामि। परमेश्वरेण श्मशानाद्
उत्थापितं तदीयं शरीरं कदापि न क्षेष्यते, एतस्मिन् स स्वयं
कथितवान् यथा दायूदं प्रति प्रतिज्ञातो यो वरस्तमहं तुभ्यं
३५ दास्यामि। एतदन्यस्मिन् गीतेऽपि कथितवान्।

स्वकीयं पुण्यवन्तं त्वं क्षयितुं न च दास्यसि।

३६ दायूदा ईश्वराभिमतसेवायै निजायुषि व्ययिते सति स महा-
निद्रां प्राप्य निजैः पूर्व्वपुरुषैः सह मिलितः सन् अक्षीयत;
३७ किन्तु यमीश्वरः श्मशानाद् उदस्थापयत् स नाक्षीयत। अतो
३८ हे भ्रातरः, अनेन जनेन पापमोचनं भवतीति युष्मान् प्रति
३९ प्रचारितम् आस्ते। फलतो मूसाव्यवस्थया यूयं येभ्यो
दोषेभ्यो मुक्ता भवितुं न शक्ष्यथ तेभ्यः सर्व्वदोषेभ्य एतस्मिन्
जने विश्वासिनः सर्व्वे मुक्ता भविष्यन्तीति युष्माभि र्ज्ञायतां।
४० अपरञ्च।

अवज्ञाकारिणो लोकाश्चक्षुरुन्मील्य पश्यत।
तथैवासम्भवं ज्ञात्वा स्यात यूयं विलज्जिताः।
यतो युष्मासु तिष्ठत्सु करिष्ये कर्म्म तादृशं।
येनैव तस्य वृत्तान्ते युष्मभ्यं कथितेऽपि हि।
यूयं न तन्तु वृत्तान्तं प्रत्येष्यथ कदाचन॥

येयं कथा भविष्यद्वादिनां ग्रन्थेषु लिखितास्ते सावधाना भवत ४१ सा कथा यथा युष्मान् प्रति न घटते।

यिहूदीयभजनभवनान् निर्गतयोस्तयो र्भिन्नदेशीयै र्वक्ष्य- ४२ माणा प्रार्थना कृता, आगामिनि विश्रामवारेऽपि कथेयम् अस्मान् प्रति प्रचारिता भवत्विति। सभाया भङ्गे सति बहवो ४३ यिहूदीयलोका यिहूदीयमतग्राहिणो भक्तलोकाश्च बर्णब्बा- पौलयोः पश्चाद् आगच्छन्, तेन तौ तैः सह नानाकथाः कथ- यित्वेश्वरानुग्रहाश्रये स्थातुं तान् प्रावर्त्तयतां।

परविश्रामवारे नगरस्य प्रायेण सर्व्वे लोका ईश्वरीयां ४४ कथां श्रोतुं मिलिताः; किन्तु यिहूदीयलोका जननिवहं ४५ विलोक्य ईर्ष्यया परिपूर्णाः सन्तो विपरीतकथाकथनेनेश्वर- निन्दया च पौलेनोक्तां कथां खण्डयितुं चेष्टितवन्तः। ततः ४६ पौलबर्णब्बावक्षोभौ कथितवन्तौ प्रथमं युष्माकं सन्निधावीश्वरी- यकथायाः प्रचारणम् उचितमासीत् किन्तु तदग्राह्यत्वकरणेन यूयं स्वान् अनन्तायुषोऽयोग्यान् दर्शयथ, एतत्कारणाद् वयम् अन्यदेशीयलोकानां समीपं गच्छामः। प्रभुरस्मान् इत्थम् ४७ आदिष्टवान् यथा,

यावच्च जगतः सीमां लोकानां त्राणकारणात्।
मयान्यदेशमध्ये त्वं स्थापितो भूः प्रदीपवत्॥

४८ तदा कथामीदृशीं श्रुत्वा भिन्नदेशीया आह्लादिताः सन्तः प्रभोः कथां धन्यां धन्याम् अवदन्, यावन्तो लोकाश्च परमायुः प्राप्ति-
४९ निमित्तं निरूपिता आसन् ते व्यश्वसन्। इत्थं प्रभोः कथा
५० सर्व्वदेशं व्याप्नोत्। किन्तु यिहूदीया नगरस्य प्रधानपुरुषान् सम्मान्याः कथिपया भक्ता योषितश्च कुप्रवृत्तिं ग्राहयित्वा
५१ पौलबर्णब्बौ ताडयित्वा तस्मात् प्रदेशाद् दूरीकृतवन्तः। अतः कारणात् तौ निजपदधूलीस्तेषां प्रातिकूल्येन पातयित्वेकनियं
५२ नगरं गतौ। ततः शिष्यगण आनन्देन पवित्रेणात्मना च परिपूर्णोभवत्।

---

## १४ चतुर्द्दशोऽध्यायः।

१ इकनियनगरे बर्णब्बापौलयोस्ताडनं ८ लुस्त्रानगरे खञ्जमनुष्यस्य स्वास्थ्यं तस्माद् बर्णब्बापौलौ लोकै र्देवविख्याता १९ प्रस्तराघातात् पौलस्य रक्षा बर्णब्बापौलयो र्नानादेशभ्रमणं मण्डलीलोकानां स्थैर्य्यकरणम् आन्तियखियास्थमण्डलीं प्रति स्वीयकर्म्मणां वार्त्ताप्रेषणञ्च।

१ तौ द्वौ जनौ युगपद् इकनियनगरस्थयिहूदीयानां भजनभवनं गत्वा यथा बहवो यिहूदीया अन्यदेशीयलोकाश्च
२ व्यश्वसन् तादृशीं कथां कथितवन्तौ। किन्तु विश्वासहीना यिहूदीया अन्यदेशीयलोकान् कुप्रवृत्तिं ग्राहयित्वा भ्रातृगणं
३ प्रति तेषां वैरं जनितवन्तः। अतः स्वानुग्रहकथायाः प्रमाणं दत्त्वा तयो र्हस्तै र्बहुलक्षणम् अद्भुतकर्म्म च प्राकाशयद् यः प्रभुस्तस्य कथा अक्षोभेन प्रचार्य्य तौ तत्र बहुदिनानि समवा-
४ तिष्ठेतां। किन्तु कियन्तो लोका यिहूदीयानां सपक्षाः कियन्तो लोकाः प्रेरितानां सपक्षा जाताः, अतो नागरिकजननिवहमध्ये
५ भिन्नवाक्यत्वम् अभवत्। अन्यदेशीया यिहूदीयास्तेषाम् अधि-
६ पतयश्च दौरात्म्यं कृत्वा तौ प्रस्तरैराहन्तुम् उद्यताः। तौ तद्-

वार्त्तां प्राप्य पलायित्वा लुकायनियादेशस्यान्तर्व्वर्त्तिलुस्त्राद्र्ब्बी तत्समीपस्थदेशञ्च गत्वा तत्र सुसंवादं प्राचारयतां। ७

तत्रोभयपादयोश्चलनशक्तिहीनो जन्मारभ्य खञ्जः कदापि ८ गमनं नाकरोत् एतादृश एको मानुषो लुस्त्रानगर उपविश्य पौलस्य कथां श्रुतवान्। एतस्मिन् समये पौलस्तम्प्रति दृष्टिं ९ कृत्वा तस्य स्वास्थ्ये विश्वासं विदित्वा प्रोच्चैः कथितवान् पद्भ्या- १० मुत्तिष्ठन् ऋजु र्भव। ततः स उल्लम्फं कृत्वा गमनागमने कृतवान्। तदा लोकाः पौलस्य तत् कार्य्यं विलोक्य लुकायनीय- ११ भाषया प्रोच्चैः कथामेतां कथितवन्तः, देवा मनुष्यरूपं धृत्वास्माकं समीपम् अवारोहन्। ते बर्णब्बां यूपितरम् अवदन् १२ पौलश्च मुख्यो वक्ता तस्मात् तं मर्कुरियम् अवदन्। तस्य नगरस्य १३ सम्मुखे स्थापितस्य यूपितरविग्रहस्य याजको वृषान् पुष्पमालाश्च द्वारसमीपम् आनीय लोकैः सार्द्धं तावुद्दिश्य समुत्सृज्य दातुम् उद्यतः। तद्वार्त्तां श्रुत्वा बर्णब्बापौलौ स्वीयवस्त्राणि छित्त्वा १४ लोकानां मध्यं वेगेन प्रविश्य प्रोच्चैः कथितवन्तौ, हे महेच्छाः १५ कुत एतादृशं कर्म्म कुरुथ? आवामपि युष्मादृशौ सुखदुःखभोगिनौ मनुष्यौ, यूयम् एताः सर्व्वा वृथाकल्पनाः परित्यज्य यथा गगणवसुन्धराजलनिधीनां तन्मध्यस्थानां सर्व्वेषाञ्च स्रष्टारममरम् ईश्वरं प्रति परावर्त्तध्वे तदर्थम् आवां युष्माकं सन्निधौ सुसंवादं प्रचारयावः। स ईश्वरः पूर्व्वकाले सर्व्वदेशीय- १६ लोकान् स्वस्वमार्गे चलितुमनुमतिं दत्तवान्, तथापि आका- १७ शात् तोयवर्षणेन नानाप्रकारशस्योत्पत्त्या च युष्माकं हितैषी सन् भक्ष्यैरानन्देन च युष्माकम् अन्तःकरणानि तर्पयन् तानि दानानि निजसाक्षिस्वरूपाणि स्थापितवान्। किन्तु तादृशायां १८

कथायां कथितायामपि तयोः समीप उत्सर्जनात् लोकनिवहं प्रायेण निवर्त्तयितुं नाशक्नुताम् ।

१९ आन्तियखिया-इकनियनगराभ्यां कतिपयियिहूदीयलोका आगत्य लोकान् प्रावर्त्तयन्त तस्मात् ते पौलं प्रस्तरैराघ्नन् तेन स मृत इति विज्ञाय नगरस्य वहिस्तम् आकृष्य नीतवन्तः ।
२० किन्तु शिष्यगणे तस्य चतुर्दिक्षु तिष्ठति सति स स्वयम् उत्थाय पुनरपि नगरमध्यं प्राविशत् तत्परेऽहनि वर्णब्बासहितो
२१ दर्ब्बीनगरं गतवान् । तत्र सुसंवादं प्रचार्य्य बहुलोकान् शिष्यान् कृत्वा तौ लुस्त्राम् इकनियम् आन्तियखियाञ्च परावृत्य गतौ ।
२२ बहुदुःखानि भुक्त्वापीश्वरराज्यं प्रवेष्टव्यम् इति कारणाद् धर्म्म-मार्गे स्थातुं विनयं कृत्वा शिष्यगणस्य मनःस्थैर्य्यम् अकुरुतां ।
२३ मण्डलीनां प्राचीनवर्गान् नियुज्य प्रार्थनोपवासौ कृत्वा यत्-
२४ प्रभौ ते व्यश्वसन् तस्य हस्ते तान् समर्प्य पिसिदियामध्येन
२५ पाम्फुलियादेशं गतवन्तौ । पश्चात् पर्गानगरं गत्वा सुसंवादं
२६ प्रचार्य्य अत्तालियानगरं प्रस्थितवन्तौ । तस्मात् समुद्रपथेन गत्वा ताभ्यां यत् कर्म्म सम्पन्नं तत्कर्म्म साधयितुं यन्नगरे दया-लोरीश्वरस्य हस्ते समर्पितौ जातौ तद् आन्तियखियानगरं
२७ गतवन्तौ । तत्रोपस्थाय तन्नगरस्थमण्डलीं संगृह्य स्वाभ्याम ईश्वरो यद्यत् कर्म्माकरोत् तथा येन प्रकारेण भिन्नदेशीय-लोकान् प्रति विश्वासरूपद्वारम् अमोचयद् एतान् सर्व्ववृत्ता-
२८ न्तान् तान् ज्ञापितवन्तौ । ततस्तौ शिष्यैः सार्द्धं तत्र बहुदिनानि न्यवसताम् ।

# १५ पञ्चदशोऽध्यायः।

१ त्वक्छेदे विवादः ६ तस्मिन् प्रेरितानां मन्त्रणाविचारौ १२ त्वक्छेदिलोकेषु याकूबो विचारः २२ बर्णब्बापौलयो र्हस्तैः पत्रप्रेषणं ३० आन्तियखियायां तयो र्निवसनं ३६ विवादहेतोरुभयो र्विच्छेदश्च।

१ यिहूदादेशात् कियन्तो जना आगत्य भ्रातृगणमित्थं शिक्षितवन्तो मूसाव्यवस्थया यदि युष्माकं त्वक्छेदो न भवति तर्हि यूयं परित्राणं प्राप्तुं न शक्ष्यथ। २ पौलबर्णब्बौ तैः सह बहून् विचारान् विवादांश्च कृतवन्तौ, ततो मण्डलीयलोका एतस्याः कथायास्तत्त्वं ज्ञातुं यिरूशालम्नगरस्थान् प्रेरितान् प्राचीनांश्च प्रति पौलबर्णब्बाप्रभृतीन् कतिपयजनान् प्रेषयितुं निश्चयं कृतवन्तः। ३ ते मण्डल्या प्रेषिताः सन्तः फैणीकीशोमिरोन्देशाभ्यां गत्वा भिन्नदेशीयानां मनःपरिवर्त्तनस्य वार्त्तया भ्रातॄणां परमाह्लादम् अजनयन्। ४ यिरूशालम्युपस्थाय प्रेरितगणेन लोकप्राचीनगणेन समाजेन च समुपगृहीताः सन्तः स्वैरीश्वरो यानि कर्म्माणि कृतवान् तेषां सर्व्ववृत्तान्तान् तेषां समक्षम् अकथयन्। ५ किन्तु विश्वासिनः कियन्तः फिरूशिमतग्राहिणो लोका उत्थाय कथामेतां कथितवन्तो भिन्नदेशीयानां त्वक्छेदं कर्त्तुं मूसाव्यवस्थां पालयितुञ्च समादेष्टव्यम्।

६ ततः प्रेरिता लोकप्राचीनाश्च तस्य विवेचनां कर्त्तुं सभायां स्थितवन्तः। ७ बहुविचारेषु जातेषु पितर उत्थाय कथितवान्, हे भ्रातरो यथा भिन्नदेशीयलोका मम मुखात् सुसंवादं श्रुत्वा विश्वसन्ति तदर्थं बहुदिनात् पूर्व्वम् ईश्वरोऽस्माकं मध्ये मां वृत्वा नियुक्तवान्। ८ अन्तर्य्यामीश्वरो यथास्मभ्यं तथा भिन्नदेशीयेभ्यः पवित्रमात्मानं प्रदाय विश्वासेन तेषाम् अन्तःकरणानि पवित्राणि कृत्वा ९ तेषाम् अस्माकञ्च मध्ये किमपि विशेषं

न स्थापयित्वा तानधि स्वयं प्रमाणं दत्तवान् इति यूयं जानीथ।
१० अतएवास्माकं पूर्व्वपुरुषा वयञ्च स्वयं यद्युगस्य भारं सोढुं
न शक्ताः सम्प्रति तं शिष्यगणस्य स्कन्धेषु न्यसितुं कुत ईश्वरस्य
११ परीक्षां करिष्यथ? प्रभो यीशुख्रीष्टस्यानुग्रहेण ते यथा
वयमपि तथा परित्राणं प्राप्तुम् आशां कुर्म्मः।

१२ अनन्तरं बर्णब्बापौलाभ्याम् ईश्वरो भिन्नदेशीयानां मध्ये
यद्यद् आश्चर्य्यम् अद्भुतञ्च कर्म्म कृतवान् तद्वृत्तान्तं तौ स्वमु-
खाभ्याम् अवर्णयतां सभास्थाः सर्व्वे नीरवाः सन्तः श्रुतवन्तः।
१३ तयोः कथायां समाप्तायां सत्यां याकूब् कथयितुम् आरब्ध-
१४ वान् हे भ्रातरो मम कथायाम् मनो निधत्त। ईश्वरः
स्वनामार्थं भिन्नदेशीयलोकानाम् मध्याद् एकं लोकसंघं
ग्रहीतुं मतिं कृत्वा येन प्रकारेण प्रथमं तान् प्रति कृपावलोकनं
१५ कृतवान् तं शिमोन् वर्णितवान्। भविष्यद्वादिभिरुक्तानि यानि
वाक्यानि तैः सार्द्धम् एतस्यैक्यं भवति यथा लिखितमास्ते।

१६ सर्व्वेषां कर्म्मणां यस्तु साधकः परमेश्वरः।
स एवेदं वदेद्वाक्यं शेषाः सकलमानवाः।
भिन्नदेशीयलोकाश्च यावन्तो मम नामतः।
भवन्ति हि सुविख्यातास्ते यथा परमेशितुः।
१७ तत्त्वं सम्यक् समीहन्ते तन्निमित्तमहं किल।
परावृत्य समागत्य दायूदः पतितं पुनः।
दूष्यमुत्थापयिष्यामि तदीयं सर्व्ववस्तु च।
पतितं पुनरुत्थाप्य सज्जयिष्यामि सर्व्वथा॥

१८ आ प्रथमाद् ईश्वरः स्वीयानि सर्व्वकर्म्माणि जानाति। अत-
१९ एव मम निवेदनमिदं भिन्नदेशीयलोकानां मध्ये ये जना

ईश्वरं प्रति परावर्त्तन्त तेषामुपरि अन्यं कमपि भारं न न्यस्य देवताप्रसादाशुचिभक्ष्यं व्यभिचारकर्म्म कण्ठसम्पीडनमारित- २० प्राणिभक्ष्यं रक्तभक्ष्यञ्च एतानि परित्यक्तुं लिखामः। यतः २१ पूर्व्वकालतो मूसाव्यवस्थाप्रचारिणो लोका नगरे नगरे सन्ति प्रतिविश्रामवारञ्च भजनभवने तस्याः पाठो भवति।

ततः परं प्रेरितगणो लोकप्राचीनगणः सर्व्वा मण्डली च २२ तेषां मध्ये बर्शब्बा नाम्ना विख्यातो यो यिहूदाः सीलञ्च भ्रातृगणमध्ये मुख्यौ द्वावेतौ जनौ मनोनीतौ कृत्वा पौलबर्ण- ब्बाभ्यां सार्द्धम् आन्तियखियानगरं प्रति प्रेषणम् उचितं बुद्धा ताभ्यां पत्रं प्रेषयन्। तस्मिन् पत्रे लिखितमिदं, आ- २३ न्तियखिया-सुरिया-किलिकियादेशस्थभिन्नदेशीयभ्रातृगणाय प्रेरितगणस्य लोकप्राचीनगणस्य भ्रातृगणस्य च नमस्कारः। विशेषतोऽस्माकम् आज्ञाम् अप्राप्यापि कियन्तो जना अस्माकं २४ मध्याद् गत्वा त्वक्छेदो मूसाव्यवस्था च पालयितव्याविति युष्मान् शिक्षयित्वा युष्माकं मनसामस्थैर्य्यं कृत्वा युष्मान् ससन्दे- हान् अकुर्व्वन् एतां कथां वयम् अशृन्म। तत्कारणाद् वयम् २५ एकमन्त्रणाः सन्तः सभायां स्थित्वा प्रभो र्यीशुख्रीष्टस्य नाम- निमित्तं मृत्युमुखगताभ्यामस्माकं प्रियबर्णब्बापौलाभ्यां सार्द्धं २६ मनोनीतलोकानां केषाञ्चिद् युष्माकं सन्निधौ प्रेषणम् उचितं बुद्धवन्तः। अतो यिहूदासीलौ युष्मान् प्रति प्रेषितवन्तः, २७ एतयो र्मुखाभ्यां सर्व्वां कथां ज्ञास्यथ। देवताप्रसादभक्ष्यं २८ रक्तभक्ष्यं गलपीडनमारितप्राणिभक्ष्यं व्यभिचारकर्म्म चेमानि सर्व्वाणि युष्माभिस्त्याज्यानि; एतत्प्रयोजनीयाज्ञाव्यतिरेकेन २९ युष्माकम् उपरि भारमन्यं न न्यसितुं पवित्रस्यात्मनोऽस्माकञ्च

उचितज्ञानम् अभवत्। अतएव तेभ्यः सर्व्वेभ्यः स्वेषु रक्षितेषु यूयं भद्रं कर्म्म करिष्यथ। युष्माकं मङ्गलं भूयात्।

३० ते विसृष्टाः सन्त आन्तियखियानगर उपस्थाय लोक-
३१ निवहं संगृह्य पत्रम् अददन्। ततस्ते तत्पत्रं पठित्वा सान्त्वनां
३२ प्राप्य सानन्दा अभवन्। यिहूदासीलौ च स्वयं प्रचारकौ भूत्वा भ्रातृगणं नानोपदिश्य तान् सुस्थिरान् अकुरुताम्।
३३ इत्थं तौ तत्र तैः साकं कतिपयदिनानि यापयित्वा पश्चात् प्रेरितानां समीपे प्रत्यागमनार्थं तेषां सन्निधेः कल्याणेन विसृ-
३४ ष्टावभवतां। किन्तु सीलस्तत्र स्थातुं वाञ्छितवान्। अपरं
३५ पौलबर्णब्बौ बहवः शिष्याश्च लोकान् उपदिश्य प्रभोः सुसंवादं प्रचारयन्त आन्तियखियायां कालं यापितवन्तः।

३६ कतिपयदिनेषु गतेषु पौलो बर्णब्बाम् अवदत् आगच्छावां येषु नगरेष्वीश्वरस्य सुसंवादं प्रचारितवन्तौ तानि सर्व्वनगराणि पुनर्गत्वा भ्रातरः कीदृशाः सन्तीति द्रष्टुं तान् साक्षात्
३७ कुर्व्वः। तेन मार्कनाम्ना विख्यातं योहनं सङ्गिनं कर्त्तुं
३८ बर्णब्बा मतिमकरोत्; किन्तु स पूर्व्वं ताभ्यां सह कार्य्यार्थं न गत्वा पाम्फूलियादेशे तौ त्यक्तवान् तत्कारणात् पौलस्तं सङ्गिनं
३९ कर्त्तुम् अनुचितं ज्ञातवान्। इत्थं तयोरतिशयविरोधस्योपस्थितत्वात् तौ परस्परं पृथगभवतां ततो बर्णब्बा मार्कं
४० गृहीत्वा पोतेन कुप्रोपद्वीपं गतवान्; किन्तु पौलः सीलं मनोनीतं कृत्वा भ्रातृभिरीश्वरानुग्रहे समर्पितः सन् प्र-
४१ स्थाय सुरियाकिलिकियादेशाभ्यां मण्डलीः स्थिरीकुर्व्वन् अगच्छत्।

---

# १६ षोडशोऽध्यायः।

१ तीमथियस्य त्वक्छेदः ६ फिलिपीनगरं प्रति पौलस्य गमनं १२ लुदियानाम्नः स्त्रियाः मनःपरिवर्त्तनमज्जनं १६ पौलेन गणकभूतग्रस्तकन्यायाः स्वस्थता तत्कारणात् तदधिपतीनां क्रोधः २५ तस्मात् पौलसीलयोः कारावन्धनं काराराक्षकस्य मनःपरिवर्त्तनं मज्जनञ्च २५ पौलसीलयोः कारातो मोचनञ्च।

पौलो दर्व्वीलुस्त्रानगरयोरुपस्थितोभवत् तत्र तीमथिय- १ नामा शिष्य एक आसीत्; स विश्वासिन्या यिहूदीयाया योषितो गर्भजातः किन्तु तस्य पितान्यदेशीयलोकः। स जनो २ लुस्त्रा-इकनियनगरस्थानां भ्रातृणां समीपेपि सुख्यातिमान् आसीत्। पौलस्तं स्वसङ्गिनं कर्त्तुं मतिं कृत्वा तं गृहीत्वा तद्देश- ३ निवासिनां यिहूदीयानाम् अनुरोधात् तस्य त्वक्छेदं कृतवान् यतस्तस्य पिता भिन्नदेशीयलोक इति सर्व्वैरज्ञायत। ततः ४ परं ते नगरे नगरे भ्रमित्वा यिरूशालमस्थैः प्रेरितै र्लोकप्राचीनैश्च निरूपितं यद् व्यवस्थापत्रं तदनुसारेणाचरितुं लोकेभ्यस्तद् दत्तवन्तः। तेनैव सर्व्वे धर्म्मसमाजाः ख्रीष्टधर्म्मे ५ सुस्थिराः सन्तः प्रतिदिनं वर्द्धिता अभवन्।

तेषु फ्रुगियागालातियादेशमध्येन गतेषु सत्सु पवित्र आत्मा ६ तान् आशियादेशे कथां प्रकाशयितुं प्रतिषिद्धवान्। तथा ७ मुसियादेश उपस्थाय बिथुनियां गन्तुं तैरुद्योगे कृते आत्मा तान् नान्वमन्यत। तस्मात् ते मुसियादेशं परित्यज्य त्रोयानगरं गत्वा ८ समुपस्थिताः। रात्रौ पौलः स्वप्ने दृष्टवान् एको माकिदनिय- ९ लोकस्तिष्ठन् विनयं कृत्वा तस्मै कथयति, माकिदनियादेशम् आगत्यास्मान् उपकुर्व्विति। तस्येत्थं स्वप्नदर्शनात् प्रभुस्तद्देशीय- १० लोकान् प्रति सुसंवादं प्रचारयितुम् अस्मान् आहूयतीति निश्चितं बुद्ध्वा वयं तूर्णं माकिदनियादेशं गन्तुम् उद्योगम् अकुर्म्म।

११ ततः परं वयं त्रोयानगराद् प्रस्थाय ऋजुमार्गेण सामथ्रा-
क्रियोपद्वीपेन गत्वा परेऽहनि नियापलिनगर उपस्थिताः।
१२ तस्माद् गत्वा माकिदनियान्तर्व्वर्त्ति रोमीयवसतिस्थानं यत्
फिलिपीनामप्रधाननगरं तत्रोपस्थाय कतिपयदिनानि तत्र
१३ स्थितवन्तः। विश्रामवारे नगराद् वहि र्गत्वा नदीतटे यत्र
प्रार्थनाचार आसीत् तत्रोपविश्य समागता नारीः प्रति कथां
१४ प्राचारयाम। ततः थुयातीरानगरीया धूषराम्बरविक्रायिणी
लुदियानामिका या ईश्वरसेविका योषित् श्रोत्रीणां मध्य
आसीत् तया पौलोक्तवाक्यानि यद् गृह्यन्ते तदर्थं प्रभुस्तस्या
१५ मनोद्वारं मुक्तवान्। अतः सा योषित् सपरिवारा मज्जिता
सती विनयं कृत्वा कथितवती, युष्माकं विचाराद् यदि प्रभौ
विश्वासिनी जाताहं तर्हि मम गृहम् आगत्य तिष्ठत। इत्थं
सा यत्नेनास्मान् अस्थापयत्।

१६ यस्या गणनया तदधिपतीनां बहुधनोपार्जनं जातं तादृशी
गणकभूतग्रस्ता काचन दासी प्रार्थनास्थानगमनकाल आग-
१७ त्यास्मान् साक्षात् कृतवती। सास्माकं पौलस्य च पश्चाद् एत्य
प्रोच्चैः कथामिमां कथितवती, मनुष्या एते सर्व्वोपरिस्थस्येश्व-
रस्य सेवकाः सन्तोऽस्मान् प्रति परित्राणस्य मार्गं प्रकाशयन्ति।
१८ सा कन्या बहुदिनानि तादृशम् अकरोत् तस्मात् पौलो
दुःखितः सन् मुखं परावर्त्य तं भूतमवदद्, अहं यीशुख्रीष्टस्य
नाम्ना त्वामाज्ञापयामि त्वमस्या वहिर्गच्छ; तेनैव तत्क्षणात्
१९ स भूतस्तस्या वहिर्गतः। ततः स्वेषां लाभस्य प्रत्याशा विफला
जातेति विलोक्य तस्याः प्रभवः पौलं सीलञ्च धृत्वाकृष्य विचा-
२० रस्थानेऽधिपतीनां समीपम् आनयन्। ततः शासकानां

निकटं नीत्वा, रोमिलोका वयम् अस्माकं यद् व्यवहरणं ग्रही- २१
तुम् आचरितुञ्च निषिद्धं, इमे यिहूदीयलोकाः सन्तोपि
तदेव शिक्षयित्वा नगरेऽस्माकम् अतीव कलहं कुर्व्वन्ति, इति २२
कथिते सति लोकनिवहस्तयोः प्रातिकूल्येनोदतिष्ठत् तथा
शासकास्तयो र्वस्त्राणि छित्त्वा वेत्राघातं कर्त्तुम् आज्ञापयन्।
अपरं ते तौ बहु प्रहार्य्य त्वमेतौ कारां नीत्वा सावधानं रक्ष- २३
येति कारारक्षकम् आदिशन्। इत्थम् आज्ञां प्राप्य स तावभ्य- २४
न्तरस्थकारां नीत्वा पादेषु पादपाशीभि र्बद्ध्वा स्थापितवान्।

अथ निशीथसमये पौलसीलावीश्वरमुद्दिश्य प्रार्थनां गानञ्च २५
कृतवन्तौ, कारास्थिता लोकाश्च तदशृण्वन् तदाकस्मात् २६
महान् भूमिकम्पोऽभवत् तेन भित्तिमूलेन सह कारा कम्पि-
ताभूत् तत्क्षणात् सर्व्वाणि द्वाराणि मुक्तानि जातानि सर्व्वेषां
बन्धनानि च मुक्तानि। अतएव कारारक्षको निद्रातो जाग- २७
रित्वा काराया द्वाराणि मुक्तानि दृष्ट्वा वन्दिलोकाः पलायिता
इत्यनुमाय कोषात् खड्गं वहिः कृत्वात्मघातं कर्त्तुम् उद्यतः।
किन्तु पौलः प्रोच्चैस्तमाहूय कथितवान् पश्य वयं सर्व्वेऽत्रा- २८
स्महे, त्वं निजप्राणहिंसां माकार्षीः। तदा प्रदीपम् आनेतुम् २९
उक्त्वा स कम्पमानः सन् उल्लम्फ्याभ्यन्तरम् आगत्य पौलसी-
लयोः पादेषु पतितवान्। पश्चात् स तौ वहिरानीय पृष्टवान् ३०
हे महेच्छौ परित्राणं प्राप्तुं मया किं कर्त्तव्यं? ततस्तौ कथि- ३१
तवन्तौ प्रभौ यीशुख्रीष्टे विश्वसिहि तेनैव त्वं सपरिवारः
परित्राणं प्राप्स्यसि। तस्मै तस्य गृहस्थितसर्व्वलोकेभ्यश्च प्रभोः ३२
कथां कथितवन्तौ। तथा रात्रेस्तस्मिन्नेव दण्डे स तौ गृहीत्वा ३३
तयोः प्रहाराणां क्षतानि प्रक्षालितवान् ततः स स्वयं तस्य

३४ सर्व्वे परिजनाश्च मज्जिता अभवन्। पश्चात् तौ स्वगृहमानीय तयोः सम्मुखे खाद्यद्रव्याणि स्थापितवान् तथा स स्वयं तदीयाः सर्व्वे परिवाराश्चेश्वरे विश्वसन्तः सानन्दिता अभवन्।

३५ दिन उपस्थिते तौ लोकौ मोचयेति कथां कथयितुं ३६ शासकाः पदातिगणं प्रेषितवन्तः। ततः काररक्षकः पौलाय तां वार्त्तां कथितवान् युवां त्याजयितुं शासका लोकान् प्रेषितवन्त इदानीं युवां बहि र्भूत्वा कुशलेन प्रतिष्ठेतां।

३७ किन्तु पौलस्तान् अवदत् रोमिलोकयोरावयोः कमपि दोषम् न निश्चित्य सर्व्वेषां समक्षम् आवां कशया ताडयित्वा कारायां बद्धवन्त इदानीं किमावां गुप्तं विस्रक्ष्यन्ति? तन्न भवि-

३८ ष्यति, स्वयमागत्यावां बहिः कृत्वा नयन्तु। तदा पदातिभिः शासकेभ्य एतद्वार्त्तायां कथितायां तौ रोमिलोकाविति

३९ कथां श्रुत्वा ते भीताः सन्तस्तयोः सन्निधिमागत्य विनयम् अकुर्व्वन् अपरं बहिः कृत्वा नगरात् प्रस्थातुं प्रार्थितवन्तः।

४० ततस्तौ काराया निर्गत्य लुदियाया गृहं गतवन्तौ तत्र भ्रातृगणं साक्षात्कृत्य तान् सान्त्वयित्वा तस्मात् स्थानात् प्रस्थितौ।

---

## १७ सप्तदशोऽध्यायः।

१ थिषलनीकीनगरे पौलेन ख्रीष्टस्य कथा प्रचारः कतिपयलोकानां विश्वासस्तदन्येषां विरोधः १० पौलसीलयो र्बिरयानगरगमनं ख्रीष्टस्य कथा प्रचारणात् ताडितत्वं १६ आथीनीनगराय पौलस्य गमनं लोकैः सह विचारः २१ आरेयपागे ख्रीष्टस्य कथाप्रचारणं कियतां लोकानामुपहासः कियतां विश्वसनञ्च।

१ पौलसीलौ आम्फिपल्यापल्लोनियानगराभ्यां गत्वा यत्र यिहूदीयानां भजनभवनमेकम् आस्ते तत्र थिषलनीकीनगर

२ उपस्थितौ। तदा पौलः स्वाचारानुसारेण तेषां समीपं गत्वा

विश्रामवारत्रये तैः सार्द्धं धर्म्मपुस्तकीयकथाया विचारं कृतवान्। फलतः ख्रीष्टेन दुःखभोगः कर्त्तव्यः श्मशानादुत्थानञ्च ३ कर्त्तव्यं युष्माकं सन्निधौ यस्य यीशोः प्रस्तावं करोमि स ईश्वरेणाभिषिक्तः स एताः कथाः प्रकाश्य प्रमाणं दत्त्वा स्थिरीकृतवान्। तस्मात् तेषां कतिपयजना अन्यदेशीया बहवो भक्त- ४ लोका बह्व्यः प्रधाननार्य्यश्च विश्वस्य पौलसीलयोः पश्चाद्गामिनो जाताः। किन्तु विश्वासहीना यिहूदीयलोका ईर्ष्यया परि- ५ पूर्णाः सन्तो हट्टस्य कतिपयलम्पटलोकान् सङ्गिनः कृत्वा जनतया नगरमध्ये महाकलहं कृत्वा यासोनो गृहम् आक्रम्य प्रेरितान् धृत्वा लोकनिवहस्य समीपम् आनेतुं चेष्टितवन्तः। तेषामुद्देशम् अप्राप्य च यासोनं कतिपयान् भ्रातृंश्च धृत्वा ६ नगराधिपतीनां निकटमानीय प्रोच्चैः कथितवन्तो ये मनुष्या जगदुद्वाटितवन्तस्ते ऽत्राप्युपस्थिताः सन्ति, एष यासोन् आतिथ्यं ७ कृत्वा तान् गृहीतवान्। यीशुनामक एको राजास्तीति कथयन्तस्ते कैसरस्याज्ञाविरुद्धं कर्म्म कुर्व्वन्ति। तेषां कथामिमां ८ श्रुत्वा लोकनिवहो नगराधिपतयश्च समुद्विग्ना अभवन्। तदा ९ यासोनस्तदन्येषाञ्च धनदण्डं गृहीत्वा तान् परित्यक्तवन्तः।

ततः परं भ्रातृगणो रजन्यां पौलसीलौ शीघ्रं बिरया- १० नगरं प्रेषितवान् तौ तत्रोपस्थाय यिहूदीयानां भजनभवनं गतवन्तौ। तत्रस्था लोकाः थिषलनीकीस्थलोकेभ्यो महात्मान ११ आसन् यत इत्थं भवति न वेति ज्ञातुं दिने दिने धर्म्मग्रन्थस्यालोचनां कृत्वा स्वैरं कथाम् अगृह्लन्। तस्माद् अनेके यिहूदीया १२ अन्यदेशीयानां मान्या स्त्रियः पुरुषाश्चानेके व्यश्वसन्। किन्तु बि- १३ रयानगरे पौलेनेश्वरीया कथा प्रचार्य्यत इति थिषलनीकीस्था

यिहूदीया ज्ञात्वा तत्स्थानमप्यागत्य लोकानां कुप्रवृत्तिम्
१४ अजनयन् । अतएव तस्मात् स्थानात् समुद्रेण यान्तीति दर्श-
यित्वा भ्रातरः क्षिप्रं पौलं प्राहिण्वन् किन्तु सीलतीमथियौ
१५ तत्र स्थितवन्तौ । ततः परं पौलस्य मार्गदर्शकास्तम् आथीनी-
नगर उपस्थापयन् पश्चाद् युवां तूर्णम् एतत् स्थानं आगमि-
ष्यथः सीलतीमथियौ प्रतीमाम् आज्ञां प्राप्य ते प्रत्यागताः ।
१६ पौल आथीनीनगरे तावपेक्ष्य तिष्ठन् तन्नगरं प्रतिमाभिः
१७ परिपूर्णं दृष्ट्वा सन्तप्तहृदयो ऽभवत् । ततः स भजनभवने यान्
यिहूदीयान् भक्तलोकांश्च हट्टे च यान् अपश्यत् तैः सह
१८ प्रतिदिनं विचारितवान् । किन्त्विपिकूरीयमतग्राहिणः स्तोयि-
कीयमतग्राहिणश्च कियन्तो जनास्तेन सार्द्धं व्यवदन्त । तत्र
केचिद् अकथयन् एष वाचालः किं वक्तुम् इच्छति? अपरे
केचिद् अवदन् एष जनः केषाञ्चिद् विदेशीयदेवानां प्रचारक
१९ इत्यनुमीयते यतः स यीशुम् उत्थितिञ्च प्राचारयत् । ते तम्
अरेयपागनाम विचारस्थानम् आनीय प्रावोचन् इदं यन्नवीनं
२० मतं त्वं प्राचीकश इदं कीदृशं एतद् अस्मान् आवय; यामि-
माम् असम्भवकथाम् अस्माकं कर्णगोचरीकृतवान् अस्या
२१ भावार्थः क इति वयं ज्ञातुम् इच्छामः । तदाथीनीनिवासि-
नस्तन्नगरप्रवासिनश्च केवलं कस्याश्चन नवीनकथायाः श्रवणेन
प्रचारणेन च कालम् अयापयन् ।

२२ पौलोऽरेयपागस्य मध्ये तिष्ठन् एतां कथां प्रचारितवान,
हे आथीनीयलोका यूयं सर्व्वथा देवपूजायाम् आसक्ता इत्यह
२३ प्रत्यक्षं पश्यामि । यतः पर्य्यटनकाले युष्माकं पूजनीयानि पश्यन्
'अविज्ञातेश्वराय' एतल्लिपियुक्तां यज्ञवेदीमेकां दृष्टवान्;

अतो न विदित्वा यं पूजयध्वे तस्यैव तत्त्वं युष्मान् प्रति प्रचा-
रयामि। जगतो जगत्स्थानां सर्व्ववस्तूनाञ्च स्रष्टा य ईश्वरः २४
स स्वर्गपृथिव्योरेकाधिपतिः सन् करनिर्म्मितमन्दिरेषु न निव-
सति; स एव सर्व्वेभ्यो जीवनं प्राणान् सर्व्वसामग्रीश्च प्रददाति; २५
अतएव स कस्याश्चित् सामग्र्या अभावहेतो र्मनुष्याणां हस्तैः
सेवितो भवतीति न। स भूमण्डले निवासार्थम् एकस्मात् २६
शोणितात् सर्व्वान् मनुष्यान् सृष्ट्वा तेषां पूर्व्वनिरूपितसमयं
वसतिसीमाञ्च निरचिनोत्; तस्मात् लोकैः केनापि प्रकारेण २७
मृगयित्वा परमेश्वरस्य तत्त्वं प्राप्तुं तस्य गवेषणं करणीयम्।
किन्तु सोऽस्माकं कस्माच्चिदपि दूरे तिष्ठतीति नहि, वयं तेन २८
निश्वसनप्रश्वसनगमनागमनप्राणधारणानि कुर्म्मः, पुनश्च युष्मा-
कमेव कतिपयाः कवयः कथयन्ति 'तस्य वंशा वयं स्मो हि'
इति। अतएव यदि वयम् ईश्वरस्य वंशा भवामस्तर्हि मनुष्यै २९
र्विद्यया कौशलेन च तक्षितं स्वर्णं रूप्यं दृषद् वैतेषामीश्वरत्वम्
अस्माभि र्न ज्ञातव्यं। तेषां पूर्व्वीयलोकानाम् अज्ञानतां प्रती- ३०
श्वरो यद्यपि नावाधत्त तथापीदानीं सर्व्वत्र सर्व्वान् मनः परि-
वर्त्तयितुम् आज्ञापयति, यतः स्वनियुक्तेन पुरुषेण यदा स ३१
पृथिवीस्थानां सर्व्वलोकानां विचारं करिष्यति तद्दिनं न्यरूप-
यत्; तस्य श्मशानोत्थापनेन तस्मिन् सर्व्वेभ्यः प्रमाणं प्रादात्।
तदा श्मशानाद् उत्थानस्य कथां श्रुत्वा केचिद् उपाहसन्, ३२
केचिदवदन् एनां कथां पुनरपि त्वत्तः श्रोष्यामः। ततः ३३
पौलस्तेषां समीपात् प्रस्थितवान्। तथापि केचिल्लोकास्तेन ३४
सार्द्धं मिलित्वा व्यश्वसन् तेषां मध्ये ऽरेयपागीयदियनुसियो
दामारीनामा काचिन्नारी कियन्तो नराश्चासन्।

# १८ अष्टादशोऽध्यायः ।

१ पौलस्य करिन्थनगरगमनं श्रमणन् ईश्वरकथाप्रचारणं १२ गाल्लियनः समीपेऽपवादितस्यापि तस्य मुक्तिः १८ नानानगराणि गत्वा शिष्याणां स्थैर्य्यकरणं १४ आपल्लसः कथा च ।

१ तद्घटनातः परं पौल आथीनीनगराद् यात्रां कृत्वा करि-
२ न्थनगरम् आगच्छत् । तस्मिन् समये क्लौदियः सर्व्वान् यिहूदीयान् रोमानगरं विहाय गन्तुम् आज्ञापयत्, तस्मात् प्रिस्किल्लानाम्ना जायया सार्द्धम् इतालियादेशात् किञ्चित्पूर्व्वम् आगमत् यः पन्तदेशे जात आक्किलनामा यिहूदीयलोकः
३ पौलस्तं साक्षात् प्राप्य तयोः समीपमितवान् । तौ दूष्यनिर्म्माणजीविनौ, तस्मात् परस्परम् एकवृत्तिकत्वात् स ताभ्यां
४ सह उषित्वा तत् कर्म्माकरोत् । पौलः प्रतिविश्रामवारं भजनभवनं गत्वा विचारं कृत्वा यिहूदीयान् अन्यदेशीयांश्च प्रवृत्तिं
५ ग्राहितवान् । सीलतीमथियथो र्माकिदनियादेशात् समेतयोः सतोः पौल उत्तप्तमना भूत्वा यीशुरीश्वरेणाभिषिक्तो भव-
६ तीति प्रमाणं यिहूदीयानां समीपे प्रादात् । किन्तु तेऽतीव विरोधं विधाय पाषण्डीयकथां कथितवन्तस्ततः पौलो वस्त्रं धुन्वन् एतां कथां कथितवान्, युष्माकं शोणितपातापराधो युष्मान् प्रत्येव भवतु, तेनाहं निरपराधो ऽद्यारभ्य भिन्नदेशी-
७ यानां समीपं यामि । स तस्मात् प्रस्थाय भजनभवनसमीपस्थस्य
८ युस्तनाम्न ईश्वरभक्तस्य भिन्नदेशीयस्य निवेशनं प्राविशत् । ततः क्रीष्पनामा भजनभवनाधिपतिः सपरिवारः प्रभौ व्यश्वसीत्, करिन्थनगरीया बहवो लोकाश्च समाकर्ण्य विश्वस्य मज्जिता
९ अभवन् । क्षणदायां प्रभुः पौलं दर्शनं दत्त्वा भाषितवान्, मा
१० भैषीः, मा निरसीः कथां प्रचारय । अहं त्वया सार्द्धम् आस

हिंसार्थं कोपि त्वां स्प्रष्टुं न शक्ष्यति नगरेऽस्मिन् मदीया लोका बहव आसते। तस्मात् पौलस्तन्नगरे प्रायेण सार्द्ध-११ वत्सरपर्य्यन्तं संस्थायेश्वरस्य कथाम् उपादिशत्।

गाल्लियनामा कश्चिद् आखायादेशस्य प्राड्विवाकः सम-१२ भवत्, ततो यिहूदीया एकवाक्याः सन्तः पौलम् आक्रम्य विचारस्थानं नीत्वा मानुष एष व्यवस्थाया विरुद्धम् ईश्वर-१३ भजनं कर्त्तुं लोकान् कुप्रवृत्तिं ग्राहयतीति निवेदितवन्तः। ततः पौले प्रत्युत्तरं दातुम् उद्यते सति गाल्लिया यिहूदीयान् १४ व्याहरत्, यदि कस्यचिद् अन्यायस्य वातिशयदुष्टताचरणस्य विचारोऽभविष्यत् तर्हि युष्माकं कथा मया सहनीयाभविष्यत्। किन्तु यदि केवलं कथाया वा नाम्नो वा युष्माकं व्यवस्थाया १५ विवादो भवति तर्हि तस्य विचारमहं न करिष्यामि, यूयं तस्य मीमांसां कुरुत। ततः स तान् विचारस्थानाद् दूरीकृतवान्। १६ तदा भिन्नदेशीयाः सोस्थिनिनामानं भजनभवनस्य प्रधानाधि-१७ पतिं धृत्वा विचारस्थानस्य सम्मुखे प्राहरन् तथापि गाल्लिया तेषु सर्व्वकर्म्मसु न मनो न्यदधात्।

पौलस्तत्र पुनर्बहुदिनानि न्यवसत्, ततो भ्रातृगणाद् विस-१८ र्जनं प्राप्य किञ्चनव्रतनिमित्तं किंक्रियानगरे शिरो मुण्डयित्वा प्रिस्किल्लाक्किलाभ्यां सहितो जलपथेन सुरियादेशं गतवान्। तत इफिषनगर उपस्थाय तत्र तौ विसृज्य स्वयं भजनभवनं १९ प्रविश्य यिहूदीयैः सह विचारितवान्। ते स्वैः सार्द्धं पुनः २० कतिपयदिनानि स्थातुं तं व्यनयन्, स तदनुररीकृत्य कथामेतां कथितवान्, यिरूशालमि आगाम्युत्सवपालनार्थं मया गमनीयं; २१ पश्चाद् ईश्वरेच्छायां जातायां युष्माकं समीपं प्रत्यागमि-

ष्यामि। ततः परं स तै र्विसृष्टः सन् जलपथेन इफिषनगरात्
२२ प्रस्थितवान्। ततः कैसरियाम् उपस्थितः सन् नगरं गत्वा
समाजं नमस्कृत्य तस्माद् आन्तियखियानगरं प्रस्थितवान्।
२३ तत्र कियत्कालं यापयित्वा तस्मात् प्रस्थाय सर्व्वेषां शिष्याणां
मनांसि सुस्थिराणि कृत्वा क्रमशो गलातियाफ्रुगियादेशयो
र्भ्रमित्वा गतवान्।

२४ तस्मिन्नेव समये सिकन्दरियानगरे जात आपल्लोनामा शास्त्र-
वित् सुवक्ता यिहूदीय एको जन इफिषनगरम् आगतवान्।
२५ स शिक्षितप्रभुमार्गो मनसोद्योगी च सन् योहनो मज्जनमात्रं
ज्ञात्वा यथार्थतया प्रभोः कथां कथयन् समुपादिशत्।
२६ एष जनो निर्भयत्वेन भजनभवने कथयितुम् आरब्धवान्,
ततः प्रिस्किल्लाक्किलौ तस्योपदेशकथां निशम्य तं स्वयोः समी-
२७ पम् आनीय शुद्धरूपेणेश्वरस्य कथाम् अबोधयताम्। पश्चात्
स आखायादेशं गन्तुं मतिं कृतवान्, तदा तत्रत्यः शिष्यगणो
यथा तं गृह्णाति तदर्थं भ्रातृगणेन समाश्वस्य पत्रे लिखिते
सति, आपल्लास्तत्रोपस्थितः सन् अनुग्रहेण प्रत्ययिनां बहूप-
२८ कारान् अकरोत्, फलतो यीशुरभिषिक्तस्त्रातेति शास्त्र-
प्रमाणं दत्त्वा प्रकाशरूपेण प्रतिपन्नं कृत्वा यिहूदीयान् निरु-
त्तरान् कृतवान्।

---

## १९ ऊनविंशोऽध्यायः।

१ पौलद्वारा द्वादशजनेभ्यः पवित्रात्मदानं ८ अनेकलोकानां विश्वसनं पौलेन
निवेदनं बहुलोकानां स्वास्थ्यं १३ अपवित्रभूतेन स्किवपुत्त्राणां क्षतत्त्वतत्व
मायाविद्यायाः पुस्तकानां दग्धत्वं २१ पौलस्य विरुद्धं दीमोत्रियस्वर्णकारस्य
कलहः नगराधिपतिभिस्तस्य निवारणञ्च।

१　करिन्थनगर आपल्लसः स्थितिकाले पौल उत्तरप्रदेशैराग-

च्छन् दक्षिणनगरम् उपस्थितवान्। तत्र कतिपयशिष्यान्
साक्षात् प्राप्य तान् अपृच्छत्, यूयं विश्वस्य पवित्रमात्मानं प्राप्ता २
न वा? ततस्ते प्रत्यवदन् पवित्र आत्मा दीयते इत्यस्माभिः श्रुत-
मपि नहि। तदा सोऽवदत् तर्हि यूयं केन मज्जिता अभवत? ३
तेऽकथयन् योहनो मज्जनेन। तदा पौल उक्तवान् इतः परं य ४
उपस्थास्यति तस्मिन् अर्थत यीशुख्रीष्टे विश्वसितव्यमित्युक्त्वा
योहन् मनःपरिवर्त्तनसूचकेन मज्जनेन जले लोकान् अम-
ज्जयत्। तादृशीं कथां श्रुत्वा ते प्रभो र्यीशुख्रीष्टस्य नाम्ना ५
मज्जिता अभवन्। ततः पौलेन तेषां गात्रेषु करेऽर्पिते तेषा- ६
मुपरि पवित्र आत्मावरूढवान्, तस्मात् ते नानादेशीया भाषा
भविष्यत्कथाश्च कथितवन्तः। ते प्रायेण द्वादशजना आसन्। ७

पौलो भजनभवनं गत्वा प्रायेण मासत्रयम् ईश्वरस्य राज्यस्य ८
विचारं कृत्वा लोकान् प्रवर्त्त्य साहसेन कथामकथयत्। किन्तु ९
कठिनान्तःकरणत्वात् कियन्तो जना न विश्वस्य सर्व्वेषां सम-
क्षम् एतत्पथस्य निन्दां कर्त्तुं प्रवृत्ताः; अतः पौलस्तेषां समी-
पात् प्रस्थाय शिष्यगणं पृथक्कृत्वा प्रत्यहं तुरान्ननाम्नः कस्यचित्
जनस्य पाठशालायां विचारं कृतवान्। इत्थं वत्सरद्वयं गतं १०
तस्माद् आशियादेशनिवासिनः सर्व्वे यिहूदीया अन्यदेशीय-
लोकाश्च प्रभो र्यीशोः कथाम् अश्रौषन्। पौलेन च ईश्वर ११
एतादृशान्यद्भुतानि कर्म्माणि कृतवान् यत् परिधेये गात्रमा- १२
र्जनवस्त्रे वा तस्य देहात् पीडितलोकानाम् समीपम् आनीते ते
निरामया जाता अपवित्रा भूताश्च तेभ्यो वहिर्गतवन्तः।

तदा देशाटनकारिणः कियन्तो यिहूदीया भूतापसारिणो १३
भूतग्रस्तलोकानां सन्निधौ प्रभो र्यीशो र्नाम जप्त्वा वाक्यमि-

दम् अवदन्, यस्य कथां पौलः प्रचारयति तस्य यीशो र्नाम्ना
१४ युष्मान् आज्ञापयामः। स्किवनाम्नो यिहूदीयानां प्रधान-
१५ याजकस्य सप्तभिः पुत्त्रैस्तथा कृते सति कश्चिद् अपवित्रो भूतः
प्रत्युदितवान्, यीशुं जानामि पौलञ्च परिचिनोमि किन्तु के
१६ यूयं? इत्युक्का सोपवित्रभूतग्रस्तो मनुष्यो लम्फं कृत्वा तेषामु-
परि पतित्वा बलेन तान् जितवान्, तस्मात्ते नग्नाः क्षताङ्गाश्च
१७ सन्तस्तस्माद् गेहात् पलायन्त। सा वाग् इफिषनगरनिवा-
सिनां सर्व्वेषां यिहूदीयानां भिन्नदेशीयानां लोकानाञ्च अवे-
गोचरीभूता; ततः सर्व्वे भयं गताः प्रभो र्यीशो र्नाम्नो यशो
१८ ऽवर्द्धत। येषामनेकेषां लोकानां प्रतीतिरजायत त आगत्य स्वैः
१९ कृताः क्रियाः प्रकाशरूपेणाङ्गीकृतवन्तः। बहवो मायाकर्म्मका-
रिणः स्वस्वग्रन्थान् आनीय राशीकृत्य सर्व्वेषां समक्षम् अदाह-
यन्, ततो गणनां कृत्वाबुध्यन्त पञ्चायुतरूप्यमुद्रामूल्यपुस्तकानि
२० दग्धानि। इत्थं प्रभोः कथा सर्व्वदेशं व्याप्य प्रबला जाता।
२१ सर्व्वेष्वेतेषु कर्म्मसु सम्पन्नेषु सत्सु पौलो माकिदनियाखाया-
देशाभ्यां यिरूशालमं गन्तुं मतिं कृत्वा कथितवान् तत्स्थानं
२२ यात्रायां कृतायां सत्यां मया रोमानगरं द्रष्टव्यं। स्वानु-
गतलोकानां तीमथियेरास्तौ द्वौ जनौ माकिदनियादेशं प्रति
२३ प्रहित्य स्वयम् आशियादेशे कतिपयदिनानि स्थितवान्। किन्तु
२४ तस्मिन् समये मतेऽस्मिन् कलहो जातः। तत्कारणमिदं, अर्त्ति-
मीदेव्या रूप्यमन्दिरनिर्म्माणेन सर्व्वेषां शिल्पिनां यथेष्टला-
२५ भम् अजनयत् यो दीमीत्रियनामा नाडीन्धमः स तान् तत्कर्म्म-
जीविनः सर्व्वलोकांश्च समाहूय भाषितवान् हे महेच्छा एतेन
मन्दिरनिर्म्माणेनास्माकं जीविका भवति, एतद् यूयं वित्थ;

किन्तु हस्तनिर्म्मितेश्वरा ईश्वरा नहि पौलनाम्ना केनचिज्जनेन २६
कथामिमां व्याहृत्य केवलेफिषनगरे नहि प्रायेण सर्व्वस्मिन्
आशियादेशे प्रवृत्तिं ग्राहयित्वा बहुलोकानां शेमुषी परावर्त्तिता, एतद् युष्माभि र्दृश्यते श्रूयते च। तेनास्माकं वाणिज्यस्य २७
सर्व्वथा हानेः सम्भवनं केवलमिति नहि, आशियादेशस्थै र्वा
सर्व्वजगत्स्थै र्लोकैः पूज्या यार्तिमी महादेवी तस्या मन्दिरस्यावज्ञानस्य तस्या ऐश्वर्य्यस्य नाशस्य च सम्भावना विद्यते। एता- २८
दृशीं कथां श्रुत्वा ते महाक्रोधान्विताः सन्त उच्चैःकारं कथितवन्त इफिषीयानाम् अर्त्तिमी देवी महती भवति। ततः २९
सर्व्वनगरं कलहेन परिपूर्णमभवत्, ततः परं ते माकिदनीयगायारिस्तार्खनामानौ पौलस्य द्वौ सहचरौ धृत्वैकचित्ता
रङ्गभूमिं जवेन धावितवन्तः। ततः पौलो लोकानां सन्निधिं ३०
यातुम् उद्यतवान् किन्तु शिष्यगणस्तं वारितवान्। पौलस्या- ३१
त्मीया आशियादेशस्थाः कतिपयाः प्रधानलोकास्तस्य समीपं
नरमेकं प्रेष्य त्वं रङ्गभूमिं मागा इति न्यवेदयन्। ततो नाना- ३२
लोकानां नानाकथाकथनात् सभा व्याकुला जाता किं कारणाद् एतावती जनताभवत् एतद् अधिकै र्लोकै र्नाज्ञायि।
ततः परं जनतामध्याद् यिहूदीयैर्बहिष्कृतः सिकन्दरो हस्तेन ३३
सङ्केतं कृत्वा लोकेभ्य उत्तरं दातुमुद्यतवान्, किन्तु स यिहू- ३४
दीयलोक इति निश्चिते सति इफिषीयानाम् अर्तिमी देवी
महतीति वाक्यं प्रायेण पञ्च दण्डान् यावद् एकस्वरेण लोकनिवहैः प्रोक्तं। ततो नगराधिपतिस्तान् स्थिरान् कृत्वा कथि- ३५
तवान् हे इफिषायाः सर्व्वे लोका आकर्णयत, अर्तिमीमहादेव्या महादेवात् पतितायास्तत्प्रतिमायाश्च पूजनम इफिष-

३६ नगरस्थाः सर्व्वे लोकाः कुर्व्वन्ति, एतत् के न जानन्ति ? तस्माद्
एतत्प्रतिकूलं केपि कथयितुं न शक्नुवन्ति, इति ज्ञात्वा युष्माभिः
सुस्थिरत्वेन स्थातव्यम् अविविच्य किमपि कर्म्म न कर्त्तव्यञ्च ।
३७ यान् एतान् मनुष्यान् यूयमत्र समानयत ते मन्दिरद्रव्याप-
३८ हारका युष्माकं देव्या निन्दकाश्च न भवन्ति । यदि कञ्चन
प्रति दीमीत्रियस्य तस्य सहायानाञ्च काचिद् आपत्ति र्विद्यते
तर्हि प्रतिनिधिलोका विचारस्थानञ्च सन्ति, ते तत् स्थानं
३९ गत्वा उत्तरप्रत्युत्तरे कुर्व्वन्तु । किन्तु युष्माकं काचिदपरा कथा
यदि तिष्ठति तर्हि नियमितायां सभायां तस्या निष्पत्ति र्भवि-
४० ष्यति । किन्त्वेतस्य विरोधस्योत्तरं येन दातुं शक्नुम एतादृ-
शस्य कस्यचित् कारणस्याभावाद् अद्यतनघटनाहेतो राजद्रो-
हिणामिवास्माकम् अभियोगो भविष्यतीति शङ्का विद्यते ।
४१ इति कथयित्वा स सभास्थलोकान् विसृष्टवान् ।

---

## २० विंशोऽध्यायः ।

१ माकिदनियादेशं पौलस्य गमनं ७ कथाप्रचारसमय उपरिस्थवातायनात् पतितस्योतुखस्य स्वास्थ्यं १३ मिलीतनगरे पौलस्योपस्थितिः १७ इफिषस्थप्राचीनानामुपदेशः स्वस्मिन् तेषु च भविष्यद्वाक्यप्रचारणं ३६ तस्माद् विसृष्टत्वञ्च ।

१ इत्थं कलहे निवृत्ते सति पौलः शिष्यगणम् आहूय विस-
२ र्जनं प्राप्य माकिदनियादेशं प्रस्थितवान् । तेन स्थानेन गच्छन्
तद्देशीयान् शिष्यान् बहूपदिश्य यूनानीयदेशम् उपस्थितवान् ।
३ तत्र मासत्रयं स्थित्वा तस्मात् सुरियादेशं यातुम् उद्यतः,
किन्तु यिहूदीयास्तं हन्तुं गुप्ता अतिष्ठन् तस्मात् स पुनरपि
४ माकिदनियामार्गेण प्रत्यागन्तुं मतिं कृतवान् । बिरयानगरी-
यसोपात्रः थिषलनीकीयारिस्तार्खसिकुन्दौ दर्ब्बीनगरीयगा-

यतोमथियौ आशियादेशीयतुखिकत्रफिमौ च तेन सार्द्धं आशियादेशं यावद् गतवन्तः। एते सर्व्वे ऽग्रसराः सन्तो ऽस्मान् ५ अपेक्ष्य त्रोयानगरे स्थितवन्तः। किण्वशून्यपूपोत्सवदिने च गते ६ सति वयं फिलिपीनगरात् तोयपथेन गत्वा पञ्चभि र्दिनै-स्त्रोयानगरम् उपस्थाय तत्र सप्तदिनान्यवातिष्ठाम।

सप्ताहस्य प्रथमदिने पूपान् भंक्तुं शिष्येषु मिलितेषु पौलः ७ परदिने तस्मात् प्रस्थातुम् उद्यतः सन् तदह्नि प्रायेण क्षपाया यामद्वयं यावत् शिष्येभ्यो धर्म्मकथाम् अकथयत्। उपरिस्थे ८ यस्मिन् प्रकोष्ठे सभां कृत्वासन् तत्र बहवः प्रदीपाः प्राज्वलन्। उतुखनामा कश्चन युवा च वातायन उपविशन् घोरतरनिद्रा- ९ ग्रस्तो ऽभूत् तदा पौलेन बहुक्षणं कथायां प्रचारितायां निद्रा-मग्नः स तस्माद् उपरिस्थतृतीयप्रकोष्ठाद् अपतत्, ततो लोकास्तं मृतकल्पं धृत्वोदतोलयन्। ततः पौलो ऽवरुह्य तस्य गात्रे पतित्वा १० तं क्रोडे निधाय कथितवान्, यूयं व्याकुला मा भूत नायं प्राणै र्वियुक्तः। पश्चात् स पुनश्चोपरि गत्वा पूपान् भंक्त्वा प्रभातं ११ यावत् कथोपकथने कृत्वा प्रस्थितवान्। ते च तं जीवन्तं युवानं १२ गृहीत्वा गत्वा परमाप्यायिता जाताः।

अनन्तरं वयं पोतेनाग्रसरा भूत्वास्सनगरम् उत्तीर्य्य पौलं १३ ग्रहीतुं मतिम् अकुर्म्म यतः स तत्र पद्भ्यां व्रजितुं मतिं कृत्वेति निरूपितवान्। तस्मात् तत्रास्माभिः सार्द्धं तस्मिन् मिलिते १४ सति वयं तं नीत्वा मितुलीन्युपद्वीपं प्राप्तवन्तः। तस्मात् १५ पोतं मोचयित्वा परेऽहनि खीयोपद्वीपस्य सम्मुखं लब्धवन्तस्त-स्माद् एकेनाह्ना सामोपद्वीपं गत्वा पोतं लागयित्वा त्रोगुल्लिये स्थित्वा परस्मिन् दिवसे मिलीतनगरम् उपातिष्ठाम। यतः १६

पौल आशियादेशे कालं यापयितुम् नाभिलषन् इफिषनगरं त्यक्ता यातुं मन्त्रणां स्थिरीकृतवान्; यस्माद् यदि साध्यं भवति तर्हि निस्तारोत्सवस्य पञ्चाशत्तमदिने स यिरूशालम्युप-स्थातुं मतिं कृतवान्।

१७ पौलो मिलीताद् इफिषं प्रति लोकं प्रहित्य समाजस्य
१८ प्राचीनान् आहूयानीतवान्। तेषु तस्य समीपम् उपस्थितेषु स तेभ्य इमां कथां कथितवान्, अहम् आशियादेशे प्रथमा-गमनम् आरभ्याद्य यावद् युष्माकं सन्निधौ स्थित्वा सर्व्वसमये
१९ यथाचरितवान् तद् यूयं जानीथ; फलतः सर्व्वथा नम्रमनाः सन् बह्वश्रुपातेन यिहूदीयानाम् कुमन्त्रणाजातनानापरी-
२० क्षाभिः प्रभोः सेवामकरवं। कामपि हितकथां न गोपायित्वान् तां प्रचार्य्य सप्रकाशं गृहे गृहे समुपदिश्येश्वरं प्रति मनः
२१ परावर्त्तनीयं प्रभौ यीशुख्रीष्टे विश्वसनीयं यिहूदीयानाम्
२२ अन्यदेशीयलोकानाञ्च समीप एतादृशं साक्ष्यं ददामि। पश्यत साम्प्रतम् आत्मनाकृष्टः सन् यिरूशालम्नगरे यात्रां करोमि,
२३ तत्र माम्प्रति यद्यद् घटिष्यते तान्यहं न जानामि; किन्तु मया बन्धनं क्लेशश्च भोक्तव्य इति पवित्र आत्मा नगरे नगरे
२४ प्रमाणं ददाति। तथापि तं क्लेशमहं तृणाय न मन्ये; ईश्व-रस्यानुग्रहविषयकस्य सुसंवादस्य प्रमाणं दातुं, प्रभो र्यीशोः सकाशाद् यस्याः सेवायाः भारं प्राप्नवं तां सेवां साधयितुं सानन्दं स्वमार्गं समापयितुञ्च निजप्राणानपि प्रियान् न मन्ये।
२५ अधुना पश्यत येषां समीपेऽहम् ईश्वरीयराज्यस्य सुसंवादं प्रचार्य्य भ्रमणं कृतवान् एतादृशा यूयं मम वदनं पुन र्द्रष्टुं न
२६ प्राप्स्यथ एतदप्यहं जानामि। युष्मभ्यम् अहम् ईश्वरस्य सर्व्वान्

आदेशान् प्रकाशयितुं न न्यवर्त्ते। अहं सर्व्वेषां लोकानां २७ रक्तपातदोषाद् यन्निर्दोष आसे तस्याद्य युष्मान् साक्षिणः करोमि। यूयं स्वेषु तथा यस्य व्रजस्याध्यक्षान् आत्मा युष्मान् २८ विधाय न्ययुङ्क्त तत्सर्व्वस्मिन् सावधाना भवत, यं समाजञ्च प्रभु र्निजरक्तमूल्येन क्रीतवान् तम् अवत, यतो मया गमने २९ कृतएव दुर्जया वृका युष्माकं मध्यं प्रविश्य व्रजं प्रति निर्दयताम् आचरिष्यन्ति, युष्माकमेव मध्यादपि लोका उत्थाय ३० शिष्यगणम् अपहन्तुं विपरीतम् उपदेक्ष्यन्तीत्यहं जानामि। इति हेतो र्यूयं सचैतन्याः सन्तस्तिष्ठत, अहञ्च साश्रुपातः सन् ३१ वत्सरत्रयं यावद् दिवानिशं प्रतिजनं बोधयितुं न न्यवर्त्ते तदपि स्मरत। इदानीं हे भ्रातरो युष्माकं निष्ठां जनयितुं ३२ पवित्रीकृतलोकानां मध्येऽधिकारञ्च दातुं समर्थो य ईश्वरस्तस्यानुग्रहस्य यो वादश्च तयोरुभयो र्युष्मान् समार्पयम्। कस्यापि स्वर्णं रूप्यं वस्त्रं वा प्रति मया लोभो न कृतः। ३३ किन्तु मम मत्सहचरलोकानाञ्चावश्यकव्ययाय मदीयमिदं ३४ करद्वयम् अश्राम्यद् एतद् यूयं जानीथ। अनेन प्रकारेण ३५ ग्रहणाद् दानं भद्रमिति यद्वाक्यं प्रभु र्यीशुः कथितवान् तत् स्मर्त्तुं दरिद्रलोकानामुपकारार्थं श्रमं कर्त्तुञ्च युष्माकम् उचितम् एतत्सर्व्वं युष्मानहम् उपदिष्टवान्।

एतां कथां कथयित्वा स जानुनी पातयित्वा सर्व्वैः सह ३६ प्रार्थयत। तेन ते क्रन्दन्तः पुन र्मम मुखं न द्रक्ष्यथ विशेषत ३७ एषा या कथा तेनाकथि तत्कारणात् शोकं विलापञ्च कृत्वा ३८ कण्ठं धृत्वा चुम्बितवन्तः। पश्चात् ते तं पोतं नीतवन्तः।

---

# २१ एकविंशोऽध्यायः।

१ पौलस्य यिरूशालमगमनं ७ मार्गमध्ये सुसंवादप्रचारकस्य फिलिपस्य गेहगमनं २२ आगाबद्वारा पौलस्य दुःखे भविष्यद्वाक्यं १७ यिरूशालमि तदुपस्थितिः आचरणञ्च २७ तस्मिन् लोकानां कलहः २७ सहस्रसेनापतिना तन्मुक्तिस्तेन सार्द्धं कथोपकथनञ्च।

१ 　तै र्विसृष्टाः सन्तो वयं पोतं वाहयित्वा ऋजुमार्गेण कोषम् उपद्वीपम् आगत्य परेऽहनि रोदियोपद्वीपम् आगच्छाम २ ततस्तस्मात् पातारायाम् उपातिष्ठाम। तत्र फैनीकियादेशगामिनम् पोतमेकं प्राप्य तमारुह्य गतवन्तः। ३ कुप्रोपद्वीपं दृष्ट्वा तं सव्यदिशि स्थापयित्वा सुरियादेशं गत्वा पोतस्थद्रव्याण्यवरोहयितुं सोरनगरे लागितवन्तः। ४ तत्र शिष्यगणस्य साक्षात्करणाय वयं तत्र सप्तदिनानि स्थितवन्तः पश्चात्ते पवित्रेणात्मना पौलं व्याहरन् त्वं यिरूशालम्नगरं मा गमः। ५ ततस्तेषु सप्तसु दिनेषु यापितेषु सत्सु वयं तस्मात् स्थानात् निजवर्त्मना गतवन्तः, तस्मात् ते सबालवृद्धवनिता अस्माभिः सह नगरस्य परिसरपर्य्यन्तम् आगताः पश्चाद्वयं जलधितटे ६ जानुपातं प्रार्थयामहि। ततः परस्परं विसृष्टाः सन्तो वयं पोतं गतास्ते तु स्वस्वगृहं प्रत्यागतवन्तः।

७ 　वयं सोरनगरात् नावा प्रस्थाय तलिमायिनगरम् उपातिष्ठाम तत्रास्माकं समुद्रीयमार्गस्यान्तोऽभवत् तत्र भ्रातृगणं ८ नमस्कृत्य दिनमेकं तैः सार्द्धम् उषितवन्तः। परेऽहनि पौलस्तस्य सङ्गिनो वयञ्च प्रतिष्ठमानाः कैसरियानगरम् आगत्य सुसंवादप्रचारकानां सप्तजनानां फिलिपनाम्न एकस्य गृहं ९ प्रविश्यावतिष्ठाम। तस्य चतस्रो दुहितरोऽनूढा भविष्यद्वादिन्य १० आसन्। तत्रास्मासु बहुदिनानि प्रोषितेषु यिहूदीयदेशाद्

आगत्यागावनामा भविष्यद्वादी समुपस्थितवान्। सोऽस्माकं ११ समीपमेत्य पौलस्य कटिबन्धनं गृहीत्वा निजहस्तपादान् बद्ध्वा भाषितवान् यस्येदं कटिबन्धनं तं यिहूदीयलोका यिरूशालमनगर इत्थं बद्ध्वा भिन्नदेशीयानां करेषु समर्पयिष्यन्तीति वाक्यं पवित्र आत्मा कथयति।

एतादृशीं कथां श्रुत्वा वयं तन्नगरवासिनो भ्रातरश्च यि- १२ रूशालमं न यातुं पौलं व्यनयामहि; किन्तु स प्रत्यवादीत्, यूयं १३ किं कुरुथ? किं क्रन्दनेन ममान्तःकरणं विदीर्णं करिष्यथ? प्रभो र्यीशो र्नाम्नो निमित्तं यिरूशालमि बद्धो भवितुं केवलं तन्न प्राणान् दातुमपि ससज्जोऽस्मि। तेनास्माकं कथा- १४ याम् अगृहीतायाम् ईश्वरस्य यथेच्छा तथैव भवत्वित्युक्त्वा वयं निरस्याम। परेऽहनि पाथेयद्रव्याणि गृहीत्वा यिरूशालमं प्रति १५ यात्राम् अकुर्म्म। ततः कैसरियानगरनिवासिनः कतिपयाः १६ शिष्या अस्माभिः सार्द्धम् इत्वा कुप्रीयेन म्नासन्नाम्ना येन प्राचीनशिष्येन सार्द्धम् अस्माभि र्वस्तव्यं तस्य समीपम् अस्मान् नीतवन्तः।

अस्मासु यिरूशालम्युपस्थितेषु तत्रस्थभ्रातृगणोऽस्मान् आ- १७ ह्लादेन गृहीतवान्। परस्मिन् दिवसे पौलेऽस्माभिः सह याकूबो १८ गृहं प्रविष्टे लोकप्राचीनाः सर्व्वे तत्र परिषदि संस्थिताः। अनन्तरं स तान् नत्वा स्वीयप्रचारणेन भिन्नदेशीयान् प्रतीश्वरो १९ यानि कर्म्माणि साधितवान् तदीयां कथाम् अनुक्रमात् कथितवान्। इति श्रुत्वा ते प्रभुं धन्यं प्रोच्य वाक्यमिदम् अभाषन्त, २० हे भ्रात र्यिहूदीयानां मध्ये बहुसहस्राणि लोका विश्वासिन आसते किन्तु ते सर्व्वे व्यवस्थामताचारिण एतत् प्रत्यक्षं पश्यसि।

२१ शिशूनां त्वक्छेदनाद्याचरणं प्रतिषिध्य त्वं भिन्नदेशनिवासिनो यिहूदीयलोकान् मूसावाक्यम् अश्रद्धातुम् उपदिशसीति तैः
२२ श्रुतमस्ति। त्वमत्रागतोसीति वार्त्तां समाकर्ण्य जननिवहो मिलित्वावश्यमेवागमिष्यति; अतएव किं करणीयम्? अत्र वयं
२३ मन्त्रयित्वा यमुपायं त्वां वदामस्तं त्वमाचर। व्रतं कर्त्तुं कृत-
२४ सङ्कल्पा येऽस्माकं चत्वारो मानवाः सन्ति तान् गृहीत्वा तैः सहितः स्वं शुचिं कुरु तथा तेषां शिरोमुण्डने यो व्ययो भवति तं त्वं देहि। तथा कृते त्वदीयाचारे या जनश्रुति र्जायते सालीका किन्तु त्वं विधिं पालयन् व्यवस्थानुसारेणेवाचरसीति ते
२५ भोत्स्यन्ते। भिन्नदेशीयानां विश्वासिलोकानां निकटे वयं पत्रं लिखित्वेत्थं स्थिरीकृतवन्तः, देवप्रसादभोजनं रक्तं गल-पीडनमारितप्राणिभोजनं व्यभिचारश्चैतेभ्यः स्वरक्षणव्यतिरेकेण
२६ तेषामन्यविधिपालनं करणीयं न। ततः पौलस्तान् मानुषानादाय परस्मिन् दिवसे तैः सह शुचि र्भूत्वा मन्दिरं गत्वा शौचकर्म्मणो दिनेषु सम्पूर्णेषु तेषाम् एकैकार्थं नैवेद्याद्युत्सर्गो भविष्यतीति ज्ञापितवान्।

२७ तेषु सप्तसु दिनेषु समाप्तकल्पेषु आशियादेशनिवासिनो यिहूदीयास्तं मध्येमन्दिरं विलोक्य जननिवहस्य मनःसु कुप्रवृत्तिं जनयित्वा तं धृत्वा प्रोच्चैः प्रावोचन्, हे इस्रायेल्लोकाः
२८ सर्व्वे साहाय्यं कुरुत। यो मनुज एतेषां लोकानां मूसाव्यवस्थाया एतस्य स्थानस्यापि विपरीतं सर्व्वत्र सर्व्वान् शिक्षयति स एषः; विशेषतः स भिन्नदेशीयलोकान् मन्दिरम् आनीय
२९ पवित्रस्थानमेतद् अपवित्रमकरोत्। पूर्व्वं ते मध्येनगरम् इफिषनगरीयं त्रफिमं पौलेन सहितं दृष्टवन्त एतस्मात् पौलस्तं

मन्दिरमध्यम् आनयद् इत्यन्वमिमत। अतएव सर्व्वस्मिन् नगरे ३० कलहोत्पन्नत्वात् धावन्तो लोका आगत्य पौलं धृत्वा मन्दिरस्य वहिराकृष्यानयन् तत्क्षणाद् द्वाराणि सर्व्वाणि च रुद्धानि। तेषु तं हन्तुमुद्यतेषु यिरूशालम्नगरे महानुपद्रवो जात इति ३१ वार्त्तायां सहस्रसेनापतेः कर्णगोचरीभूतायां सत्यां स तत्क्षणात् ३२ सैन्यानि सेनापतिगणञ्च गृहीत्वा जवेनागतवान्। ततो लोकाः सेनागणेन सह सहस्रसेनापतिम् आगच्छन्तं दृष्ट्वा पौलताडनातो न्यवर्त्तन्त। स सहस्रसेनापतिः सन्निधावागम्य पौलं धृत्वा ३३ शृङ्खलद्वयेन बद्धुम् आदिश्य तान् पृष्टवान् एष कः? किं कर्म्म चायं कृतवान्? ततो जनसमूहस्य कश्चिद् एकप्रकारं ३४ कश्चिद् अन्यप्रकारं वाक्यम् अरौत् स तत्र सत्यं ज्ञातुम् कलहकारणाद् अशक्तः सन् तं दुर्गं नेतुम् आज्ञापयत्। तेषु सोपा- ३५ नस्योपरि प्राप्तेषु लोकानां साहसकारणात् सेनागणः पौलमुत्तोल्य नीतवान्। ततः सर्व्वे लोकाः पश्चाद्गामिनः सन्त एनं ३६ दूरीकुरुतेति वाक्यम् उच्चैरवदन्।

पौलस्य दुर्गानयनसमये स तस्मै सहस्रसेनापतये कथित- ३७ वान्, भवतः पुरस्तात् कथां कथयितुं किम् अनुमन्यते? स तमपृच्छत् त्वं किं यूनानीयां भाषां जानासि? यो मिसरीयो ३८ जनः पूर्व्वं विरोधं कृत्वा चत्वारि सहस्राणि घातकान् सङ्गिनः कृत्वा विपिनं गतवान् त्वं किं सएव न भवसि? तदा पौलोऽक- ३९ थयत्, अहं किलिकियादेशस्य तार्षनगरीयो यिहूदीयो, नाहं सामान्यनगरीयो मानवः; अतएव विनयेऽहं लोकानां समक्षं कथां कथयितुं मामनुजानीष्व। तेनानुज्ञातः पौलः सोपानोपरि ४० तिष्ठन् हस्तेनेङ्गितं कृतवान्, तस्मात् सर्व्वे सुस्थिरा अभवन्।

# २२ द्वाविंशोऽध्यायः।

१ लोकेभ्यः पौलस्य निवेदनं २२ पौलस्य विरुद्धं लोकानां कथनं कशया तं ताडयितुं सेनापतेरादेशः ३० तस्य प्रहारस्य क्षमा यिहूदीयैः सह तस्य विचारं कर्त्तुम् आज्ञापनञ्च।

१ तदा पौल इब्रीयभाषया कथयितुम् आरभत, हे पितृ-
२ गणा हे भ्रातृगणाः, इदानीं मम निवेदने समवधत्त। तदा
स इब्रीयभाषया कथां कथयतीति श्रुत्वा सर्व्वे लोका अतीव
३ निःशब्दाः सन्तोऽतिष्ठन्। पश्चात् सोऽकथयद् अहं यिहूदीय
इति निश्चयः किलिकियादेशस्य तार्षनगरं मम जन्मभूमिः,
एतन्नगरीयस्य गमिलीयेलनाम्नोऽध्यापकस्य शिष्यो भूत्वा पूर्व्व-
पुरुषाणां विधिव्यवस्थानुसारेण सम्पूर्णरूपेण शिक्षितोऽभवम्
इदानीन्तना यूयं यादृशा भवथ तादृशोऽहमपीश्वरसेवायाम्
४ उद्योगी जातः। मतमेतद् द्विष्ट्वा तद्ग्राहिनारीपुरुषान् कारायां
५ बद्ध्वा तेषां प्राणनाशपर्य्यन्तां विपक्षताम् अकरवम्। महा-
याजकः सभासदः प्राचीनलोकाश्च ममैतस्याः कथायाः प्रमाणं
दातुं शक्नुवन्ति, यस्मात् तेषां समीपाद् दम्मेषकनगरनिवासि-
भ्रातृगणार्थम् आज्ञापत्राणि गृहीत्वा ये तत्र स्थितास्तान्
दण्डयितुं यिरूशालमम् आनयनार्थं दम्मेषकनगरं गतोस्मि।
६ किन्तु गच्छन् तन्नगरस्य समीपं प्राप्तवान् तदा द्वितीयप्रहर-
वेलायां सत्याम् अकस्माद् गगणान्निर्गत्य महती दीप्ति र्मम
७ चतुर्दिशि प्रकाशितवती। ततो मयि भूमौ पतिते सति, हे
शौल हे शौल कुतो मां ताडयसि? माम्प्रति भाषित एतादृश
८ एको रवोपि मया श्रुतः। तदाहं प्रत्यवदं, हे प्रभो को
भवान्? ततः सोऽवादीत् यं त्वं ताडयसि स नासरतीयो
९ यीशुरहं। मम सङ्गिनो लोकास्तां दीप्तिं दृष्ट्वा भियं प्राप्ताः,

किन्तु माम्प्रत्युदितं तद्वाक्यं ते नाबुध्यन्त। ततः परं पृष्टवा- १०
नहं, हे प्रभो मया किं कर्त्तव्यं? ततः प्रभुरकथयत्, उत्थाय
दम्मेषकनगरं याहि त्वया यद्यत् कर्त्तव्यं निरूपितमास्ते तत्
तत्र त्वं ज्ञापयिष्यसे। अनन्तरं तस्याः खरतरदीप्तेः कारणात् ११
किमपि न दृष्ट्वा सङ्गिगणेन धृतहस्तः सन् दम्मेषकनगरं व्रजित-
वान्। तन्नगरनिवासिनां सर्व्वेषां यिहूदीयानां मान्यो व्यव- १२
स्थानुसारेण भक्तश्च हनानीयनामा मानव एको मम सन्निधिम् १३
एत्य तिष्ठन् अकथयत्, हे भ्रातः शौल सुदृष्टि र्भव तस्मिन्
दण्डेऽहं सम्यक् तं दृष्टवान्। ततः स मह्यं कथितवान् यथा १४
त्वम् ईश्वरस्याभिप्रायं वेत्सि तस्य शुद्धसत्त्वजनस्य दर्शनं प्राप्य तस्य
श्रीमुखस्य वाक्यं शृणोषि तन्निमित्तम् अस्माकं पूर्व्वपुरुषाणाम्
ईश्वरस्त्वां मनोनीतं कृतवान्। यतो यद्यद् अद्राक्षीरश्रौषीश्च १५
सर्व्वेषां मानवानां समीपे त्वं तेषां साक्षी भविष्यसि। अतएव १६
कुतो विलम्बसे? प्रभो र्नाम्ना प्रार्थ्य निजपापप्रक्षालनार्थं मज्ज-
नाय समुत्तिष्ठ। ततः परं यिरूशालम्नगरं प्रत्यागत्य मन्दि- १७
रेऽहम् एकदा प्रार्थये, तस्मिन् समयेऽहम् अभिभूतः सन् प्रभुं
साक्षात् पश्यन्, त्वं त्वरया यिरूशालमः प्रतिष्ठस्व यतो लोका १८
मयि तव साक्ष्यं न ग्रहीष्यन्ति, माम्प्रत्युदितं तस्येदं वाक्यम्
अश्रौषम्। ततोऽहं प्रत्यवादिषम् हे प्रभो प्रतिभजनभवनं त्वयि १९
विश्वासिनो लोकान् बद्ध्वा प्रहृतवान्, तथा तव साक्षिणः स्तिफा- २०
नस्य रक्तपातनसमये तस्य विनाशं सम्मन्य सन्निधौ तिष्ठन् हन्तृ-
लोकानां वासांसि रक्षितवान्, एतत् ते विदुः। ततः सोऽ- २१
कथयत् प्रतिष्ठस्व त्वां दूरस्थभिन्नदेशीयानां समीपं प्रेषयिष्ये।

तदा लोका एतावत्पर्य्यन्तां तदीयां कथां श्रुत्वा प्रोच्चै- २२

रकथयन्, एनं भूमण्डलाद् दूरीकुरुत, एतादृशजनस्य जीवनं
२३ नोचितम्। इत्युच्चैः कथयित्वा वसनानि परित्यज्य गगणं प्रति
२४ धूलीरक्षिपन् ततः सहस्रसेनापतिः पौलं दुर्गाभ्यन्तरं नेतुं
समादिशत्। एतस्य प्रतिकूलाः सन्तो लोकाः किन्निमित्तम्
एतावदुच्चैःस्वरम् अकुर्व्वन्, एतद् वेत्तुं तं कशया प्रहृत्य तस्य
२५ परीक्षां कर्त्तुमादिशत्। पदातयश्चर्म्मनिर्म्मितरज्जुभिस्तस्य बन्धनं
कर्त्तुमुद्यतास्तदानीं पौलः सम्मुखस्थितं शतसेनापतिम् उक्तवान्
दण्डाज्ञायाम् अप्राप्तायां किं रोमिलोकं प्रहर्त्तुं युष्माकम्
२६ अधिकारोस्ति? एनां कथां श्रुत्वा स सहस्रसेनापतेः सन्निधिं
गत्वा तां वार्त्तामवदत् स रोमिलोक एतस्मात् सावधानः सन्
२७ कर्म्म कुरु। तस्मात् सहस्रसेनापति र्गत्वा तमप्राक्षीत् त्वं किं
२८ रोमिलोकः? इति मां ब्रूहि। सोऽकथयत् सत्यम्। ततः
सहस्रसेनापतिः कथितवान् बहुद्रविणं दत्त्वाहं तत् पौर-
सख्यं प्राप्तवान्; किन्तु पौलः कथितवान् अहं जनुना तत्
२९ प्राप्तोऽस्मि। इत्थं सति ये प्रहारेण तं परीक्षितुं समुद्यता
आसन् ते तस्य समीपात् प्रातिष्ठन्त; सहस्रसेनापतिस्तं रोमि-
लोकं विज्ञाय स्वयं यत् तस्य बन्धनम् अकार्षीत् तत्कारणाद्
अबिभेत्।

३० यिहूदीयलोकाः पौलं कुतोऽपवदन्ते तस्य वृत्तान्तं ज्ञातुं
वाञ्छन् सहस्रसेनापतिः परेऽहनि पौलं बन्धनात् मोचयित्वा
प्रधानयाजकान् महासभायाः सर्व्वलोकांश्च समुपस्थातुम्
आदिश्य तेषां सन्निधौ पौलम् अवरोह्य स्थापितवान्।

# २३ त्रयोविंशोऽध्यायः।

१ पौलस्य विचारितत्वं तं चपेटानाहन्तुं महायाजकस्याज्ञापनम् अपवादकानां भेदः १२ तं हन्तुं चत्वारिंशज्जनानां प्रतिज्ञानं १६ तस्य भागिनेयेन तत्कथायाः सहस्रसेनापतेः समीपे प्रकाशितत्वं तेन पौलस्य मुक्तिः ३१ फीलिक्षं प्रति पौलस्य प्रेषणञ्च।

सभासद्लोकान् प्रति पौलोऽनन्यदृष्ट्या पश्यन् अकथयत्, १
हे भ्रातृगणा अद्य यावत् सरलेन सर्व्वान्तःकरणेनेश्वरस्य
साक्षाद् आचरामि। अनेन हनानीयनामा महायाजकस्तं २
कपोले चपेटेनाहन्तुं समीपस्थलोकान् आदिष्टवान्। तदा ३
पौलस्तमवदत्, हे बहिष्परिष्कृत, ईश्वरस्त्वां प्रहर्त्तुम् उद्य-
तोस्ति, यतो व्यवस्थानुसारेण विचारयितुम् उपविश्य व्यवस्थां
लङ्घित्वा मां प्रहर्त्तुम् आज्ञापयसि। ततो निकटस्था लोका ४
अकथयन्, त्वं किम् ईश्वरस्य महायाजकं निन्दसि? ततः पौलः ५
प्रतिभाषितवान् हे भ्रातृगण महायाजक एष इति न बुद्धं
मया तदन्यच्च स्वलोकानाम् अधिपतिं प्रति दुर्व्वाक्यं मा कथय,
एतादृशी लिपिरस्ति। अनन्तरं पौलस्तेषाम् अर्द्धं सिदूकि- ६
लोका अर्द्धं फिरूशिलोका इति दृष्ट्वा प्रोच्चैः सभास्थलोकान्
अवदत् हे भ्रातृगणा अहं फिरूशिमतावलम्बी फिरूशिनः
सन्तानश्च, मृतलोकानाम् उत्थाने प्रत्याशाकरणाद् अहमप-
वादितोस्मि। इति कथायां कथितायां फिरूशिसिदूकिनोः ७
परस्परं भिन्नवाक्यत्वात् सभाया मध्ये द्वौ संघौ जातौ। यतः ८
सिदूकिलोका उत्थानं स्वर्गीयदूता आत्मानश्च सर्व्वेषाम् एतेषां
कमपि न मन्यन्ते, किन्तु फिरूशिनः सर्व्वम् अङ्गीकुर्व्वन्ति।
ततः परस्परम् अतिशयकोलाहले समुपस्थिते फिरूशिनां ९
पक्षीयाः सभास्था अध्यापकाः सर्व्वे प्रतिपक्षा उत्तिष्ठन्तो

ऽकथयन्, एतस्य मानवस्य कमपि दोषं न पश्यामः; यदि कश्चिद्
आत्मा वा कश्चिद् दूत एनं प्रत्यादिशत् तर्हि वयम् ईश्वरस्य
१० प्रातिकूल्येन न योत्स्यामः। तस्माद् अतीव भिन्नवाक्यत्वे सति
ते पौलं खण्डं खण्डं करिष्यन्तीत्याशङ्कया सहस्रसेनापतिः
सेनागणं तत्स्थानं यातुं सभातो बलात् पौलं धृत्वा दुर्गं नेतु-
११ ञ्चाज्ञापयत्। रात्रौ प्रभुस्तस्य समीपे तिष्ठन् कथितवान् हे
पौल निर्भयो भव यथा यिरूशालम्नगरे मयि साक्ष्यं दत्त-
वान् तथा रोमानगरेपि त्वया दातव्यम्।

१२ दिने समुपस्थिते सति कियन्तो यिहूदीयलोका एकमन्त्रणाः
सन्तः पौलं न हत्वा भोजनपाने न करिष्याम इति शपथेन
१३ स्वान् अबध्नन्। चत्वारिंशज्जनेभ्योऽधिका लोका इति पणम्
१४ अकुर्व्वन्। ते महायाजकानां प्राचीनलोकानाञ्च समीपं गत्वा-
कथयन्, वयं पौलं न हत्वा किमपि न भोक्ष्यामहे दृढेनानेन
१५ शपथेन बद्धा अभवाम। अतएव साम्प्रतं सभासद्लोकैः सह
वयं तस्मिन् कञ्चिद् विशेषविचारं करिष्यामस्तदर्थं भवान् श्वो
ऽस्माकं समीपं तम् आनयत्विति सहस्रसेनापतये निवेदनं कुरुत
तेन युष्माकं समीपं उपस्थितेः पूर्व्वं वयं तं हन्तुं सज्जिष्यामहे।

१६ तदा पौलस्य भागिनेयस्तेषामिति मन्त्रणां विज्ञाय दुर्गं
१७ गत्वा तां वार्त्तां पौलम् उक्तवान्। तस्मात् पौल एकं शत-
सेनापतिम् आहूय वाक्यमिदम् भाषितवान् सहस्रसेनापतेः
समीपेऽस्य युवमनुष्यस्य किञ्चिन्निवेदनम् आस्ते, तस्मात् तत्स-
१८ विधम् एनं नय। ततः स तमादाय सहस्रसेनापतेः समीपम्
उपस्थाय कथितवान्, भवतः समीपेऽस्य किमपि निवेदनमास्ते
तस्मात् बन्दिः पौलो मामाहूय भवतः समीपम् एनम् आनेतुं

प्रार्थितवान्। तदा सहस्रसेनापतिस्तस्य हस्तं धृत्वा निर्जन-१९ स्थानं नीत्वा पृष्टवान् तव किं निवेदनं? तत् कथय। ततः २० सोऽकथयत्, यिहूदीयलोकाः पौले कमपि विशेषविचारं छलं कृत्वा तं सभां नेतुं भवतः समीपे निवेदयितुं अमन्त्रयन्। किन्तु भवता तन्न स्वीकर्त्तव्यं यतस्तेषां मध्यवर्त्तिनश्चत्वारिंश- २१ ज्जनेभ्यो ऽधिकलोका एकमन्त्रणा भूत्वा पौलं न हत्वा भोजनं पानञ्च न करिष्याम इति शपथेन बद्धाः सन्तो घातका इव सज्जिता इदानीं केवलं भवतो ऽनुमतिम् अपेक्षन्ते। यामिमां २२ कथां त्वं निवेदितवान् तां कस्मैचिदपि मा कथयेत्युक्त्वा सहस्र- सेनापतिस्तं युवानं विसृष्टवान्। अनन्तरं सहस्रसेनापति र्द्वौ २३ शतसेनापती आहूयेदम् आदिशत्, युवां रात्रौ प्रहरैकावशि- ष्टायां सत्यां कैसरियानगरं यातुं पदातिसैन्यानां द्वे शते घोटकारोहिसैन्यानां सप्ततिं शक्तिधारिसैन्यानां द्वे शते च जनान् सज्जितान् कुरुतं। पौलम् आरोहयितुं फीलिक्षाधि- २४ पतेः समीपं निर्व्विघ्नं नेतुञ्च वाहनानि समुपस्थापयतं। अपरं २५ स पत्रं लिखित्वा दत्तवान् तल्लिखितमेतत्, महामहिमश्रीयुक्त- २६ फीलिक्षाधिपतये क्लौदियलुषियस्य नमस्कारः। यिहूदीय- २७ लोकाः पूर्व्वम् एनं मानवं धृत्वा स्वहस्ते र्हन्तुम् उद्यता एत- स्मिन्नन्तरे ससैन्योऽहं तत्रोपस्थाय एष जनो रोमीय इति विज्ञाय तं रक्षितवान्। किन्निमित्तं ते तमपवदन्ते तज्ज्ञातुं २८ तेषां सभां तमानायितवान्। ततस्तेषां व्यवस्थाया विरुद्धया २९ कयाचन कथया सोऽपवादितोऽभवत्, किन्तु स शृङ्खलबन्ध- नार्हो वा प्राणनाशार्हो भवतीदृशः कोऽप्यपराधो मयास्य न दृष्टः। तथापि मनुष्यस्यास्य बधार्थं यिहूदीया घातकाइव ३०

सज्जिता एतां वार्त्तां श्रुत्वा तत्क्षणात् तव समीपमेनं प्रेषितवान् अस्यापवादकांश्च तव समीपं गत्वापवदितुम् आज्ञापयम्। भवतः कुशलं भूयात्।

३१ सैन्यगण आज्ञानुसारेण पौलं गृहीत्वा तस्यां रजन्याम् ३२ आन्तिपात्रिनगरम् आनयत्। परेऽहनि तेन सह यातुं घोट- ३३ कारूढसैन्यगणं स्थापयित्वा परावृत्य दुर्गं गतवान्। ततः परं घोटकारोहिसैन्यगणः कैसरियानगरम् उपस्थाय तत्पत्रम् अधिपतेः करे समर्प्य तस्य समीपे पौलम् उपस्थापितवान्। ३४ तदाधिपतिस्तत्पत्रं पठित्वा पृष्ठवान् एष किम्प्रदेशीयो जनः? स किलिकियाप्रदेशीय एको जन इति ज्ञात्वा कथितवान्, ३५ तवापवादकगण आगते तव कथां श्रोष्यामि। हेरोद्राजगृहे तं स्थापयितुम् आदिष्टवान्।

---

## २४ चतुर्विंशोऽध्यायः।

१ फीलिक्षस्य समक्षं पौलस्य विचारः, तस्यापवादकानां कथा १० पौलस्योत्तरं २२ तद्विचारस्य विलम्बनं २४ फिलीक्षेण तस्य भार्य्यया च पौलस्य कथोपकथनञ्च।

१ पञ्चभ्यो दिनेभ्यः परं हनानीयनामा महायाजकोऽधिपतेः समक्षं पौलस्य प्रातिकूल्येन निवेदयितुं तर्तुल्लनामानं कञ्चन वक्तारं प्राचीनजनांश्च सङ्गिनः कृत्वा कैसरियानगरम् २ आगच्छत्। ततः पौले समानीते सति तर्तुल्लस्तस्यापवादकथां कथयितुम् आरभत हे महामहिमफीलिक्ष भवतो वयम् अतिनिर्व्विघ्नं कालं यापयामो भवतः परिणामदर्शितया एत- ३ द्देशीयानां बहूनि मङ्गलानि घटितानि, इति हेतो र्वयमति- ४ कृतज्ञाः सन्तः सर्व्वत्र सर्व्वदा भवतो गुणान् गायामः। किन्तु

बहुभिः कथाभि र्भवन्तं येन न विरञ्जयामि तस्माद् विनये भवान् अनुकम्प्य मदल्पकथां शृणोतु। एष महामारीस्वरूपो ५ नासरतीयमतग्राहिसंघातस्य मुख्यो भूत्वा सर्व्वदेशेषु सर्व्वेषां यिहूदीयानां राजद्रोहाचरणप्रवृत्तिं जनयतीत्यस्माभि र्निश्चितं। स मन्दिरमपि अशुचि कर्त्तुं चेष्टितवान्; इति कार- ६ णाद् वयम् एनं धृत्वा स्वव्यवस्थानुसारेण विचारयितुं प्रावर्त्तामहि; किन्तु लुषियः सहस्रसेनापतिरागत्य बलाद् अस्माकं ७ करेभ्य एनं गृहीत्वा एतस्यापवादकान् भवतः समीपम् आग- ८ न्तुम् आज्ञापयत्। वयं यस्मिन् तमपवदामो भवता तदपवादकथायां विचारितायां सत्यां सर्व्वं वृत्तान्तं वेदितुं शक्यते। ततो यिहूदीया अपि स्वीकृत्य कथितवन्त एषा कथा प्रमाणम्। ९

अधिपतौ कथां कथयितुं पौलं प्रतीङ्गितं कृतवति स कथि- १० तवान् भवान् बहून् वत्सरान् यावद् एतद्देशस्य शासनं करोतीति विज्ञाय प्रत्युत्तरं दातुम् अक्षोभोऽभवम्। अद्य केवलं ११ द्वादश दिनानि यातानि, अहम् आराधनां कर्त्तुं यिरूशालमनगरं गतवान् एषा कथा भवता ज्ञातुं शक्यते; किन्त्विमे १२ मां मध्येमन्दिरं केनापि सह वितण्डां कुर्व्वन्तं कुत्रापि भजनभवने नगरे वा लोकान् कुप्रवृत्तिं जनयन्तुं न दृष्टवन्तः। इदानीं यस्मिन् यस्मिन् माम् अपवदन्ते तस्य किमपि प्रमाणं १३ दातुं न शक्नुवन्ति। किन्तु भविष्यद्वाक्यग्रन्थे व्यवस्थाग्रन्थे च या १४ या कथा लिखितास्ते तासु सर्व्वासु विश्वस्य यन्मतम् इमे विधर्म्मं जानन्ति तन्मतानुसारेणाहं निजपितृपुरुषाणाम् ईश्वरम् आराधयामीत्यहं भवतः समक्षम् अङ्गीकरोमि। धार्म्मिकाणाम् १५ अधार्म्मिकाणाञ्च प्रमीतलोकानामेवोत्थानं भविष्यतीति कथा-

मिमे स्वीकुर्व्वन्ति तथाहमपि तस्मिन् ईश्वरे प्रत्याशां
१६ करोमि ; ईश्वरस्य मानवानाञ्च समीपे यथा निर्दोषो
१७ भवामि तदर्थं सततं यत्नवान् अस्मि। बहुषु वत्सरेषु गतेषु
स्वदेशीयलोकानां निमित्तं दानीयद्रव्याणि नैवेद्यानि च
१८ समादाय पुनरागमनं कृतवान् । ततोहं शुचि भूत्वा
लोकानां समागमं कलहं वा न कारितवान् तथाप्याशिया-
देशीयाः कियन्तो यिहूदीयलोका मध्येमन्दिरं मां धृत-
१९ वन्तः। ममोपरि यदि काचिदपवादकथास्ति तर्हि भवतः
२० समीपम् उपस्थाय तेषामेव साक्ष्यदानम् उचितम्। नोचेत्
पूर्व्वे महासभास्थानां लोकानां सन्निधौ मम दण्डाय-
२१ मानत्वसमये, अहमद्य मृतानामुत्थाने युष्माभि र्विचारितोस्मि,
तेषां मध्ये तिष्ठन्नहं यामिमां कथामुच्चैः स्वरेण कथितवान्
तदन्यो मम कोपि दोषोऽलभ्यत न वेति वरम् एते समुप-
स्थितलोका वदन्तु।

२२ तदा फीलिक्ष एतां कथां श्रुत्वा तन्मतस्य विशेषवृत्तान्तं
विज्ञातुं विचारं स्थगितं कृत्वा कथितवान् लुषिये सहस्र-
सेनापतौ समायाते सति युष्माकं विचारम् अहं निष्पा-
२३ दयिष्यामि। अनन्तरं बन्धनं विना पौलं रक्षितुं तस्य सेवनाय
साक्षात्करणाय वा तदीयात्मीयबन्धुजनान् न वारयितुञ्च
शतसेनापतिम् आदिष्टवान् ।

२४ अल्पदिनात् परं फीलिक्षोऽधिपति र्द्रुषिल्लानाम्ना यिहू-
दीयया स्वभार्य्यया सहागत्य पौलमाहूय तस्य मुखात्
२५ ख्रीष्टधर्म्मस्य वृत्तान्तम् अश्रौषीत्। पौलेन न्यायस्य परिमित-
भोगस्य चरमविचारस्य च कथायां कथितायां सत्यां फीलिक्षः

कम्पमानः सन् व्याहरद् इदानीं याहि, अहम् अवकाशं प्राप्य त्वाम् आह्वास्यामि। मुक्तिप्राप्त्यर्थं पौलेन मह्यं मुद्रा २६ दास्यन्ते इति प्रत्याशां कृत्वा स पुनः पुनस्तमाहूय तेन साकं कथोपकथनं कृतवान्। किन्तु वत्सरद्वयात् परं पर्कियफीष्टे २७ फीलिक्षस्य पदं प्राप्ते सति फीलिक्षो यिहूदीयान् सन्तुष्टान् चिकीर्षन् पौलं बद्धं संस्थाप्य गतवान्।

---

## २५ पञ्चविंशोऽध्यायः।

१ फीलिक्षस्य विनिमयेन फीष्टेऽधिपतौ सति पौलस्य पुनर्विचारः १३ आग्रिप्प-राजस्य सन्निधौ फीष्टद्वारा पौलस्य कथायाः प्रकाशः २३ आग्रिप्पफीष्टाभ्यां पौलस्य पुनर्विचारस्तस्मिन् फीष्टस्य कथा च।

अनन्तरं फीष्टो निजराज्यम् आगत्य दिनत्रयात् परं कैस- १ रियातो यिरूशालम्नगरम् आगमत्। तदा महायाजको २ यिहूदीयानां प्रधानलोकाश्च तस्य समक्षं पौलम् अपावदन्त। भवान् तं यिरूशालमम् आनेतुम् आज्ञापयत्विति विनीय ते ३ तस्माद् अनुग्रहं वाञ्छितवन्तः। यतः पथिमध्ये गोपनेन पौलं हन्तुं ते घातका नियुक्ताः। फीष्ट उत्तरं दत्तवान् पौलः ४ कैसरियायां स्थास्यति पुनरल्पदिनात् परम् अहं तत्र या-स्यामि। ततस्तस्य मानुषस्य यदि कश्चिद् अपराधस्तिष्ठति ५ तर्हि युष्माकं ये शक्नुवन्ति ते मया सह तत्र गत्वा तमपवदन्तु स एतां कथां कथितवान्। दशदिवसेभ्योऽधिकं विलम्ब्य फीष्ट- ६ स्तस्मात् कैसरियानगरं गत्वा परस्मिन् दिवसे विचारासन उपविश्य पौलम् आनेतुम् आज्ञापयत्। पौले समुपस्थिते ७ सति यिरूशालम्नगराद् आगता यिहूदीयलोकास्तं चतुर्दिशि

संवेश्य तस्य विरुद्धं बहून् महादोषान् उत्थापितवन्तः किन्तु
८ तेषां किमपि प्रमाणं दातुं न शक्नुवन्तः। ततः पौलः स्वस्मिन्
उत्तरमिदम् उदितवान्, यिहूदीयानां व्यवस्थाया मन्दि-
रस्य कैसरस्य वा प्रतिकूलं किमपि कर्म्म नाहं कृतवान्।
९ किन्तु फीष्टो यिहूदीयान् सन्तुष्टान् कर्त्तुम् अभिलषन् पौ-
लम् अभाषत त्वं किं यिरूशालमं गत्वास्मिन् अभियोगे मम
१० साक्षाद् विचारितो भविष्यसि? ततः पौल उत्तरं प्रोक्त-
वान्, यत्र मम विचारो भवितुं योग्यः कैसरस्य तत्र विचा-
रासन एव समुपस्थितोस्मि; अहं यिहूदीयानां काम्अपि
११ हानिं नाकार्षम् इति भवान् यथार्थतो विजानाति। कञ्चि-
दपराधं किञ्चन वधार्हं कर्म्म वा यद्यहम् अकरिष्यं तर्हि
प्राणहननदण्डमपि भोक्तुम् उद्यतोऽभविष्यं, किन्तु ते मम
यमपवादं कुर्व्वन्ति स यदि कल्पितमात्रो भवति तर्हि तेषां
करेषु मां समर्पयितुं कस्याप्यधिकारो नास्ति, कैसरस्य निकटे
१२ मम विचारो भवतु। तदा फीष्टो मन्त्रिभिः सार्द्धं संमन्त्र्य
पौलाय कथितवान्, कैसरस्य निकटे किं तव विचारो भवि-
ष्यति? कैसरस्य समीपं गमिष्यसि।

१३ कियद्दिनेभ्यः परम् आग्रिप्पराजा वर्णीकी च फीष्टं सा-
१४ क्षात् कर्त्तुं कैसरियानगरम् आगतवन्तौ। तदा तौ बहु-
दिनानि तत्र स्थितौ ततः फीष्टस्तं राजानं पौलस्य कथां
विज्ञाप्य कथयितुम् आरभत पौलनामानम् एकं वन्दिं
१५ फीलिक्षो बद्धं संस्थाप्य गतवान्। यिरूशालमि मम स्थिति-
काले महायाजको यिहूदीयानां प्राचीनलोकाश्च तम् अपोद्य
१६ तत्प्रति दण्डाज्ञां प्रार्थयन्त। ततोहम् इत्युत्तरम् अवदं

यावद् अपोदितो जनः स्वापवादकान् साक्षात् कृत्वा स्वस्मिन् योऽपराध आरोपितस्तस्य प्रत्युत्तरं दातुं सुयोगं न प्राप्नोति, तावत्कालं कस्यापि मानुषस्य प्राणनाशाज्ञापनं रोमिलो-१७ कानां रीति र्नहि। ततस्तेष्वत्रागतेषु परस्मिन् दिवसेऽहम् अविलम्बं विचारासन उपविश्य तं मानुषम् आनेतुम् आज्ञा-१८ पयम्। तदनन्तरं तस्यापवादका उपस्थाय यादृशम् अहं चिन्तितवान् तादृशं कञ्चन महापवादं नोत्थाप्य स्वेषां १९ मते तथा पौलो यं सजीवं वदति तस्मिन् यीशुनामनि मृतजने च तस्य विरुद्धं कथितवन्तः। ततोऽहं तादृग्विचारे संशयानः सन् कथितवान् त्वं यिरूशालमं गत्वा किं तत्र २० विचारितो भवितुम् इच्छसि? तदा पौलो महाराजस्य २१ निकटे विचारितो भवितुं प्रार्थयत, तस्माद् यावत्कालं तं कैसरस्य समीपं प्रेषयितुं न शक्नोमि तावत्कालं तमत्र स्थापयितुम् आदिष्टवान्। तत आग्रिप्पः फीष्टम् उक्तवान्, २२ अहमपि तस्य मानुषस्य कथां श्रोतुम् अभिलषामि। तदा फीष्टो व्याहरत् श्वस्तदीयां कथां त्वं श्रोष्यसि।

परस्मिन् दिवसे आग्रिप्पो बर्णीकी च महासमागमं कृत्वा २३ प्रधानवाहिनीपतिभि र्नगरस्थप्रधानलोकैश्च सह मिलित्वा राजगृहमागत्य समुपस्थितौ तदा फीष्टस्याज्ञया पौल आनीतोऽभवत्। तदा फीष्टः कथितवान् हे राजन् आग्रिप्प हे २४ उपस्थिताः सर्व्वे लोका यिरूशालम्नगरे यिहूदीयलोकसमूहो यस्मिन् मानुषे मम समीपे निवेदनं कृत्वा प्रोच्चैः कथामिमां कथितवान् पुनरल्पकालमपि तस्य जीवनं नोचितं तमेतं मानुषं पश्यत। किन्त्वेष जनः प्राणनाशार्हं किमपि कर्म्म २५

न कृतवान् इत्यजानां तथापि स महाराजस्य सन्निधौ विचा-
रितो भवितुं प्रार्थयत तस्मात् तस्य समीपं तं प्रेषयितुं मति-
२६ मकरवम्। किन्तु श्रीयुक्तस्य समीपम् एतस्मिन् किं लेखनीयम्
इत्यस्य कस्यचिन् निर्णयस्य न जातत्वाद् एतस्य विचारे सति
यथाहं लेखितुं किञ्चन निश्चितं प्राप्नोमि तदर्थं युष्माकं समक्षं
२७ विशेषतो हे आग्रिप्पराज भवतः समक्षम् एतम् आनये। यतो
वन्दिप्रेषणसमये तस्याभियोगस्य किञ्चिद्लेखनम् अहम् अ-
युक्तं जानामि।

---

## २६ षड्विंशोऽध्यायः।

१ आग्रिप्पं प्रति पौलस्योत्तरं २४ फीष्टेन तस्योन्मत्तत्ववदनं तं प्रति पौलस्योत्तरं फीष्टेन तस्य निरपराधत्ववदनं राज्ञः कैसरस्य समीपं यातुं तस्याज्ञापनञ्च।

१　तत आग्रिप्पः पौलम् अवादीत्, निजां कथां कथयितुं
तुभ्यम् अनुमति दीयते। तस्मात् पौलः करं प्रसार्य्य स्वस्मिन्
२ उत्तरम् अवादीत्। हे आग्रिप्पराज यत्कारणादहं यिहूदी-
यैरपवादितो ऽभवं तस्य वृत्तान्तम् अद्य भवतः साक्षान्
३ निवेदयितुमनुमतोहम् इदं स्वीयं परमं भाग्यं मन्ये; यतो
यिहूदीयलोकानां मध्ये या या रीतिः सूक्ष्मविचाराश्च सन्ति
तेषु भवान् विज्ञतमः; अतएव प्रार्थये धैर्य्यमवलम्ब्य मम निवे-
४ दनं शृणोतु। अहं यिरूशालम्नगरे स्वदेशीयलोकानां मध्ये
तिष्ठन् आ यौवनकालाद् यद्रूपम् आचरितवान् तद् यिहू-
५ दीयलोकाः सर्व्वे विदन्ति। अस्माकं सर्व्वेभ्यः शुद्धतमं यत्
फिरूशीयमतं तदवलम्बी भूत्वाहं कालं यापितवान् ये जना आ
बाल्यकालान् मां जानन्ति ते एतादृशं साक्ष्यं यदि ददति

तर्हि दातुं शक्नुवन्ति। किन्तु हे आग्रिप्पराज ईश्वरोऽस्माकं ६
पूर्व्वपुरुषाणां निकटे यद् अङ्गीकृतवान् तस्य प्रत्याशाहेतोर-
हम् इदानीं विचारस्थाने दण्डायमानोस्मि। तस्याङ्गीकारस्य ७
फलं प्राप्तुम् अस्माकं द्वादशवंशा दिवानिशं महायत्नाद् ईश्वर-
सेवनं कृत्वा यां प्रत्याशां कुर्व्वन्ति तस्याः प्रत्याशाया हेतो-
रहं यिहूदीयैरपवादितोऽभवम्। ईश्वरो मृतान् उत्थापयि- ८
ष्यतीति वाक्यं युष्माकं निकटेऽसम्भवं कुतो भवेत्? नासर- ९
तीययीशो नाम्नो विरुद्धं नानाप्रकारप्रतिकूलाचरणम् उचि-
तम् इत्यहं मनसि यथार्थं विज्ञाय यिरूशालमनगरे तद- १०
करवं फलतः प्रधानयाजकस्य निकटात् क्षमतां प्राप्य बहून्
पवित्रलोकान् कारायां बद्धवान् विशेषतस्तेषां हननसमये
तेषां विरुद्धां निजां सम्मतिं प्रकाशितवान्। वारं वारं ११
भजनभवनेषु तेभ्यो दण्डं प्रदत्तवान् बलात् तं धर्म्मं निन्द-
यितवांश्च पुनश्च तान् प्रति महाक्रोधाद् उन्मत्तः सन् विदे-
शीयनगराणि यावत् तान् ताडितवान्। इत्थं प्रधानयाजकस्य १२
समीपात् शक्तिम् आज्ञापत्रञ्च लब्ध्वा दम्मेषक्नगरं गतवान्।
तदाहं हे राजन् मार्गमध्ये मध्याह्नकाले मम मदीयसङ्गिनां १३
लोकानाञ्च चतसृषु दिक्षु गगणात् प्रकाशमानां भास्करतोपि
तेजस्वतीं दीप्तिं दृष्टवान्। तस्माद् अस्मासु सर्व्वेषु भूमौ पति- १४
तेषु सत्सु हे शौल हे शौल कुतो मां ताडयसि? कण्टकानां
मुखे पादाहननं तव दुःसाध्यम् इब्रीयभाषया गदित एता-
दृश एकः शब्दो मया श्रुतः। तदाहं पृष्टवान् हे प्रभो को १५
भवान्? ततः स कथितवान् यं यीशुं त्वं ताडयसि सोहं,
किन्तु समुत्तिष्ठ त्वं यद् दृष्टवान् इतः परञ्च यद्यत् त्वां १६

दर्शयिष्यामि तेषां सर्व्वेषां कार्य्याणां त्वां साक्षिणं मम सेवकञ्च
१७ कर्त्तुम् अहं दर्शनम् अदाम्। विशेषतो यिहूदीयलोकेभ्यो
भिन्नजातीयेभ्यश्च त्वां मनोनीतं कृत्वा तेषां यथा पापमोचनं
१८ भवति यथा ते मयि विश्वस्य पवित्रीकृतानां मध्ये भागं प्राप्नु-
वन्ति तदभिप्रायेण तेषां ज्ञानचक्षूंषि प्रसन्नानि कर्त्तुं तथा-
न्धकाराद् दीप्तिं प्रति शैतानाधिकाराच्च ईश्वरं प्रति मतीः
१९ परावर्त्तयितुं तेषां समीपं त्वां प्रेष्यामि। हे आग्रिप्पराज
२० एतादृशं स्वर्गीयप्रत्यादेशं अग्राह्यम् अकृत्वाहं प्रथमतो
दम्मेषक्नगरे ततो यिरूशालमि सर्व्वस्मिन् यिहूदीयदेशे
अन्येषु देशेषु च येन लोका मतिं परावर्त्त्य ईश्वरं प्रति परा-
वर्त्तयन्ते, मनःपरावर्त्तनयोग्यानि कर्म्माणि च कुर्व्वन्ति तादृ-
२१ शम् उपदेशं प्रचारितवान्। एतत्कारणाद् यिहूदीया मध्ये-
२२ मन्दिरं मां धृत्वा हन्तुम् उद्यताः। तथापि ख्रीष्टो दुःखं भुक्त्वा
सर्व्वेषां पूर्व्वं श्मशानाद् उत्थाय निजदेशीयानां भिन्नदेशीया-
२३ नाञ्च समीपे दीप्तिं प्रकाशयिष्यति भविष्यद्वादिगणो मूसाश्च
भाविकार्य्यस्य यदिदं प्रमाणम् अददुरेतद् विनान्यां कथां न
कथयित्वा ईश्वराद् अनुग्रहं लब्ध्वा महतां क्षुद्राणाञ्च सर्व्वेषां
समीपे प्रमाणं दत्त्वाद्य यावत् तिष्ठामि।

२४ तस्येमां कथां निशम्य फीष्ट उच्चैःस्वरेण कथितवान् हे पौल
२५ त्वम् उन्मत्तोसि बहुविद्याभ्यासेन त्वं हतज्ञानो जातः। स
उक्तवान् हे महामहिम फीष्ट नाहम् उन्मत्तः किन्तु सत्यं
२६ विवेचनीयञ्च वाक्यं प्रस्तौमि। यस्य साक्षाद् अक्षोभः सन् कथां
कथयामि स राजा तद्वृत्तान्तं जानाति तस्य समीपे किमपि
२७ गुप्तं नेति मया निश्चितं बुध्यते यतस्तद् विजने न कृतं। हे

आग्रिप्यराज भवान् किं भविष्यद्वादिगणोक्तानि वाक्यानि प्रत्येति? भवान् प्रत्येति तदहं जानामि। तत आग्रिप्पः २८ पौलम् अभिहितवान् त्वं प्रवृत्तिं जनयित्वा प्रायेण मामपि ख्रीष्टीयं करोषि। ततः सोऽवादीत् भवान् ये ये लोकाश्च २९ मम कथाम् अद्य शृण्वन्ति प्रायेण इति नहि किन्त्वेतत् शृङ्खलबन्धनं विना सर्व्वथा ते सर्व्वे मादृशा भवन्त्वितीश्वरस्य समीपे प्रार्थयेऽहम्। एतस्यां कथायां कथितायां स राजा ३० सोऽधिपति र्वर्णीकी सभास्था लोकाश्च तस्माद् उत्थाय गोपने ३१ परस्परं विविच्य कथितवन्त एष जनो बन्धनार्हं प्राणहननार्हं वा किमपि कर्म्म नाकरोत्। तत आग्रिप्पः फीष्टम् ३२ अवदत्, यद्येष मानुषः कैसरस्य निकटे विचारितो भवितुं न प्रार्थयिष्यत् तर्हि मुक्तो भवितुम् अशक्ष्यत्।

---

## २७ सप्तविंशोऽध्यायः।

१ पौलस्य रोमानगरगमनं ७ समुद्रमार्गे प्रचण्डपवनः २१ पौलस्योपदेशकथा पोतीयलोकानां कर्म्म च ३९ पोतभञ्जनम् उपद्वीपतीरे लोकानामुत्तरणञ्च।

जलपथेनास्माकम् इतालियादेशं प्रति यात्रायां निश्चि- १ तायां सत्यां ते यूलियनाम्नो महाराजस्य संघातान्तर्गतस्य सेनापतेः समीपे पौलं तदन्यान् कतिपयजनांश्च समार्पयन्। वयम् आद्रामुत्तीयं पोतमेकम् आरुह्य आशियादेशस्य तट- २ समीपेन यातुं मतिं कृत्वा लङ्गरम् उत्थाप्य पोतम् अमोचयाम; माकिदनियादेशस्थथिषलनीकीनिवास्यारिस्तार्खनामा कश्चिद् जनोऽस्माभिः सार्द्धम् आसीत्। परस्मिन् दिवसे ३ ऽस्माभिः सीदोननगरे पोते लागिते तत्र यूलियः सेनापतिः

पौलं प्रति सौजन्यं प्रदर्श्य सान्त्वनार्थं बन्धुबान्धवान् उपया-
४ तुम् अनुजज्ञौ। तस्मात् पोते मोचिते सति सम्मुखवायोः
५ सम्भवाद् वयं कुप्रोपद्वीपस्य तीरसमीपेन गतवन्तः। किलि-
कियायाः पाम्फूलियायाश्च समुद्रस्य पारं गत्वा लूकियादेशा-
६ न्तर्गतं मुरानगरम् उपातिष्ठाम। तत्स्थानाद् इतालियादेशं
गच्छति यः सिकन्दरियानगरस्य पोतस्तं तत्र प्राप्य शतसे-
नापतिस्तं पोतम् अस्मान् आरोहयत्।

७ ततः परं बहूनि दिनानि शनैः शनै र्गत्वा क्नीदपार्श्वोप-
स्थितेः पूर्व्वं प्रतिकूलेन पवनेन वयं सल्मोन्याः सम्मुखम् उपस्थाय
८ क्रीत्युपद्वीपस्य तीरसमीपेन गतवन्तः। कष्टेन तमुत्तीर्य्य
९ लासेयानगरस्याधः सुन्दरनामकं खातम् उपातिष्ठाम। इत्थं
बहुतिथः कालो यापित उपवासदिनञ्चातीतं, तत्कारणात्
१० नौवर्त्मनि भयङ्करे सति पौलो विनयेन कथितवान्, हे महेच्छा
अहं निश्चयं जानामि यात्रायामस्याम् अस्माकं क्लेशा बहूनाम-
पचयाश्च भविष्यन्ति, ते केवलं पोतसामग्र्योरिति न हि,
११ किन्त्वस्माकं प्राणानामपि। तदा शतसेनापतिः पौलो-
क्तवाक्यतोपि कर्णधारस्य पोतवणिजश्च वाक्यं बहुमंस्त।
१२ तत् खातं शीतकाले वासार्हस्थानं न तस्माद् अवाचीप्रतीचो-
र्दिशोः क्रीत्याः फैनीकियखातं यातुं यदि शक्नुवन्तस्तर्हि
१३ तत्र शीतकालं यापयितुं प्रायेण सर्व्वे मन्त्रयामासुः। ततः
परं दक्षिणवायु र्मन्दं वहतीति विलोक्य निजाभिप्रायस्य
सिद्धेः सुयोगो भवतीति बुद्ध्वा पोतं मोचयित्वा क्रीत्युपद्वी-
१४ पस्य तीरसमीपेन चलितवन्तः। किन्त्वल्पक्षणात् परमेव उरक्लु-
१५ दोन्नामा प्रतिकूलः प्रचण्डो वायु र्वहन् पोतेऽलगीत् तस्याभि-

मुखं गन्तुम् पोतस्याशक्तत्वाद् वयं वायुना स्वयं नीताः।
अनन्तरं क्लौदीनाम्न उपद्वीपस्य कूलसमीपेन पोतं गमयित्वा १६
बहुना कष्टेन क्षुद्रनावम् अरक्षाम। ते तामारुह्य रज्ज्वा १७
पोतस्याधोभागम् अबध्नन् तदनन्तरं चेत् पोतो सैकते लग-
तीति भयाद् वातवसनान्यमोचयन् ततः पोतो वायुना
चालितः। किन्तु क्रमशो वायोः प्रबलत्वात् पोतो दोलाय- १८
मानोऽभवत् परस्मिन् दिवसे पोतस्थानि कतिपयानि द्रव्याणि
तोये निक्षिप्तानि। तृतीयदिवसे वयं स्वहस्तैः पोतसज्जन- १९
द्रव्याणि निक्षिप्तवन्तः। ततो बहुदिनानि यावत् सूर्य्यनक्ष- २०
त्रादीनि समाच्छन्नानि ततोऽतीव वात्यागमाद् अस्माकं
प्राणरक्षायाः कापि प्रत्याशा नातिष्ठत्।

बहुदिनेषु लोकैरनाहारेण यापितेषु सर्व्वेषां साक्षात् २१
पौलस्तिष्ठन् अकथयत्, हे महेच्छाः क्रीत्युपद्वीपात् पोतं न
मोचयितुम् अहं पूर्व्वं यद् अवदं तद्ग्रहणं युष्माकम् उचितम्
आसीत् तथा कृते युष्माकम् एषा विपद् एषोऽपचयश्च
नाघटिष्येताम्। किन्तु साम्प्रतं युष्मान् विनीय ब्रवीम्यहं, यूयं २२
न क्षुभ्यत युष्माकम् एकस्यापि प्राणिनो हानि र्न भविष्यति,
केवलस्य पोतस्य हानि र्भविष्यति। यतो यस्येश्वरस्य लोकोऽहं २३
यञ्चाहं परिचरामि तदीय एको दूतो ह्यो रात्रौ ममान्तिके
तिष्ठन् कथितवान्, हे पौल मा भैषीः कैसरस्य सम्मुखे त्वयो- २४
पस्थातव्यं; तवैतान् सङ्गिनो लोकान् ईश्वरस्तुभ्यं दत्तवान्।
अतएव हे महेच्छा यूयं स्थिरमनसो भवत मह्यं या कथाकथि २५
सावश्यं घटिष्यते ममैतादृशो विश्वास ईश्वरे विद्यते, किन्तु २६
कस्यचिद् उपद्वीपस्योपरि पतितव्यम् अस्माभिः। ततः परम् २७

आद्रियासमुद्रे पोतस्तथैव दोलायमानः सन् इतस्ततो गच्छन् चतुर्दशदिवसस्य रात्रे द्वितीयप्रहरसमये कस्यचित् स्थलस्य
२८ समीपमुपतिष्ठतीति पोतीयलोका अन्वमन्यन्त। ततस्ते जलं परिमाय तत्र विंशति र्व्यामा जलानीति ज्ञातवन्तः। किञ्चिद्दूरं गत्वा पुनरपि जलं परिमितवन्तः। तत्र पञ्चदश व्यामा
२९ जलानि दृष्ट्वा चेत् पाषाणे लगतीति भयात् पोतस्य पश्चाद्भागतश्चतुरो लङ्गरान् निक्षिप्य दिवाकरम् अपेक्ष्य सर्व्वे स्थित-
३० वन्तः। किन्तु पोतीयलोकाः पोताग्रभागे लङ्गरनिक्षेपं छलं कृत्वा जलधौ क्षुद्रनावम् अवरोह्य पलायितुम् अचेष्टन्त।
३१ ततः पौलः सेनापतये सैन्यगणाय च कथितवान्, एते यदि
३२ पोतमध्ये न तिष्ठन्ति तर्हि युष्माकं रक्षणं न शक्यं। तदा सेना-
३३ गणो रज्जून् छित्त्वा नावं जले पतितुम् अददात्। प्रभातसमये पौलः सर्व्वान् जनान् भोजनार्थं प्रार्थ्य व्याहरत्, अद्य चतुर्दश-दिनानि यावद् यूयम् अपेक्षमाणा अनाहाराः कालम् अया-
३४ पयत किमपि नाभुंग्ध। अतो विनयेऽहं भक्ष्यं भुज्यतां ततो युष्माकं मङ्गलं भविष्यति, युष्माकं कस्यचिज्जनस्य शिरसः
३५ केशैकोपि न नंक्ष्यति। इति व्याहृत्य पौलः पूपं गृहीत्वेश्वरं
३६ धन्यं भाषमाणस्तं भंक्त्वा भोक्तुम् आरब्धवान्। अनन्तरं सर्व्वे
३७ च सुस्थिराः सन्तः खाद्यानि पर्य्यगृह्लन्। अस्माकं पोते
३८ षट्सप्तत्यधिकशतद्वयलोका आसन्। सर्व्वेषु लोकेषु यथेष्टं भुक्तवत्सु पोतस्थान् गोधूमान् जलधौ निक्षिप्य तैः पोतस्य भारो लघूकृतः।

३९ दिने जातेऽपि स को देश इति तदा न पर्य्यचीयत; किन्तु तत्र समतटम् एकं खातं दृष्ट्वा यदि शक्नुमस्तर्हि वयं तस्या-

ऽभ्यन्तरं पोतं गमयाम इति मतिं कृत्वा ते लङ्गरान् छित्त्वा ४०
जलधौ त्यक्तवन्तः। तथा कर्णबन्धनं मोचयित्वा प्रधानं
वातवसनम् उत्तोल्य तीरसमीपं गतवन्तः। किन्तु द्वयोः समु- ४१
द्रयोः सङ्गमस्थाने सैकतोपरि पोते निक्षिप्ते ऽग्रभागे बाधिते
पश्चाद्भागे प्रबलतरङ्गोऽलगत् तेन पोतो भग्नः। तस्माद् बन्द- ४२
यश्चेद् बाहुभिस्तरन्तः पलायन्ते इत्याशङ्कया सेनागणस्तान्
हन्तुम् अमन्त्रयत्; किन्तु शतसेनापतिः पौलं रक्षितुं प्रयत्नं ४३
कृत्वा तान् तच्चेष्टाया निवर्त्त्य इत्यादिष्टवान्, ये बाहुतरणं
जानन्ति तेऽग्रे प्रोल्लम्फ्य समुद्रे पतित्वा बाहुभिस्तीर्त्त्वा कूलं
यान्तु। अपरम् अवशिष्टा जनाः काष्ठं पोतीयं द्रव्यं वा येन ४४
यत् प्राप्यते तदवलम्ब्य यान्तु; इत्थं सर्व्वे भूमिं प्राप्य प्राणै
र्जीविताः।

---

## २८ अष्टाविंशोऽध्यायः।

१ उपद्वीपीयासभ्यलोकेभ्यः पौलस्यानुग्रहप्राप्तिस्तस्य हस्ताद् दंशकसर्पस्य निक्षेपणं ७ पौलेन पुब्लियनाम्नोऽधिपतेरन्येषाञ्च स्वास्थ्यं ११ पोतेन तस्य रोमानगर-गमनं मार्गमध्ये भ्रातृगणस्य साक्षात् करणं १६ रोमानगर उपस्थिति र्यिहूदीय-लोकेषु पौलस्य निवेदनं सुसंवादप्रचारणञ्च।

इत्थं सर्व्वेषु रक्षां प्राप्तेषु तत्रत्योपद्वीपस्य नाम मिलीतेति १
ते ज्ञातवन्तः। असभ्यलोका यथेष्टम् अनुकम्पां कृत्वा वर्त्तमान- २
वृष्टेः शीताच्च वह्निं प्रज्ज्वाल्यास्माकम् आतिथ्यम् अकुर्व्वन्।
किन्तु पौल इन्धनानि संगृह्य यदा तस्मिन् अग्नौ निरक्षिपत्, ३
तदा वह्नेः प्रतापाद् एकः कृष्णसर्पो निर्गत्य तस्य हस्ते दष्ट-
वान्। तेऽसभ्यलोकास्तस्य हस्ते सर्पम् अवलम्बमानं दृष्ट्वा पर- ४
स्परम् उक्तवन्त एष जनोऽवश्यं नरहा भविष्यति, यतो यद्यपि
जलधे रक्षां प्राप्तवान् तथापि प्रतिफलदायक एनं जीवितुं

५ न ददाति। किन्तु स हस्तं विधुन्वन् तं सर्पम् अग्निमध्ये
६ निक्षिप्य कामपि पीडां नाप्तवान्। ततो विषज्वालया एतस्य
शरीरं स्फीतं भविष्यति यद्वा हठादयं प्राणान् त्यक्ष्यतीति
निश्चित्य लोका बहुक्षणानि यावत् तद् द्रष्टुं स्थितवन्तः किन्तु
तस्य कस्याश्चिद् विपदोऽघटनात् ते तद्विपरीतं विज्ञाय भाषि-
तवन्त एष कश्चिद् देवो भवेत्।

७ पुब्लियनामा जन एकस्तस्योपद्वीपस्याधिपतिरासीत् तत्र
तस्य भूम्यादि च स्थितं। स जनोऽस्मान् निजगृहं नीत्वा सौजन्यं
८ प्रकाश्य दिनत्रयं यावद् अस्माकं आतिथ्यम् अकरोत्। तदा
तस्य पुब्लियस्य पिता ज्वरातिसारेण पीड्यमानः सन् शय्या-
याम् आसीत्; ततः पौलस्तस्य समीपं गत्वा प्रार्थनां कृत्वा
९ तस्य गात्रे हस्तं समर्प्य तं स्वस्थं कृतवान्। इत्थं भूते तद्वीप-
निवासिन इतरेपि रोगिलोका आगत्य निरामया अभवन्।
१० तस्मात्तेऽस्माकम् अतीव सत्कारं कृतवन्तः, विशेषतः प्रस्थान-
समये प्रयोजनीयानि नानाद्रव्याणि दत्तवन्तः।

११ इत्थं तत्र त्रिषु मासेषु गतेषु यस्य चिह्नं दियस्कूरी
तादृश एकः सिकन्दरीयनगरस्य पोतः शीतकालं यापयन्
तस्मिन् उपद्वीपे ऽतिष्ठत् तमेव पोतं वयम् आरुह्य यात्राम्
१२ अकुर्म्म। ततः प्रथमतः सुराकूसनगरम् उपस्थाय तत्र त्रीणि
१३ दिनानि स्थितवन्तः। तस्माद् आवृत्य रीगियनगरम् उपस्थिताः
दिनैकस्मात् परं दक्षिणवायौ सानुकूल्ये सति परस्मिन् दिवसे
१४ पतियलीनगरम् उपातिष्ठाम। ततोऽस्मासु तत्रत्यं भ्रातृगणं
प्राप्तेषु ते स्वैः सार्द्धम् अस्मान् सप्त दिनानि स्थापयितुम्
१५ अयतन्त, इत्थं वयं रोमानगरम् प्रत्यगच्छाम। तस्मात् तत्रत्याः

भ्रातरोऽस्माकम् आगमनवार्त्तां श्रुत्वा आप्पियफरं त्रिष्टाव-र्णीञ्च यावद् अग्रेसराः सन्तोस्मान् साचात् कर्त्तुम् आगमन्; तेषां दर्शनात् पौल ईश्वरं धन्यं वदन् आश्वासम् आप्तवान्।

अस्मासु रोमानगरं गतेषु शतसेनापतिः सर्व्वान् बन्दीन् १६ प्रधानसेनापतेः समीपे समार्पयत् किन्तु पौलाय स्वरक्षकप-दातिना सह पृथग् वस्तुम् अनुमतिं दत्तवान्। दिनत्रयात् १७ परं पौलस्तद्देशस्थान् प्रधानयिहूदिन आहूतवान् ततस्तेषु समुपस्थितेषु स कथितवान्, हे भ्रातृगण निजलोकानां पूर्व्व-पुरुषाणां वा रीते विंपरीतं किञ्चन कर्म्माहं नाकरवं तथापि यिरूशालमनिवासिनो लोका मां बन्दिं कृत्वा रोमिलोकानां हस्तेषु समर्पितवन्तः। रोमिलोका विचार्य्य मम प्राणहन-१८ नार्हं किमपि कारणं न प्राप्य मां मोचयितुम् ऐच्छन्; किन्तु १६ यिहूदिलोकानाम् आपत्त्या मया कैसरराजस्य समीपे विचा-रस्य प्रार्थना कर्त्तव्या जाता नोचेत् निजदेशीयलोकान् प्रति मम कोप्यभियोगो नास्ति। एतत्कारणाद् अहं युष्मान् २० द्रष्टुं संलपितुञ्चाह्वयम् इस्रायेल्वंशीयानां प्रत्याशाहेतोरहम् एतेन शृङ्खलेन बद्धोऽभवम्। तदा ते तम् अवादिषुः, २१ यिहूदीयदेशाद् वयं त्वामधि किमपि पत्रं न प्राप्ता ये भ्रातरः समायातास्तेषां कोपि तव कामपि वार्त्तां नावदत् अभद्रमपि नाकथयच्च। तव मतं किमिति वयं त्वत्तः २२ श्रोतुमिच्छामः। यद् इदं नवीनं मतमुत्थितं तत् सर्व्वत्र सर्व्वेषां निकटे निन्दितं जातम इति वयं जानीमः। तैस्तदर्थम् २३ एकस्मिन् दिने निरूपिते तस्मिन् दिने बहव एकत्र मिलित्वा पौलस्य वासगृहम् आगच्छन् तस्मात् पौल आ प्रातःकालात्

सन्ध्याकालं यावत् मूसाव्यवस्थाग्रन्थाद् भविष्यद्वादिनां ग्रन्थेभ्यश्च यीशोः कथाम् उत्थाप्य ईश्वरस्य राज्ये प्रमाणं दत्त्वा
२४ तेषां प्रवृत्तिं जनयितुं चेष्टितवान्। केचित्तु तस्य कथां प्रत्यायन् केचित्तु न प्रत्यायन्; एतत्कारणात् तेषां परस्परम्
२५ अनैक्यात् सर्व्वे चलितवन्तः; तथापि पौल एतां कथामेकां कथितवान् पवित्र आत्मा यिशयियस्य भविष्यद्वक्तु र्वदनाद् अस्माकं पितृपुरुषेभ्य एतां कथां भद्रं कथयामास, यथा,

२६ 'उपगत्य जनानेतान् त्वं भाषस्व वचस्त्विदं।
कर्णैः श्रोष्यथ यूयं हि किन्तु यूयं न भोत्स्यथ।
नेत्रै र्द्रक्ष्यथ यूयञ्च ज्ञातुं यूयं न शक्ष्यथ।
२७ ते मानुषा यथा नेत्रैः परिपश्यन्ति नैव हि।
कर्णै र्यथा न शृण्वन्ति बुध्यन्ते न च मानसैः।
व्यावर्त्तयत्सु चित्तानि काले कुत्रापि तेषु वै।
मत्तस्ते मनुजाः स्वस्था यथा नैव भवन्ति च।
तथा तेषां मनुष्याणां सन्ति स्थूला हि बुद्धयः।
वधिरीभूतकर्णाश्च जाताश्च मुद्रिता दृशः॥

२८ अत ईश्वराद् यत् परित्राणं तस्य वार्त्ता भिन्नदेशीयानां
२९ समीपं प्रेषिता तएव तां ग्रहीष्यन्तीति यूयं जानीत। एतादृश्यां कथायां कथितायां सत्यां यिहूदिनः परस्परं बहु-
३० विचारं कुर्व्वन्तो गतवन्तः। इत्थं पौलः सम्पूर्णं वत्सरद्वयं यावद् भाटकीये वासगृहे वसन् ये लोकास्तस्य सन्निधिम्
३१ आगच्छन्ति तान् सर्व्वानेव परिगृह्लन्, निर्विघ्नम् अतिशयनिःक्षोभम् ईश्वरीयराजत्वस्य कथां प्रचारयन् प्रभौ यीशौ ख्रीष्टे कथाः समुपादिशत्। इति॥

# रोमिणः प्रति प्रेरितस्य पौलस्य पत्रं।

## १ प्रथमोऽध्यायः॥

१ प्रेरितत्वपदे पौलस्य नियोगः ८ रोमानगरे सुसंवादं प्रचारयितुं तस्य गमनेच्छा १४ सुसंवादेन पुण्यतत्त्वज्ञानयोरुद्भवः २४ सुसंवादेऽज्ञाते सर्व्वपापोत्पत्तेः कथा च।

ईश्वरो निजपुत्त्रमधि यं सुसंवादं भविष्यद्वादिभि र्धर्म्मग्रन्थे १
प्रतिश्रुतवान् तं सुसंवादं प्रचारयितुं पृथक्कृत आहूतः प्रेरि-
तश्च प्रभो र्यीशुख्रीष्टस्य सेवको यः पौलः स रोमानगरस्थान् २
ईश्वरप्रियान् आहूतांश्च पवित्रलोकान् प्रति पत्रं लिखति।
अस्माकं स प्रभु र्यीशुः ख्रीष्टः शारीरिकसम्बन्धेन दायूदो ३
वंशोद्भवः पवित्रस्यात्मनः सम्बन्धेन चेश्वरस्य प्रभाववान् पुत्त्र ४
इति श्मशानात् तस्योत्थानेन प्रतिपन्नं। अपरं येषां मध्ये ५
यीशुना ख्रीष्टेन यूयमप्याहूतास्ते ऽन्यदेशीयलोकास्तस्य नाम्नि
विश्वस्य निदेशग्राहिणो यथा भवन्ति तदभिप्रायेण वयं ६
तस्माद् अनुग्रहं प्रेरितत्वपदञ्च प्राप्ताः। तातेनास्माकम् ईश्वरेण ७
प्रभुणा यीशुख्रीष्टेन च युष्मभ्यम् अनुग्रहः शान्तिश्च प्रदीयेतां।

प्रथमतः सर्व्वस्मिन् जगति युष्माकं विश्वासस्य प्रकाशितत्वाद् ८
अहं युष्माकं सर्व्वेषां निमित्तं यीशुख्रीष्टस्य नाम गृह्णन् ईश्व-
रस्य धन्यवादं करोमि। अपरम् ईश्वरस्य प्रसादाद् बहु- ९
कालात् परं साम्प्रतं युष्माकं समीपं यातुं कथमपि यत्
सुयोगं प्राप्नोमि, एतदर्थं निरन्तरं युष्माकं नामान्युच्चारयन्
निजासु सर्व्वप्रार्थनासु सर्व्वदा निवेदयामि, एतस्मिन् यमहं १०

तत्पुत्त्रीयसुसंवादप्रचारणेन मनसा परिचरामि स ईश्वरो
११ मम साक्षी विद्यते। यतो युष्माकं मम च विश्वासेन वयम्
१२ उभये यथा शान्तियुक्ता भवाम इति कारणाद् युष्माकं
स्थैर्य्यकरणार्थं युष्मभ्यं किञ्चित्परमार्थदानदानाय युष्मान्
१३ साक्षात् कर्त्तुं मदीया वाञ्छा। हे भ्रातृगण भिन्नदेशीय-
लोकानां मध्ये यद्वत् तद्वद् युष्माकं मध्येपि यथा फलं भुञ्जे
तदभिप्रायेण मुहुर्मुहु र्युष्माकं समीपं गन्तुम् उद्यतोऽहं किन्तु
यावद् अद्य तस्मिन् गमने मम विघ्नो जात इति यूयं यद्
अज्ञातास्तिष्ठथ तदहम् उचितं न बुध्ये।

१४ अहं सभ्यासभ्यानां विद्वदविद्वताञ्च सर्व्वेषाम् ऋणी विद्ये।
१५ अतएव रोमानिवासिनां युष्माकं समीपेऽपि यथाशक्ति सुसंवादं
१६ प्रचारयितुम् अहम् उद्यतोस्मि। यतः ख्रीष्टस्य सुसंवादो मम
लज्जास्पदं नहि स ईश्वरस्य शक्तिस्वरूपः सन् आ यिहूदीयेभ्यो
ऽन्यजातीयान् यावत् सर्व्वजातीयानां मध्ये यः कश्चिद् तत्र
१७ विश्वसिति तस्यैव त्राणं जनयति। यतः प्रत्ययस्य समपरि-
माणम् ईश्वरदत्तं पुण्यं तत्सुसंवादे प्रकाशते। तदधि धर्म्म-
पुस्तकेपि लिखितमिदं पुण्यवान् जनो विश्वासेन जीविष्यति।

१८ अतएव ये मानवाः पापकर्म्मणा सत्यतां रुन्धन्ति तेषां
सर्व्वस्य दुराचरणस्याधर्म्मस्य च विरुद्धं स्वर्गाद् ईश्वरस्य कोपः
१९ प्रकाशते। यत ईश्वरमधि यद्यद् ज्ञेयं तद् ईश्वरः स्वयं
तान् प्रति प्रकाशितवान् तस्मात् तेषाम् अगोचरं नहि।
२० फलतस्तस्यानन्तशक्तीश्वरत्वादीन्यदृश्यान्यपि सृष्टिकालम् आ-
रभ्य कर्म्मसु प्रकाशमानानि दृश्यन्ते तस्मात् तेषां दोष-
२१ प्रक्षालनस्य पन्था नास्ति। अपरम् ईश्वरं ज्ञात्वापि ते

तम् ईश्वरज्ञानेन नाद्रियन्त कृतज्ञा वा न जाताः ; त-
स्मात् तेषां सर्व्वे तर्का विफलीभूताः, अपरञ्च तेषां विवेक-
शून्यानि मनांसि तिमिरे मग्नानि। ते स्वान् ज्ञानिनो ज्ञात्वा २२
ज्ञानहीना अभवन् अनश्वरस्येश्वरस्य गौरवं विहाय नश्वरमनु- २३
ष्यपशुपक्षुरोगामिप्रभृतेराकृतिविशिष्टप्रतिमास्तैराश्रिताः।

इत्थं त ईश्वरस्य सत्यतां विहाय मृषामतम् आश्रितवन्तः २४
सच्चिदानन्दं सृष्टिकर्त्तारं त्यक्त्वा सृष्टवस्तुनः पूजां सेवाञ्च कृत-
वन्तः ; इति हेतोरीश्वरस्तान् कुक्रियायां समर्प्य निजनिजकु- २५
चिन्ताभिलाषाभ्यां स्वं स्वं शरीरं परस्परम् अपमानितं कर्त्तुम्
अददात्। ईश्वरेण तेषु क्वभिलाषे समर्पितेषु तेषां योषितः २६
स्वाभाविकाचरणम् अपहाय विपरीतकृत्ये प्रावर्त्तन्त; तथा २७
पुरुषा अपि स्वाभाविकयोषित्सङ्गमं विहाय परस्परं काम-
कृशानुना दग्धाः सन्तः पुमांसः पुंभिः साकं कुकृत्ये समासज्य
निजनिजभ्रान्तेः समुचितं फलम् अलभन्त। ते स्वेषां मनःस्वी- २८
श्वराय स्थानं दातुम् अनिच्छुकास्ततो हेतोरीश्वरस्तान् प्रति
दुष्टमनस्कत्वम् अविहितक्रियत्वञ्च दत्तवान्। अतएव ते सर्व्वे २९
ऽन्यायो व्यभिचारो दुष्टत्वं लोभो जिघांसा ईर्ष्या बधो विवाद-
श्चातुरी कुमतिरित्यादिभि र्दुष्कर्म्मभिः परिपूर्णाः सन्तः
कर्णेजपा अपवादिन ईश्वरद्वेषका हिंसका अहङ्कारिण आत्म- ३०
श्लाघिनः कुकर्म्मोत्पादकाः पित्रोराज्ञालङ्घका अविचारका ३१
नियमलङ्घिनः स्नेहरहिता अतिद्वेषिणो निर्दयाश्च जाताः।
ये जना एतादृशं कर्म्म कुर्व्वन्ति तएव मृतियोग्या ईश्वरस्य ३२
विचारमीदृशं ज्ञात्वापि त एतादृशं कर्म्म स्वयं कुर्व्वन्ति
केवलमिति नहि किन्तु तादृशकर्म्मकारिषु लोकेष्वपि प्रीयन्ते।

# २ द्वितीयोऽध्यायः ।

१ पापेन सर्व्वेषां दण्डनीयत्वस्य कथनं ११ तत्र यिहूदिनाम् अन्यदेशिनाञ्च न विशेषः १७ दोषो सन् यद्यन्यं शिक्षयति तस्मान्न काचित् फलोत्पत्तिः २५ व्यवस्थाचरणं विना त्वक्छेदान्न परित्राणञ्च ।

१ हे परदूषक मनुष्य यः कश्चन त्वं भवसि तवोत्तरदानाय पन्था नास्ति यतो यस्मात् कर्म्मणः परस्त्वया दूष्यते तस्मात् त्वमपि दूष्यसे, यतस्तं दूषयन्नपि त्वं तद्वद् आचरसि ।
२ किन्त्वेतादृगाचारिभ्यो यं दण्डम् ईश्वरो निश्चिनोति स
३ यथार्थ इति वयं जानीमः । अतएव हे मानुष त्वं यादृगाचारिणो दूषयसि स्वयं यदि तादृगाचरसि तर्हि त्वम्
४ ईश्वरदण्डात् पलायितुं शक्ष्यसीति किं बुध्यसे? अपरं तव मनसः परिवर्त्तनं कर्त्तुम् ईश्वरस्यानुग्रहो भवति तन्न बुद्धा त्वं किं तदीयानुग्रहक्षमाचिरसहिष्णुत्वनिधिं तुच्छी-
५ करोषि? तथा स्वान्तःकरणस्य कठोरत्वात् खेदराहित्याच्चेश्वरस्य न्याय्यविचारप्रकाशनस्य क्रोधस्य च दिनं यावत्
६ किं स्वार्थं कोपं सञ्चिनोषि? किन्तु स एकैकमनुजाय तत्क-
७ र्म्मानुसारेण प्रतिफलं दास्यति; वस्तुतस्तु ये जना धैर्य्यं धृत्वा सत्कर्म्म कुर्व्वन्तो महिमा सत्कारोऽमरत्वञ्चैतानि मृगयन्ते
८ तेभ्योऽनन्तायु र्दास्यति । अपरं ये जनाः सत्यधर्म्मम् अगृहीत्वा विपरीतधर्म्मम् गृह्लन्ति तादृशा विरोधिजनाः कोपं
९ क्रोधञ्च भोक्ष्यन्ते । आ यिहूदिनोऽन्यदेशिनः पर्य्यन्तं यावन्तः कुकर्म्मकारिणः प्राणिनः सन्ति ते सर्व्वे दुःखं यातनाञ्च
१० गमिष्यन्ति ; किन्तु आ यिहूदिनो भिन्नदेशिपर्य्यन्ता यावन्तः सत्कर्म्मकारिणो लोकाः सन्ति तान् प्रति महिमा सत्कारः शान्तिश्च भविष्यन्ति ।

ईश्वरस्य विचारे पक्षपातो नास्ति। अलब्धव्यवस्थाशास्त्रै र्यैः ११ पापानि कृतानि व्यवस्थाशास्त्रालब्धत्वानुरूपस्तेषां विनाशो १२ भविष्यति; किन्तु लब्धव्यवस्थाशास्त्रा ये पापान्यकुर्व्वन् व्यवस्थानुसारादेव तेषां विचारो भविष्यति। व्यवस्थाश्रोतार ईश्वरस्य १३ समीपे निष्पापा भविष्यन्तीति नहि किन्तु व्यवस्थाचारिण एव सपुण्या भविष्यन्ति। यतो ऽलब्धव्यवस्थाशास्त्रा भिन्न- १४ देशीयलोका यदि स्वभावतो व्यवस्थानुरूपान् आचारान् कुर्व्वन्ति तर्ह्यलब्धशास्त्राः सन्तोऽपि ते स्वेषां व्यवस्थाशास्त्रमिव स्वयमेव भवन्ति। तेषां मनसि साक्षिस्वरूपे सति तेषां वितर्केषु १५ च कदा तान् दोषिणः कदा वा निर्दोषान् कृतवत्सु ते स्वान्तर्लिखितस्य व्यवस्थाशास्त्रस्य प्रमाणं स्वयमेव ददति। यस्मिन् दिने १६ मया प्रकाशितस्य सुसंवादस्यानुसाराद् ईश्वरो यीशुख्रीष्टेन मानुषाणाम् अन्तःकरणानां गूढाभिप्रायान् धृत्वा विचारयिष्यति तस्मिन् विचारदिने तत् प्रकाशिष्यते।

पश्य त्वं स्वयं यिहूदीति विख्यातो व्यवस्थोपरि विश्वासं १७ करोषि, ईश्वरमुद्दिश्य स्वं श्लाघसे, तथा व्यवस्थया शिक्षितो १८ भूत्वा तस्याभिमतं जानासि, सर्व्वासां कथानां सारं विविंक्षे, अपरं ज्ञानस्य सत्यतायाश्चाकरस्वरूपं शास्त्रं मम समीपे विद्यत १९ अतो ऽन्धलोकानां मार्गदर्शयिता तिमिरस्थितलोकानां मध्ये दीप्तिस्वरूपोऽज्ञानलोकेभ्यो ज्ञानदाता शिशूनां शिक्षयिता- २० हमेवेति मन्यसे। परान् शिक्षयन् स्वयं स्वं किं न शिक्ष- २१ यसि? वस्तुतश्चौर्य्यनिषेधव्यवस्थां प्रचारयन् त्वं किं स्वयमेव चोरयसि? तथा परदारगमनं प्रतिषेधन् स्वयं किं २२ परदारान् गच्छसि? तथा त्वं स्वयं प्रतिमाद्वेषी सन् किं

२३ मन्दिरस्य द्रव्याणि हरसि? यस्त्वं व्यवस्थां श्लाघसे स त्वं किं
२४ व्यवस्थाम् अवमत्य नेश्वरं सम्मन्यसे? शास्त्रे यथा लिखति भिन्न-
देशिनां समीपे युष्माकं दोषाद् ईश्वरस्य नाम्नो निन्दा भवति।
२५ यदि व्यवस्थां पालयसि तर्हि तव त्वक्छेदक्रिया सफला
भवति; यदि व्यवस्थां लङ्घसे तर्हि तव त्वक्छेदोऽत्वक्छेदो
२६ भविष्यति। यतो व्यवस्थाशास्त्रादिष्टधर्म्मकर्म्माचारी पुमान्
अत्वक्छेदी सन्नपि किं त्वक्छेदिनां मध्ये न गणयिष्यते?
२७ किन्तु लब्धशास्त्रश्छिन्नत्वक् च त्वं यदि व्यवस्थालङ्घनं करोषि
तर्हि व्यवस्थापालकाः स्वाभाविकाच्छिन्नत्वचो लोकास्त्वां किं
२८ न दूषयिष्यन्ति? तस्माद् यो बाह्ये यिहूदी स यिहूदी
२९ नहि तथाङ्गस्य यस्त्वक्छेदः स त्वक्छेदो नहि; किन्तु यो
जन आन्तरिको यिहूदी स एव यिहूदी अपरञ्च केवललि-
खितया व्यवस्थया न किन्तु मानसिको यस्त्वक्छेदो यस्य च
प्रशंसा मनुष्येभ्यो न भूत्वा ईश्वराद् भवति सएव त्वक्छेदः।

---

## ३ तृतीयोऽध्यायः।

१ यिहूदिनां नानाधर्म्मानुष्ठानं ९ अन्येषामिव व्यवस्थालङ्घने कृते तेन न परित्राणं
२१ एककृत्वा व्यवस्थालङ्घने कृते सति न त्राणं किन्तु केवलविश्वासात् त्राणञ्च।

१ अपरञ्च यिहूदिनः किं श्रेष्ठत्वं? तथा त्वक्छेदस्य वा
२ किं फलं? सर्व्वथा बहूनि फलानि सन्ति, विशेषत ईश्वरस्य
३ शास्त्रं तेभ्योऽदीयत। कैश्चिद् अविश्वसने कृते तेषाम् अविश्व-
४ सनात् किम् ईश्वरस्य विश्वास्यताया हानिरुत्पत्स्यते? केनापि
प्रकारेण नहि। यद्यपि सर्व्वे मनुष्या मिथ्यावादिनस्तथापी-
श्वरः सत्यवादी। शास्त्रे यथा लिखितमास्ते,

अतस्त्वन्तु स्ववाक्येन निर्द्दोषो हि भविष्यसि।
विचारे चैव निष्पापो भविष्यसि न संशयः।

अस्माकम् अन्यायेन यदीश्वरस्य न्यायः प्रकाशते तर्हि किं ५ वदिष्यामः? अहं मानुषाणां कथामिव कथां कथयामि, ईश्वरः समुचितं दण्डं दत्त्वा किम् अन्यायी भविष्यति? इत्थं ६ न भवतु, तथा सतीश्वरः कथं जगतो विचारयिता भविष्यति? मम मिथ्यावाक्यवदनाद् यदीश्वरस्य सत्यत्वेन तस्य महिमा ७ वर्द्धते तर्हि कस्मादहं विचारेऽपराधित्वेन गण्यो भवामि? मङ्ग- ८ लार्थं पापमपि करणीयमिति वाक्यं त्वया कुतो नोच्यते? किन्तु यैरुच्यते ते नितान्तं दण्डस्य पात्राणि भवन्ति; तथापि तद्वाक्यम् अस्माभिरप्युच्यत इत्यस्माकं ग्लानिं कुर्व्वन्तः कियन्तो लोका वदन्ति।

अन्यलोकेभ्यो वयं किं श्रेष्ठाः? कदाचन नहि यतो ९ यिहूदिनो ऽन्यदेशिनश्च सर्व्वएव पापस्यायत्ता इत्यस्य प्रमाणं वयं पूर्व्वम् अददाम। लिपि र्यथास्ते, १०

'नैकोपि धार्म्मिको जनः।
तथा ज्ञानीश्वरज्ञानी मानवः कोपि नास्ति हि। ११
विमार्गगामिनः सर्व्वे सर्व्वे दुष्कर्म्मकारिणः। १२
एको जनोपि नो तेषां साधुकर्म्म करोति च।
तथा तेषान्तु वै कण्ठा अनावृतश्मशानवत्। १३
स्तुतिवादं प्रकुर्व्वन्ति जिह्वाभिस्ते तु केवलं।
तेषामोष्ठस्य निम्ने तु विषं तिष्ठति सर्प्पवत्।
मुखं तेषां हि शापेन कपटेन च पूर्य्यते। १४
रक्तपाताय तेषां तु पदानि क्षिप्रगानि च। १५

१६   पथि तेषां मनुष्याणां नाशः क्लेशश्च केवलः ।
१७   ते जना नहि जानन्ति पन्थानं सुखदायिनं ।
१८   परमेशाद् भयं यत्तत् तच्चक्षुषोरगोचरं ।'

१९ व्यवस्थायां यद्यल्लिखति तद् व्यवस्थाधीनान् लोकान् उद्दिश्य लिखतीति वयं जानीमः । ततो मनुष्यमात्रो निरुत्तरः सन्
२० ईश्वरस्य साक्षाद् अपराधी भवति । अतएव व्यवस्थानुरूपैः कर्म्मभिः कश्चिदपि प्राणीश्वरस्य साक्षात् सपुण्यीकृतो भवितुं न शक्ष्यति यतो व्यवस्थया पापज्ञानमात्रं जायते ।

२१   किन्तु व्यवस्थायाः पृथग् ईश्वरेण देयं यत् पुण्यं तद् व्यवस्थाया भविष्यद्वादिगणस्य च वचनैः प्रमाणीकृतं सद्
२२ इदानीं प्रकाशते । यीशुख्रीष्टे विश्वासकरणाद् ईश्वरेण दत्तं तत् पुण्यं सकलेषु प्रकाशितं सत् सर्व्वान् विश्वा-
२३ सिनः प्रति वर्त्तते । तेषां कोपि प्रभेदो नास्ति, यतः सर्व्वे
२४ एव पापिन ईश्वरीयतेजोहीनाश्च जाताः । त ईश्वरस्यानुग्रहाद् मूल्यं विना ख्रीष्टकृतेन परित्राणेन सपुण्यीकृता
२५ भवन्ति । यस्मात् स्वशोणितेन विश्वासात् पापनाशको बली भवितुं स एव पूर्व्वम् ईश्वरेण निश्चितः, इत्थम् ईश्वरीय-सहिष्णुत्वात् पुराकृतपापानां मार्ज्जनकरणे स्वीययाथार्थ्यं तेन
२६ प्रकाश्यते, वर्त्तमानकालीयमपि स्वयाथार्थ्यं तेन प्रकाश्यते, अपरं यीशौ विश्वासिनं सपुण्यीकुर्व्वन्नपि स याथार्थिकस्तिष्ठति ।
२७ तर्हि कुत्रात्मश्लाघा? सा दूरीकृता; कया व्यवस्थया? किं क्रियारूपव्यवस्थया? इत्थं नहि किन्तु तत् केवलविश्वास-
२८ रूपया व्यवस्थयैव भवति । अतएव व्यवस्थानुरूपाः क्रिया विना केवलेन विश्वासेन मानवः सपुण्यीकृतो भवितुं शक्नो-

तीत्यस्य राद्धान्तं दर्शयामः। स किं केवलयिहूदिनाम् २९ ईश्वरो भवति? भिन्नदेशिनाम् ईश्वरो न भवति? भिन्न-देशिनामपि भवति; यस्माद् एक ईश्वरो विश्वासात् त्वक्- ३० छेदिनो विश्वासेनात्वक्छेदिनश्च सपुण्यीकरिष्यति। तर्हि विश्वा- ३१ सेन वयं किं व्यवस्थां लुम्पाम? इत्थं न भवतु वयं व्यवस्थां संस्थापयाम एव।

---

## ४ चतुर्थोऽध्यायः।

१ विश्वासाद् इब्राहीमः पुण्यवत्त्वं ९ तस्येब्राहीमः पुण्यं त्वक्छेदान्न किन्तु विश्वासात् प्राप्तं १८ तत् पुण्यं विश्वासेनास्माभिः प्राप्तम्।

अस्माकं पूर्व्वपुरुष इब्राहीम् कायिकक्रियया किं लब्धवान् १ एतदधि किं वदिष्यामः? स यदि निजक्रियाभ्यः सपुण्यो भवेत् २ तर्हि तस्यात्मश्लाघां कर्त्तुं पन्था भवेदिति सत्यं, किन्त्वीश्वरस्य समीपे नहि। शास्त्रे किं लिखति? इब्राहीम ईश्वरे विश्व- ३ सनात् स विश्वासस्तस्मै पुण्यार्थं गणितो बभूव। कर्म्मकारिणो ४ यद् वेतनं तद् अनुग्रहस्य फलं नहि किन्तु तेनोपार्जितं मन्त-व्यम्। किन्तु यः पापिनं सपुण्यीकरोति तस्मिन् विश्वासिनः ५ कर्म्महीनस्य जनस्य यो विश्वासः स पुण्यार्थं गण्यो भवति। अपरं यं क्रियाहीनम् ईश्वरः सपुण्यीकरोति तस्य धन्यवादं ६ दायूद् वर्णयामास, यथा,

'स धन्योऽघानि मृष्टानि यस्यागांस्यावृतानि च। ७
स च धन्यः परेशेन पापं यस्य न गण्यते।' ८

एष धन्यवादस्त्वक्छेदिनम् अत्वक्छेदिनं वा कं प्रति ९ भवति? इब्राहीमो विश्वासः पुण्यार्थं गणित इति वयं वदामः। स विश्वासस्तस्य त्वक्छेदित्वावस्थायां किम् अत्वक्छेदित्वावस्थायां १०

কস্মিন্ সময়ে পুণ্যমিব গণিতঃ? ত্বক্‌ছেদিত্বাবস্থায়াং নহি
১১ কিন্ত্বত্বক্‌ছেদিত্বাবস্থায়াং। অপরঞ্চ স যৎ সর্ব্বেষাম্ অত্বক্-
ছেদিনাং বিশ্বাসিনাম্ আদিপুরুষো ভবেৎ, তে চ পুণ্যবত্ত্বেন
১২ গণ্যেরন্; যে চ লোকাঃ কেবলং ছিন্নত্বচো ন সন্তো ঽস্মৎপূর্ব্ব-
পুরুষ ইব্রাহীম্ অছিন্নত্বক্ সন্ যেন বিশ্বাসমার্গেণ গতবান্
তেনৈব তস্য পাদচিহ্নেন গচ্ছন্তি তেষাং ত্বক্‌ছেদিনামপ্যাদি-
পুরুষো ভবেৎ তদর্থম্ অত্বক্‌ছেদিনো মানবস্য বিশ্বাসাৎ
পুণ্যম্ উৎপদ্যত ইতি প্রমাণস্বরূপং ত্বক্‌ছেদচিহ্নং স প্রাপ্নোৎ।
১৩ ইব্রাহীম্ জগতোঽধিকারী ভবিষ্যতি যৈষা প্রতিজ্ঞা তং তস্য
বংশঞ্চ প্রতি পূর্ব্বম্ অক্রিয়ত সা ব্যবস্থামূলিকা নহি কিন্তু
১৪ বিশ্বাসজন্যপুণ্যমূলিকা। যতো ব্যবস্থাবলম্বিনো যদ্যধি-
কারিণো ভবন্তি তর্হি বিশ্বাসো বিফলো জায়তে সা প্রতি-
১৫ জ্ঞাপি লুপ্তৈব। অধিকন্তু ব্যবস্থা কোপং জনয়তি যতো ঽবিদ্য-
১৬ মানায়াং ব্যবস্থায়াম্ আজ্ঞালঙ্ঘনং ন সম্ভবতি। অতএব
সা প্রতিজ্ঞা যদ্ অনুগ্রহস্য ফলং ভবেৎ তদর্থং বিশ্বাসমূলিকা
যতস্তথাত্বে তদ্বংশসমুদায়ং প্রতি অর্থতো যে ব্যবস্থয়া তদ্বংশস-
ম্ভবাঃ কেবলং তান্ প্রতি নহি কিন্তু য ইব্রাহীমীয়বিশ্বাসেন
১৭ তৎসম্ভবাস্তানপি প্রতি সা প্রতিজ্ঞা স্থাস্নুর্ভবতি। যো নির্জী-
বান্ সজীবান্ অবিদ্যমানানি বস্তূনি চ বিদ্যমানানি করোতি
ইব্রাহীমো বিশ্বাসভূমেস্তস্যেশ্বরস্য সাক্ষাৎ সোঽস্মাকং সর্ব্বেষাম্
আদিপুরুষ আস্তে, যথা লিখিতং বিদ্যতে, 'অহং ত্বাং বহুজা-
তীনাম্ আদিপুরুষং কৃত্বা নিযুক্তবান্।'
১৮ ত্বদীয়স্তাদৃশো বংশো জনিষ্যতে যদিদং বাক্যং প্রতিশ্রুতং
তদনুসারাদ্ ইব্রাহীম্ বহুদেশীয়লোকানাম্ আদিপুরুষো যদ্

भवति तदर्थं सोऽनपेक्षितव्यमप्यपेक्षमाणो विश्वासं कृतवान्।
अपरञ्च क्षीणविश्वासो न भूत्वा शतवत्सरवयस्कत्वात् स्वश- १९
रीरस्य जरां साराणाख्यः स्वभार्य्याया रजोनिवृत्तिञ्च तृणाय
न मेने। अपरम् अविश्वासाद् ईश्वरस्य प्रतिज्ञावचने कमपि २०
संशयं न चकार; किन्त्वीश्वरेण यत् प्रतिश्रुतं तत् साधयितुं २१
शक्यत इति निश्चितं विज्ञाय दृढविश्वासः सन् ईश्वरस्य महि-
मानं प्रकाशयाञ्चकार। इति हेतोस्तस्य स विश्वासस्तदीय- २२
पुण्यमिव गणयाञ्चक्रे। पुण्यमिवागण्यत तत् केवलस्य तस्य २३
निमित्तं लिखितं नहि, अस्माकं निमित्तमपि, यतोऽस्माकं २४
पापनाशार्थं समर्पितोऽस्माकं पुण्यप्राप्त्यर्थञ्चोत्थापितोऽभवत्
योऽस्माकं प्रभु र्यीशुस्तस्योत्थापयितरीश्वरे यदि वयं विश्व- २५
सामस्तर्ह्यस्माकमपि स एव विश्वासः पुण्यमिव गणयिष्यते।

---

## ५ पञ्चमोऽध्यायः।

१ विश्वासेन पुण्ये सति बहुलाभः १२ आदमा यथा पापं मृतिश्च तथा ख्रीष्टेन पुण्यं परमायुश्च।

विश्वासेन सपुण्यीकृता वयम् ईश्वरेण सार्द्धं प्रभुणास्माकं १
यीशुख्रीष्टेन मेलनं प्राप्ताः। अपरं वयं यस्मिन् अनुग्र- २
हाश्रये तिष्ठामस्तन्मध्यं विश्वासमार्गेण तेनैवानीता वयम्
ईश्वरीयविभवप्राप्तिप्रत्याशया समानन्दामः। तत् केवलं ३
नहि किन्तु क्लेशभोगेऽप्यानन्दामो यतः क्लेशाद् धैर्य्यं जायत
इति वयं जानीमः, धैर्य्याच्च परीक्षितत्वं जायते, परीक्षितत्वात् ४
प्रत्याशा जायते, प्रत्याशातो व्रीडितत्वं न जायते, यस्माद् अस्मभ्यं ५
दत्तेन पवित्रेणात्मनास्माकम् अन्तःकरणानीश्वरस्य प्रेमवा-
रिणा सिक्तानि। अस्मासु निरुपायेषु सत्सु ख्रीष्ट उपयुक्ते समये ६

७ पापिनां निमित्तं स्वीयान् प्राणान् अत्यजत्। हितकारिणो जनस्य कृते कोपि प्राणान् त्यक्तुं साहसं कर्त्तुं शक्नोति, किन्तु धार्म्मिकस्य कृते प्रायेण कोपि प्राणान् न त्यजति।
८ किन्त्वस्मासु पापिषु सत्स्वपि निमित्तमस्माकं खीष्टः स्वप्राणान् त्यक्तवान्, तत ईश्वरोस्मान् प्रति निजं परमप्रेमाणं दर्शित-
९ वान्। अतएव तस्य रक्तपातेन सपुण्यीकृता वयं नितान्तं
१० तेन कोपाद् उद्धारिष्यामहे। फलतो वयं यदा रिपव आस्म तदेश्वरस्य पुत्रस्य मरणेन तेन सार्द्धं यद्यस्माकं मेलनं जातं तर्हि मेलनप्राप्ताः सन्तोऽवश्यं तस्य जीवनेन रक्षां लप्स्या-
११ महे। तत् केवलं नहि किन्तु येन मेलनम् अलभामहि तेनास्माकं प्रभुणा यीशुख्रीष्टेन साम्प्रतम् ईश्वरे समानन्दामश्च।
१२ 　तथा सति, एकेन मानुषेण पापं पापेन च मरणं जगतीं प्राविशत् अपरं सर्व्वेषां पापित्वात् सर्व्वे मानुषा मृते र्निघ्ना
१३ अभवन्। यतो व्यवस्थादानसमयं यावत् जगति पापम् आसीत् किन्तु यत्र व्यवस्था न विद्यते तत्र पापस्यापि गणना न विद्यते।
१४ तथाप्यादमा यादृशं पापं कृतं तादृशं पापं यै र्नाकारि आदमम् आरभ्य मूसां यावत् तेषामप्युपरि मृत्यू राजत्वम्
१५ अकरोत् स आदम् भाव्यादमो निदर्शनमेवास्ते। किन्तु पापकर्म्मणो यादृशो भावस्तादृग् दानकर्म्मणो भावो न भवति यत एकस्य जनस्यापराधेन यदि बहूनां मरणम् अघटत तथापीश्वरानुग्रहस्तदनुग्रहमूलकं दानञ्चैकेन जनेनार्थाद् यीशुना
१६ खीष्टेन बहुषु बाहुल्यातिबाहुल्येन फलति। अपरम् एकस्य जनस्य पापकर्म्म यादृक् फलयुक्तं दानकर्म्म तादृक् न भवति यतो विचारकर्म्मैकं पापम् आरभ्य दण्डजनकं बभूव, किन्तु

दानकर्म्म बहुपापान्यारभ्य पुण्यजनकं बभूव। यत एकस्य जनस्य १७ पापकर्म्मतस्तेनैकेन यदि मरणस्य राजत्वं जातं तर्हि ये जना अनुग्रहस्य बाहुल्यं पुण्यदानञ्च प्राप्नुवन्ति त एकेन जनेन, अर्थात् यीशुख्रीष्टेन, जीवने राजत्वम् अवश्यं करिष्यन्ति। एकोऽपराधो यद्वत् सर्व्वमानवानां दण्डगामी मार्गो ऽभ- १८ वत् तद्वद् एकं पुण्यदानं सर्व्वमानवानां जीवनयुक्तपुण्यगामी मार्ग एव। अपरम् एकस्य जनस्याज्ञालङ्घनाद् यथा बहवो १९ ऽपराधिनो जातास्तद्वद् एकस्याज्ञाचरणाद् बहवः सपुण्यीकृता भवन्ति। अधिकन्तु व्यवस्थागमनाद् अपराधस्य बाहुल्यं जातं २० किन्तु यत्र पापस्य बाहुल्यं तत्रैव तस्माद् अनुग्रहस्य बाहुल्यम् अभवत्। तेन मृत्युना यद्वत् पापस्य राजत्वम् अभवत् तद्वद् २१ अस्माकं प्रभुयीशुख्रीष्टद्वारानन्तजीवनदायिपुण्येनानुग्रहस्य राजत्वं भवति।

---

## ६ षष्ठोऽध्यायः।

१ ख्रीष्टात् पुण्ये प्राप्ते पापकरणम् अनुचितं १२ तेन पुण्यवति सति पापस्य दमनं धर्म्मपालनञ्चोचितं तेनानन्तायुःप्राप्तत्वञ्च।

प्रभूतरूपेण यद् अनुग्रहः प्रकाशते तदर्थं पापे तिष्ठाम इति १ वाक्यं किं वयं वदिष्यामः? तन्न भवतु। पापं प्रति मृता वयं २ पुनस्तस्मिन् कथम् जीविष्यामः? वयं यावन्तो लोका यीशु- ३ ख्रीष्टे मज्जिता अभवाम तावन्त एव तस्य मरणे मज्जिता इति किं यूयं न जानीथ? ततो यथा पितुः पराक्रमेण ४ श्मशानात् ख्रीष्ट उत्थापितस्तथा वयमपि यत् नूतनजीविन इवाचरामस्तदर्थं मज्जनेन तेन सार्द्धं मृत्युरूपे श्मशाने

५ संस्थापिताः। अपरं वयं यदि तेन संयुक्ताः सन्तः स इव मरण-
भागिनो जातास्तर्हि स इवोत्थानभागिनोऽपि भविष्यामः।
६ वयं यत् पापस्य दासाः पुन र्न भवामस्तदर्थम् अस्माकं पाप-
रूपशरीरस्य विनाशार्थम् अस्माकं पुरातनपुरुषस्तेन साकं
७ क्रुशेऽहन्यतेति वयं जानीमः। यो हतः स पापात् मुक्त एव।
८ अतएव यदि वयं खीष्टेन सार्द्धम् अहन्यामहि तर्हि पुनरपि
९ तेन सहिता जीविष्याम इत्यत्रास्माकं विश्वासो विद्यते। यतः
श्मशानाद् उत्थापितः खीष्टो पुन र्न म्रियत इति वयं जानीमः।
१० तस्मिन् कोप्यधिकारो मृत्यो र्नास्ति। अपरञ्च स यद् अम्रि-
यत तेनैकदा पापम् उद्दिश्याम्रियत, यच्च जीवति तेनेश्वरम्
११ उद्दिश्य जीवति; तद्वद् यूयमपि स्वान् पापम् उद्दिश्य मृतान्
अस्माकं प्रभुणा यीशुखीष्टेनेश्वरम् उद्दिश्य जीवन्तो जानीत।
१२ अपरञ्च कुत्सिताभिलाषान् पूरयितुं युष्माकं मर्त्यदेहेषु
१३ पापम् आधिपत्यं न करोतु। अपरं स्वं स्वम् अङ्गम् अधर्म्म-
स्यास्त्रं कृत्वा पापसेवायां न समर्पयत, किन्तु श्मशानाद् उत्थि-
तानिव स्वान् ईश्वरे समर्पयत स्वान्यङ्गानि च धर्म्मास्त्रस्वरूपाणी-
१४ श्वरम् उद्दिश्य समर्पयत। युष्माकम् उपरि पापस्याधिपत्यं पुन
र्न भविष्यति, यस्माद् यूयं व्यवस्थाया अनायत्ता अनुग्रहस्य
१५ चायत्ता अभवत। किन्तु वयं व्यवस्थाया अनायत्ता अनु-
ग्रहस्य चायत्ता अभवाम, इति कारणात् किं पापं करिष्यामः?
१६ तन्न भवतु। यतो मृतिजनकं पापं पुण्यजनकं निदेशाचरण-
ञ्चैतयोर्द्वयो र्यस्मिन् आज्ञापालनार्थं भृत्यानिव स्वान् समर्प-
१७ यथ, तस्यैव भृत्या भवथ, एतत् किं यूयं न जानीथ? अपरञ्च
पूर्व्वं यूयं पापस्य भृत्या आस्तेति सत्यं किन्तु यस्यां शिक्षारू-

पायां मूषायां निक्षिप्ता अभवत तस्या आकृतिं मनोभि र्लब्धवन्त इति कारणाद् ईश्वरस्य धन्यवादो भवतु। इत्थं यूयं १८ पापसेवातो मुक्ताः सन्तो धर्म्मस्य भृत्या जाताः। युष्माकं १९ शारीरिक्या दुर्ब्बलताया हेतो र्मानववद् अहम् एतद् ब्रवीमि; पुनः पुनरधर्म्मकरणार्थं यद्वत् पूर्व्वं पापामेध्ययो र्भृत्यत्वे निजाङ्गानि समार्पयत तद्वद् इदानीं साधुकर्म्मकरणार्थं धर्म्मस्य भृत्यत्वे निजाङ्गानि समर्पयत। यदा यूयं पापस्य भृत्या २० आस्त तदा धर्म्मस्य नायत्ता आस्त। तर्हि यानि कर्म्माणि यूयम् २१ इदानीं लज्जाजनकानि बुध्यध्वे पूर्व्वं तै र्युष्माकं को लाभ आसीत्? तेषां कर्म्मणां फलं मरणमेव। किन्तु साम्प्रतं यूयं २२ पापसेवातो मुक्ताः सन्त ईश्वरस्य भृत्याऽभवत तस्माद् युष्माकं पवित्रत्वरूपं लभ्यम् अनन्तजीवनरूपञ्च फलम् आस्ते। यतः २३ पापस्य वेतनं मरणं किन्त्वस्माकं प्रभुणा यीशुख्रीष्टेनानन्तजीवनम् ईश्वरदत्तं पारितोषिकम् आस्ते।

---

## ७ सप्तमोऽध्यायः।

१ विश्वासिलोकानां व्यवस्थातो मुक्तिः ख्रीष्टेन सहोढत्वं ७ व्यवस्थाया अनभद्रत्वं किन्तु पवित्रत्वं न्याय्यत्वं हितदायकत्वं १२ व्यवस्थालङ्घनेन पापे जाते सति कोपि यदि तत् पापम् ऋतीयते तर्हि व्यवस्थाया उत्तमत्वस्वीकरणकथनञ्च।

हे भ्रातृगण व्यवस्थाविदः प्रति ममेदं निवेदनं। विधिः १ केवलं यावज्जीवं मानवोपर्य्यधिपतित्वं करोतीति यूयं किं न जानीथ? यावत्कालं पति र्जीवति तावत्कालम् ऊढा भार्य्या २ व्यवस्थया तस्मिन् बद्धा तिष्ठति किन्तु यदि पति र्म्रियते तर्हि सा नारी पत्यु र्व्यवस्थातो मुच्यते। एतत्कारणात् पत्यु- ३ र्जीवनकाले नारी यद्यन्यं पुरुषं विवहति तर्हि सा व्यभि-

चारिणी भवति किन्तु यदि स पति म्रियते तर्हि सा तस्या व्यवस्थाया मुक्ता सती पुरुषान्तरेण व्यूढापि व्यभिचारिणी न ४ भवति। हे मम भ्रातृगण, ईश्वरनिमित्तं यदस्माकं फलं जायते तदर्थं श्मशानाद् उत्थापितेन पुरुषेण सह युष्माकं विवाहो यद् भवेत् तदर्थं ख्रीष्टस्य शरीरेण यूयं व्यवस्थां प्रति ५ मृतवन्तः। यतोऽस्माकं शारीरिकाचरणसमये मरणनिमित्तं फलम् उत्पादयितुं व्यवस्थया दूषितः पापाभिलाषो- ६ ऽस्माकम् अङ्गेषु जीवन् आसीत्। किन्तु तदा यस्या व्यवस्थाया वशे आस्महि साम्प्रतं तां प्रति मृतत्वाद् वयं तस्या अधीनत्वात् मुक्ता इति हेतोरीश्वरोऽस्माभिः पुरातनलिखितानुसारात् न सेवितव्यः किन्तु नवीनस्वभावेनैव सेवितव्यः।

७ तर्हि वयं किं ब्रूमः? व्यवस्था किं पापजनिका भवति? नेत्थं भवतु। व्यवस्थाम् अविद्यमानायां पापं किम् इत्यहं नावेदं; किञ्च लोभं मा कार्षीरिति चेद् व्यवस्थाग्रन्थे लिखितं ८ नाभविष्यत् तर्हि लोभः किम्भूतस्तदहं नाज्ञास्यं। किन्तु व्यवस्थया पापं छिद्रं प्राप्यास्माकम् अन्तः सर्व्वविधं कुत्सिताभिलाषम् अजनयत्; यतो व्यवस्थायाम् अविद्यमानायां पापं ९ मृतं। अपरं पूर्व्वं व्यवस्थायाम् अविद्यमानायाम् अहम् अजीवं ततः परम् आज्ञायाम् उपस्थितायाम् पापम् अजीवत् १० तदाहम् अम्रिये। इत्थं सति जीवननिमित्ता याज्ञा सा मम ११ मृत्युजनिकाभवत्। यतः पापं छिद्रं प्राप्य व्यवस्थितादेशेन १२ मां वञ्चयित्वा तेन माम् अहन्। अतएव व्यवस्था पवित्रा, आदेशश्च पवित्रो न्याय्यो हितकारी च भवति।

१३ तर्हि यत् स्वयं हितकृत् तत् किं मम मृत्युजनकम् अभ-

বত্? নেত্থং ভবতু; কিন্তু পাপং যত্ পাতকমিব প্রকাশতে তথা নির্দেশেন পাপং যদতীব পাতকমিব প্রকাশতে তদর্থং হিতোপায়েন মম মরণম্ অজনযত্। ব্যবস্থাত্মবোধিকেতি বযং ১৪ জানীমঃ কিন্ত্বহং শারীরতাচারী পাপস্য ক্রীতকিঙ্করো বিদ্যে। যতো যত্ কর্ম্ম করোমি তত্ মম মনোঽভিমতং নহি; ১৫ অপরং যন্ মম মনোঽভিমতং তন্ন করোমি কিন্তু যদ্ ঋতীযে তত্ করোমি। তথাত্বে যন্ মমানভিমতং তদ্ যদি করোমি ১৬ তর্হি ব্যবস্থা সূত্তমেতি স্বীকরোমি। অতএব সম্প্রতি তত্ ১৭ কর্ম্ম মযা ক্রিযত ইতি নহি কিন্তু মম শরীরস্থেন পাপেনৈব ক্রিযতে। যতো মযি, অর্থতো মম শরীরে, কিমপ্যুত্তমং ন ১৮ বসতি, এতদ্ অহং জানামি; মমেচ্ছুকতাযাং তিষ্ঠন্ত্যামপ্যহম্ উত্তমকর্ম্মসাধনে সমর্থো ন ভবামি। যতো যামুত্তমাং ক্রিযাং ১৯ কর্ত্তুমহং বাঞ্ছামি তাং ন করোমি কিন্তু যত্ কুত্সিতং কর্ম্ম কর্ত্তুম্ অনিচ্ছুকোঽস্মি তদেব করোমি। অতএব যদ্যত্ ২০ কর্ম্ম কর্ত্তুং মমেচ্ছা ন ভবতি তদ্ যদি করোমি তর্হি তত্ মযা ন ক্রিযতে, মমান্তর্বর্ত্তিনা পাপেনৈব ক্রিযতে। ভদ্রং কর্ত্তুম্ ২১ ইচ্ছুকং মাং যো ঽভদ্রং কর্ত্তুং প্রবর্ত্তযতি তাদৃশং স্বভাবমেকং মযি পশ্যামি। অহম্ আন্তরিকপুরুষেণেশ্বরব্যবস্থাযাং সন্তুষ্ট ২২ আসে; কিন্তু তদ্বিপরীতং যুধ্যন্তং তদন্যমেকং স্বভাবং মদীযা- ২৩ ঙ্গস্থিতং প্রপশ্যামি, স মদীযাঙ্গস্থিতপাপস্বভাবস্যাযত্তং মাং কর্ত্তুং চেষ্টতে। হা হা যোঽহং দুর্ভাগ্যো মনুজস্তং মাম্ এতস্মান্ ২৪ মৃতাচ্ছরীরাত্ কো নিস্তারযিষ্যতি? অস্মাকং প্রভুণা যীশু- ২৫ খ্রীষ্টেন নিস্তারযিতারম্ ঈশ্বরং ধন্যং বদামি। অতএব শরীরেণ পাপব্যবস্থাযা মনসা তু ঈশ্বরব্যবস্থাযাঃ সেবনং করোমি।

# ८ अष्टमोऽध्यायः ।

१ ख्रीष्टे विश्वासिनां व्यवस्थादण्डान्मुक्ति र्धर्म्माचरणञ्च १२ ईश्वरस्य पुत्रत्वं विभवापेक्षणं तत्र नियुक्तत्वञ्च ३१ ख्रीष्टेन तेषां लाभो जयश्च ।

१ ये जनाः ख्रीष्टं यीशुम् आश्रित्य शारीरिकं नाचरन्त
२ आत्मिकमाचरन्ति तेऽधुना दण्डार्हा न भवन्ति । जीवनदायकस्यात्मनो व्यवस्था ख्रीष्टयीशुना पापमरणयो र्व्यवस्थातो
३ मामभोचयत् । यस्माच्छारीरस्य दुर्ब्बलत्वाद् व्यवस्थया यत् कर्म्मासाध्यम् ईश्वरो निजपुत्रं पापिशरीररूपं पापनाशकबलिरूपञ्च प्रेष्य तस्य शरीरे पापस्य दण्डं कुर्व्वन् तत्कर्म्म साधित-
४ वान् । ततः शारीरिकं नाचरित्वास्माभिरात्मिकम् आचरद्भि-
५ र्व्यवस्थाग्रन्थे निर्द्दिष्टानि पुण्यकर्म्माणि सर्व्वाणि साध्यन्ते । ये शारीरिकाचारिणस्ते शारीरिकान् विषयान् भावयन्ति ये
६ चात्मिकाचारिणस्ते आत्मनो विषयान् भावयन्ति । शारीरिकभावस्य फलं मृत्युः किञ्चात्मिकभावस्य फले जीवनं शान्तिश्च ।
७ यतः शारीरिकभाव ईश्वरस्य विरुद्धः शत्रुताभाव एव स ईश्वरस्य व्यवस्थाया अधीनो न भवति भवितुञ्च न शक्नोति ।
८ एतस्मात् शारीरिकाचारिषु तोष्टुम् ईश्वरेण न शक्यं । किन्त्वी-
९ श्वरस्यात्मा यदि युष्माकं मध्ये वसति तर्हि यूयं शारीरिकाचारिणो न सन्त आत्मिकाचारिणो भवथः । यस्मिन् तु ख्रीष्ट-
१० स्यात्मा न विद्यते स तत्सम्भवो नहि । यदि ख्रीष्टो युष्मान् अधितिष्ठति तर्हि पापम् उद्दिश्य शरीरं मृतं किन्तु पुण्यमुद्दि-
११ श्यात्मा जीवति । मृतगणाद् यीशु र्येनोत्थापितस्तस्यात्मा यदि युष्मन्मध्ये वसति तर्हि मृतगणात् ख्रीष्टस्य स उत्थापयिता युष्मन्मध्यवासिना स्वकीयात्मना युष्माकं मृतदेहानपि पुन र्जीवयिष्यति ।

हे भ्रातृगण शरीरस्य वयमधमर्णा न भवामोऽतः शारी- १२
रिकाचारोऽस्माभि र्न कर्त्तव्यः। यदि यूयं शारीरिकाचारिणो १३
भवेत तर्हि युष्माभि र्मर्त्तव्यमेव किन्त्वात्मना यदि शारीर-
कर्म्माणि घातयेत तर्हि जीविष्यथ। यतो यावन्तो लोका १४
ईश्वरस्यात्मनाकृष्यन्ते ते सर्व्वे ईश्वरस्य सन्ताना भवन्ति।
यूयं पुनरपि भयजनकं दास्यभावं न प्राप्ताः किन्तु येन १५
भावेनेश्वरं पितः पितरिति प्रोच्य सम्बोधयथ तादृशं दत्त-
कपुत्त्रत्वभावम् प्राप्नुत। अपरञ्च वयम् ईश्वरस्य सन्ताना १६
एतस्मिन् पवित्र आत्मा स्वयम् अस्माकम् आत्मभिः सार्द्धं
प्रमाणं ददाति। अतएव वयं यदि सन्तानास्तर्ह्यधिकारिणः, १७
अर्थाद् ईश्वरस्य स्वत्वाधिकारिणः ख्रीष्टेन सहाधिकारिणश्च
भवामः; अपरं तेन सार्द्धं यदि दुःखभागिनो भवामस्तर्हि
तस्य विभवस्यापि भागिनो भविष्यामः। किन्त्वस्मासु यो भावी १८
विभवः प्रकाशिष्यते तस्य समीपे वर्त्तमानकालीनं दुःखमहं
तृणाय मन्ये। यतः प्राणिगण ईश्वरस्य सन्तानानां विभव- १९
प्राप्तिम् आकाङ्क्षन् नितान्तम् अपेक्षते। अपरञ्च प्राणिगणः २०
स्वैरम् अलीकताया वशीकृतो नाभवत् किन्तु प्राणिगणोऽपि २१
नश्वरताधीनत्वात् मुक्तः सन् ईश्वरस्य सन्तानानां परममुक्तिं
प्राप्स्यतीत्यभिप्रायेण वशीकर्त्रा वशीचक्रे। अपरञ्च प्रसूयमाना- २२
वद् व्यथितः सन् इदानीं यावत् कृत्स्नः प्राणिगण आर्त्तस्वरं
करोतीति वयं जानीमः। केवलः स इति नहि किन्तु प्रथमजा- २३
तफलस्वरूपम् आत्मानं प्राप्ता वयमपि दत्तकपुत्त्रत्वपदप्राप्तिम्
अर्थात शरीरस्य मुक्तिं प्रतीक्षमाणास्तद्वद् अन्तरार्त्तरावं
कुर्म्मः। वयं प्रत्याशया त्राणम् अलभामहि किन्तु प्रत्यक्षवस्तुनो २४

या प्रत्याशा सा प्रत्याशा नहि, यतो मनुष्यो यत् समीक्षते तस्य
२५ प्रत्याशां कुतः करिष्यति? यद् अप्रत्यक्षं तस्य प्रत्याशां यदि वयं
२६ कुर्व्वीमहि तर्हि धैर्य्यम् अवलम्ब्य प्रतीक्षामहे। तत आत्मा-
पि स्वयम् अस्माकं दुर्ब्बलताया: सहायत्वं करोति; यतः किं
प्रार्थितव्यं तद् बोद्धुं वयं न शक्नुमः, किन्त्वस्पष्टैरार्त्तरावैरात्मा
२७ स्वयम् अस्मन्निमित्तं निवेदयति। अपरम् ईश्वराभिमतरूपेण
पवित्रलोकानां कृते निवेदयति य आत्मा तस्याभिप्रायोऽन्त-
२८ र्य्यामिना ज्ञायते। अपरम् ईश्वरीयनिरूपणानुसारेणाहूताः
सन्तो ये तस्मिन् प्रीयन्ते सर्व्वाणि मिलित्वा तेषां मङ्गलं साध-
२९ यन्ति, एतद् वयं जानीमः। यत ईश्वरो बहुभ्रातृणां मध्ये
स्वपुत्रं ज्येष्ठं कर्त्तुम् इच्छन् यान् पूर्व्वं लक्ष्यीकृतवान् तान् तस्य
३० प्रतिमूर्त्याः सादृश्यप्राप्त्यर्थं न्ययुंक्त। अपरञ्च तेन ये नियुक्तास्त
आहूता अपि ये च तेनाहूतास्ते सपुण्यीकृताः, ये च तेन
सपुण्यीकृतास्ते विभवयुक्ताः।

३१ 　इत्यत्र वयं किं ब्रूमः? ईश्वरो यद्यस्माकं सपक्षो भवति
३२ तर्हि को विपक्षोऽस्माकं? आत्मपुत्रं न रक्षित्वा योऽस्माकं
सर्व्वेषां कृते तं प्रदत्तवान् स किं तेन सहास्मभ्यम् अन्यानि
३३ सर्व्वाणि न दास्यति? ईश्वरस्याभिरुचितेषु केन दोष आरो-
३४ पयिष्यते? य ईश्वरस्तान् पुण्यवत इव गणयति किं तेन? अपरं
तेभ्यो दण्डदानाज्ञा वा केन करिष्यते? योऽस्मन्निमित्तं
प्राणान् त्यक्तवान् केवलं तन्न किन्तु मृतगणमध्याद् उत्थित-
वान्, अपि चेश्वरस्य दक्षिणे पार्श्वे तिष्ठन् अद्याप्यस्माकं निमित्तं
३५ प्रार्थत एवम्भूतो यः ख्रीष्टः किं तेन? अस्माभिः सह ख्रीष्टस्य
प्रेमविच्छेदं जनयितुं कः शक्नोति? क्लेशो व्यसनं वा

ताडना वा दुर्भिक्षं वा वस्त्रहीनत्वं वा प्राणसंशयो वा खड्गो वा किमेतानि शक्नुवन्ति? किन्तु लिखितम् आस्ते, यथा, ३६

'वयं तव निमित्तं स्मो मृत्युवक्त्रेऽखिलं दिनं।
बलिर्देयो यथा मेषो वयं गण्यामहे तथा।'

अपरं योऽस्मासु प्रीयते तेनैतासु विपत्सु वयं सम्यग् विजयामहे। ३७ यतोऽस्माकं प्रभुना यीशुख्रीष्टेनेश्वरस्य यत् प्रेम तस्माद् अस्माकं ३८ विच्छेदं जनयितुं मृत्यु र्जीवनं वा दिव्यदूता वा बलवन्तो मुख्यदूता वा वर्त्तमानो वा भविष्यन् कालो वा उच्चपदं वा नीचपदं वापरं किमपि सृष्टवस्तु वैतेषां केनापि न शक्य- ३९ मित्यस्मिन् दृढविश्वासो ममास्ते।

---

## ९ नवमोऽध्यायः।

१ यिहूदिनामर्थं पौलस्य मनस्तापः ६ इब्राहीमः सर्व्वेषु सन्तानेषु नानुग्रहत्वं २४ कर्म्मणा नानुग्रहः किन्त्वीश्वरीयेच्छानुसारादेव भवतीति कथनं १९ कुलालस्य दृष्टान्तेन विवादिन उत्तरम् ईश्वरस्य न्याय्यत्वञ्च।

अहं काञ्चिद् कल्पितां कथां न कथयामि, ख्रीष्टस्य १ साक्षात् सत्यमेव ब्रवीमि पवित्रस्यात्मनः साक्षान् मदीयं मन एतत् साक्ष्यं ददाति। ममान्तरतिशयदुःखं निरन्तरं २ खेदश्च तस्माद् अहं स्वजातीयभ्रातृणां निमित्तात् स्वयं ३ ख्रीष्टाच्छापाक्रान्तो भवितुम् ऐच्छम्। यतस्त इस्रायेलो वंशा ४ अपि च दत्तकपुत्रत्वं तेजो नियमो व्यवस्थादानं मन्दिरे भजनं प्रतिज्ञाः पितृपुरुषगणश्चैतेषु सर्व्वेषु तेषाम् अधिकारो- ऽस्ति। तत् केवलं नहि किन्तु सर्व्वाध्यक्षः सर्व्वदा सच्चिदानन्द ५ ईश्वरो यः ख्रीष्टः सोऽपि शारीरिकसम्बन्धेन तेषां वंशसम्भवः।

ईश्वरस्य वाक्यं विफलं जातम् इति नहि यत्कारणाद् ६

इस्रायेलो वंशे ये जातास्ते सर्व्वे वस्तुत इस्रायेलीया न
७ भवन्ति। अपरम् इब्राहीमो वंशे जाता अपि सर्व्वे तस्यैव
सन्ताना न भवन्ति किन्तु इस्‌हाको नाम्ना तव वंशो विख्यातो
८ भविष्यति। अर्थात् शारीरिकसंसर्गात् जाताः सन्ताना यावन्त-
स्तावन्त एवेश्वरस्य सन्ताना न भवन्ति किन्तु प्रतिश्रवणाद् ये
९ जायन्ते तएवेश्वरवंशो गण्यते। यतस्तत्प्रतिश्रुते वाक्यमेतत्,
'एतादृशे समये ऽहं पुनरागमिष्यामि तत्पूर्व्वं साराया: पुत्र
१० एको जनिष्यते।' अपरमपि वदामि स्वमनोऽभिलाषत ईश्वरेण
यन्निरूपितं तत् कर्म्मतो नहि किन्त्वाह्वयितु र्जातमेतद्
११ यथा सिद्ध्यति तदर्थं रिब्कानामिकया योषिता जनैकस्माद्
अर्थाद् अस्माकम् इस्‌हाकः पूर्व्वपुरुषाद् गर्भे धृते तस्याः सन्ता-
१२ नयोः प्रसवात् पूर्व्वं किञ्च तयोः शुभाशुभकर्म्मणः करणात् पूर्व्वं
१३ तां प्रतीदं वाक्यम् उक्तं, ज्येष्ठः कनिष्ठं सेविष्यते, यथा लिखि-
तम् आस्ते, 'तथाप्येषावि न प्रीत्वा याकूवि प्रीतवान् अहं।'

१४　तर्हि वयं किं ब्रूमः? ईश्वरः किम् अन्यायकारी? तथा
१५ न भवतु। यतः स स्वयं मूसाम् अवदत्; 'अहं यस्मिन् अनु-
ग्रहं चिकीर्षामि तमेवानुगृह्लामि, यञ्च दयितुम् इच्छामि
१६ तमेव दये।' अतएवेच्छता यतमानेन वा मानवेन तन्न साध्यते
१७ दयाकारिणेश्वरेणैव साध्यते। फिरौणि शास्त्रे लिखति, 'अहं
त्वद्द्वारा मत्पराक्रमं दर्शयितुं सर्व्वपृथिव्यां निजनाम प्रकाश-
१८ यितुञ्च त्वां स्थापितवान्।' अतः स यम् अनुग्रहीतुम् इच्छति
तमेवानुगृह्लाति, यञ्च निग्रहीतुम् इच्छति तं निगृह्लाति।

१९　यदि वदसि तर्हि स दोषं कुतो गृह्लाति? तदीयेच्छायाः
२० प्रतिबन्धकत्वं कर्त्तुं कस्य सामर्थ्यं विद्यते? हे ईश्वरस्य प्रतिपक्ष

मर्त्य त्वं कः? एतादृशं मां कुतः सृष्टवान्? इति कथां सृष्टवस्तु २१ स्रष्ट्रे किं कथयिष्यति? एकस्मान् मृत्पिण्डाद् उत्कृष्टापकृष्टौ द्विविधौ कलशौ कर्त्तुं किं कुलालस्य सामर्थ्यं नास्ति? ईश्वरः २२ कोपं प्रकाशयितुं निजशक्तिं ज्ञापयितुञ्चेच्छन् यदि विनाशस्य योग्यानि क्रोधभाजनानि प्रति बहुकालं दीर्घसहिष्णुताम् आश्रयति; अपरञ्च विभवप्राप्त्यर्थं पूर्व्वं नियुक्तान्यनु- २३ ग्रहपात्राणि प्रति निजविभवस्य बाहुल्यं प्रकाशयितुं केवलयिहूदिनां नहि भिन्नदेशिनामपि मध्याद् अस्मानिव २४ तान्याह्वयति तत्र तव किं? होशेयग्रन्थे यथा लिखितम् २५ आस्ते,

'यो लोको मम नासीत् तं वदिष्यामि मदीयकं।
या जाति र्मेऽप्रिया चासीत् तां वदिष्याम्यहं प्रियां।
यूयं मदीयलोका न यत्रेति वाक्यमौच्यत। २६
अमरेशस्य सन्ताना इति ख्यास्यन्ति तत्र ते।'

इस्रायेलीयलोकेषु यिशायियोऽपि वाचमेतां प्राचारयत्, २७
'इस्रायेलीयवंशानां या संख्या सा तु निश्चितं।
सामुद्रसिकतासंख्यासमाना यदि जायते।
तथापि केवलं लोकैरल्पैस्त्राणं व्रजिष्यते।
यतो न्यायेन स्वं कर्म्म परेशः साधयिष्यति। २८
देशे सएव संक्षेपान्निजं कर्म्म करिष्यति।'

यिशायियोऽपरमपि कथयामास, २९
'सैन्याध्यक्षपरेशेन चेत् किञ्चिन्नोदशिष्यत।
तदा वयं सिदोमेवाभविष्याम विनिश्चितं।
यद्वा वयम् अमोराया अगमिष्याम तुल्यतां।'

३० तर्हि वयं किं वक्ष्यामः? इतरदेशीया लोका अपि पुण्यार्थम्
३१ अयतमाना विश्वासेन पुण्यम् अलभन्त; किन्त्विस्रायेल्-
लोका व्यवस्थापालनेन पुण्यार्थं यतमानास्तन् नालभन्त।
३२ तस्य किं कारणं? ते विश्वासेन नहि किन्तु व्यवस्थायाः
क्रियया चेष्टित्वा तस्मिन् स्खलनजनके पाषाणे पादस्खलनं
३३ प्राप्ताः। लिखितं यादृशम् आस्ते,

'पश्य पादस्खलार्थं हि सीयोनि प्रस्तरन्तथा।
बाधाकारञ्च पाषाणं परिस्थापितवानहम्।
विश्वसिष्यति यस्तत्र स जनो न त्रपिष्यते।'

---

## १० दशमोऽध्यायः।

१ यिहूदीयलोकानां व्यवस्थया त्राणाप्राप्तिः केवलविश्वासेन त्राणप्राप्तिः १४ विश्वासेनान्यलोकानां त्राणप्राप्तिः, अविश्वासेन यिहूदिनां त्राणाप्राप्तिश्च।

१ हे भ्रातर इस्रायेलीयलोका यत् परित्राणं प्राप्नुवन्ति
२ तदहं मनसाभिलषन् ईश्वरस्य समीपे प्रार्थये। यत ईश्वरे
तेषां चेष्टा विद्यत इत्यत्राहं साक्ष्यस्मि; किन्तु तेषां सा
३ चेष्टा सज्ञाना नहि, यतस्त ईश्वरदत्तं पुण्यम् अविज्ञाय स्वकृत-
पुण्यं स्थापयितुम् चेष्टमाना ईश्वरदत्तस्य पुण्यस्य निघ्नत्वं न
४ स्वीकुर्व्वन्ति। ख्रीष्ट एकैकविश्वासिजनाय पुण्यं दातुं व्यव-
५ स्थायाः फलस्वरूपो भवति। व्यवस्थापालनेन यत् पुण्यं तत्
मूसा वर्णयामास, यथा, 'यो जनस्तां पालयिष्यति स तद्द्वारा
६ जीविष्यति।' किन्तु प्रत्ययेन यत् पुण्यं तद् एतादृशं
वाक्यं वदति, 'कः स्वर्गम् आरुह्य ख्रीष्टम् अवरोहयिष्यति?
७ को वा प्रेतलोकम् अवरुह्य ख्रीष्टं मृतगणमध्याद् आनेष्यतीति
८ वाक् मनसि त्वया न गदितव्या।' तर्हि किं ब्रवीति? 'तद्

वाक्यं तव समीपस्थम् अर्थात् तव वदने मनसि चास्ते,' तच्च वाक्यम् अस्माभिः प्रचार्य्यमाणं विश्वासस्य वाक्यमेव। वस्तुतः ९ प्रभुं यीशुं यदि वदनेन स्वीकरोषि, तथेश्वरस्तं श्मशानाद् उदस्थापयद् इति यद्यन्तःकरणेन विश्वसिषि तर्हि परि-त्राणं लप्स्यसे। यस्मात् पुण्यप्राप्त्यर्थम् अन्तःकरणेन विश्वसि- १० तव्यं परित्राणार्थञ्च वदनेन स्वीकर्त्तव्यं। शास्त्रे यादृशं ११ लिखति 'विश्वसिष्यति यस्तत्र स जनो न त्रपिष्यते।' इत्यत्र १२ यिहूदिनि तदन्यलोके च कोपि विशेषो नास्ति यस्माद् यः १३ सर्व्वेषाम् अद्वितीयः प्रभुः स निजयाचकान सर्व्वान् प्रति वदान्यो भवति। यतः,

'यः कश्चित् परमेशस्य नाम्ना हि प्रार्थयिष्यते।
स एव मनुजो नूनं परित्रातो भविष्यति।'

यं ये जना न प्रत्यायन् ते तमुद्दिश्य कथं प्रार्थयिष्यन्ते? ये वा १४ यस्याख्यानं कदापि न श्रुतवन्तस्ते तं कथं प्रत्येष्यन्ति? अपरं यदि प्रचारयितारो न तिष्ठन्ति तदा कथं ते श्रोष्यन्ति? यदि १५ वा प्रेरिता न भवन्ति तदा कथं प्रचारयिष्यन्ति? यादृशं लिखितम् आस्ते, यथा,

'माङ्गलिकं सुसंवादं ददत्यानीय ये नराः।
प्रचारयन्ति शान्तेश्च सुसंवादं जनास्तु ये।
तेषां चरणपद्मानि कीदृक् शोभान्वितानि हि।'

किन्तु ते सर्व्वे तं सुसंवादं न गृहीतवन्तः। यिशायियो यथा १६ लिखितवान्।

'अस्मत्प्रचारिते वाक्ये विश्वासमकरोद्धि कः।'

अतएव श्रवणाद् विश्वास ऐश्वरवाक्यप्रचारात् श्रवणञ्च भवति। १७

१८ तर्ह्यहं ब्रवीमि तैः किं नाश्रावि ? अवश्यम् अश्रावि, यस्मात्
तेषां शब्दो महीं व्याप्नोद् वाक्यञ्च निखिलं जगत् ।

१९ अपरमपि वदामि, इस्रायेलीयलोकाः किम् एतां कथां न बुध्यन्ते ? प्रथमतो मूसा इदं वाक्यं प्रोवाच,

अहमुत्तापयिष्ये तान् अगण्यमानवैरपि ।
क्लेक्ष्यामि जातिम् एताञ्च प्रोन्मत्तभिन्नजातिभिः ।

२० अपरञ्च यिशायियोऽतिशयाक्षोभेण कथयामास, यथा,

अधि मां यैस्तु नाचेष्टि सम्प्राप्तस्तै र्जनैरहं ।
अधि मां ये र्न सम्पृष्टं विज्ञातस्तै र्जनैरहं ॥

२१ किन्त्विस्रायेलीयलोकान् अधि कथयाञ्चकार,

यैराज्ञालङ्घिभि र्लोकै र्विरुद्धं वाक्यमुच्यते ।
तान् प्रत्येव दिनं कृत्स्नं हस्तौ विस्तारयाम्यहं ॥

---

## ११ एकादशोऽध्यायः।

१ सर्व्वेषाम् इस्रायेलीयलोकानां नाग्राह्यत्वं ७ अमनोनीतलोकानाम् अग्राह्यत्वं ११ तेषां पतनाद् अन्यलोकानां परित्रातत्वं २७ भिन्नदेशिनाम् अभिमानकरणानुचितत्वं तथा न्यायतो दयात ईश्वरस्य धन्यवादकरणोचितत्वञ्च ।

१ ईश्वरेण स्वकीयलोका अपसारिता अहं किम् ईदृशं वाक्यं ब्रवीमि ? तन्न भवतु यतोऽहमपि बिन्यामीनगोत्रीय इब्राही-
२ मवंशीय इस्रायेलीयलोकोऽस्मि । ईश्वरेण पूर्व्वं ये प्रदृष्टास्ते स्वकीयलोका अपसारिता इति नहि । अपरम् एलियो-पाख्याने शास्त्रे यल्लिखितम् आस्ते तद् यूयं किं न जानीथ ?
३ 'हे परमेश्वर लोकास्त्वदीयाः सर्व्वा यज्ञवेदीरभञ्जन् तथा तव भविष्यद्वादिनः सर्व्वान् अघ्नन् केवल एकोऽहम् अवशिष्ट आसे ते ममापि प्राणान् नाशयितुं चेष्टन्ते,' एतां कथाम्

इस्रायेलीयलोकानां विरुद्धम् एलिय ईश्वराय निवेदयामास।
ततस्तं प्रतीश्वरस्योत्तरं किं जातं? बाल्नाम्नो देवस्य साचात् ४
ये जानूनि न पातितानि तादृशाः सप्त सहस्राणि लोका
अवशेषिता मया। तद्वद् एतस्मिन् वर्त्तमानकालेऽपि अनुग्रहे- ५
णाभिरुचितास्तेषाम् अवशिष्टाः कतिपया लोकाः सन्ति।
अतएव तद् यद्यनुग्रहेण भवति तर्हि क्रियया न भवति नो ६
चेद् अनुग्रहोऽननुग्रह एव, यदि वा क्रियया भवति तर्ह्यनुग्रहेण
न भवति नो चेत् क्रिया क्रियैव न भवति।

तर्हि किं? इस्रायेलीयलोका यद् अमृगयन्त तन्न प्रापुः। ७
किन्त्वभिरुचितलोकास्तत् प्रापुस्तदन्ये सर्व्वे अन्धीभूताः। यथा ८
लिखितम् आस्ते,

घोरनिद्रालुताभावं दृष्टिहीने च लोचने।
कर्णौ श्रुतिविहीनौ च प्रददौ तेभ्य ईश्वरः॥

एतस्मिन् दायूदपि लिखितवान् यथा, ९

अतो भुक्त्यासनं तेषाम् उन्माथवद् भविष्यति।
वा वंशयन्त्रवद् बाधा दण्डवद् वा भविष्यति॥
भविष्यन्ति तथान्धास्ते नेत्रैः पश्यन्ति नो यथा। १०
वेपथुः कटिदेशस्य तेषां नित्यं भविष्यति॥

पतनार्थं ते स्खलितवन्त इति वाचं किमहं वदामि? तन्न ११
भवतु किन्तु तान् उद्योगिनः कर्त्तुं तेषां पतनाद् इत-
रदेशीयलोकैः परित्राणं प्राप्तं। तेषां पतनं यदि जगतो १२
लोकानां लाभजनकम् अभवत् तेषां ह्रासोऽपि यदि भिन्नदे-
शिनां लाभजनकोऽभवत् तर्हि तेषां वृद्धिः कति लाभजनिका
भविष्यति? अतो हे अन्यदेशिनो युष्मान् सम्बोध्य कथयामि १३

निजानां ज्ञातिबन्धूनां मनःसूद्योगं जनयन् तेषां मध्ये किय-
१४ तां लोकानां यथा परित्राणं साधयामि तन्निमित्तम् अन्य-
देशिनां निकटे प्रेरितः सन् अहं स्वपदस्य महिमानं प्रकाश-
१५ यामि। तेषां निग्रहेण यदीश्वरेण सह जगतो जनानां मेलनं
जातं तर्हि तेषाम् अनुगृहीतत्वं मृतदेहे यथा जीवनलाभस्तद्वत्
१६ किं न भविष्यति? अपरं प्रथमजातं फलं यदि पवित्रं भवति
तर्हि सर्व्वमेव फलं पवित्रं भविष्यति; तथा मूलं यदि पवित्रं
१७ भवति तर्हि शाखा अपि तथैव भविष्यन्ति। कियतीनां शाखानां
छेदने कृते त्वं वन्यजितवृक्षस्य शाखा भूत्वा यदि तच्छाखानां
१८ स्थाने रोपिता सती जितवृक्षीयमूलस्य रसं भुंक्षे, तर्हि तासां
भिन्नशाखानां विरुद्धं मा गर्व्वीः; यदि गर्व्वसि तर्हि त्वं मूलं यन्न
१९ धारयसि किन्तु मूलं त्वां धारयतीति संस्मर। अपरञ्च यदि
२० वदसि मां रोपयितुं ताः शाखा विभिन्ना अभवन्; भद्रम्,
अप्रत्ययकारणात् ते विभिन्ना जातास्तथा विश्वासकारणात् त्वं
२१ रोपितो जातस्तस्माद् अहङ्कारम् अकृत्वा ससाध्वसो भव। यत
ईश्वरो यदि स्वाभाविकीः शाखा न रक्षति तर्हि सावधानो
२२ भव चेत् त्वामपि न स्थापयति। इत्यत्रेश्वरस्य यादृशी कृपा
तादृशं भयानकत्वमपि त्वया दृश्यतां; ये पतितास्तान् प्रति
तस्य भयानकत्वं दृश्यतां, त्वञ्च यदि तत्कृपाश्रितस्तिष्ठसि तर्हि
त्वां प्रति कृपा द्रक्ष्यते; नो चेत् त्वमपि तद्वत् छिन्नो भविष्यसि।
२३ अपरञ्च ते यद्यप्रत्यये न तिष्ठन्ति तर्हि पुनरपि रोपयि-
ष्यन्ते यस्मात् तान् पुनरपि रोपयितुम् ईश्वरस्य शक्तिरास्ते।
२४ वन्यजितवृक्षस्य शाखा सन् त्वं यदि ततश्छिन्नो रीतिव्यत्ययेनो-
त्तमजितवृक्षे रोपितोऽभवस्तर्हि तस्य वृक्षस्य स्वीया याः

शाखास्ताः किं पुनः स्ववृक्षे संलगितुं न शक्नुवन्ति? हे भ्रातरो २५
युष्माकम् आत्माभिमानो यन्न जायते तदर्थं ममेदृशी वाञ्छा
भवति यूयं एतन्निगूढतत्त्वम् अजानन्तो यन्न तिष्ठथ; वस्तुतो
यावत्कालं सम्पूर्णरूपेण भिन्नदेशिनां संग्रहो न भविष्यति
तावत्कालम् अंशत्वेन इस्रायेलीयलोकानाम् अन्धता स्थास्यति;
पश्चात् ते सर्व्वे परित्रास्यन्ते; एतादृशं लिखितमप्यास्ते, २६

आगमिष्यति सीयोनाद् एको यस्त्राणदायकः।
अधर्म्मं याकुबो वंशात् स तु दूरीकरिष्यति।
तथा दूरीकरिष्यामि तेषां पापान्यहं यदा। २७
तदा तैरेव सार्द्धं मे नियमोऽयं भविष्यति।

सुसंवादात् ते युष्माकं विपक्षा अभवन् किन्त्वभिरुचितत्वात् ते २८
पितृलोकानां कृते प्रियपात्राणि भवन्ति। यत ईश्वरस्य दानाद् २९
आह्वानाच्च पश्चात्तापो न भवति। अतएव पूर्व्वम् ईश्वरेऽविश्वा- ३०
सिनः सन्तोऽपि यूयं यद्वत् सम्प्रति तेषाम् अविश्वासकारणाद्
ईश्वरस्य कृपापात्राणि जातास्तद्वद् इदानीं तेऽविश्वासिनः ३१
सन्ति किन्तु युष्माभि र्लब्धकृपाकारणात् तैरपि कृपा लप्स्यते।
ईश्वरः सर्व्वान् प्रति कृपां प्रकाशयितुं सर्व्वान् अविश्वासित्वेन ३२
गणयति। अहो ईश्वरस्य ज्ञानबुद्धिरूपयो र्धनयोः कीदृक् ३३
प्राचुर्य्यं। तस्य राजशासनस्य तत्त्वं कीदृग् अप्राप्यं। तस्य मार्गाश्च
कीदृग् अनुपलक्ष्याः। परमेश्वरस्य सङ्कल्पं को ज्ञातवान्? ३४
तस्य मन्त्री वा कोऽभवत्? को वा तस्योपकारी भृत्वा तत्कृते ३५
तेन प्रत्युपकर्त्तव्यः? यतो वस्तुमात्रमेव तस्मात् तेन तस्मै ३६
चाभवत् तदीयो महिमा सर्व्वदा प्रकाशितो भवतु। इति।

## १२ द्वादशोऽध्यायः।

१ ईश्वरस्य कृपातो यथाशक्ति तस्य सेवनमुचितं ९ प्रेमादि कर्त्तुं हिंसामकर्त्तुमुपदेशश्च।

१ हे भ्रातर ईश्वरस्य कृपयाहं युष्मान् विनये यूयं स्वं स्वं शरीरं सजीवं पवित्रं ग्राह्यं बलिम् ईश्वरमुद्दिश्य समुत्सृजत,
२ एषा सेवा युष्माकं योग्या। अपरं यूयं सांसारिका इव माचरत, किन्तु स्वं स्वं स्वभावं परावर्त्त्य नूतनाचारिणो भवत, तत ईश्वरस्य निदेशः कीदृग् उत्तमो ग्रहणीयः सम्पूर्णश्चेति
३ युष्माभिरनुभाविष्यते। कश्चिदपि जनो योग्यत्वादधिकं स्वं न मन्यतां किन्तु ईश्वरो यस्मै प्रत्ययस्य यत्परिमाणम् अददात् स तदनुसारतो योग्यरूपं स्वं मनुताम्, ईश्वराद् अनुग्रहं
४ प्राप्तः सन् युष्माकम् एकैकं जनम् इत्याज्ञापयामि। यतो यद्वदस्माकम् एकस्मिन् शरीरे बहून्यङ्गानि सन्ति किन्तु सर्व्वे-
५ षामङ्गानां कार्य्यं समानं नहि; तद्वदस्माकं बहुत्वेऽपि सर्व्वे वयं
६ ख्रीष्टे एकशरीराः परस्परम् अङ्गप्रत्यङ्गत्वेन भवामः। अस्माद् ईश्वरानुग्रहेण विशेषं विशेषं दानम् अस्मासु प्राप्तेषु सत्सु कोऽपि यदि भविष्यद्वाक्यं वदति तर्हि प्रत्ययस्य परिमाणानुसारतः
७ स तद् वदतु; यद्वा यदि कश्चित् सेवनकारी भवति तर्हि स तत्सेवनं करोतु; अथवा यदि कश्चिद् अध्यापयिता भवति
८ तर्हि सोऽध्यापयतु; तथा य उपदेष्टा भवति स उपदिशतु यश्च दाता स सरलतया ददातु यस्त्वधिपतिः स यत्नेनाधिपतित्वं करोतु यश्च दयालुः स हृष्टमनसा दयताम्।

९ अपरञ्च युष्माकं प्रेम कापट्यवर्जितं भवतु यद् अभद्रं तद्
१० ऋतीयध्वं यच्च भद्रं तस्मिन् अनुरज्यध्वम्। अपरं भ्रातृत्वप्रेम्ना परस्परं प्रीयध्वं समादराद् एकोऽपरजनं श्रेष्ठं जानीध्वम्।

तथा कार्य्ये निरालस्या मनसि च सोद्योगाः सन्तः प्रभुं सेव- ११
ध्वम्। अपरं प्रत्याशायाम् आनन्दिता दुःखसमये च धैर्य्य- १२
युक्ता भवत; प्रार्थनायां सततं प्रवर्त्तध्वं। पवित्राणां दीनतां १३
दूरीकुरुध्वम् अतिथिसेवायाम् अनुरज्यध्वम्। ये जना युष्मान् १४
ताडयन्ति तान् आशिषं वदत शापम् अदत्त्वा दद्ध्वमाशि-
षम्। ये जना आनन्दन्ति तैः सार्द्धम् आनन्दत ये च रुदन्ति १५
तैः सह रुदित। अपरञ्च युष्माकं मनसां परस्परम् एको १६
भावो भवतु; अपरम् उच्चपदम् अनाकाङ्क्ष्य नीचलोकैः
सहापि मार्दवम् आचरत; स्वान् ज्ञानिनो न मन्यध्वं। पर- १७
स्माद् अपकारं प्राप्यापि परं नापकुरुत। सर्व्वेषां दृष्टितो यत्
कर्म्मोत्तमं तदेव कुरुत। यदि भवितुं शक्यते तर्हि यथाशक्ति १८
सर्व्वलोकैः सह निर्व्विरोधेन कालं यापयत। हे प्रियबन्धवः, १९
कस्मैचिद् अपकारस्य समुचितं दण्डं स्वयं न दद्ध्वं, किन्त्वीश्वरी-
यक्रोधाय स्थानं दत्त यतो लिखितमास्ते परमेश्वरः कथयति,

दानं फलस्य मत्कर्म्म सूचितं प्रददाम्यहं।

इतिकारणाद्

रिपु र्यदि क्षुधार्त्तस्ते तर्हि तं त्वं प्रभोजय। २०
तथा यदि तृषार्त्तः स्यात् तर्हि तं परिपायय।
तेन त्वं मस्तके तस्य ज्वलदग्निं निधास्यसि।

कुक्रियया पराजिता न सन्त उत्तमक्रियया कुक्रियां पराजयत। २१

---

## १३ त्रयोदशोऽध्यायः।

१ राजप्रभृतिलोकानां वशीभूतत्वम् उचितं ८ व्यवस्थायाः सारं प्रेम ११ अन्ध-
काररूपं कर्म्म परित्यज्य दीप्तिरूपकर्म्मणोऽवश्यकर्त्तव्यत्वञ्च।

युष्माकम् एकैकजनः शासनपदस्य निघ्नो भवतु यतो यानि १

शासनपदानि सन्ति तानि सर्व्वाणीश्वरेण स्थापितानि; ईश्वरं
२ विना पदस्थापनं न भवति। इति हेतोः शासनपदस्य यत्
प्रातिकूल्यं तद् ईश्वरीयनिरूपणस्य प्रातिकूल्यमेव; अपरं ये
प्रातिकूल्यम् आचरन्ति ते स्वेषां समुचितं दण्डं स्वयमेव घट-
३ यन्ते। शास्ता सदाचारिणां भयप्रदो नहि दुराचारिणामेव
भयप्रदो भवति; त्वं किं तस्मान् निर्भयो भवितुम् इच्छसि?
४ तर्हि सत्कर्म्माचर, तस्माद् यशो लप्स्यसे, यतस्तव सदाचरणाय
स ईश्वरस्य भृत्योऽस्ति। किन्तु यदि कुकर्म्माचरसि तर्हि त्वं
शङ्कस्व यतः स निरर्थकं खड्गं न धारयति; कुकर्म्माचारिणं
५ समुचितं दण्डयितुम् स ईश्वरस्य दण्डदभृत्य एव। अतएव केव-
लदण्डभयान्नहि किन्तु सदसद्बोधादपि तस्य वश्येन भवितव्यं।
६ एतस्माद् युष्माकं राजकरदानमप्युचितं यस्माद् ये करं गृह्णन्ति
त ईश्वरस्य किङ्करा भूत्वा सततम् एतस्मिन् कर्म्मणि निविष्टा-
७ स्तिष्ठन्ति। अस्मात् करग्राहिणे करं दत्त, तथा शुल्कग्राहिणे
शुल्कं दत्त, अपरं यस्माद् भेतव्यं तस्माद् बिभीत, यश्च समाद-
रणीयस्तं समाद्रियध्वम्; इत्थं यस्य यत् प्राप्यं तत् तस्मै दत्त।
८ युष्माकं परस्परं प्रेम विना ऽन्यत् किमपि देयम् ऋणं न
भवतु, यतो यः परस्मिन् प्रेम करोति तेन व्यवस्था सिध्यति।
९ वस्तुतः परदारान् मा गच्छ, नरहत्यां मा कार्षीः, चौर्य्यं मा
कार्षीः, मिथ्यासाक्ष्यं मा देहि, लोभं मा कार्षीः, एताः सर्व्वा
आज्ञा एताभ्यो भिन्ना या काचिद् आज्ञास्ति सापि स्वसमी-
१० पवासिनि स्ववत् प्रेम कुर्व्वित्यनेन वचनेन वेदिता। यतः प्रेम
समीपवासिनोऽशुभं न जनयति तस्मात् प्रेम्ना सर्व्वा व्यवस्था
पाल्यते।

प्रत्ययीभवनकालेऽस्माकं परित्राणस्य सामीप्याद् इदानीं ११
तस्य सामीप्यम् अव्यवहितं; अतः समयं विविच्यास्माभिः
साम्प्रतम् अवश्यमेव निद्रातो जागर्त्तव्यं। बहुतरा यामिनी १२
गता प्रभातं सन्निधिं प्राप्तं तस्मात् तामसीयाः क्रियाः परित्य-
ज्यास्माभि र्वासरीया सज्जा परिधातव्या। अतो हेतो र्वयं १३
दिवा विहितं सदाचरणम् आचरिष्यामः। रङ्गरसो मत्तत्वं
लम्पटत्वं कामुकत्वं विवाद ईर्ष्या चैतानि परित्यक्ष्यामः।
यूयं प्रभुयीशुख्रीष्टरूपं परिच्छदं परिधद्ध्वं सुखाभिलाषपूर- १४
णाय शारीरिकाचरणं माचरत।

---

## १४ चतुर्दशोऽध्यायः।

१ खाद्यार्थं भ्रातृगणस्य तुच्छीकरणमनुचितं १२ भक्ष्येण नहि किन्त्वविश्वासेन मनुजानाम् अशुचित्वञ्च।

यो जनोऽदृढविश्वासस्तं युष्माकं सङ्गिनं कुरुत किन्तु १
सन्देहविचारार्थं नहि। यतो निषिद्धं किमपि खाद्यद्रव्यं २
नास्ति, कस्यचिज्जनस्य प्रत्यय एतादृशो विद्यते किन्त्वदृढ-
विश्वासः कश्चिदपरो जनः केवलं शाकं भुङ्क्ते। तर्हि यो जनः ३
साधारणं द्रव्यं भुङ्क्ते स विशेषद्रव्यभोक्तारं नावजानीयात् तथा
विशेषद्रव्यभोक्तापि साधारणद्रव्यभोक्तारं दोषिणं न कुर्य्यात्,
यस्माद् ईश्वरस्तम् अगृह्णात्। हे परदासस्य दूषयितस्त्वं ४
कः? निजप्रभोः समीपे तेन पदस्थेन पदच्युतेन वा भवितव्यं
स च पदस्थ एव भविष्यति यत ईश्वरस्तं पदस्थं कर्त्तुं शक्नोति।
अपरञ्च कश्चिज्जनो दिनाद् दिनं विशेषं मन्यते कश्चित्तु ५
सर्व्वाणि दिनानि समानानि मन्यते, एकैको जनः स्वीयमनसि
विविच्य निश्चिनोतु। यो जनः किञ्चन दिनं विशेषं मन्यते ६

स प्रभुभक्त्या तन् मन्यते, यश्च जनः किमपि दिनं विशेषं न मन्यते सोऽपि प्रभुभक्त्या तन्न मन्यते; अपरञ्च यः सर्व्वाणि भक्ष्यद्रव्याणि भुङ्क्ते स प्रभुभक्त्या तानि भुङ्क्ते यतः स ईश्वरं धन्यं वक्ति, यश्च न भुङ्क्ते सोऽपि प्रभुभक्त्यैव न भुञ्जान ईश्वरं धन्यं
७ ब्रूते । अपरम् अस्माकं कश्चित् निजनिमित्तं प्राणान् धारयति
८ निजनिमित्तं म्रियते वा तन्न; किन्तु यदि वयं प्राणान् धारयामस्तर्हि प्रभुनिमित्तं धारयामः, यदि च प्राणान् त्यजामस्तर्ह्यपि प्रभुनिमित्तं त्यजामः, अतएव जीवने मरणे वा
९ वयं प्रभोरेवास्महे । यतो जीवन्तो मृताश्चेत्युभयेषां लोकानां
१० प्रभुत्वप्राप्त्यर्थं ख्रीष्टो मृत उत्थितः पुनर्जीवितश्च । किन्तु त्वं निजं भ्रातरं कुतो दूषयसि? तथा त्वं निजं भ्रातरं कुतस्तुच्छं जानासि? ख्रीष्टस्य विचारसिंहासनस्य सम्मुखे सर्व्वैरस्माभिरुप-
११ स्थातव्यं; यादृशं लिखितम् आस्ते,

परेशः शपथं कुर्व्वन् वाक्यमेतत् पुरावदत् ।
सर्व्वो जनः समीपे मे जानुपातं करिष्यति ।
जिह्वैकैका तथेशस्य निघ्नत्वं स्वीकरिष्यति ।

१२ अतएव ईश्वरसमीपेऽस्माकम् एकैकजनेन निजा कथा कथयितव्या ।

१३ इत्थं सति वयम् अद्यारभ्य परस्परं न दूषयन्तः स्वभ्रातु
१४ र्विघ्नो व्याघातो वा यन्न जायेत तादृशीमीहां कुर्म्महे । किमपि वस्तु स्वभावतो नाशुचि भवतीत्यहं जाने तथा प्रभुना यीशुख्रीष्टेनापि निश्चितं जाने, किन्तु यो जनो यद् द्रव्यम् अपवित्रं
१५ जानीते तस्य कृते तद् अपवित्रम् आस्ते । अतएव तव भक्ष्यद्रव्येण तव भ्राता यदि शोकान्वितो भवति तर्हि त्वं भ्रातरं

प्रति प्रेम्ना नाचरसि। ख्रीष्टो यस्य कृते स्वप्राणान् व्ययितवान्
त्वं निजेन भक्ष्यद्रव्येण तं न नाशय। अपरं युष्माकम् उत्तमं १६
कर्म्म निन्दितं न भवतु। भक्ष्यं पेयञ्चेश्वरराज्यस्य सारो नहि, १७
किन्तु पुण्यं शान्तिश्च पवित्रेणात्मना जात आनन्दश्च। एतै १८
र्यो जनः ख्रीष्टं सेवते, स एवेश्वरस्य तुष्टिकरो मनुष्यैश्च
सुख्यातः। अतएव येनास्माकं सर्व्वेषां परस्परम् ऐक्यं १९
निष्ठा च जायते तदेवास्माभि र्यतितव्यं। भक्ष्यार्थम् ईश्वरस्य २०
कर्म्मणो हानिं मा जनयत; सर्व्वं वस्तु पवित्रमिति सत्यं
तथापि यो जनो यद् भुक्त्वा विघ्नं लभते तदर्थं तद् भद्रं नहि।
तव मांसभक्षणसुरापानादिभिः क्रियाभि र्यदि तव भ्रातुः २१
पादस्खलनं विघ्नो वा चाञ्चल्यं वा जायते तर्हि तद्भोजनपान-
योस्त्यागो भद्रः। यदि तव प्रत्ययस्तिष्ठति तर्हीश्वरस्य २२
गोचरे स्वान्तरे तं गोपय; यो जनः स्वमतेन स्वं दोषिणं न
करोति स एव धन्यः। किन्तु यः कश्चित् संशय्य भुङ्क्तेऽर्थात् २३
न प्रतीत्य भुङ्क्ते, स एवावश्यं दण्डार्हो भविष्यति, यतो यत्
प्रत्ययजं नहि तदेव पापमयं भवति।

---

## १५ पञ्चदशोऽध्यायः।

१ दुर्ब्बललोकानाम् उपकारकरणावश्यकता ८ सर्व्वविश्वासिनो भ्रातर इत्यादेशः १४ रोमिणां समीपं गन्तुं पौलस्य प्रतिज्ञा ३० निजार्थं प्रार्थयनमधि तेभ्यो निवेदनञ्च।

बलवद्भिरस्माभि दुर्ब्बलानां दौर्ब्बल्यं सोढव्यं न च स्वेषाम् १
इष्टाचार आचरितव्यः। अस्माकम् एकैको जनः स्वसमीपवा- २
सिनो हितार्थं निष्ठार्थञ्च तस्यैवेष्टाचारम् आचरतु। यतः ३
ख्रीष्टोऽपि निजेष्टाचारं नाचरितवान्, यथा लिखितम् आस्ते,

त्वन्निन्दकगणस्यैव निन्दाभि र्निन्दितोऽस्म्यहं।

४ अपरञ्च वयं यत् सहिष्णुतासान्त्वनयो र्जनकेन शास्त्रेण प्रत्याशां लभेमहि तन्निमित्तं पूर्व्वकाले लिखितानि सर्व्ववचनान्य-
५ स्माकम् उपदेशार्थमेव लिलिखिरे। सहिष्णुतासान्त्वनयोरा-करो य ईश्वरः स एवं करोतु यत् प्रभु र्यीशुख्रीष्ट इव युष्माकम् एकजनोऽन्यजनेन सार्द्धं मनस ऐक्यम् आचरेत्;
६ यूयञ्च सर्व्वे एकचित्ता भूत्वा मुखैकेनेवास्मत्प्रभुयीशुख्रीष्टस्य
७ पितुरीश्वरस्य गुणान् कीर्त्तयेत। अपरम् ईश्वरस्य महिम्नः प्रकाशार्थं ख्रीष्टो यथा युष्मान् प्रत्यगृह्लात् तथा युष्माकमप्येको जनोऽन्यजनं प्रतिगृह्लातु।

८ ईश्वरस्य सत्यता पितृपुरुषान् प्रति तस्य प्रतिज्ञा च यत्
९ प्रामाण्यं गच्छेत् तस्य दयालुत्वाच्च भिन्नजातीया यद् ईश्वरस्य गुणान् कीर्त्तयेयुस्तदर्थं यीशुः ख्रीष्टस्त्वक्छेदनियमस्य निघ्नो-ऽभवद् इत्यहं वदामि। यथा लिखितम् आस्ते,

अतोऽहं सम्मुखे तिष्ठन् भिन्नदेशनिवासिनां।
स्तुवंस्त्वां परिगास्यामि तव नाम्नि परेश्वर॥

१० अपरमपि लिखितम् आस्ते,

हे अन्यजातयो यूयं समं नन्दत तज्जनैः।

११ पुनश्च लिखितम् आस्ते,

हे सर्व्वदेशिनो यूयं धन्यं ब्रूत परेश्वरं।
हे तदीयनरा यूयं कुरुध्वं तत्प्रशंसनं॥

१२ अपर यीशायियोऽपि लिलेख,

यीशयस्य तु यत् मूलं तत् प्रकाशिष्यते तदा।
सर्व्वजातीयनृणाञ्च शासकः समुदेष्यति।
तत्रान्यदेशिलोकैश्च प्रत्याशा प्रकरिष्यते॥

अतएव यूयं पवित्रस्यात्मनः प्रभावाद् यत् सम्पूर्णां प्रत्याशां १३ लप्स्यध्वे तदर्थं तत्प्रत्याशाजनक ईश्वरः प्रत्ययेन युष्मान् शान्त्या-नन्दाभ्यां सम्पूर्णान् करोतु।

हे भ्रातरो यूयं सद्भावयुक्ताः सर्व्वप्रकारेण ज्ञानेन च १४ सम्पूर्णाः परस्परोपदेशे च तत्परा इत्यहं निश्चितं जानामि, तथाप्यहं यत् प्रगल्भतरो भवन् युष्मान् प्रबोधयामि तस्यैकं १५ कारणमिदं। भिन्नजातीयाः पवित्रेणात्मना पावितनैवेद्यरूपा १६ भूत्वा यद् ग्राह्या भवेयुस्तन्निमित्तमहम् ईश्वरस्य सुसंवादं प्रचारयितुं भिन्नजातीयानां मध्ये यीशुख्रीष्टस्य सेवकत्वं दानं ईश्वरात् लब्धवानस्मि। ईश्वरं प्रति यीशुख्रीष्टेन मम श्लाघा- १७ करणस्य कारणम् आस्ते। भिन्नदेशिन आज्ञाग्राहिणः कर्त्तुं १८ ख्रीष्टो वाक्येन क्रियया च, आश्चर्य्यलक्षणैश्चित्रक्रियाभिः पवि-त्रस्यात्मनः प्रभावेन च यानि कर्म्माणि मया साधितवान्, केवलं तान्येव विनान्यस्य कस्यचित् कर्म्मणो वर्णनां कर्त्तुं प्रगल्भो १९ न भवामि। तस्मात् आ यिरूशालम इल्लूरिकं यावत् सर्व्वत्र ख्रीष्टस्य सुसंवादं प्राचारयं। अन्येन निचितायां भित्तावहं २० यन्न निचिनोमि तन्निमित्तं यत्र यत्र स्थाने ख्रीष्टस्य नाम कदापि केनापि न ज्ञापितं तत्र तत्र सुसंवादं प्रचारयितुम् अहं यते। यादृशं लिखितम् आस्ते, २१

ये र्वार्त्ता तस्य न प्राप्ता दर्शनं तैस्तु लप्स्यते।

यैश्च नैव श्रुतं किञ्चित् बोद्धुं शक्ष्यन्ति ते जनाः॥

तस्माद् युष्मत्समीपगमनाद् अहं मुहुर्मुहु र्निवारितोऽभवं। २२ किन्त्विदानीम् अत्र प्रदेशेषु मया न गतं स्थानं किमपि नावशि- २३ ष्यते युष्मत्समीपं गन्तुं बहुवत्सरानारभ्य मामकीनाकाङ्क्षा च

२४ विद्यत इति हेतोः स्पानियादेशगमनकालेऽहं युष्मन्मध्येन गच्छन् युष्मान् आलोकिष्ये, ततः परं युष्मत्सम्भाषणेन तृप्तिं परिलभ्य तद्देशगमनार्थं युष्माभि र्विसर्जयिष्ये, ईदृशी मदीया प्रत्याशा
२५ विद्यते। किन्तु साम्प्रतं पवित्रलोकानां सेवनाय यिरूशालम्नगरं
२६ व्रजामि। यतो यिरूशालमस्थपवित्रलोकानां मध्ये ये दरिद्रा अर्थविश्राणनेन तानुपकर्त्तुं माकिदनियादेशीया आखाया-
२७ देशीयाश्च लोका ऐच्छन्। एषा तेषां सदिच्छा यतस्ते तेषाम् ऋणिनः सन्ति यतो हेतो र्भिन्नजातीया येषां परमार्थ-स्यांशिनो जाता ऐहिकविषये तेषामुपकारस्तैः कर्त्तव्यः।
२८ अतो मया तत् कर्म्म साधयित्वा तस्मिन् फले तेभ्यः समर्पिते
२९ युष्मन्मध्येन स्पानियादेशो गमिष्यते। युष्मत्समीपे ममागमन-समये ख्रीष्टस्य सुसंवादस्य पूर्णवरेण सम्बलितः सन् अहम् आगमिष्यामि इति मया ज्ञायते।

३० हे भ्रातृगण प्रभो र्यीशुख्रीष्टस्य नाम्ना पवित्रस्यात्मनः प्रेम्ना
३१ च विनयेऽहं यिहूदादेशस्थानाम् अविश्वासिलोकानां करेभ्यो यदहं रक्षां लभेय मदीयैतेन सेवनकर्म्मणा च यद् यिरूशा-
३२ लमस्थाः पवित्रलोकास्तुष्येयुः, तदर्थं यूयं मत्कृत ईश्वराय प्रार्थयमाणा यतध्वं तेनाहम् ईश्वरेच्छया सानन्दं युष्मत्समीपं गत्वा युष्माभिः सहितः प्राणान् आप्यायितुं पारयिष्यामि।
३३ शान्तिदायक ईश्वरो युष्माकं सर्व्वेषां सङ्गी भूयात्। इति।

---

## १६ षोडशोऽध्यायः।

१ पौलस्य फैबीप्रशंसापत्रं बहुरोमिलोकानां नमस्कारस्य १७ तान् प्रति पौलस्योपदेशः २१ पौलस्य सङ्गिलोकानां नमस्कारप्रेषणं २५ मङ्गलनिमित्तम् ईश्वरस्य धन्यवदनञ्च।

किंक्रीयानगरीयधर्म्मसमाजस्य परिचारिका या फैबीना- १
मिकास्माकं धर्म्मभगिनी तस्याः कृतेऽहं युष्मान् निवेदयामि,
यूयं तां प्रभुमाश्रितां विज्ञाय तस्या आतिथ्यं पवित्रलोकार्हं २
कुरुध्वं, युष्मत्तस्तस्या य उपकारो भवितुं शक्नोति तं कुरुध्वं,
यस्मात् तया बहूनां मम चोपकारः कृतः। अपरञ्च ख्रीष्टस्य ३
यीशोः कर्म्मणि मम सहकारिणौ मम प्राणरक्षार्थञ्च स्वप्रा-
णान् पणीकृतवन्तौ यौ प्रिष्किल्लाक्किलौ तौ मम नमस्कारं
ज्ञापयध्वं। ताभ्याम् उपकाराप्तिः केवलं मया स्वीकर्त्तव्येति ४
नहि भिन्नदेशीयैः सर्व्वधर्म्मसमाजैरपि। अपरञ्च तयो र्गृहे ५
स्थितान् धर्म्मसमाजलोकान् मम नमस्कारं ज्ञापयध्वं। तद्वद्
आशियादेशे ख्रीष्टस्य पक्षे प्रथमजातफलस्वरूपो य इपेनित-
नामा मम प्रियबन्धुस्तमपि मम नमस्कारं ज्ञापयध्वं। अपरं ६
बहुश्रमेणास्मान् असेवत या मरियम् तामपि नमस्कारं
ज्ञापयध्वं। अपरञ्च प्रेरितेषु ख्यातकीर्त्ती मदग्रे ख्रीष्टाश्रितौ ७
मम स्वजातीयौ सहबन्दिनौ च यावान्द्रनीकयूनियौ तौ मम
नमस्कारं ज्ञापयध्वं। तथा प्रभौ मत्प्रियतमम् आम्प्लियमपि ८
मम नमस्कारं ज्ञापयध्वं। अपरं ख्रीष्टसेवायां मम सहका- ९
रिणम् ऊर्ब्बाणं मम प्रियतमं स्ताखुञ्च मम नमस्कारं ज्ञाप-
यध्वं। अपरं ख्रीष्टेन परीक्षितम् आपिल्लिं मम नमस्कारं १०
वदत, आरिष्टबूलस्य परिजनांश्च मम नमस्कारं ज्ञापयध्वं।
अपरं मम ज्ञातिं हेरोदियोनं मम नमस्कारं वदत, तथा ११
नार्किसस्य परिवाराणां मध्ये ये प्रभुमाश्रितास्तान् मम नम-
स्कारं वदत। अपरं प्रभोः सेवायां परिश्रमकारिण्यौ त्रुफे- १२
नात्रुफोषे मम नमस्कारं वदत, तथा प्रभोः सेवायाम् अत्यन्तं

परिश्रमकारिणी या प्रिया पर्षिस्तां नमस्कारं ज्ञापयध्वं।
१३ अपरं प्रभोरभिरुचितं रूफं मम धर्म्ममाता या तस्य माता
१४ तामपि नमस्कारं वदत। अपरम् असुंकृतं फ्लिगोनं हर्म्मं पात्रवं
१५ हर्म्मिम् एतेषां सङ्गिभ्रातृगणञ्च नमस्कारं ज्ञापयध्वं। अपरं
फिललगो यूलिया नीरियस्तस्य भगिन्यलुम्पा चैतान् एतैः सार्द्धं
यावन्तः पवित्रलोका आसते तानपि नमस्कारं ज्ञापयध्वं।
१६ यूयं परस्परं पवित्रचुम्बनेन नमस्कुरुध्वं। ख्रीष्टस्य धर्म्मसमाज-
गणो युष्मान् नमस्कुरुते।

१७ हे भ्रातरो युष्मान् विनयेऽहं युष्माभि र्या शिक्षा लब्धा
ताम् अतिक्रम्य ये विच्छेदान् विघ्नांश्च कुर्व्वन्ति तान् निश्चिनुत
१८ तेषां सङ्गं वर्जयत च। यतस्तादृशा लोका अस्माकं प्रभो
र्यीशुख्रीष्टस्य दासा इति नहि किन्तु स्वोदरस्यैव दासाः;
अपरं प्रणयवचनै र्मधुरवाक्यैश्च सरललोकानां मनांसि मोह-
१९ यन्ति। युष्माकम् आज्ञाग्राहित्वं सर्व्वत्र सर्व्वै र्ज्ञातं ततोऽहं
युष्मासु सानन्दोऽभवं तथापि यूयं यत् सत्ज्ञानेन ज्ञानिनः
२० कुज्ञाने चातत्परा भवेतेति ममाभिलाषः। अधिकन्तु
शान्तिदायक ईश्वरः शैतानम् अविलम्बं युष्माकं पदानाम्
अधो मर्द्दिष्यति। अस्माकं प्रभु र्यीशुख्रीष्टो युष्मासु प्रसादं
क्रियात्। इति।

२१ मम सहकारी तीमथियो मम ज्ञातयो लूकियो यासोन्
२२ सोसिपात्रश्चेमे युष्मान् नमस्कुर्व्वन्ते। अपरम् एतत्पत्रलेखक-
स्तर्त्तियनामाहमपि प्रभो र्नाम्ना युष्मान् नमस्करोमि। तथा
२३ कृत्स्नधर्म्मसमाजस्य मम चातिथ्यकारी गायो युष्मान् नमस्क-
रोति। अपरम् एतन्नगरस्य धनरक्षक इरास्तः क्वार्त्तनाम-

कश्चैको भ्राता तावपि युष्मान् नमस्कुरुतः। अस्माकं प्रभु २४ यीशुख्रीष्टो युष्मासु सर्व्वेषु प्रसादं क्रियात्। इति।

पूर्व्वकालिकयुगेषु प्रच्छन्ना या मन्त्रणाधुना प्रकाशिता २५ भूत्वा भविष्यद्वादिलिखितग्रन्थगणस्य प्रमाणाद् विश्वासेन ग्रहणार्थं सदातनस्येश्वरस्याज्ञया सर्व्वदेशीयलोकान् ज्ञाप्यते, तस्या मन्त्रणाया ज्ञानं लब्ध्वा मया यः सुसंवादो यीशु- २६ ख्रीष्टमधि प्रचार्य्यते, तदनुसाराद् युष्मान् धर्म्मे सुस्थिरान् कर्त्तुं समर्थो योऽद्वितीयः सर्व्वज्ञ ईश्वरस्तस्य धन्यवादो यीशु- २७ ख्रीष्टेन सन्ततं भूयात्। इति।

---

# करिन्थिनः प्रति पौलस्य प्रथमं पत्रं।

## १ प्रथमोऽध्यायः।

१ मङ्गलाचरणं ४ करिन्थीयलोकानाम् अनुग्रहीतत्वेन पौलस्य धन्यवादः १० अनैक्यत्वात् तान् प्रति भर्त्सनं १७ सुसंवादीयगुणानां प्रशंसा २६ तेनाज्ञानक्षुद्रलोकानां परित्राणम् ईश्वरस्य सद्विम्नः प्रकाशितत्वञ्च।

यावन्तः पवित्रा लोकाः स्वेषाम् अस्माकञ्च वसतिस्थाने- १ ष्वस्माकं प्रभो र्यीशोः ख्रीष्टस्य नाम्ना प्रार्थयन्ते तैः सहाहूतानां ख्रीष्टेन यीशुना पवित्रीकृतानां लोकानां य ईश्वरीयधर्म्मसमाजः करिन्थनगरे विद्यते तं प्रतीश्वरस्येच्छयाहूतो २ यीशुख्रीष्टस्य प्रेरितः पौलः सोस्थिनिनामा भ्राता च पत्रं लिखति। अस्माकं पित्रेश्वरेण प्रभुना यीशुख्रीष्टेन च प्रसादः ३ शान्तिश्च युष्मभ्यं दीयतां।

४ ईश्वरो यीशुख्रीष्टेन युष्मान् प्रति प्रसादं प्रकाशितवान्, तस्मादहं युष्मन्निमित्तं सर्व्वदा मदीयेश्वरं धन्यं वदामि।
५ ख्रीष्टसम्बन्धीयं साक्ष्यं युष्माकं मध्ये येन प्रकारेण सप्रमाणम्
६ अभवत् तेन यूयं ख्रीष्टात् सर्व्वविधवक्तृताज्ञानादीनि सर्व्व-
७ धनानि लब्धवन्तः। ततोऽस्मत्प्रभो यीशुख्रीष्टस्य पुनरागमनं प्रतीक्षमाणानां युष्माकं कस्यापि वरस्याभावो न भवति।
८ अपरम् अस्माकं प्रभो यीशुख्रीष्टस्य दिवसे यूयं यन्निर्द्दोषा भवेत तदर्थं सएव यावदन्तं युष्मान् सुस्थिरान् करिष्यति।
९ य ईश्वरः स्वपुत्रस्यास्मत्प्रभो यीशुख्रीष्टस्यांशिनः कर्त्तुं युष्मान् आहूतवान् स विश्वसनीयः।

१० हे भ्रातरः, अस्माकं प्रभुयीशुख्रीष्टस्य नाम्ना युष्मान् विनयेऽहं सर्व्वै र्युष्माभिरेकरूपाणि वाक्यानि कथ्यन्तां युष्मन्मध्ये भिन्नसङ्घाता न भवन्तु मनोविचारयोरैक्येन युष्माकं सिद्धत्वं
११ भवतु। हे मम भ्रातरो युष्मन्मध्ये विवादा जाता इति वार्त्ता-
१२ महं क्लोय्याः परिजनै र्ज्ञापितः। ममाभिप्रेतमिदं युष्माकं कश्चित् कश्चिद् वदति पौलस्य शिष्योऽहम् आपल्लोः शिष्योऽहं
१३ कैफाः शिष्योऽहं ख्रीष्टस्य शिष्योऽहमिति च। ख्रीष्टस्य किं विभेदः कृतः? पौलः किं युष्मत्कृते क्रुशे हतः? पौलस्य
१४ नाम्ना वा यूयं किं मज्जिताः? क्रिष्पगायौ विना युष्माकं मध्येऽन्यः कोऽपि मया न मज्जित इति हेतोरहम् ईश्वरं धन्यं
१५ वदामि। एतेन मम नाम्ना मानवा मया मज्जिता इति वक्तुं
१६ केनापि न शक्यते। अपरं स्तिफानस्य परिजना मया मज्जितास्तदन्यः कश्चिद् यन्मया मज्जितस्तदहं न वेद्मि।

१७ ख्रीष्टेनाहं मज्जनार्थं न प्रेरितः किन्तु सुसंवादस्य प्रचा-

रार्थमेव; सोऽपि वाक्पटुतया मया न प्रचारितव्यः, यत-
स्तथा प्रचारिते ख्रीष्टस्य क्रुशे मृत्युः फलहीनो भविष्यति।
यतो हेतो र्ये विनश्यन्ति ते तां क्रुशस्य वार्त्तां प्रलापमिव १८
मन्यन्ते किञ्च परित्राणं लभमानेष्वस्मासु सा ईश्वरीयश-
क्तिस्वरूपा। तस्मादित्थं लिखितमास्ते, १९

ज्ञानवतान्तु यत् ज्ञानं तन्मया नाशयिष्यते।
विलोपयिष्यते तद्वद् बुद्धि र्बुद्धिमतां मया॥

ज्ञानी कुत्र? शास्त्री वा कुत्र? इहलोकस्य विचारतत्परो २०
वा कुत्र? इहलोकस्य ज्ञानं किमीश्वरेण मोहीकृतं नहि?
ईश्वरस्य ज्ञानाद् इहलोकस्य मानवाः स्वज्ञानेनेश्वरस्य तत्त्व- २१
बोधं न प्राप्तवन्तस्तस्माद् ईश्वरः प्रचाररूपिणा प्रलापेन
विश्वासिनः परित्रातुं रोचितवान्। यिहूदीयलोका लक्ष- २२
णानि दिदृक्षन्ति भिन्नदेशीयलोकास्तु विद्यां मृगयन्ते, वयञ्च २३
क्रुशे हतं ख्रीष्टं प्रचारयामः। तस्य प्रचारो यिहूदीयै र्विघ्न इव
भिन्नदेशीयैश्च प्रलाप इव मन्यते, किन्तु यिहूदीयानां भिन्न- २४
देशीयानाञ्च मध्ये ये आहूतास्तेषु स ख्रीष्ट ईश्वरीयशक्ति-
रिवेश्वरीयज्ञानमिव च प्रकाशते। यत ईश्वरे यः प्रलाप २५
आरोप्यते स मानवातिरिक्तं ज्ञानमेव यच्च दौर्ब्बल्यम् ईश्वर
आरोप्यते तत् मानवातिरिक्तं बलमेव।

हे भ्रातरः, आहूतयुष्मद्गणो युष्माभिरालोक्यतां तन्मध्ये २६
सांसारिकज्ञानेन ज्ञानवन्तः पराक्रमिणो वा कुलीना वा
बहवो न विद्यन्ते। यत ईश्वरो ज्ञानवतस्त्रपयितुं मूर्खलोकान् २७
रोचितवान् बलानि च त्रपयितुम् ईश्वरो दुर्ब्बलान् रोचि-
तवान्। तथा वर्त्तमानलोकान् संस्थितिभ्रष्टान् कर्त्तुम् ईश्वरो २८

२९ जगतोऽपकृष्टान् हेयान् अवर्त्तमानांश्चाभिरोचितवान्। तत
३० ईश्वरस्य साचात् केनाप्यात्मश्लाघा न कर्त्तव्या। यूयञ्च तस्मात् ख्रीष्टे यीशौ संस्थितिं प्राप्तवन्तः स ईश्वराद् युष्माकं
३१ ज्ञानं पुण्यं पवित्रत्वं मुक्तिश्च जाता। अतएव यद्वद् लिखितमास्ते तद्वत्,

यः कश्चित् श्लाघमानः स्यात् श्लाघतां प्रभुना स हि।

---

## २ द्वितीयोऽध्यायः।

१ पौलस्य सुसंवादप्रकाशनं वाक्पटुताया विद्यायाश्च निपुणत्वात् न जातं ६ किन्तु सांसारिकज्ञानात् श्रेष्ठं यद् ईश्वरीयज्ञानं तेन सुसंवादप्रचारणञ्च।

१　हे भ्रातरो युष्मत्समीपे ममागमनकालेऽहं वक्तृताया
२ विद्याया वा नैपुण्येनेश्वरस्य साच्यं प्रचारितवान् तन्नहि; यतो यीशुख्रीष्टं तस्य क्रुशे हतत्वञ्च विना नान्यत् किमपि युष्म-
३ न्मध्ये ज्ञापयितुं विहितं बुद्धवान्। अपरञ्चातीव दौर्ब्बल्य-
४ भीतिकम्पयुक्तो युष्माभिः सार्द्धमासं। अपरं युष्माकं विश्वासो यत् मानुषिकज्ञानस्य फलं न भवेत् किन्त्वीश्वरीयशक्तेः फलं
५ भवेत्, तदर्थं मम वक्तृता मदीयप्रचारश्च मानुषिकज्ञानस्य मधुरवाक्यसम्बलिता नास्तां किन्त्वात्मनः शक्तेश्च प्रमाणयुक्तावास्तां।

६　वयं ज्ञानं भाषामहे तच्च सिद्धलोकै र्ज्ञानमिव मन्यते, तदिहलोकस्य ज्ञानं नहि, इहलोकस्य नश्वराणाम् अधिप-
७ तीनां वा ज्ञानं नहि; किन्तु कालावस्थायाः पूर्व्वस्माद् यत् ज्ञानम् अस्माकं विभवार्थम् ईश्वरेण निश्चित्य प्रच्छन्नं तन्निगूढम्
८ ईश्वरीयज्ञानं प्रभाषामहे। इहलोकस्याधिपतीनां केनापि

तत् ज्ञानं न लब्धं, लब्धे सति ते प्रभावविशिष्टं प्रभुं क्रुशे नाहनिष्यन्। तद्वल्लिखितमास्ते, ९

नेत्रेण क्वापि नो दृष्टं कर्णेनापि च न श्रुतं।
मनोमध्ये तु कस्यापि न प्रविष्टं कदापि यत्।
ईश्वरे प्रीयमाणानां कृते तत् तेन सञ्चितं।

अपरमीश्वरः स्वात्मना तदस्माकं साक्षात् प्राकाशयत्; यत १०
आत्मा सर्व्वमेवानुसन्धत्ते तेन चेश्वरस्य मर्म्मतत्त्वमपि बुध्यते।
मनुजस्यान्तःस्थमात्मानं विना केन मनुजेन तस्य मनुजस्य तत्त्वं ११
बुध्यते? तद्वदीश्वरस्यात्मानं विना केनापीश्वरस्य तत्त्वं न
बुध्यते। वयञ्चेहलोकस्यात्मानं लब्धवन्तस्तन्नहि किन्त्वीश्वरस्यै- १२
वात्मानं लब्धवन्तः, ततो हेतोरीश्वरेण स्वप्रसादाद् अस्मभ्यं
यद् यद् दत्तं तत्सर्व्वम् अस्माभि र्ज्ञातुं शक्यते। तच्चास्माभि १३
र्मानुषिकज्ञानस्य वाक्यानि शिक्षित्वा कथ्यत इति नहि
किन्त्वात्मतो वाक्यानि शिक्षित्वात्मिकै र्वाक्यैरात्मिकं भावं
प्रकाशयद्भिः कथ्यते। प्राणी मनुष्य ईश्वरीयात्मनः शिक्षां १४
न गृह्लाति यत आत्मिकविचारेण सा विचार्य्येति हेतोः
स तां प्रलापमिव मन्यते बोद्धुञ्च न शक्नोति। आत्मिको १५
मानवः सर्व्वाणि विचारयति किन्तु स्वयं केनापि न विचार्य्यते। यत ईश्वरस्य मनो ज्ञात्वा तमुपदेष्टुं कः शक्नोति? १६
किन्तु ख्रीष्टस्य मनोऽस्माभि र्लब्धं।

---

## ३ तृतीयोऽध्यायः।

[१] सांसारिकत्वे भर्त्सनं ५ प्रभुं विना सेवकस्य कर्म्मणो मुधात्वं १६ प्रभो र्लोका ईश्वरस्य मन्दिरस्वरूपास्तेषां शुचित्वकृतज्ञत्वयोरावश्यकता च।

हे भ्रातरः, अहमात्मिकैरिव युष्माभिः समं सम्भाषितुं १

नाशक्नवं किन्तु शारीरिकाचारिभिः ख्रीष्टधर्म्मे शिशुतुल्यैश्च
२ जनैरिव युष्माभिः सह समभाषे। युष्मान् कठिनभक्ष्यं न भोज-
यन् दुग्धम् अपाययं यतो यूयं भक्ष्यं ग्रहीतुं तदा नाशक्नुत
३ इदानीमपि न शक्नुथ, यतो हेतोरधुनापि शारीरिकाचारिण
आध्वे। युष्मन्मध्ये मात्सर्य्यविवादभेदा भवन्ति ततः किं
शारीरिकाचारिणो नाध्वे मानुषिकमार्गेण च न चरथ?
४ पौलस्याहमित्यापल्लोरहमिति वा यद्वाक्यं युष्माकं कैश्चित्
कैश्चित् कथ्यते तस्माद् यूयं शारीरिकाचारिण न भवथ?
५ पौलः कः? आपल्लो र्वा कः? तौ परिचारकमात्रौ तयो-
रेकैकस्मै च प्रभु र्यादृक् फलमददात् तद्वत् तयोर्द्वारा यूयं
६ विश्वासिनो जाताः। अहं रोपितवान् आपल्लोश्च निषिक्तवान्
७ ईश्वरश्चावर्द्धयत्। अतो रोपयितृसेक्तारावसारौ वर्द्धयितेश्वर
८ एव सारः। रोपयितृसेक्तारौ च समौ तयोरेकैकश्च स्वश्रम-
९ योग्यं स्ववेतनं लप्स्यते। आवामीश्वरेण सह कर्म्मकारिणौ,
१० ईश्वरस्य यत् क्षेत्रम् ईश्वरस्य या निर्म्मितिः सा यूयमेव। ईश्वरस्य
प्रसादात् मया यत् पदं लब्धं तस्मात् ज्ञानिना गृहकारिणेव
मया भित्तिमूलं स्थापितं तदुपरि चान्येन निचीयते। किन्तु
११ येन यन्निचीयते तत् तेन विविच्यतां। यतो यीशुख्रीष्टरूपं यद्
भित्तिमूलं स्थापितं तदन्यत् किमपि भित्तिमूलं स्थापयितुं
१२ केनापि न शक्यते। एतद्भित्तिमूलस्योपरि यदि केचित् स्वर्ण-
१३ रूप्यमणिकाष्ठतृणनलान् निचिन्वन्ति, तर्ह्येकैकस्य कर्म्म प्रका-
शिष्यते यतः स दिवसस्तत् प्रकाशयिष्यति। यतो हतोस्तेन
दिवसेन वह्निमयेनोदेतव्यं तत एकैकस्य कर्म्म कीदृशमेतस्य
१४ परीक्षा वह्निना भविष्यति। यस्य निचयनरूपं कर्म्म स्थास्नु

भविष्यति स वेतनं लप्स्यते। यस्य च कर्म्म धक्ष्यते तस्य क्षति १५
भविष्यति किन्तु वह्नेर्निर्गतजन इव स स्वयं परित्राणं प्राप्स्यति।

यूयम् ईश्वरस्य मन्दिरं युष्मन्मध्ये चेश्वरस्यात्मा निवसतीति १६
किं न जानीथ? ईश्वरस्य मन्दिरं येन विनाश्यते सोऽपीश्व- १७
रेण विनाशयिष्यते यत ईश्वरस्य मन्दिरं पवित्रमेव यूयं तु
तन्मन्दिरम् आध्वे। कोपि स्वं न वञ्चयतां। युष्माकं कश्चन १८
चेदिहलोकस्य ज्ञानेन ज्ञानवानहमिति बुध्यते तर्हि स यत्
ज्ञानी भवेत् तदर्थं मूढो भवतु। यस्मादिहलोकस्य ज्ञानम् १९
ईश्वरस्य साक्षात् मूढत्वमेव। एतस्मिन् लिखितमप्यास्ते,

तीक्ष्णा या ज्ञानिनां बुद्धिस्तया तान् धरतीश्वरः।

पुनश्च। ज्ञानिनां कल्पना वेत्ति परमेशो निरर्थकाः। २०
अतएव कोऽपि मनुजैरात्मानं न श्लाघतां यतः सर्व्वाणि २१
युष्माकमेव, पौल वा आपल्लो र्वा कैफा वा जगद् वा जीवनं २२
वा मरणं वा वर्त्तमानं वा भविष्यद्वा सर्व्वाण्येव युष्माकं,
यूयञ्च ख्रीष्टस्य, ख्रीष्टश्चेश्वरस्य। २३

---

## ४ चतुर्थोऽध्यायः।

१ ख्रीष्टस्य सेवकानां भाण्डागाराध्यक्षत्वं ६ तेषां दुःखं ताडना च १४ तेषामनुगामित्वस्यावश्यकत्वं १८ करिन्थिनः प्रति पौलस्य शासनवाक्यानि च।

लोका अस्मान् ख्रीष्टस्य परिचारकान् ईश्वरस्य निगूढवा- १
क्यधनस्याध्यक्षांश्च मन्यन्तां। किञ्च धनाध्यक्षेण विश्वसनीयेन २
भवितव्यमेतदेव लोकै र्याच्यते। अतो विचारयद्भि र्युष्मा- ३
भिरन्यैः कैश्चिन् मनुजै र्वा मम परीक्षणं मयातीव लघु मन्यते
ऽहमप्यात्मानं न विचारयामि। मया किमप्यपराद्धमित्यहं ४
न वेद्मि किन्त्वेतेन मम निरपराधत्वं न निश्चीयते प्रभुरेव

५ मम विचारयितास्ति। अत उपयुक्तसमयात् पूर्व्वम् अर्थतः प्रभोरागमनात् पूर्व्वं युष्माभि र्विचारो न क्रियतां। प्रभुरागत्य तिमिरेण प्रच्छन्नानि सर्व्वाणि दीपयिष्यति मनसां मन्त्रणाश्च प्रकाशयिष्यति तस्मिन् समय ईश्वराद् एकैकस्य प्रशंसा भविष्यति।

६ हे भ्रातरः सर्व्वाण्येतानि मयात्मानम् आपल्लवञ्चोद्दिश्य कथितानि तस्यैतत् कारणं यूयं यथा शास्त्रीयविधिमतिक्रम्य मानवम् अतीव नादरिष्यध्व इत्थञ्चैकेन वैपरीत्याद् अपरेण ७ न श्लाघिष्यध्व एतादृशीं शिक्षामावयोर्दृष्टान्तात् लप्स्यध्वे। अपरात् कस्त्वां विशेषयति? तुभ्यं यन्न दत्तं तादृशं किं ८ धारयसि? अदत्तेनेव दत्तेन वस्तुना कुतः श्लाघसे? इदानीमेव यूयं किं तृप्ता लब्धधना वा? अस्मास्वविद्यमानेषु यूयं किं राजत्वपदं प्राप्ताः? युष्माकं राजत्वं मयाभिलषितं यतस्तेन ९ युष्माभिः सह वयमपि राज्यांशिनो भविष्यामः। प्रेरिता वयं शेषा हन्तव्याश्चेवेश्वरेण निदर्शिताः। यतो वयं सर्व्वलोकानाम् अर्थतः स्वर्गीयदूतानां मानवानाञ्च कौतुकास्पदानि जाताः। १० ख्रीष्टस्य कृते वयं मूढाः किन्तु यूयं ख्रीष्टेन ज्ञानिनः, वयं दुर्ब्बला यूयञ्च सबलाः, यूयं सम्मानिता वयञ्चापमानिताः। ११ वयमद्यापि क्षुधार्त्तास्तृष्णार्त्ता वस्त्रहीनास्ताडिता आश्रमर- १२ हिताश्च सन्तः कर्म्मणि स्वकरान् व्यापारयन्तश्च दुःखैः कालं यापयामः। गर्हितैरस्माभिराशीः कथ्यते दूरीकृतैः सह्यते १३ निन्दितैः प्रसाद्यते। वयमद्यापि जगतः सम्मार्जनीयोग्या अवकरा इव सर्व्वै र्मन्यामहे।

१४ युष्मान् त्रपयितुमहमेतानि लिखामीति नहि किन्तु

प्रियात्मजानिव युष्मान् प्रबोधयामि। यतः ख्रीष्टधर्म्मे यद्यपि १५ युष्माकं दशसहस्राणि विनेतारो भवन्ति तथापि बहवो जनका न भवन्ति यतोऽहमेव सुसंवादेन यीशुख्रीष्टे युष्मान् अजनयं। अतो युष्मान् विनयेऽहं यूयं मदनुगामिनो भवत। १६ इत्यर्थं सर्व्वेषु धर्म्मसमाजेषु सर्व्वत्र ख्रीष्टधर्म्मयोग्या ये विधयो १७ मयोपदिश्यन्ते तान् यो युष्मान् स्मारयिष्यत्येवम्भूतं प्रभोः कृते प्रियं विश्वासिनञ्च मदीयतनयं तीमथियं युष्माकं समीपं प्रेषितवानहं।

अपरमहं युष्माकं समीपं न गमिष्यामीति बुद्ध्वा युष्माकं १८ कियन्तो लोका गर्व्वन्ति। किन्तु यदि प्रभोरिच्छा भवति १९ तर्ह्यहमविलम्बं युष्मत्समीपमुपस्थाय तेषां दर्पध्मातानां लोकानां वाचं ज्ञास्यामीति नहि सामर्थ्यमेव ज्ञास्यामि। यस्मादीश्वरस्य २० राजत्वं वाग्युक्तं नहि किन्तु सामर्थ्ययुक्तं। युष्माकं का वाञ्छा? २१ युष्मत्समीपे मया किं दण्डपाणिना गन्तव्यमुत प्रेमनम्रतात्म-युक्तेन वा?

---

## ५ पञ्चमोऽध्यायः।

१ एकजनस्य महापातकं ६ पुरातनकिण्वरूपदुष्टत्वं त्यक्तुम् उपदेशः ९ महापातकिनो भ्रातुः पृथक्करणस्य कथा च।

अपरं युष्माकं मध्ये व्यभिचारो विद्यते स च व्यभिचार- १ स्तादृशो यद् देवपूजकानां मध्येऽपि तत्तुल्यो न विद्यते फलतो युष्माकमेको जनो विमातृगमनं कुरुत इति वार्त्ता सर्व्वत्र व्याप्ता। तथाच यूयं दर्पध्माता आध्वे, तत् कर्म्म येन कृतं स २ यथा युष्मन्मध्याद् दूरीक्रियते तथा शोको युष्माभि र्न क्रियते किम् एतत्? अविद्यमाने मदीयशरीरे ममात्मा युष्मन्मध्ये विद्यते ३

४ अतोऽहं विद्यमान इव तत्कर्म्मकारिणो विचारं निश्चितवान्, अस्मत्प्रभो र्यीशुख्रीष्टस्य नाम्ना युष्माकं मदीयात्मनश्च
५ मिलने जाते ऽस्मत्प्रभो र्यीशुख्रीष्टस्य शक्तेः साहाय्येन स नरः शरीरनाशार्थमस्माभिः शयतानो हस्ते समर्पयितव्यस्ततोऽस्माकं प्रभो र्यीशो र्दिवसे तस्यात्मा रक्षां गन्तुं शक्ष्यति ।

६ युष्माकं दर्पो न भद्राय यूयं किमेतन्न जानीथ, यथा,

विकारः कृत्स्नशक्तूनां स्वल्पकिण्वेन जायते ।

७ यूयं यत् नवीनशक्तुस्वरूपा भवेत तदर्थं पुरातनं किण्वम् अवमार्ज्जत यतो युष्माभिः किण्वशून्यै र्भवितव्यं । अपरम् अस्माकं निस्तारोत्सवीयमेषशावको यः ख्रीष्टः सोऽस्मदर्थं बलीकृतो
८ ऽभवत् । अतः पुरातनकिण्वेनार्थतो दुष्टताजिघांसारूपेण किण्वेन तन्नहि किन्तु सारल्यसत्यत्वरूपया किण्वशून्यतयास्माभिरुत्सवः कर्त्तव्यः ।

९ व्यभिचारिणां संसर्गो युष्माभि र्विहातव्य इति मया
१० पत्रे लिखितं । किन्त्वैहिकलोकानां मध्ये ये व्यभिचारिणो लोभिन उपद्राविणो देवपूजका वा तेषां संसर्गः सर्व्वथा विहातव्य इति नहि, विहातव्ये सति युष्माभि र्जगतो निर्गन्तव्य-
११ मेव । किन्तु भ्रातृत्वेन विख्यातः कश्चिज्जनो यदि व्यभिचारी लोभी देवपूजको निन्दको मद्यप उपद्रावी वा भवेत् तर्हि तादृशेन मानवेन सह भोजनपानेऽपि युष्माभि र्न कर्त्तव्ये
१२ इत्यधुना मया लिखितं । समाजवहिःस्थितानां लोकानां विचारकरणे मम कोऽधिकारः ? किन्तु तदन्तर्गतानां विचारणं
१३ युष्माभिः किं न कर्त्तव्यं भवेत् ? वहिःस्थानां तु विचार ईश्वरेण कारिष्यते । अतो युष्माभिः स पातकी स्वमध्याद् वहिष्क्रियतां ।

## ६ षष्ठोऽध्यायः।

१ आवेदननिमित्तं करिन्थिनः प्रति पौलस्य भर्त्सनं ९ ईश्वरस्य राज्ये पापिलोकानाम् अनधिकारः १२ पवित्रताया आवश्यकता च।

युष्माकमेकस्य जनस्यापरेण सह विवादे जाते स पवित्र- १ लोकै र्विचारमकारयन् किम् अधार्म्मिकलोकै र्विचारयितुं प्रोत्सहते? जगतोऽपि विचारणं पवित्रलोकैः कारिष्यत एतद् २ यूयं किं न जानीथ? अतो जगद् यदि युष्माभि र्विचारयितव्यं तर्हि क्षुद्रतमविचारेषु यूयं किमसमर्थाः? दूता अप्य- ३ स्माभि र्विचारयिष्यन्त इति किं न जानीथ? अत ऐहिकविषयाः किम् अस्माभि र्न विचारयितव्या भवेयुः? ऐहिकवि- ४ षयस्य विचारे युष्माभिः कर्त्तव्ये ये लोकाः समितौ क्षुद्रतमास्त एव नियुज्यन्तां। अहं युष्मान् त्रपयितुमिच्छन् ५ वदामि युष्मन्मध्ये किमेकोऽपि मनुष्यस्तादृग् बुद्धिमान्नहि यो भ्रातृविवादविचारणे समर्थः स्यात्? किञ्चैको भ्राता ६ भ्रात्रान्येन किमविश्वासिनां विचारकाणां साक्षाद् विवदते? युष्मन्मध्ये विवादा विद्यन्त एतदपि युष्माकं दोषः। यूयं ७ कुतोऽन्यायसहनं क्षतिसहनं वा श्रेयो न मन्यध्वे? किन्तु ८ यूयमपि भ्रातॄनेव प्रत्यन्यायं क्षतिञ्च कुरुथ किमेतत्?

ईश्वरस्य राज्येऽन्यायकारिणां लोकानामधिकारो नास्त्येतद् ९ यूयं किं न जानीथ? मा वञ्च्यध्वं, ये व्यभिचारिणो देवार्च्चिनः पारदारिकाः स्त्रीवदाचारिणः पुंमैथुनकारिणस्तस्करा लो- १० भिनो मद्यपा निन्दका उपद्राविणो वा त ईश्वरस्य राज्यभागिनो न भविष्यन्ति। यूयञ्चैवंविधा लोका आस्त किन्तु प्रभो ११ र्यीशो र्नाम्नास्मदीश्वरस्यात्मना च यूयं प्रक्षालिताः पाविताः सपुण्यीकृताश्च।

१२ मदर्थं सर्व्वं द्रव्यम् अप्रतिषिद्धं किन्तु न सर्व्वं हितजनकं । मदर्थं सर्व्वमप्रतिषिद्धं तथाप्यहं कस्यापि द्रव्यस्य वशीकृतो न
१३ भविष्यामि । उदराय भक्ष्याणि भक्ष्येभ्यश्चोदरं, किन्तु भक्ष्योदरे ईश्वरेण नाशयिष्येते; अपरं देहो न व्यभिचाराय
१४ किन्तु प्रभवे प्रभुश्च देहाय । यश्चेश्वरः प्रभुमुत्थापितवान् स
१५ स्वशक्त्यास्मानप्युत्थापयिष्यति । युष्माकं यानि शरीराणि तानि ख्रीष्टस्याङ्गानीति किं यूयं न जानीथ? अतः ख्रीष्टस्य यान्यङ्गानि तानि मयापहृत्य वेश्याया अङ्गानि किं कारिष्यन्ते? तन्न
१६ भवतु । यः कश्चिद् वेश्यायाम् आसज्यते स तया सहैकदेहो भवति किं यूयमेतन्न जानीथ? यतो लिखितमास्ते, यथा, तौ
१७ द्वौ जनावेकाङ्गौ भविष्यतः । यश्च प्रभावासज्यते स तेन सहैकात्मा भवति । अतो यूयं व्यभिचारात् पराङ्मुखा भवत ।
१८ मानवा यान्यन्यानि कलुषाणि कुर्व्वते तानि वपु र्न समाविशन्ति किन्तु व्यभिचारिणा स्वविग्रहस्य विरुद्धं कल्मषं क्रियते ।
१९ युष्माकं यानि वपूंसि तानि युष्मदन्तःस्थितस्येश्वराल्लब्धस्य पवित्रस्यात्मनो मन्दिराणि यूयञ्च स्वेषां स्वामिनो नाध्वे
२० किमेतद् युष्माभि र्न ज्ञायते? यूयं मूल्येन क्रीता अतो वपुर्मनोभ्याम् ईश्वरो युष्माभिः पूज्यतां यत ईश्वर एव तयोः स्वामी ।

---

## ७ सप्तमोऽध्यायः ।

१ उद्वाहीया कथा, ८ स्त्रीपुंसयोरपृथक्तायाः कथा ११ सहवासस्य कथा १७ निजनिजपदे स्थितिकथा २४ अनूढकन्याया स्थितिकथा ३६ कन्याया विवाहकथनं ३९ स्त्रिया द्विर्विवाहनकथनं ।

१ अपरञ्च युष्माभि र्मां प्रति यत् पत्रमलेखि तस्योत्तरमेतत्,
२ योषितोऽस्पर्शनं मनुजस्य वरं; किन्तु व्यभिचारभयाद्

एकैकस्य पुंसः स्वकीयभार्य्या भवतु तद्वद् एकैकस्या योषितो ऽपि स्वकीयभर्त्ता भवतु। भार्य्यायै भर्त्ता यद्यद् वितर- ३ णीयं तद् वितीर्य्यतां तद्वद् भर्त्रेऽपि भार्य्यया वितरणीयं वितीर्य्यतां। भार्य्यायाः स्वदेहे स्वत्वं नास्ति भर्त्तुरेव, तद्वद् ४ भर्त्तुरपि स्वदेहे स्वत्वं नास्ति भार्य्याया एव। उपोषणप्रार्थनयोः ५ सेवनार्थम् एकमन्त्रणानां युष्माकं कियत्कालं यावद् या पृथक्स्थिति र्भवति तदन्यो विच्छेदो युष्मन्मध्ये न भवतु, ततः परम् इन्द्रियाणाम् अधैर्य्यात् शयतान् यद् युष्मान् परीक्षां न नयेत् तदर्थं पुनरेकत्र मिलत। एतद् आदेशतो नहि ६ किन्त्वनुज्ञात एव मया कथ्यते, यतो ममावस्थेव सर्व्वमानवा- ७ नामवस्था भवत्विति मम वाञ्छा किन्त्वीश्वराद् एकेनैको वरोऽन्येन चान्यो वर इत्थमेकैकेन स्वकीयवरो लब्धः।

अपरम् अकृतविवाहान् विधवाश्च प्रति ममैतन्निवेदनं ८ ममेव तेषामवस्थिति र्भद्रा; किञ्च यदि तैरिन्द्रियाणि नियन्तुं ९ न शक्यन्ते तर्हि विवाहः क्रियतां यतः कामदहनाद् व्यूढत्वं भद्रं। ये च कृतविवाहास्ते मया नहि प्रभुनैवैतद् आज्ञाप्यन्ते। १० भार्य्या भर्त्तृतः पृथक् न भवतु। यदि वा पृथग्भूता स्यात् ११ तर्हि निर्व्विवाहा तिष्ठतु स्वीयपतिना वा सन्दधातु भर्त्तापि भार्य्यां न त्यजतु।

इतरान् जनान् प्रति प्रभु र्न ब्रवीति किन्त्वहं ब्रवीमि; १२ कस्यचिद् भ्रातुर्योषिद् अविश्वासिनी सत्यपि यदि तेन सह- वासे तुष्यति तर्हि सा तेन न त्यज्यतां। तद्वत् कस्याश्चिद् १३ योषितः पतिरविश्वासी सन्नपि यदि तया सहवासे तुष्यति तर्हि स तया न त्यज्यतां। यतोऽविश्वासी भर्त्ता भार्य्यया १४

पवित्रीभूतः, तद्वदविश्वासिनी भार्य्या भर्त्रा पवित्रीभूता; नोचेद् युष्माकमपत्यान्यशुचीन्यभविष्यन् किन्त्वधुना तानि
१५ पवित्राणि सन्ति। अविश्वासी जनो यदि वा पृथग् भवति तर्हि पृथग् भवतु; एतेन भ्राता भगिनी वा न निबध्यते
१६ तथापि वयमीश्वरेण शान्तये समाहूताः। हे नारि तव भर्त्तुः परित्राणं त्वत्तो भविष्यति न वेति त्वया किं ज्ञायते? हे नर तव जायायाः परित्राणं त्वत्तो भविष्यति न वेति त्वया किं ज्ञायते?

१७ एकैको जनः परमेश्वराल्लब्धं यद् भजते यस्याञ्चावस्थायाम् ईश्वरेणाह्वायि तदनुसारेणैवाचरतु तदहं सर्व्व-
१८ समाजस्थान् आदिशामि। छिन्नत्वग् भूत्वा य आहूतः स प्रकृष्टत्वक् न भवतु, तद्वद् अच्छिन्नत्वग् भूत्वा य आहूतः
१९ स छिन्नत्वक् न भवतु। त्वक्छेदः सारो नहि तद्वत्त्वक्छेदोऽपि सारो नहि किन्त्वीश्वरस्याज्ञानां पालनमेव।
२० यो जनो यस्यामवस्थायामाह्वायि स तस्यामेवावतिष्ठतां।
२१ दासः सन् त्वं किमाहूतोऽसि? तन्मा चिन्तय, तथाच यदि
२२ स्वतन्त्रो भवितुं शक्नुयास्तर्हि तदेव वृणु। यतः प्रभुनाहूतो यो दासः स प्रभो र्मोचितजनः। तद्वत् तेनाहूतः स्वतन्त्रो
२३ जनोऽपि ख्रीष्टस्य दास एव। यूयं मूल्येन क्रीता अतो हेतो
२४ र्मानवानां दासा मा भवत। हे भ्रातरो यस्यामवस्थायां यस्याह्वानमभवत् तया स ईश्वरस्य साक्षात् तिष्ठतु।

२५ अपरम् अकृतविवाहान् जनान् प्रति प्रभोः कोऽप्यादेशो मया न लब्धः किन्तु प्रभोरनुकम्पया विश्वास्यो भूतोऽहं यद्
२६ भद्रं मन्ये तद् वदामि। वर्त्तमानात् क्लेशसमयात् मनुष्यस्यान-

ढत्वं भद्रमिति मया बुध्यते। त्वं किं योषिति निबद्धोऽसि? २७
तर्हि मोचनं प्राप्तुं मा यतस्व। किं वा योषितो मुक्तोऽसि?
तर्हि जायां मा गवेषय। विवाहं कुर्व्वता त्वया किमपि २८
नापराध्यते तद्वद् व्यूह्यमानया युवत्यापि किमपि नापराध्यते
तथाच तादृशौ द्वौ जनौ शारीरिकं क्लेशं लप्स्येते किन्तु
युष्मान् प्रति मम करुणा विद्यते। हे भ्रातरोऽहमिदं ब्रवीमि, २९
इतः परं समयोऽतीव संक्षिप्तः, अतः कृतदारैरकृतदारैरिव
रुदद्भिश्चारुदद्भिरिव सानन्दैश्च निरानन्दैरिव क्रेतृभिश्चाभा- ३०
गिभिरिवाचरितव्यं ये च संसारे चरन्ति तै र्नातिचरितव्यं ३१
यत इहलोकस्य कौतुको विचलति। किन्तु यूयं यन्निश्चिन्ता ३२
भवेतेति मम वाञ्छा। अकृतविवाहो जनो यथा प्रभुं परि-
तोषयेत् तथा प्रभुं चिन्तयति, किन्तु कृतविवाहो जनो यथा ३३
भार्य्यां परितोषयेत् तथा संसारं चिन्तयति। तद्वद् ऊढ- ३४
योषितो ऽनूढा विशिष्यते। यानूढा सा यथा कायमनसोः
पवित्रा भवेत् तथा प्रभुं चिन्तयति या चोढा सा यथा
भर्त्तारं परितोषयेत् तथा संसारं चिन्तयति। अहं यद् ३५
युष्मान् मृगबन्धिन्या परिक्षिपेयं तदर्थं नहि किन्तु यूयं
यदनिन्दिता भूत्वा प्रभोः सेवनेऽबाधम् आसक्ता भवेत तदर्थ-
मेतानि सर्व्वाणि युष्माकं हिताय मया कथ्यन्ते।

कस्यचित् कन्यायां यौवनप्राप्तायां यदि स तस्या अनूढत्वं ३६
निन्दनीयं विवाहश्च साधयितव्य इति मन्यते तर्हि यथाभिलाषं
करोतु, एतेन किमपि नापरात्स्यति विवाहः क्रियतां। किन्तु ३७
दुःखेनाक्लिष्टः कश्चित् पिता यदि स्थिरमनोगतः स्वमनो-
ऽभिलाषसाधने समर्थश्च स्यात् मम कन्या मया रक्षितव्येति

३८ मनसि निश्चिनोति च तर्हि स भद्रं कर्म्म करोति। अतो यो विवाहं करोति स भद्रं कर्म्म करोति यश्च विवाहं न करोति स भद्रतरं कर्म्म करोति।

३९ यावत्कालं पति र्जीवति तावद् भार्य्या व्यवस्थया निबद्धा तिष्ठति किन्तु पत्यौ महानिद्रां गते सा मुक्तीभूय यमभिलषति तेन सह तस्या विवाहो भवितुं शक्नोति, किन्त्वेतत्

४० केवलं प्रभुभक्तानां मध्ये। तथाच सा यदि निष्पतिका तिष्ठति तर्हि तस्याः क्षेमं भविष्यतीति मम भावः। अपरम् ईश्वरस्यात्मा ममाप्यन्त र्विद्यत इति मया बुध्यते।

---

## ८ अष्टमोऽध्यायः।

१ देवनिवेदितद्रव्यभक्षणकथा ७ दुर्ब्बललोकेषु कृपाकरणकथनञ्च।

१ देवप्रसादे सर्व्वेषाम् अस्माकं ज्ञानमास्ते तद्वयं विद्मः। तथापि ज्ञानं गर्व्वं जनयति किन्तु प्रेमतो निष्ठा जायते।

२ अतः कश्चन यदि मन्यते मम ज्ञानमास्त इति तर्हि तेन यादृशं ज्ञानं चेष्टितव्यं तादृशं किमपि ज्ञानमद्यापि न लब्धं।

३ किन्तु य ईश्वरे प्रीयते स ईश्वरेणापि ज्ञायते। देवताबलि-

४ प्रसादभक्षणे वयमिदं विद्मो यत् जगन्मध्ये कोऽपि देवो न

५ विद्यते, एकश्चेश्वरो द्वितीयो नास्तीति। स्वर्गे पृथिव्यां वा यद्यपि केषुचिद् ईश्वर इति नामारोप्यते तादृशाश्च बहव

६ ईश्वरा बहवश्च प्रभवो विद्यन्ते तथाप्यस्माकमद्वितीय ईश्वरः स पिता यस्मात् सर्व्वेषां यदर्थञ्चास्माकं सृष्टि र्जाता, अस्माकञ्चाद्वितीयः प्रभुः स यीशुः ख्रीष्टो येन सर्व्ववस्तूनां येनास्माकमपि सृष्टिः कृता।

अधिकन्तु ज्ञानं सर्व्वेषां नास्ति यतः केचिदद्यापि देवतां ७ मन्मन्य देवप्रसादमिव तद् भक्ष्यं भुञ्जते तेन दुर्ब्बलतया तेषां स्वान्तानि मलीमसानि भवन्ति। किन्तु भक्ष्यद्रव्याद् ८ वयम् ईश्वरेण ग्राह्या भवामस्तन्नहि यतो भुङ्क्त्वा वयमुत्कृष्टा न भवामस्तद्वदभुङ्क्त्वाप्यपकृष्टा न भवामः। अतो युष्माकं ९ या क्षमता सा दुर्ब्बलानाम् उन्मायस्वरूपा यन्न भवेत् तदर्थं सावधाना भवत। यतो ज्ञानविशिष्टस्त्वं यदि देवा- १० लये उपविष्टः केनापि दृश्यसे तर्हि तस्य दुर्ब्बलस्य मनसि किं प्रसादभक्षण उत्साहो न जनिष्यते? तथा सति यस्य कृते ११ ख्रीष्टो ममार तव स दुर्ब्बलो भ्राता तव ज्ञानात् किं न विनंक्ष्यति? इत्यनेन प्रकारेण भ्रातृणां विरुद्धम् अपराध्यद्भि- १२ स्तेषां दुर्ब्बलानि मनांसि व्याघातयद्भिश्च युष्माभिः ख्रीष्टस्य वैपरीत्येनापराध्यते। अतो हेतोः पिशिताशनं यदि मम १३ भ्रातु र्विघ्नस्वरूपं भवेत् तर्ह्यहं यत् स्वभ्रातु र्विघ्नजनको न भवेयं तदर्थं यावज्जीवनं पिशितं न भोक्ष्ये।

---

## ९ नवमोऽध्यायः।

१ सुसंवादप्रचारणेन सुसंवादप्रचारयितृणामुपजीवनकथनं १५ विना मूल्यं पौलस्य सुसंवादप्रचारणं १९ सर्व्वप्रकारलोकान् तोषयितुं यतनं २४ ख्रीष्टीयलोकानां यात्रामल्लयुद्धकथनञ्च।

अहं किम् एकः प्रेरितो नास्मि? किमहं स्वतन्त्रो नास्मि? १ अस्माकं प्रभु र्यीशुः ख्रीष्टः किं मया नादर्शि? यूयमपि किं प्रभुना मदीयश्रमफलस्वरूपा न भवथ? अन्यलोकानां २ कृते यद्यप्यहं प्रेरितो न भवेयं तथाच युष्मत्कृते प्रेरितोऽस्मि यतः प्रभुना मम प्रेरितत्वपदस्य मुद्रास्वरूपा यूयमेवाध्वे।

३ ये लोका मयि दोषमारोपयन्ति तान् प्रति मम प्रत्युत्त-
४ रमेतत्। भोजनपानयोः किमस्माकं क्षमता नास्ति? अन्ये
५ प्रेरिताः प्रभो र्भ्रातरौ कैफाश्च यत् कुर्व्वन्ति तद्वत् काञ्चित्
धर्म्मभगिनीं व्यूह्य तया सार्द्धं पर्य्यटितुं वयं किं न शक्नुमः?
६ सांसारिकश्रमस्य परित्यागात् किं केवलमहं वर्णव्वाश्च निवा-
७ रितौ? निजधनव्ययेन कः संग्रामं करोति? को वा द्राक्षा-
क्षेत्रं कृत्वा तत्फलानि न भुङ्क्ते? को वा पशुव्रजं पालयन्
८ तत्पयो न पिवति? किमहं केवलां मानुषिकां वाचं वदामि?
९ व्यवस्थायां किमेतादृशं वचनं न विद्यते? मूसाव्यवस्थाग्रन्थे
लिखितमास्ते, त्वं शस्यमर्द्दकवृषस्यास्यं न भंत्स्यसीति। ईश्वरेण
१० बलीवर्द्दानामेव चिन्ता किं क्रियते? किं वा सर्व्वथास्माकं कृते
तद्वचनं तेनोक्तं? अस्माकमेव कृते तल्लिखितं। यः क्षेत्रं कर्षति
तेन प्रत्याशायुक्तेन कर्ष्टव्यं, यश्च शस्यानि मर्द्दयति तेन लाभ-
११ प्रत्याशायुक्तेन मर्द्दितव्यं। युष्मत्कृतेऽस्माभिः पारत्रिकाणि
वीजानि रोपितानि, अतो युष्माकमैहिकफलानां वयम्
१२ अंशिनो भविष्यामः किमेतत् महत् कर्म्म? युष्मासु योऽधिका-
रस्तस्य भागिनो यद्यन्ये भवेयुस्तर्ह्यस्माभिस्ततोऽधिकं किं तस्य
भागिभि र्न भवितव्यं? अधिकन्तु वयं तेनाधिकारेण न व्यव-
हृतवन्तः किन्तु ख्रीष्टीयसुसंवादस्य कोऽपि व्याघातोऽस्माभि-
१३ र्यन्न जायेत तदर्थं सर्व्वं सहामहे। अपरं ये पवित्रवस्तूनां परि-
चर्य्यां कुर्व्वन्ति ते पवित्रवस्तुतो भक्ष्याणि लभन्ते, ये च वेद्याः
परिचर्य्यां कुर्व्वन्ति ते वेदिस्थवस्तूनाम् अंशिनो भवन्त्येतद् यूयं
१४ किं न विद? तद्वद् ये सुसंवादं घोषयन्ति तैः सुसंवादेन
जीवितव्यमिति प्रभुनादिष्टं।

अहमेतेषां सर्व्वेषां किमपि नाश्रितवान् मां प्रति तदनु- १५
सारात् आचरितव्यमित्याशयेनापि पत्रमिदं मया न लिख्यते
यतः केनापि जनेन मम यशसो मुधाकरणात् मम मरणं वरं।
सुसंवादघोषणात् मम यशो न जायते यतस्तद्घोषणं ममावश्यकं १६
यद्यहं सुसंवादं न घोषयेयं तर्हि मां धिक्। इच्छुकेन तत् १७
कुर्व्वता मया फलं लप्स्यते किन्त्वनिच्छुकेऽपि मयि तत्कर्म्मणो
भारोऽर्पितोऽस्ति। एतेन मया लभ्यं फलं किं? सुसंवादेन १८
मम योऽधिकार आस्ते तं यदभद्रभावेन नाचरेयं तदर्थं
सुसंवादघोषणसमये तस्य ख्रीष्टीयसुसंवादस्य निर्व्ययीकरण-
मेव मम फलं।

सर्व्वेषाम् अनायत्तोऽहं यद् भूरिशो लोकान् प्रतिपद्ये तदर्थं १९
सर्व्वेषां दासत्वमङ्गीकृतवान्। यिहूदीयान् यत् प्रतिपद्ये तदर्थं २०
यिहूदीयानां कृते यिहूदीयइवाभवं। ये च व्यवस्थायत्तास्तान्
यत् प्रतिपद्ये तदर्थं व्यवस्थानायत्तो योऽहं सोऽहं व्यवस्थाय-
त्तानां कृते व्यवस्थायत्तइवाभवं। ये चालब्धव्यवस्थास्तान् यत् २१
प्रतिपद्ये तदर्थम् ईश्वरस्य साक्षाद् अलब्धव्यवस्थो न भूत्वा ख्रीष्टेन
लब्धव्यवस्थो योऽहं सोऽहम् अलब्धव्यवस्थानां कृतेऽलब्धव्यवस्थ
इवाभवं। दुर्ब्बलान् यत् प्रतिपद्ये तदर्थमहं दुर्ब्बलानां कृते २२
दुर्ब्बलइवाभवं। इत्थं केनापि प्रकारेण कतिपया लोका
यन्मया परित्राणं प्राप्नुयुस्तदर्थं यो यादृश आसीत् तस्य कृते
ऽहं तादृशइवाभवं। ईदृश आचारः सुसंवादार्थं मया क्रियते २३
यतोऽहं तस्य फलानां सहभागी भवितुमिच्छामि।

पण्यलाभार्थं ये धावन्ति धावतां तेषां सर्व्वेषां केवल २४
एकः पण्यं लभते युष्माभिः किमेतन्न ज्ञायते? अतो यूयं

२५ यथा पण्यं लप्स्यध्वे तथैव धावत। मल्ला अपि सर्व्वभोगे परिमितभोगिनो भवन्ति ते तु म्लानां स्रजं लिप्सन्ते किन्तु
२६ वयम् अम्लानां लिप्सामहे। तस्माद् अहमपि धावामि किन्तु लक्ष्यमनुद्दिश्य धावामि तन्नहि। अहं मल्लइव युध्यामि च
२७ किन्तु छायामाघातयन्निव युध्यामि तन्नहि। इतरान् प्रति सुसंवादं घोषयित्वाहं यत् स्वयमग्राह्यो न भवामि तदर्थं देहम् आहन्मि वशीकुर्व्वे च।

---

## १० दशमोऽध्यायः।

१ यिहूदीयलोकानाम् अनुग्रहभ्रष्टत्वस्य कथनं ६ अस्मच्छिक्षार्थं तेषां दोषकथनं १४ प्रभो भोज्ये कथनं २२ देवतानिवेदितसामग्र्यशनवारणञ्च।

१　हे भ्रातरः, अस्मत्पितृपुरुषानधि यूयं यदज्ञाता न तिष्ठतेति मम वाञ्छा, ते सर्व्वे मेघाधःस्थिता बभूवुः सर्व्वे
२ समुद्रमध्येन वव्रजुः, सर्व्वे मूसामुद्दिश्य मेघसमुद्रयो र्मज्जिता
३ बभूवुः सर्व्वे एकम् आत्मिकं भक्ष्यं बुभुजिर एकम् आत्मिकं
४ पेयं पपुश्च यतस्तेऽनुचरत आत्मिकाद् अचलात् लब्धं तोयं
५ पपुः सोऽचलः ख्रीष्टएव। तथा सत्यपि तेषां मध्येऽधिकेषु लोकेष्वीश्वरो न सन्तुतोषेति हेतोस्ते प्रान्तरे निपातिताः।

६　एतस्मिन् ते ऽस्माकं निदर्शनस्वरूपा बभूवुः; अतस्ते यथा कुत्सिताभिलाषिणो बभूवुरस्माभिस्तथा कुत्सिताभिलाषिभि र्न
७ भवितव्यं। लिखितमास्ते, लोका भोक्तुं पातुञ्चोपविविशुस्ततः क्रीडितुमुत्थिता इत्यनेन प्रकारेण तेषां कैश्चिद् यद्वद् देव-
८ पूजा कृता युष्माभिस्तद्वत् न क्रियतां। अपरं तेषां कैश्चिद् यद्वद् व्यभिचारः कृतस्तेन चैकस्मिन् दिने त्रयोविंशतिसहस्राणि

लोका निपातितास्तद्वद् अस्माभि र्व्यभिचारो न कर्त्तव्यः।
तेषां केचिद् यद्वत् ख्रीष्टं परीक्षितवन्तस्तस्माद् भुजङ्गै ९
र्नष्टाश्च तद्वद् अस्माभिः ख्रीष्टो न परीक्षितव्यः। तेषां केचिद् १०
यथा वाक्कलहं कृतवन्तस्तत्कारणात् हन्त्रा विनाशिताश्च युष्मा-
भिस्तद्वद् वाक्कलहो न क्रियतां। तान् प्रति यान्येतानि ११
जघटिरे तान्यस्माकं निदर्शनानि जगतः शेषयुगे वर्त्तमानानाम्
अस्माकं शिक्षार्थं लिखितानि च बभूवुः। अतएव यः कश्चिद् १२
सुस्थिरंमन्यः स यन्न पतेत् तत्र सावधानो भवतु। मानु- १३
षिकपरीक्षातिरिक्ता कापि परीक्षा युष्मान् नाक्रामत्, ईश्वरश्च
विश्वास्यः सोऽतिशक्त्यां परीक्षायां पतनात् युष्मान् रक्षि-
ष्यति, परीक्षा च यद् युष्माभिः सोढुं शक्यते तदर्थं तया सह
निस्तारस्य पन्थानं निरूपयिष्यति।

हे प्रियभ्रातरः, देवपूजातो दूरम् अपसरत। अहं १४
युष्मान् विज्ञान् मत्वा प्रभाषे मया यत् कथ्यते तद् युष्माभि १५
र्विविच्यतां। यद् धन्यवादपात्रम् अस्माभि र्धन्यं गद्यते १६
तत् किं ख्रीष्टस्य शोणितस्य सहभागित्वं नहि? यश्च पूपो-
ऽस्माभि र्भज्यते स किं ख्रीष्टस्य वपुषः सहभागित्वं नहि?
वयं बहवः सन्तोऽप्येकपूपस्वरूपा एकवपुःस्वरूपाश्च भवामः, १७
यतो वयं सर्व्वे एकपूपस्य सहभागिनः। यूयं शारीरिकम् इस्रा- १८
येलीयवंशं निरीक्षध्वं। ये बलीनां मांसानि भुञ्जते ते किं
यज्ञवेद्याः सहभागिनो न भवन्ति? इत्यनेन मया किं १९
कथ्यते? देवता वास्तविकी देवतायै बलिदानं वा वास्तविकं
किं भवेत्? तन्नहि किन्तु भिन्नजातिभि र्ये बलयो दीयन्ते त २०
ईश्वराय तन्नहि भूतेभ्यएव दीयन्ते तस्माद् यूयं यद् भूतानां

२१ सहभागिनो भवथेत्यहं नाभिलषामि। प्रभोः कंसेन भूतानामपि कंसेन पानं युष्माभिरसाध्यं; यूयं प्रभो र्भोज्यस्य
२२ भूतानामपि भोज्यस्य सहभागिनो भवितुं न शक्नुथ। वयं किं प्रभुं स्पर्द्धिष्यामहे? वयं किं तस्माद् बलवन्तः?
२३  मां प्रति सर्व्वं कर्म्माप्रतिषिद्धं किन्तु न सर्व्वं हितजनकं
२४ सर्व्वम् अप्रतिषिद्धं किन्तु न सर्व्वं निष्ठाजनकं। आत्महितः
२५ केनापि न चेष्टितव्यः किन्तु सर्व्वैः परहितश्चेष्टितव्यः। आपणे यत् क्रय्यं तद् युष्माभिः संवेदस्यार्थं किमपि न पृष्ट्वा भुज्यतां
२६ यतः 'पृथिवी तन्मध्यस्थञ्च सर्व्वं परमेश्वरस्य।' अपरम् अवि-
२७ श्वासिलोकानां केनचित् निमन्त्रिता यूयं यदि तत्र जिगमिषथ तर्हि तेन यद् यद् उपस्थाप्यते तद् युष्माभिः संवेदस्यार्थं
२८ किमपि न पृष्ट्वा भुज्यतां। किन्तु तत्र यदि कश्चिद् युष्मान् वदेत् भक्ष्यमेतद् देवतायाः प्रसाद इति तर्हि तस्य ज्ञापयितुरनुरोधात् संवेदस्यार्थञ्च तद् युष्माभि र्न भोक्तव्यं। 'पृथिवी
२९ तन्मध्यस्थञ्च सर्व्वं परमेश्वरस्य,' सत्यमेतत्, किन्तु मया यः संवेदो निर्द्दिश्यते स तव नहि परस्यैव। मम या स्वतन्त्रता सा
३० परस्य संवेदेन कुतो दूषयिष्यते? अनुग्रहपात्रेण मया धन्यवादं
३१ कृत्वा यद् भुज्यते तत्कारणाद् अहं कुतो निन्दिष्ये? तस्माद् भोजनं पानम् अन्यद्वा कर्म्म कुर्व्वद्भि र्युष्माभिः सर्व्वमेवेश्वरस्य
३२ महिम्नः प्रकाशार्थं क्रियतां। यिहूदीयानां भिन्नजातीयानाम् ईश्वरस्य समाजस्य वा विघ्नजनकै र्युष्माभि र्न भवितव्यं।
३३ अहमप्यात्महितम् अचेष्टमानो बहूनां परित्राणार्थं तेषां हितं
३४ चेष्टमानः सर्व्वविषये सर्व्वेषां तुष्टिकरो भवामीत्यनेनाहं यद्वत् ख्रीष्टस्यानुगामी तद्वद् यूयं ममानुगामिनो भवत।

# ११ एकादशोऽध्यायः।

१ पुरुषीयोत्तमाङ्गं नाच्छादनीयं योषीयोत्तमाङ्गमवश्यमाच्छादनीयं १७ प्रभो र्भोज्ये करिन्थिनः प्रति भर्त्सनं २३ कथं भोक्तव्यमिति निर्णयनं ३३ तस्मिन् पौलस्योपदेशश्च।

हे भ्रातरः, यूयं सर्व्वस्मिन् कार्य्ये मां स्मरथ मया च १ यादृगुपदिष्टास्तादृगाचरथैतत्कारणात् मया प्रशंसनीया आध्वे। तथापि ममैषा वाञ्छा यद् यूयमिदम् अवगता २ भवथ, एकैकस्य पुरुषस्योत्तमाङ्गस्वरूपः ख्रीष्टः, योषितश्चो- ३ त्तमाङ्गस्वरूपः पुमान्, ख्रीष्टस्य चोत्तमाङ्गस्वरूप ईश्वरः। अपरम् आच्छादितोत्तमाङ्गेन येन पुंसा प्रार्थना क्रियत ४ ईश्वरीयवाणी कथ्यते वा तेन स्वीयोत्तमाङ्गम् अवज्ञायते। अनाच्छादितोत्तमाङ्गया यया योषिता च प्रार्थना क्रियत ५ ईश्वरीयवाणी कथ्यते वा तयापि स्वीयोत्तमाङ्गम् अवज्ञायते यतः सा मुण्डितशिरःसदृशा। अनाच्छादितमस्तका या ६ योषित् तस्याः शिरः मुण्डनीयमेव किन्तु योषितः केशच्छेदनं शिरोमुण्डनं वा यदि लज्जाजनकं भवेत् तर्हि तया स्वशिर आच्छाद्यतां। पुमान् ईश्वरस्य प्रतिमूर्त्तिः प्रतितेजः- ७ स्वरूपश्च तस्मात् तेन शिरो नाच्छादनीयं किन्तु सीमन्तिनी पुंसः प्रतिबिम्बस्वरूपा। यतो योषातः पुमान् नोदपादि ८ किन्तु पुंसो योषिद् उदपादि। अधिकन्तु योषितः कृते पुंसः ९ सृष्टि र्न बभूव किन्तु पुंसः कृते योषितः सृष्टि र्बभूव। इति १० हेतो र्दूतानाम् आदराद् योषिता शिरस्यधीनतासूचकम् आवरणं धर्त्तव्यं। तथापि प्रभो र्विधिना पुमांसं विना योषिन्न ११ जायते योषितञ्च विना पुमान् न जायते। यतो यथा पुंसो १२ योषिद् उदपादि तथा योषितः पुमान् जायते, सर्व्ववस्तूनि

१३ चेश्वराद् उत्पद्यन्ते। युष्माभिरेवैतद् विविच्यतां, अनावृतया
१४ योषिता प्रार्थनं किं सुदृश्यं भवेत्? पुरुषस्य दीर्घकेशत्वं
तस्य लज्जाजनकं, किन्तु योषितो दीर्घकेशत्वं तस्या गौरव-
१५ जनकं यत आच्छादनाय तस्यै केशा दत्ता इति किं युष्माभिः
१६ स्वभावतो न शिक्ष्यते? अत्र यदि कश्चिद् विवदितुम् इच्छेत्
तर्ह्यस्माकम् ईश्वरीयसमितीनाञ्च तादृशी रीति र्न विद्यते।

१७ युष्माभि र्न भद्राय किन्तु कुत्सिताय समागम्यते तस्माद्
१८ एतानि भाषमाणेन मया यूयं न प्रशंसनीयाः। प्रथमतः
समितौ समागतानां युष्माकं मध्ये भेदाः सन्तीति वार्त्ता
१९ मया श्रूयते तन्मध्ये किञ्चित् सत्यं मन्यते च। यतो हेतो र्युष्म-
न्मध्ये ये परीक्षितास्ते यत् प्रकाश्यन्ते तदर्थं भेदै र्भवितव्यमेव।
२० एकत्र समागतै र्युष्माभिः प्राभवं भोज्यं भुज्यत इति नहि;
२१ यतो भोजनकाले युष्माकमेकैकेन स्वकीयं भक्ष्यं तूर्णं ग्रस्यते
तस्माद् एको जनो बुभुक्षितस्तिष्ठति, अन्यश्च परितृप्तो भवति।
२२ भोजनपानार्थं युष्माकं किं वेश्मानि न सन्ति? युष्माभि र्वा
किम् ईश्वरस्य समितिं तुच्छीकृत्य दीना लोका अवज्ञायन्ते?
इत्यनेन मया किं वक्तव्यं? यूयं किं मया प्रशंसनीयाः? एत-
स्मिन् यूयं न प्रशंसनीयाः।

२३ प्रभुतो य उपदेशो मया लब्धो युष्मासु समर्पितश्च स
२४ एषः। परकरसमर्पणक्षपायां प्रभु र्यीशुः पूपमादायेश्वरं
धन्यं व्याहृत्य तं भङ्क्त्वा भाषितवान् युष्माभिरेतद् गृह्यतां
भुज्यताञ्च तद् युष्मत्कृते भग्नं मम शरीरं; मम स्मरणार्थं
२५ युष्माभिरेतत् क्रियतां। पुनश्च भोजनात् परं तथैव कंसम्
आदाय तेनोक्तं कंसोऽयं मम शोणितेन स्थापितो नूतननि-

यम: ; यतिवारं युष्माभिरेतत् पीयते ततिवारं मम स्मर-
णार्थं पीयतां। यतिवारं युष्माभिरेष पूपो भुज्यते भाजने- २६
नानेन पीयते च ततिवारं प्रभोरागमनं यावत् तस्य मृत्युः
प्रकाश्यते। अपरञ्च यः कश्चिद् अयोग्यत्वेन प्रभोरिमं पूपम् २७
अश्नाति तस्यानेन भाजनेन पिवति च स प्रभोः कायरुधिरयो
र्दण्डदायी भविष्यति। तस्मात् मानवेनाग्र आत्मानं परीक्ष्य २८
पश्चाद् एष पूपो भुज्यतां कंसेनानेन च पीयतां। येन
चानर्हत्वेन भुज्यते पीयते च प्रभोः कायम् अविमृशता २९
तेन दण्डप्राप्तये भुज्यते पीयते च। एतत्कारणाद् युष्माकं ३०
भूरिशो लोका दुर्ब्बला रोगिणश्च सन्ति बहवश्च महानिद्रां
गताः। अस्माभि र्यद्यात्मविचारोऽकारिष्यत तर्हि दण्डो ना- ३१
लप्स्यत; किन्तु यदास्माकं विचारो भवति तदा वयं जगतो ३२
जनैः समं यद् दण्डं न लभामहे तदर्थं प्रभुना शास्तिं भुंज्महे।

हे मम भ्रातरः, भोजनार्थं मिलितानां युष्माकम् एकेने- ३३
तरोऽनुगृह्यतां। यश्च बुभुक्षितः स स्वगृहे भुङ्क्तां। दण्डप्राप्तये ३४
युष्माभि र्न समागम्यतां। एतद्भिन्नं यद् आदेष्टव्यं तद् युष्मत्-
समीपागमनकाले मयादेक्ष्यते।

---

## १२ द्वादशोऽध्यायः।

१ आत्मनो बहुविधदानकथनं १२ वपुःपूरणाय यथा नानाङ्गानां प्रयोजनं तथा समाजपूर्त्यर्थं नानादानानां प्रयोजनञ्च।

हे भ्रातरः, यूयं यद् आत्मिकान् दायान् अनवगतास्तिष्ठथ १
तदहं नाभिलषामि। पूर्व्वं भिन्नजातीया यूयं यद्वद् विनीता- २
स्तद्वद् अवाक्प्रतिमानाम् अनुगामिन आध्वम् इति जानीथ।

३ इति हेतोरहं युष्मभ्यं निवेदयामि, ईश्वरस्यात्मना भाषमाणः कोऽपि यीशुं शप्त इति न व्याहरति, पुनश्च पवित्रेणात्मना विनीतं विनान्यः कोऽपि यीशुं प्रभुरिति व्याहर्त्तुं न शक्नोति।
४ दाया बहुविधाः किन्त्वेक आत्मा परिचर्य्याश्च बहुविधाः
५ किन्त्वेकः प्रभुः। साधनानि बहुविधानि किन्तु सर्व्वेषु सर्व्व-
७ साधक ईश्वर एकः। एकैकस्मै तस्यात्मनो दर्शनं परहितार्थं
८ दीयते। एकस्मै तेनात्मना ज्ञानवाक्यं दीयते, अन्यस्मै तेनैवा-
९ त्मनादिष्टं विद्यावाक्यम्, अन्यस्मै तेनैवात्मना विश्वासः, अन्यस्मै
१० तेनैवात्मना स्वास्थ्यदानशक्तिरन्यस्मै दुःसाध्यसाधनशक्तिर-न्यस्मै चेश्वरीयादेशः, अन्यस्मै चातिमानुषिकस्यादेशस्य विचा-रसामर्थ्यम्, अन्यस्मै परभाषाभाषणशक्तिरन्यस्मै च भाषार्थ-
११ भाषणसामर्थ्यं दीयते। एकेनाद्वितीयेनात्मना यथाभिलाषम् एकैकस्मै जनायैकैकं दानं वितरता तानि सर्व्वाणि साध्यन्ते।
१२ देह एकः सन्नपि यद्वद् बह्वङ्गयुक्तो भवति, तस्यैकस्य वपुषो
१३ ऽङ्गानां बहुत्वेन यद्वद् एकं वपु र्भवति, तद्वत् ख्रीष्टः। यतो हेतो र्यिहूदिभिन्नजातीयदासस्वतन्त्रा वयं सर्व्वे मज्जनेनैके-
१४ नात्मनैकदेहीकृताः सर्व्वे चैकात्मभुक्ता अभवाम। एकेनाङ्गेन
१५ वपु र्न भवति किन्तु बहुभिः। तत्र चरणं यदि वदेत् नाहं हस्तस्तस्मात् शरीरस्य भागो नास्मीति तर्ह्यनेन शरीरात् तस्य
१६ वियोगो न भवति। श्रोत्रं वा यदि वदेत् नाहं नयनं तस्मात् शरीरस्यांशो नास्मीति तर्ह्यनेन शरीरात् तस्य वियोगो
१७ न भवति। कृत्स्नं शरीरं यदि दर्शनेन्द्रियं भवेत् तर्हि श्रव-णेन्द्रियं कुत्र स्थास्यति? तत् कृत्स्नं यदि वा श्रवणेन्द्रियं भवेत्
१८ तर्हि घ्राणेन्द्रियं कुत्र स्थास्यति? किन्त्विदानीम् ईश्वरेण यथा-

भिलषितं तथैवाङ्गप्रत्यङ्गानाम् एकैकं शरीरे स्थापितं। तत् १९
कृत्स्नं यद्येकाङ्गरूपि भवेत् तर्हि शरीरं कुत्र स्थास्यति? तस्माद् २०
अङ्गानि बहूनि सन्ति शरीरं त्वेकमेव। अतएव त्वया मम २१
प्रयोजनं नास्तीति वाचं पाणिं वदितुं नयनं न शक्नोति, तथा
युवाभ्यां मम प्रयोजनं नास्तीति मूर्द्धा चरणौ वदितुं न
शक्नोतिः; वस्तुतस्तु विग्रहस्य यान्यङ्गान्यस्माभि दुर्ब्बलानि २२
बुध्यन्ते तान्येव सप्रयोजनानि सन्ति। यानि च शरीरमध्येऽवम- २३
न्यानि बुध्यन्ते तान्यस्माभिरधिकं शोभ्यन्ते। यानि च कुदृश्यानि २४
तानि सुदृश्यतराणि क्रियन्ते किन्तु यानि स्वयं सुदृश्यानि
तेषां शोभनम् निष्प्रयोजनं। शरीरमध्ये यद् भेदो न भवेत् २५
किन्तु सर्व्वाण्यङ्गानि यद् ऐक्यभावेन सर्व्वेषां हितं चिन्तयन्ति
तदर्थम् ईश्वरेणाप्रधानम् आदरणीयं कृत्वा शरीरं विरचितं।
तस्माद् एकस्याङ्गस्य पीडायां जातायां सर्व्वाण्यङ्गानि तेन सह २६
पीड्यन्ते, एकस्य समादरे जाते च सर्व्वाणि तेन सह संहृष्यन्ति।
यूयञ्च ख्रीष्टस्य शरीरं, युष्माकम् एकैकश्च तस्यैकैकम् अङ्गं। २७
केचित् केचित् समितावीश्वरेण प्रथमतः प्रेरिता द्वितीयत २८
ईश्वरीयादेशवक्तारस्तृतीयत उपदेष्टारो नियुक्ताः, ततः परं
केभ्योऽपि चित्रकार्य्यसाधनसामर्थ्यम् अनामयकरणशक्तिरुपकृतौ
लोकशासने वा नैपुण्यं नानाभाषाभाषणसामर्थ्यं वा तेन
व्यतारि। सर्व्वे किं प्रेरिताः? सर्व्वे किम् ईश्वरीयादेशवक्तारः? २९
सर्व्वे किम् उपदेष्टारः? सर्व्वे किं चित्रकार्य्यसाधकाः? सर्व्वे किम् ३०
अनामयकरणशक्तियुक्ताः? सर्व्वे किं परभाषावादिनः? सर्व्वे
वा किं परभाषार्थप्रकाशकाः? यूयं श्रेष्ठदायान् लब्धुं यतध्वं। ३१
अनेन यूयं मया सर्व्वोत्तममार्गं दर्शयितव्याः।

# १३ त्रयोदशोऽध्यायः ।

१ अखिलपारमार्थिकदानात् प्रेमदानस्योत्तमत्वं ४ तस्य फलकथनं विश्वासप्रत्याशाभ्यां तस्य श्रेष्ठत्वञ्च ।

१ मर्त्यस्वर्गीयाणां भाषा भाषमाणोऽहं यदि प्रेमहीनो भवेयं तर्हि वादकतालस्वरूपो निनादकारिभेरीस्वरूपश्च २ भवामि । अपरञ्च यद्यहम् ईश्वरीयादेशाढ्यः स्यां सर्व्वाणि गुप्तवाक्यानि सर्व्वविद्याञ्च जानीयां पूर्णविश्वासः सन् शैलान् स्थानान्तरीकर्त्तुं शक्नुयाञ्च किन्तु यदि प्रेमहीनो भवेयं तर्ह्य- ३ गणनीय एव भवामि । अपरं यद्यहम् अन्नदानेन सर्व्वस्वं त्यजेयं दाहनाय स्वशरीरं समर्पयेयञ्च किन्तु यदि प्रेमहीनो भवेयं तर्हि तत्सर्व्वं मदर्थं निष्फलं भवति ।

४ प्रेम चिरसहिष्णु हितैषि च, प्रेम निर्द्वेषम् अशठं निर्गर्व्वञ्च । ५ अपरं तत् कुत्सितं नाचरति, आत्मचेष्टां न कुरुते सहसा न ६ क्रुध्यति परानिष्टं न चिन्तयति, अधर्म्मे न तुष्यति सत्य एव ७ सन्तुष्यति । तत् सर्व्वं तितिक्षते सर्व्वत्र विश्वसिति सर्व्वत्र भद्रं ८ प्रतीक्षते सर्व्वं सहते च । प्रेम्नो लोपः कदापि न भविष्यति, ईश्वरीयादेशकथनं लोप्स्यते परभाषाभाषणं निवर्त्तिष्यते ९ ज्ञानमपि लोपं यास्यति । यतोऽस्माकं ज्ञानं खण्डमात्रम् १० ईश्वरीयादेशकथनमपि खण्डमात्रं। किन्त्वस्मासु सिद्धतां गतेषु ११ तानि खण्डमात्राणि लोपं यास्यन्ते । बाल्यकालेऽहं बाल इवाभाषे बाल इवाचिन्तयञ्च किन्तु यौवने जाते तत्सर्व्वं १२ बाल्याचरणं परित्यक्तवान्। इदानीम् अभ्रमध्येनास्पष्टं दर्शनम् अस्माभि र्लभ्यते किन्तु तदा साक्षात् दर्शनं लप्स्यते । अधुना मम ज्ञानम् अल्पिष्ठं किन्तु तदाहं यथावगम्यस्तथैवावगतो

भविष्यामि। इदानीं प्रत्ययः प्रत्याशा प्रेम च त्रीण्येतानि १३ तिष्ठन्ति तेषां मध्ये च प्रेम श्रेष्ठं।

---

## १४ चतुर्दशोऽध्यायः।

१ नानाभाषाभाषणत उपदेशनस्य श्रेष्ठत्वं-६ उपदिश्य लोकानामवश्यबोधयितव्यत्वं २० बोधयितुः फलं २६ उपदेशे भाषाभाषणे च पौलस्य कथनं ३४ समाजे ऽबलानामप्रचारणकथनं ३६ पौलस्य शासनवाक्यञ्च।

यूयं प्रेमाचरणे प्रयतध्वम् आत्मिकान् दायानपि विशेषत १ ईश्वरीयादेशकथनसामर्थ्यं प्राप्तुं चेष्टध्वं। यो जनः परभाषां २ भाषते स मानुषान् न सम्भाषते किन्त्वीश्वरमेव यतः केनापि किमपि न बुध्यते स चात्मना निगूढवाक्यानि कथयति; किन्तु ३ यो जन ईश्वरीयादेशं कथयति स परेषां निष्ठायै हितोपदेशाय सान्त्वनायै च भाषते। परभाषावाद्यात्मन एव निष्ठां ४ जनयति किन्त्वीश्वरीयादेशवादी समिते र्निष्ठां जनयति। युष्माकं सर्व्वेषां परभाषाभाषणम् इच्छाम्यहं किन्त्वीश्वरीया- ५ देशकथनम् अधिकमपीच्छामि। यतः समिते र्निष्ठायै येन स्ववाक्यानाम् अर्थो न क्रियते तस्मात् परभाषावादित ईश्वरीयादेशवादी श्रेयान्।

हे भ्रातरः, इदानीं मया यदि युष्मत्समीपं गम्यते तर्हीश्- ६ वरीयदर्शनस्य ज्ञानस्य वेश्वरीयादेशस्य वा शिक्षाया वा वाक्यानि न भाषित्वा परभाषां भाषमाणेन मया यूयं किमुपकारिष्यध्वे? अपरं वंशीवल्लक्यादिषु निष्प्राणिषु वाद्ययन्त्रेषु ७ वादितेषु यदि क्वणा न विशिष्यन्ते तर्हि किं वाद्यं किं वा गानं भवति तत् केन बोद्धुं शक्यते? अपरं रणतूर्य्या निस्वणो ८ यद्यव्यक्तो भवेत् तर्हि युद्धाय कः सज्जिष्यते? तद्वत् जिह्वाभि ९

यदि सुगम्या वाक् युष्माभि र्न गद्येत तर्हि यद् गद्यते तत् केन
१० भोत्स्यते? वस्तुतो यूयं दिगालापिन इव भविष्यथ। जगति
कतिप्रकारा उक्तयो विद्यन्ते? तासामेकापि निरर्थिका नहि;
११ किन्तूक्तेरर्थो यदि मया न बुध्यते तर्ह्यहं वक्त्रा म्लेच्छ इव
१२ मंस्ये वक्तापि मया म्लेच्छ इव मंस्यते। तस्माद् आत्मिकदा-
यलिप्सवो यूयं समिते र्निष्ठार्थं प्राप्तबहुवरा भवितुं यतध्वं,
१३ अतएव परभाषावादी यद् अर्थकरोऽपि भवेत् तत् प्रार्थयतां।
१४ यद्यहं परभाषया प्रार्थनां कुर्य्यां तर्हि मदीय आत्मा प्रार्थ-
१५ यते, किन्तु मम बुद्धि र्निष्फला तिष्ठति। इत्यनेन किं कर-
णीयं? अहम् आत्मना प्रार्थयिष्ये बुद्ध्यापि प्रार्थयिष्ये; अपरं
१६ आत्मना गास्यामि बुद्ध्यापि गास्यामि। त्वं यदात्मना धन्यवादं
करोषि तदा यद् वदसि तद् यदि शिष्येनेवोपस्थितेन जनेन
न बुध्यते तर्हि तव धन्यवादस्यान्ते तथास्त्विति तेन वक्तुं कथं
१७ शक्यते? त्वं सम्यग् ईश्वरं धन्यं वदसीति सत्यं तथापि तत्र
१८ परस्य निष्ठा न भवति। युष्माकं सर्व्वेभ्योऽहं परभाषाभाषणे
१९ समर्थोऽस्मीति कारणाद् ईश्वरं धन्यं वदामि; तथापि समितौ
परोपदेशार्थं मया कथितानि पञ्च वाक्यानि वरं न च लक्षं
परभाषीयानि वाक्यानि।

२०    हे भ्रातरः, यूयं बुद्ध्या बालकाइव मा भूत परन्तु दुष्ट-
२१ तया शिशवइव भूत्वा बुद्ध्या सिद्धा भवत। शास्त्र इदं लिखित-
मास्ते, यथा,

इत्यवोचत् परेशोऽहम् आभाषिष्य इमान् जनान्।
भाषाभिः परकीयाभि र्वक्त्रैश्च परदेशिभिः।
तथा मया कृतेऽपीमे न ग्रहीष्यन्ति मद्वचः॥

अतएव तत् परभाषाभाषणं अविश्वासिनः प्रति चिह्नरूपं २२
भवति न च विश्वासिनः प्रति ; किन्त्वीश्वरीयादेशकथनं
नाविश्वासिनः प्रति तद् विश्वासिनः प्रत्येव । समितिभुक्तेषु २३
सर्व्वेषु एकस्मिन् स्थाने मिलित्वा परभाषां भाषमाणेषु
यदि ज्ञानाकाङ्क्षिणोऽविश्वासिनो वा तत्रागच्छेयुस्तर्हि युष्मान्
उन्मत्तान् किं न वदिष्यन्ति ? किन्तु सर्व्वेष्वीश्वरीयादेशं २४
प्रकाशयत्सु यद्यविश्वासी ज्ञानाकाङ्क्षी वा कश्चित् तत्रागच्छति
तर्हि सर्व्वैरेव तस्य पापज्ञानं परीक्षा च जायते, ततस्तस्यान्तः- २५
करणस्य गुप्तकल्पनासु व्यक्तीभूतासु सोऽधोमुखः पतन् ईश्वर-
माराध्य युष्मन्मध्य ईश्वरो विद्यते इति सत्यं कथामेतां कथ-
यिष्यति ।

हे भ्रातरः, सम्मिलितानां युष्माकम् एकेन गीतम् अन्ये- २६
नोपदेशोऽन्येन परभाषान्येन ऐश्वरिकदर्शनम् अन्येनार्थबोधकं
वाक्यं लभ्यते किमेतत् ? सर्व्वमेव परनिष्ठार्थं युष्माभिः क्रियतां ।
यदि कश्चिद् भाषान्तरं विवक्षति तर्ह्येकस्मिन् दिने द्विज- २७
नेन त्रिजनेन वा परभाषा कथ्यतां तदधिकैर्न कथ्यतां तैरपि
पर्य्यायानुसारात् कथ्यतां, एकेन च तदर्थो बोध्यतां । किन्त्व- २८
र्थाभिधायकः कोऽपि यदि न विद्यते तर्हि स समितौ वाचं-
यमः स्थित्वेश्वरायात्मने च कथां कथयतु । अपरं द्वौ २९
त्रयो वेश्वरीयादेशवक्तारः स्वं स्वमादेशं कथयन्तु तदन्ये च तं
विचारयन्तु। किन्तु तत्रापरेण केनचित् जनेनेश्वरीयादेशे लब्धे ३०
प्रथमेन कथनात् निवर्त्तितव्यं। सर्व्वे यत् शिक्षां सान्त्वनाञ्च ३१
लभन्ते तदर्थं यूयं सर्व्वे पर्य्यायेणेश्वरीयादेशं कथयितुं शक्नुथ।
ईश्वरीयादेशवक्तृणां मनांसि तेषाम् अधीनानि भवन्ति । ३२

३३ यत ईश्वरः कुशासनजनको नहि सुशासनजनक एवेति पवित्रलोकानां सर्व्वसमितिषु प्रकाशते।

३४ अपरञ्च युष्माकं वनिताः समितिषु तूष्णीम्भूतास्तिष्ठन्तु यतः शास्त्रलिखितेन विधिना ताः कथाप्रचारणात् निवा-
३५ रितास्ताभि र्निघ्राभि र्भवितव्यं। अतस्ता यदि किमपि जिज्ञासन्ते तर्हि गेहेषु पतीन् पृच्छन्तु यतः समितिमध्ये योषितां कथाकथनं निन्दनीयं।

३६ ऐश्वरं वचः किं युष्मत्तो निरगमत? केवलं युष्मान्
३७ वा तत् किम् उपागतं? यः कश्चिद् आत्मानम् ईश्वरीयादेशवक्तारम् आत्मनाविष्टं वा मन्यते स युष्मान् प्रति मया यद्
३८ यत् लिख्यते तत्प्रभुनाज्ञापितम् इत्युररी करोतु। किन्तु यः
३९ कश्चित् अज्ञो भवति सोऽज्ञ एव तिष्ठतु। अतएव हे भ्रातरः, यूयम् ईश्वरीयादेशकथनसामर्थ्यं लब्धुं यतध्वं पर-
४० भाषाभाषणमपि युष्माभि र्न निवार्य्यतां। सर्व्वकर्म्माणि च विध्यनुसारतः सुपरिपाट्या क्रियन्तां।

---

## १५ पञ्चदशोऽध्यायः।

१ ख्रीष्टोत्थानकथनं १२ उत्थानानङ्गीकारिणो भर्त्सनं २० ख्रीष्टोत्थानेन तल्लोकानाम् उत्थानावधारणं २९ उत्थाने न सति धर्म्मस्य निष्फलत्वं ३५ उत्थाने शरीरस्य विशेषत्वं ४१ कथम् उत्थानं भविष्यति तस्य निर्णयः ५० शेषदिनाख्यानञ्च।

१ हे भ्रातरः, यः सुसंवादो मया युष्मत्समीपे निवेदितो यूयञ्च यं गृहीतवन्त आश्रितवन्तश्च तं पुन र्युष्मान् विज्ञाप-
२ यामि। युष्माकं विश्वासो यदि वितथो न भवेत् तर्हि सुसंवादयुक्तानि मम वाक्यानि स्मरतां युष्माकं तेन सुसंवादेन परित्राणं
३ जायते। यतोऽहं यद् यत् ज्ञापितस्तदनुसारात् युष्मासु

मुख्यां यां शिक्षां समार्पयं सेयं, शास्त्रानुसारात् ख्रीष्टोऽस्माकं पापमोचनार्थं प्राणान् त्यक्तवान्, श्मशाने स्थापितश्च तृतीय- ४ दिने शास्त्रानुसारात् पुनरुत्थापितः। स चाग्रे कैफै ततः परं ५ द्वादशशिष्येभ्यो दर्शनं दत्तवान्। ततः परं पञ्चशताधिकसंख्य- ६ केभ्यो भ्रातृभ्यो युगपद् दर्शनं दत्तवान् तेषां केचित् महानिद्रां गता बहुतराश्चाद्यापि वर्त्तन्ते। तदनन्तरं याकूबाय तत्- ७ पश्चात् सर्व्वेभ्यः प्रेरितेभ्यो दर्शनं दत्तवान्। सर्व्वशेषेऽकाल- ८ जाततुल्यो योऽहं, सोऽहमपि तस्य दर्शनं प्राप्तवान्। ईश्वरस्य ९ समितिं प्रति दौरात्म्याचरणाद् अहं प्रेरितनाम धर्त्तुम् अयोग्यस्तस्मात् प्रेरितानां मध्ये क्षुद्रतमश्चास्मि। यादृशोऽस्मि १० तादृश ईश्वरस्यानुग्रहेणैवास्मि; अपरं मां प्रति तस्यानुग्रहो निष्फलो नाभवत्, अन्येभ्यः सर्व्वेभ्यो मयाधिकः श्रमः कृतः, किन्तु स मया कृतस्तन्नहि मत्सहकारिणेश्वरस्यानुग्रहेणैव। अतएव मया भवेत् तै र्वा भवेत् अस्माभिस्तादृशी वार्त्ता घोष्यते ११ सैव च युष्माभि र्विश्वासेन गृहीता।

मृत्युदशातः ख्रीष्ट उत्थापित इति वार्त्ता यदि तमधि १२ घोष्यते तर्हि मृतलोकानाम् उत्थितिे र्नास्तीति वाग् युष्माकं मध्ये कैश्चित् कुतः कथ्यते? मृतानाम् उत्थिति र्यदि न भवेत् १३ तर्हि ख्रीष्टोऽपि नोत्थापितः ख्रीष्टश्च यद्यनुत्थापितः स्यात् १४ तर्ह्यस्माकं घोषणं वितथं युष्माकं विश्वासोऽपि वितथः। वयञ्चे- १५ श्वरस्य मृषासाक्षिणो भवामः, यतः ख्रीष्ट स्तेनोत्थापितः इति साक्ष्यम् अस्माभिरीश्वरमधि दत्तं किन्तु मृतानामुत्थिति र्यदि न भवेत् तर्हि स तेन नोत्थापितः। यतो मृतानामुत्थिति १६ र्यदि न भवेत् तर्हि ख्रीष्टोऽप्युत्थापितत्वं न गतः। ख्रीष्टश्च यद्य- १७

नुत्थापितः स्यात् तर्हि युष्माकं विश्वासो वितथः, यूयम् अद्यापि
१८ स्वपापेषु मग्नास्तिष्ठथ । अपरं ख्रीष्टाश्रिता ये मानवा महा-
१९ निद्रां गतास्तेऽपि नाशं गताः । ख्रीष्टो यदि केवलमिहलोके
ऽस्माकं प्रत्याशाभूमिः स्यात् तर्हि सर्व्वमर्त्येभ्यो वयमेव दुर्भाग्याः ।
२०　इदानीं ख्रीष्टो मृत्युदशात उत्थापितो महानिद्रागतानां
२१ मध्ये प्रथमफलस्वरूपो जातश्च । यतो यद्वत् मानुषद्वारा मृत्युः
प्रादुर्भूतस्तद्वत् मानुषद्वारा मृतानां पुनरुत्थितिरपि प्रादुर्भूता ।
२२ आदमा यथा सर्व्वे मरणाधीना जातास्तथा ख्रीष्टेन सर्व्वे जीव-
२३ यिष्यन्ते । किन्त्वेकैकेन जनेन निजे निजे पर्य्याय उत्थातव्यं
प्रथमतः प्रथमजातफलस्वरूपेन ख्रीष्टेन, द्वितीयतस्तस्यागमन-
२४ समये ख्रीष्टस्य लोकैः । ततः परम् अन्तो भविष्यति तदानीं
स सर्व्वं शासनम् अधिपतित्वं पराक्रमञ्च लुप्त्वा स्वपितरीश्वरे
२५ राजत्वं समर्पयिष्यति । यतः ख्रीष्टस्य रिपवः सर्व्वे यावत्
तेन स्वपादयोरधो न निपातयिष्यन्ते तावत् तेनैव राजत्वं
२६ कर्त्तव्यं । तेन विजेतव्यो यः शेषरिपुः स मृत्युरेव । लिखि-
२७ तमास्ते 'सर्व्वाणि तस्य पादयो र्वशीकृतानि ।' किन्तु सर्व्वा-
ण्येव तस्य वशीकृतानीत्युक्ते सति सर्व्वाणि येन तस्य वशी-
२८ कृतानि स स्वयं तस्य वशीभूतो न जात इति व्यक्तं । सर्व्वेषु
तस्य वशीभूतेषु सर्व्वाणि येन पुत्रस्य वशीकृतानि स्वयं पुत्रो-
ऽपि तस्य वशीभूतो भविष्यति तत ईश्वरः सर्व्वेषु सर्व्व एव
भविष्यति ।
२९　अपरं परेतलोकानां विनिमयेन ये मज्ज्यन्ते तैः किं
लप्स्यते? येषां परेतलोकानाम् उत्थितिः केनापि प्रकारेण
न भविष्यति तेषां विनिमयेन कुतो मज्जनमपि तैरङ्गीक्रि-

यते ? वयमपि कुतः प्रतिदण्डं प्राणभीतिम् अङ्गीकुर्म्महे ? ३०
अस्मत्प्रभुना यीशुख्रीष्टेन युष्मत्तो मम या श्लाघास्ते तस्याः ३१
शपथं कृत्वा कथयामि दिने दिनेऽहं मृत्युं गच्छामि ।
इफिषनगरे वन्यपशुभिः सार्द्धं यदि लौकिकभावात् मया ३२
युद्धं कृतं तर्हि तेन मम को लाभः ? मृतानाम् उत्थिति र्यदि
न भवेत् तर्हि,

कुर्म्मो भोजनपानेऽद्य श्वस्तु मृत्यु र्भविष्यति ।

इत्यनेन धर्म्मात् मा भ्रंशध्वं । ३३

कुसंसर्गेण लोकानां सदाचारो विनश्यति ।

यूयं यथोचितं सचैतन्यास्तिष्ठत, पापं मा कुरुध्वं, यतो ३४
युष्माकं मध्य ईश्वरीयज्ञानहीनाः केऽपि विद्यन्ते युष्माकं
त्रपायै मयेदं गद्यते ।

अपरं मृतलोकाः कथम् उत्थास्यन्ति ? कीदृशं वा ३५
शरीरं लब्ध्वा पुनरेष्यन्तीति वाक्यं कश्चित् प्रक्ष्यति । हे अज्ञ ३६
त्वया यद् वीजम् उप्यते तद् यदि न म्रियेत तर्हि न जीवयि-
ष्यते । यथा मूर्त्त्या निर्गन्तव्यं सा त्वया नोप्यते किन्तु शुष्कं ३७
वीजमेव; तच्च गोधूमादीनां किमपि वीजं भवितुं शक्नोति ।
ईश्वरेणेव यथाभिलाषं तस्मै मूर्त्ति र्दीयते, एकैकस्मै वीजाय ३८
स्वा स्वा मूर्त्तिरेव दीयते । सर्व्वाणि पललानि नैकविधानि ३९
सन्ति, मनुष्यपशुपक्षिमत्स्यादीनां भिन्नरूपाणि पललानि
सन्ति । अपरं स्वर्गीया मूर्त्तयः पार्थिवा मूर्त्तयश्च विद्यन्ते ४०
किन्तु स्वर्गीयानाम् एकरूपं तेजः पार्थिवानाञ्च तदन्यरूपं
तेजोऽस्ति । सूर्य्यस्य तेज एकविधं चन्द्रस्य तेजस्तदन्यविधं ४१
ताराणाञ्च तेजोऽन्यविधं, ताराणां मध्येऽपि तेजसस्तारतम्यं

विद्यते। इत्थं परेतलोकानाम् उत्थितिरपि भविष्यति।
४२ यद् उप्यते तत् क्षय्यं यच्चोत्थास्यति तद् अक्षयं। यद्
४३ उप्यते तत् तुच्छं यच्चोत्थास्यति तद् गौरवान्वितं; यद्
४४ उप्यते तन्निर्ब्बलं यच्चोत्थास्यति तत् शक्तियुक्तं। यत् शरीरम्
उप्यते तत् प्राणानां सद्म, यच्च शरीरम् उत्थास्यति तद्
आत्मनः सद्म। प्राणसद्मस्वरूपं शरीरं विद्यते, आत्मसद्म-
४५ स्वरूपमपि शरीरं विद्यते। तत्र लिखितमास्ते यथा, 'आदि-
पुरुष आदम् जीवत्प्राणी बभूव,' किन्त्वन्तिम आदम् (ख्रीष्टो)
४६ जीवनदायक आत्मा बभूव। आत्मसद्म न प्रथमं किन्तु प्राण-
४७ सद्मैव तत्पश्चाद् आत्मसद्म। आद्यः पुरुषो मृद उत्पन्न-
त्वात् मृण्मयो द्वितीयश्च पुरुषः स्वर्गाद् आगतः प्रभुः।
४८ मृण्मयो यादृश आसीत् मृण्मयाः सर्व्वे तादृशा भवन्ति
स्वर्गीयश्च यादृशोऽस्ति स्वर्गीयाः सर्व्वे तादृशा भवन्ति।
४९ मृण्मयस्य रूपं यद्वद् अस्माभि र्धारितं तद्वत् स्वर्गीयस्य रूप-
मपि धारयिष्यते।

५० हे भ्रातरः, युष्मान् प्रति व्याहरामि, ईश्वरस्य राज्ये
रक्तमांसयोरधिकारो भवितुं न शक्नोति, अक्षयत्वे च क्षय-
५१ स्याधिकारो न भविष्यति। पश्यताहं युष्मभ्यं निगूढां कथां
५२ निवेदयामि। सर्व्वैरस्माभि र्महानिद्रा न गमिष्यते किन्त्व-
न्तिमदिने तूर्य्यां वादितायाम् एकस्मिन् विपले निमिषैकमध्ये
सर्व्वै रूपान्तरं गमिष्यते, यतस्तूरी वादिष्यते, मृतलोका-
श्चाक्षयीभूता उत्थास्यन्ति वयञ्च रूपान्तरं गमिष्यामः। यतः
५३ क्षयणीयेनैतेन शरीरेणाक्षयत्वं परिहितव्यं, मरणाधीनेनैतेन
५४ देहेन चामरत्वं परिहितव्यं। एतस्मिन् क्षयणीये शरीरे ऽक्षयत्वं

गते, एतस्मिन् मरणाधीने देहे चामरत्वं गते शास्त्रे लिखितं वचनमिदं सेत्स्यति, यथा,

———जयेन ग्रस्यते मृत्युः।

मृत्यो ते कण्टकं कुत्र परलोक जयः क्व ते॥ ५५

मृत्योः कण्टकं पापमेव पापस्य च बलं व्यवस्था। ईश्वरस्य ५६ धन्यो भवतु यतः सोऽस्माकं प्रभुना यीशुख्रीष्टेनास्मान् जय- ५७ युक्तान् विधापयति। अतो हे मम प्रियभ्रातरः; यूयं सुस्थिरा ५८ निश्चलाश्च भवत प्रभोः सेवायां युष्माकं परिश्रमो निष्फलो न भविष्यतीति ज्ञात्वा प्रभोः कार्य्ये सदा तत्परा भवत।

---

## १६ षोडशोऽध्यायः।

१ दानं कर्त्तुं पौलस्योपदेशः १० आपल्लुतिमथ्योः पौलस्य कथनं १५ स्तिफान-प्रभृतिषु भ्रातृषु पौलस्य कथनं २१ नमस्कारप्रेषणं समाप्तेः कथनञ्च।

पवित्रलोकानां कृते योऽर्थसंग्रहस्तमधि गालातीयदेशस्य- १ समाजा मया यद् आदिष्टास्तद् युष्माभिरपि क्रियतां। ममागमनकाले यद् अर्थसंग्रहो न भवेत् तन्निमित्तं युष्माक- २ मेकैकेन स्वसम्पदानुसारात् सञ्चयं कृत्वा सप्ताहस्य प्रथमदिवसे स्वसमीपे किञ्चित् निक्षिप्यतां। ततो ममागमनसमये यूयं ३ यानेव विश्वास्या इति वेदिष्यथ तेभ्योऽहं पत्राणि दत्त्वा युष्माकं तद्दानस्य यिरूशालमं नयनार्थं तान् प्रेषयिष्यामि। किन्तु यदि तत्र ममापि गमनम् उचितं भवेत् तर्हि ते मया ४ सह यास्यन्ति। साम्प्रतं माकिदनियादेशमहं पर्य्यटामि तं ५ पर्य्यट्य युष्मत्समीपम् आगमिष्यामि। अनन्तरं किं जानामि ६ युष्मत्सन्निधिम् अवस्थास्ये शीतकालमपि यापयिष्यामि च पश्चात्

७ मम यत् स्थानं गन्तव्यं तत्रैव युष्माभिरहं प्रेरयितव्यः। यतो-ऽहं यात्राकाले क्षणमात्रं युष्मान् द्रष्टुं नेच्छामि किन्तु प्रभु र्यद्यनुजानीयात् तर्हि किञ्चिद् दीर्घकालं युष्मत्समीपे प्रवस्तुम्
८ इच्छामि। तथापि निस्तारोत्सवात् परं पञ्चाशत्तमदिनं
९ यावद् इफिषपुर्य्यां स्थास्यामि। यस्माद् अत्र कार्य्यसाधनार्थं ममान्तिके बृहद् द्वारं मुक्तं बहवो विपक्षा अपि विद्यन्ते।

१० तिमथि र्यदि युष्माकं समीपम् आगच्छेत् तर्हि येन निर्भयं युष्मन्मध्ये वर्त्तेत तत्र युष्माभि र्मनो निधीयतां यस्माद् अहं यादृक् सोऽपि तादृक् प्रभोः कर्म्मणे यतते।
११ कोऽपि तं प्रत्यनादरं न करोतु किन्तु स ममान्तिकं यद् आगन्तुं शक्नुयात् तदर्थं युष्माभिः सकुशलं प्रेष्यतां। भ्रातृभिः
१२ सार्द्धमहं तं प्रतीक्षे। आपल्लुं भ्रातरमध्यहं निवेदयामि भ्रातृ-भिः साकं सोऽपि यद् युष्माकं समीपं व्रजेत् तदर्थं मया स पुनः पुनर्याचितः किन्त्विदानीं गमनं सर्व्वथा तस्मै नारोचत,
१३ इतःपरं सुसमयं प्राप्य स गमिष्यति। यूयं जागृत विश्वासे
१४ सुस्थिरा भवत पौरुषं प्रकाशयत बलवन्तो भवत। युष्माभिः सर्व्वाणि कर्म्माणि प्रेम्ना निष्पाद्यन्तां।

१५ हे भ्रातरः, अहं युष्मान् इदम् अभियाचे स्तिफानस्य परिजना आखायादेशस्य प्रथमजातफलस्वरूपाः, पवित्रलो-कानां परिचर्य्यायै च त आत्मनो न्यवेदयन् इति युष्माभि
१६ र्ज्ञायते। अतो यूयमपि तादृशलोकानाम् अस्मत्सहायानां
१७ श्रमकारिणाञ्च सर्व्वेषां वश्या भवत। स्तिफानः फर्त्तूनात आखायिकश्च यद् अत्रागमन् तेनाहम् आनन्दामि यतो
१८ युष्माभिर्यत् न्यूनितं तत् तैः सम्पूरितं। ते युष्माकं मम च

मनांस्याप्यायितानि। तस्मात् तादृशा लोका युष्माभिः सम्म- १९
न्तव्याः। युष्मभ्यम् आशियादेशस्थसमाजानां नमस्कृतिम्
आक्किलप्रिस्किल्लयोस्तन्मण्डपस्थसमितेश्च बहुनमस्कृतिं प्रजा- २०
नीत। सर्व्वे भ्रातरो युष्मान् नमस्कुर्व्वन्ते। यूयं पवित्रचुम्बनेन
मिथो नमत।

पौलोऽहं स्वकरलिखितं नमस्कृतिं युष्मान् वेदये। यदि २१
कश्चिद् यीशुख्रीष्टे न प्रीयते तर्हि स शापग्रस्तो भवेत् प्रभु- २२
रायाति। अस्माकं प्रभो र्यीशुख्रीष्टस्यानुग्रहो युष्मान् प्रति २३
भूयात्। ख्रीष्टं यीशुम् आश्रितान् युष्मान् प्रति मम प्रेम २४
तिष्ठतु। इति॥

---

# करिन्थिनः प्रति पौलस्य द्वितीयं पत्रं।



## १ प्रथमोऽध्यायः।

१ मङ्गलाचरणं ३ ख्रीष्टस्य शिष्याणां दुःखसुखबोधः १२ करिन्थीयसमाजं प्रति प्रेरितानामाचरणं १५ तेषां समीपं प्रति पौलस्य गमननिश्चयः २३ तस्य गमनस्य कारणनिर्णयश्च।

ईश्वरस्येच्छया यीशुख्रीष्टस्य प्रेरितः पौलस्तिमथिर्भ्राता १
च द्वावेतौ करिन्थनगरस्थायै ईश्वरीयसमितय आखायादेश-
स्थेभ्यः सर्व्वेभ्यः पवित्रलोकेभ्यश्च पत्रं लिखतः। अस्माकं २
तातस्येश्वरस्य प्रभोर्यीशुख्रीष्टस्य चानुग्रहः शान्तिश्च युष्मासु
वर्त्ततां।

३ कृपालुः पिता सर्व्वसान्त्वनाकारीश्वरश्च योऽस्मत्प्रभोर्यी-
४ शुख्रीष्टस्य तात ईश्वरः स धन्यो भवतु। यतो वयम् ईश्व-
रात् सान्त्वनां प्राप्य तया सान्त्वनया यत् सर्व्वविधक्लिष्टान्
लोकान् सान्त्वयितुं शक्नुयाम तदर्थं सोऽस्माकं सर्व्वक्लेशसमये-
५ ऽस्मान् सान्त्वयति। यतः ख्रीष्टस्य क्लेशा यद्वद् बाहुल्येनास्मासु
वर्त्तन्ते तद्वद् वयं ख्रीष्टेन बहुसान्त्वनाढ्या अपि भवामः।
६ वयं यदि क्लिश्यामहे तर्हि युष्माकं सान्त्वनापरित्राणयोः
कृते क्लिश्यामहे यतोऽस्माभि र्यादृशानि दुःखानि सह्यन्ते
युष्माकं तादृशदुःखानां सहनेन तौ साधयिष्येते इत्यस्मिन्
७ युष्मानधि मम दृढा प्रत्याशा भवति। यदि वा वयं सान्त्वनां
लभामहे तर्हि युष्माकं सान्त्वनापरित्राणयोः कृते तामपि
लभामहे। यतो यूयं यादृग् दुःखानां भागिनोऽभवत तादृक्
८ सान्त्वनाया अपि भागिनो भविष्यथेति वयं जानीमः। हे
भ्रातरः, आशियादेशे यः क्लेशोऽस्मान् आक्राम्यत् तं यूयं यद्
९ अनवगतास्तिष्ठत तन्मया भद्रं न मन्यते। तेनातिशक्तिक्लेशेन
वयमतीव पीडितास्तस्मात् जीवनरक्षणे निरुपाया जाताश्च,
अतो वयं स्वेषु न विश्वस्य मृतलोकानाम् उत्थापयितरीश्वरे
यद् विश्वासं कुर्म्मस्तदर्थम् अस्माभिः प्राणदण्डो भोक्तव्य इति
१० स्वमनसि निश्चितं। एतादृशभयङ्करात् मृत्यो र्यो ऽस्मान्
अत्रायतेदानीमपि त्रायते स इतः परमप्यस्मान् त्रास्यते
११ ऽस्माकम् एतादृशी प्रत्याशा विद्यते। एतदर्थमस्मत्कृते प्रार्थ-
नया वयं युष्माभिरुपकर्त्तव्यास्तथा कृते बहुभि र्याचितो यो-
ऽनुग्रहोऽस्मासु वर्त्तिष्यते तत्कृते बहुभिरीश्वरस्य धन्यवादो-
ऽपि कारिष्यते।

अपरञ्च संसारमध्ये विशेषतो युष्मन्मध्ये वयं सांसारिक्या १२ धिया नहि किन्त्वीश्वरस्यानुग्रहेणाकुटिलताम् ईश्वरीयसा-रल्यञ्चाचरितवन्तोऽत्रास्माकं मनो यत् प्रमाणं ददाति तेन वयं श्लाघामहे। युष्माभि र्यद् यत् पठ्यते गृह्यते च तदन्यत् १३ किमपि युष्मभ्यम् अस्माभि र्न लिख्यते तच्चान्तं यावद् युष्माभि र्गृहीष्यत इत्यस्माकम् आशा। यूयमितः पूर्व्वमप्यस्मान् अंशतो १४ गृहीतवन्तः, यतः प्रभो र्यीशुख्रीष्टस्य दिने यद्वद् युष्मास्वस्माकं श्लाघा तद्वद् अस्मासु युष्माकमपि श्लाघा भविष्यति।

अपरं यूयं यद् द्वितीयं वरं लभध्वे तदर्थमितः पूर्व्वं तया १५ प्रत्याशया युष्मत्समीपं गमिष्यामि युष्मद्देशेन माकिदनियादेशं १६ व्रजित्वा पुनस्तस्मात् माकिदनियादेशात् युष्मत्समीपम् एत्य युष्माभि र्यिहूदादेशं प्रेषयिष्ये चेति मम वाञ्छासीत्। एता- १७ दृशी मन्त्रणा मया किं चाञ्चल्येन कृता? यद् यद् अहं मन्त्रये तत् किं विषयिलोकइव मन्त्रयाण आदौ स्वीकृत्य पश्चाद् अस्वीकुर्व्वे? युष्मान् प्रति मया कथितानि वाक्यान्यग्रे स्वीकृतानि १८ शेषेऽस्वीकृतानि नाभवन् एतेनेश्वरस्य विश्वस्तता प्रकाशते। मया सिल्वानेन तिमथिना चेश्वरस्य पुत्रो यो यीशुख्रीष्टो १९ युष्मन्मध्ये घोषितः स तेन स्वीकृतः पुनरस्वीकृतश्च तन्नहि किन्तु स तस्य स्वीकारस्वरूपएव। ईश्वरस्य महिमा यद् २० अस्माभिः प्रकाशेत तदर्थम् ईश्वरेण यद् यत् प्रतिज्ञातं तत्सर्व्वं ख्रीष्टेन स्वीकृतं सत्यीभूतञ्च। युष्मान् अस्मांश्चाभिषिच्य यः २१ ख्रीष्टे स्थास्नून् करोति स ईश्वर एव। स चास्मान् मुद्राङ्कितान् २२ अकार्षीत् सत्यङ्कारस्य पणस्वरूपम् आत्मानं अस्माकम् अन्तः-करणेषु निरक्षिपच्च।

२३ अपरं युष्मासु करुणां कुर्व्वन् अहम् एतावत्कालं यावत् करिन्थनगरं न गतवान् इति सत्यमेतस्मिन् ईश्वरं साक्षिणं कृत्वा
२४ मया स्वप्राणानां शपथः क्रियते। वयं युष्माकं विश्वासस्य नियन्तारो न भवामः किन्तु युष्माकम् आनन्दस्य सहाया भवामः, यस्माद् विश्वासे युष्माकं स्थिति र्भवति।

---

## २ द्वितीयोऽध्यायः।

१ पौलस्योपस्थितौ यथा दुःखं न जायते तदर्थं वहिष्कृतलोको ग्रहणीय इति मन्त्रणा १२ सुसंवादप्रचारणेन पौलस्य कर्म्मणः सफलत्वञ्च।

१ अपरञ्चाहं पुनः शोकाय युष्मत्सन्निधिं न गमिष्यामीति
२ मनसि निरचैषं। यस्माद् अहं यदि युष्मान् शोकयुक्तान् करोमि तर्हि मया यः शोकयुक्तीकृतस्तं विना केनापरेणाहं हर्षयिष्ये?
३ मम यो हर्षः स युष्माकं सर्व्वेषां हर्ष एवेति निश्चितं मयाबोधि; अतएव यैरहं हर्षयितव्यस्तै र्मदुपस्थितिसमये यन्मम शोको न
४ जायेत तदर्थमेव युष्मभ्यम् एतादृशं पत्रं मया लिखितं। वस्तुतस्तु बहुक्लेशस्य मनःपीडायाश्च समयेऽहं बह्वश्रुपातेन पत्रमेकं लिखितवान् युष्माकं शोकार्थं तन्नहि किन्तु युष्मासु मदीय-
५ प्रेमबाहुल्यस्य ज्ञापनार्थं। येनाहं शोकयुक्तीकृतस्तेन केवलमहं शोकयुक्तीकृतस्तन्नहि किन्त्वंशतो यूयं सर्व्वेऽपि यतोऽहमत्र
६ कस्मिंश्चिद् दोषमारोपयितुं नेच्छामि। बहूनां यत् तर्ज्जनं
७ तेन जनेनालम्भि तत् तदर्थं प्रचुरं। अतः स दुःखसागरे यन्न निमज्जति तदर्थं युष्माभिः स क्षन्तव्यः सान्त्वयितव्यश्च।
८ इति हेतोः प्रार्थयेऽहं युष्माभिस्तस्मिन् दया क्रियतां। यूयं
९ सर्व्वकर्म्मणि ममादेशं गृह्लीथ न वेति परीक्षितुम् अहं युष्मान्

प्रति लिखितवान्। यस्य यो दोषो युष्माभिः क्षम्यते तस्य स १०
दोषो मयापि क्षम्यते यस्य दोषो मया क्षम्यते स युष्माकं कृते
ख्रीष्टस्य साक्षात् क्षम्यते । शयतानः कल्पनास्माभिरज्ञाता ११
नहि, अतो वयं यत् तेन न वञ्च्यामहे तदर्थम् अस्माभिः
सावधानै र्भवितव्यं ।

अपरञ्च ख्रीष्टस्य सुसंवादघोषणार्थं मयि त्रोयानगर- १२
मागते प्रभोः कर्म्मणे च मदर्थं द्वारे मुक्ते सत्यपि स्वभ्रातु- १३
स्तीतस्याविद्यमानत्वात् मदीयात्मनः कापि शान्ति र्न बभूव,
तस्माद् अहं तान् विसर्ज्जनं याचित्वा माकिदनियादेशं
गन्तुं प्रस्थानम् अकरवं । य ईश्वरः सर्व्वदा ख्रीष्टेनास्मान् १४
जयिनः करोति सर्व्वत्र चास्माभिस्तदीयज्ञानस्य गन्धं प्रका-
शयति स धन्यः । यस्माद् ये त्राणं लप्स्यन्ते ये च विनाशं गमि- १५
ष्यन्ति तान् प्रति वयम् ईश्वरेण ख्रीष्टस्य सैागन्ध्यं भवामः ।
वयम् एकेषां मृत्यवे मृत्युगन्धा अपरेषाञ्च जीवनाय जीवन- १६
गन्धा भवामः, किन्त्वेतादृशकर्म्मसाधने कः समर्थोऽस्ति? अन्ये १७
बहवो लोका यद्वद् ईश्वरस्य वाक्यं मृषाशिक्षया मिश्रयन्ति
वयं तद्वत् तन्न मिश्रयन्तः सरलभावेनेश्वरस्य साक्षाद् ईश्वर-
स्यादेशात् ख्रीष्टेन कथां भाषामहे ।

---

## ३ तृतीयोऽध्यायः ।

१ करिन्थिनः पैालस्य प्रशंसापत्राणि ४ मूसाव्यवस्थाप्रचारणात् ख्रीष्टस्य सुसंवाद-
प्रचारणं वरं १२ दृष्टान्तेन तत्कथायाः प्रमाणञ्च ।

वयं किम् आत्मप्रशंसनं पुनरारभामहे? युष्मान् प्रति १
युष्मत्तो वा परेषां केषाञ्चिद् इवास्माकमपि किं प्रशंसापत्रेषु
प्रयोजनम् आस्ते? यूयमेवास्माकं प्रशंसापत्रं तच्चास्माकम २

३ अन्तःकरणेषु लिखितं सर्व्वमानवैश्च ज्ञेयं पठनीयञ्च। यतो ऽस्माभिः सेवितं ख्रीष्टस्य पत्रं यूयमेव, तच्च न मस्या किन्त्वमरस्येश्वरस्यात्मना लिखितं पाषाणपत्रेषु तन्नहि किन्तु क्रव्यमयेषु हृत्पत्रेषु लिखितमिति सुस्पष्टं।

४ ख्रीष्टेनेश्वरं प्रत्यस्माकम् ईदृशो दृढविश्वासो विद्यते;
५ वयं निजगुणेन किमपि कल्पयितुं समर्था इति नहि किन्त्वी-
६ श्वरादस्माकं सामर्थ्यं जायते। तेन वयं नूतननियमस्यार्थतो ऽक्षरसंस्थानस्य तन्नहि किन्त्वात्मन एव सेवनसामर्थ्यं प्राप्ताः।
७ अक्षरसंस्थानं मृत्युजनकं किन्त्वात्मा जीवनदायकः। अक्षरै र्विलिखितपाषाणरूपिणी या मृत्योः सेवा सा यदीदृक् तेजस्विनी जाता यत्तस्याचिरस्थायिनस्तेजसः कारणात् मूससो
८ मुखम् इस्रायेलीयलोकैः संद्रष्टुं नाशक्यत, तर्ह्यात्मनः सेवा
९ किं ततोऽपि बहुतेजस्विनी न भवेत्? दण्डजनिका सेवा यदि तेजोयुक्ता भवेत् तर्हि पुण्यजनिका सेवा ततोऽधिकं बहुतेजो-
१० युक्ता भविष्यति। उभयोस्तुलनायां कृतायाम् एकस्यास्तेजो
११ द्वितीयायाः प्रखरतरेण तेजसा हीनतेजो भवति। यस्माद् यत् लोपनीयं तद् यदि तेजोयुक्तं भवेत् तर्हि यत् चिरस्थायि तद् बहुतरतेजोयुक्तमेव भविष्यति।

१२ ईदृशीं प्रत्याशां लब्ध्वा वयं महतीं प्रगल्भतां प्रकाशयामः।
१३ इस्रायेलीयलोका यत् तस्य लोपनीयस्य तेजसः शेषं न विलोकयेयुस्तदर्थं मूसा यादृग् आवरणेन स्वमुखम् आच्छादयत्
१४ वयं तादृक् न कुर्म्मः। तेषां मनांसि कठिनीभूतानि यतस्तेषां पठनसमये स पुरातनो नियमस्तेनावरणेनाद्यापि प्रच्छन्नस्ति-
१५ ष्ठति। तच्च न दूरीभवति यतः ख्रीष्टेनैव तत् लुप्यते। मूससः

शास्त्रस्य पाठसमयेऽद्यापि तेषां मनांसि तेनावरणेन प्रच्छाद्यन्ते। किन्तु प्रभुं प्रति मनसि परावृत्ते तद् आवरणं १६ दूरीकारिष्यते। यः प्रभुः स एव स आत्मा यत्र च प्रभो- १७ रात्मा तत्रैव मुक्तिः। वयञ्च सर्व्वेऽनाच्छादितेनास्येन प्रभो- १८ स्तेजसः प्रतिविम्बं गृह्लन्त आत्मस्वरूपेण प्रभुना रूपान्तरीकृता वर्द्धमानतेजोयुक्तां तामेव प्रतिमूर्त्तिं प्राप्नुमः।

---

## ४ चतुर्थोऽध्यायः।

१ सुसंवादप्रचारणाय पौलस्य सारल्यम् उद्योगश्च ७ प्रचारणे तस्य बहुदुःखं १२ किन्तु तद् दुःखं तस्य माङ्गल्याय हिताय च।

अपरञ्च वयं करुणाभाजो भूत्वा यद् एतत् परिचार- १ कपदम् अलभामहि नात्र क्लाम्यामः, किन्तु त्रपायुक्तानि २ प्रच्छन्नकर्म्माणि विहाय कुटिलताचरणमकुर्व्वन्त ईश्वरीयवाक्यं मिथ्यावाक्यैरमिश्रयन्तः सत्यधर्म्मस्य प्रकाशनेनेश्वरस्य साक्षात् सर्व्वमानवानां संवेदगोचरे स्वान् प्रशंसनीयान् दर्शयामः। अस्माभि र्घोषितः सुसंवादो यदि प्रच्छन्नः स्यात् तर्हि ये ३ विनंक्ष्यन्ति तेषामेव दृष्टितः स प्रच्छन्नः; यत ईश्वरस्य प्रति- ४ मूर्त्ति र्यः ख्रीष्टस्तस्य तेजसः सुसंवादस्य प्रभा यत् तान् न दीपयेत् तदर्थम् इह लोकस्य देवोऽविश्वासिनां ज्ञाननयनम् अन्धीकृतवान् एतस्योदाहरणं ते भवन्ति। वयं स्वान् घोषयाम ५ इति नहि किन्तु ख्रीष्टं यीशुं प्रभुमेवास्मांश्च यीशोः कृते युष्माकं परिचारकान् घोषयामः। य ईश्वरो मध्येतिमिरं प्रभां ६ दीपनायादिशत् स यीशुख्रीष्टस्यास्य ईश्वरीयतेजसो ज्ञानप्रभाया उदयार्थम् अस्माकम् अन्तःकरणेषु दीपितवान्।

अपरं तद् धनम् अस्माभि र्मृण्मयेषु भाजनेषु धार्य्यते यतः ७

८ माद्भुता शक्ति र्नास्माकं किन्त्वीश्वरस्यैवेति ज्ञातव्यं। वयं पदे पदे पीड्यामहे किन्तु नावसीदामः, वयं व्याकुलाः सन्तोऽपि
९ निरुपाया न भवामः; वयं प्रद्राव्यमाना अपि न क्लाम्यामः,
१० निपातिता अपि न विनश्यामः। अस्माकं शरीरे ख्रीष्टस्य जीवनं यत् प्रकाशेत तदर्थं तस्मिन् शरीरे यीशो र्मरणमपि धार-
११ यामः। यीशो र्जीवनं यद् अस्माकं मर्त्त्यदेहे प्रकाशेत तदर्थं
१२ जीवन्तो वयं यीशोः कृते नित्यं मृत्यौ समर्प्यामहे। इत्थं वयं मृत्याक्रान्ता यूयञ्च जीवनाक्रान्ताः।

१३　विश्वासकारणादेव समभाषि मया वचः।

इति यथा शास्त्रे लिखितं तथैवास्माभिरपि विश्वासजनकम्
१४ आत्मानं प्राप्य विश्वासः क्रियते तस्माच्च वचांसि भाष्यन्ते। प्रभु र्यीशु र्येनोत्थापितः स यीशुनास्मानप्युत्थापयिष्यति युष्माभिः सार्द्धं स्वसमीप उपस्थापयिष्यति च, वयम् एतत् जानीमः।
१५ अतएव युष्माकं हिताय सर्व्वमेव भवति तस्माद् बहूनां प्रचुरानुग्रहप्राप्ते र्बहुलोकानां धन्यवादेनेश्वरस्य महिमा सम्यक्
१६ प्रकाशिष्यते। ततो हेतो र्वयं न क्लाम्यामः किन्तु वाह्यपुरुषो यद्यपि क्षीयते तथाप्यान्तरिकः पुरुषो दिने दिने नूतना-
१७ यते। क्षणमात्रस्थायि यदेतत् लघिष्ठं दुःखं तद् अतिबाहुल्येनास्माकम् अनन्तकालस्थायि गरिष्ठसुखं साधयति, यतो
१८ वयं प्रत्यक्षान् विषयान् अनुद्दिश्याप्रत्यक्षान् उद्दिशामः। यतो हेतोः प्रत्यक्षविषयाः क्षणमात्रस्थायिनः किन्त्वप्रत्यक्षा अनन्तकालस्थायिनः।

## ५ पञ्चमोऽध्यायः।

१ विचारदिवसेऽनन्तायुःप्राप्तिमपेक्ष्य सुसंवादप्रचारणे पौलस्य परिश्रमः ११ तस्याचारप्रचारनिर्णयश्च।

अपरम् अस्माकम् एतस्मिन् पार्थिवे दूष्यरूपे वेश्मनि जीर्णे सतीश्वरेण निर्म्मितम् अकरकृतम् अस्माकम् अनन्तकालस्थायि वेश्मैकं स्वर्गे विद्यत इति वयं जानीमः। यतो हेतोरेतस्मिन् वेश्मनि तिष्ठन्तो वयं तं स्वर्गीयं वासं परिधातुम् आकाङ्क्ष्यमाणा निःश्वसामः। तथापीदानीमपि वयं तेन न नग्नाः किन्तु परिहितवसना मन्यामहे। एतस्मिन् दूष्ये तिष्ठन्तो वयं क्लिश्यमाना निःश्वसामः, यतो वयं वासं त्यक्तुम् इच्छामस्तन्नहि किन्तु तं द्वितीयं वासं परिधातुम् इच्छामः, यतस्तथा कृते जीवनेन मर्त्त्यं ग्रसिष्यते। एतदर्थं वयं येन सृष्टाः स ईश्वर एव स चास्मभ्यं सत्यङ्कारस्य पणस्वरूपम् आत्मानं दत्तवान्। अतएव वयं सर्व्वदोत्सुका भवामः किञ्च शरीरे यावद् अस्माभि र्न्युष्यते तावत् प्रभुतो दूरे प्रोष्यत इति जानीमः, यतो वयं दृष्टिमार्गे न चरामः किन्तु विश्वासमार्गे। अपरञ्च शरीराद् दूरे प्रवस्तुं प्रभोः सन्निधौ निवस्तुञ्चाकाङ्क्ष्यमाणा उत्सुका भवामः। तस्मादेव कारणाद् वयं तस्य सन्निधौ निवसन्तस्तस्माद् दूरे प्रवसन्तो वा तस्मै रोचितुं यतामहे। यस्मात् शरीरावस्थायाम् एकैकेन कृतानां कर्म्मणां शुभाशुभफलप्राप्तये सर्व्वैरस्माभिः ख्रीष्टस्य विचारासनसम्मुख उपस्थातव्यं।

अतएव प्रभो र्भयानकत्वं विज्ञाय वयं मनुजान् अनुनयामः किञ्चेश्वरस्य गोचरे सप्रकाशा भवामः, युष्माकं संवेदगोचरेऽपि सप्रकाशा भवाम इत्याशंसामहे। अनेन वयं

युष्माकं सन्निधौ पुनः स्वान् प्रशंसाम इति नहि किन्तु ये मनो विना मुखैः श्लाघन्ते तेभ्यः प्रत्युत्तरदानाय यूयं यथास्माभिः श्लाघितुं शक्नुथ तादृशम् उपायं युष्मभ्यं वितरामः।
१३ यदि वयं हतज्ञाना भवामस्तर्हि तद् ईश्वरार्थकं यदि च
१४ सज्ञाना भवामस्तर्हि तद् युष्मदर्थकं। वयं ख्रीष्टस्य प्रेम्ना समाकृष्यामहे यतः सर्व्वेषां विनिमयेन यद्येको जनोऽम्रियत तर्हि
१५ ते सर्व्वे मृता इत्यस्माभि र्बुध्यते। अपरञ्च ये जीवन्ति ते यत् स्वार्थं न जीवन्ति किन्तु तेषां कृते यो जनो मृतः पुनरुत्थापितश्च तमुद्दिश्य यत् जीवन्ति तदर्थमेव स सर्व्वेषां कृते मृतवान्।
१६ अतो हेतोरितः परं कोऽप्यस्माभि र्जातितो न प्रतिज्ञातव्यः। यद्यपि पूर्व्वं ख्रीष्टो जातितोऽस्माभिः प्रतिज्ञातस्तथापीदानीं
१७ जातितः पुन र्न प्रतिज्ञायते। केनचित् ख्रीष्ट आश्रिते नूतना सृष्टि र्भवति पुरातनानि लुप्यन्ते पश्य निखिलानि नवीनानि
१८ भवन्ति। सर्व्वञ्चैतद् ईश्वरस्य कर्म्म यतो यीशुख्रीष्टेन स एवास्मान् स्वेन सार्द्धं संहितवान् सन्धानसम्बन्धीयां परिचर्य्याम्
१९ अस्मासु समर्पितवांश्च। यत ईश्वरः ख्रीष्टम् अधिष्ठाय जगतो जनानाम् आगांसि तेषाम् ऋणमिव न गणयन् स्वेन सार्द्धं
२० तान् संहितवान् सन्धिवार्त्ताम् अस्मासु समर्पितवांश्च। अतो वयं ख्रीष्टस्य विनिमयेन दौत्यं कर्म्म सम्पादयामहे, ईश्वरश्चास्माभि र्युष्मान् यायाच्यते ततः ख्रीष्टस्य विनिमयेन वयं युष्मान्
२१ प्रार्थयामहे यूयमीश्वरेण सन्धत्त। यतो वयं तेन यद् ईश्वरीयपुण्यं भवामस्तदर्थं पापेन सह यस्य ज्ञातेयं नासीत् स एव तेनास्माकं विनिमयेन पापः कृतः।

---

# ६ षष्ठोऽध्यायः।

१ सुसंवादप्रचारणे पौलस्य विश्वास्यता १४ देवपूजकैः साकं मित्रताप्रतिषेधश्च।

तस्य सहाया वयं युष्मान् प्रार्थयामहे, ईश्वरस्यानुग्रहो युष्माभि र्वृथा न गृह्यतां। तेनोक्तमेतत्,

संश्रोष्यामि शुभे काले त्वदीयां प्रार्थनाम् अहं।
उपकारं करिष्यामि परित्राणदिने तव।

पश्यतायं शुभकालः पश्यतेदं त्राणदिनं। अस्माकं परिचर्य्या यन्निष्कलङ्का भवेत् तदर्थं वयं कुत्रापि विघ्नं न जनयामः, किन्तु प्रचुरसहिष्णुता क्लेशो दैन्यं विपत् ताडना कारावन्धनं निवासहीनत्वं परिश्रमो जागरणम् उपवसनं निर्म्मलत्वं ज्ञानं मृदुशीलता हितैषिता पवित्र आत्मा निष्कपटं प्रेम सत्यालाप ईश्वरीयशक्ति र्दक्षिणवामाभ्यां कराभ्यां धर्म्मास्त्रधारणं मानापमानयोरख्यातिसुख्यात्यो र्भागित्वम् एतैः सर्व्वैरीश्वरस्य प्रशंस्यान् परिचारकान् स्वान् प्रकाशयामः। भ्रमकसमा वयं सत्यवादिनो भवामः, अपरिचितसमा वयं सुपरिचिता भवामः, मृतकल्पा वयं जीवामः, दण्ड्यमाना वयं न हन्यामहे, शोकयुक्ताश्च वयं सदानन्दामः, दरिद्रा वयं बहून् धनिनः कुर्म्मः, अकिञ्चनाश्च वयं सर्व्वं धारयामः। हे करिन्थिनः, युष्माकं प्रति ममास्यं मुक्तं ममान्तःकरणञ्च विकसितं। यूयं ममान्तरे न सङ्कोचिताः किञ्च यूयमेव सङ्कोचितचित्ताः। किन्तु मह्यं न्याय्यफलदानार्थं युष्माभिरपि विकसितै र्भवितव्यम् इत्यहं निजबालकानिव युष्मान् वदामि।

अपरम् अप्रत्ययिभिः सार्द्धं यूयम् एकयुगे बद्धा मा भूत, यस्माद् धर्म्माधर्म्मयोः कः सम्बन्धोऽस्ति ? तिमिरेण सार्द्धं

१५ प्रभाया वा का तुलनास्ति? विलीयालदेवेन साकं ख्रीष्टस्य वा का सन्धिः? अविश्वासिना सार्द्धं वा विश्वासिलोकस्यांशः १६ कः? ईश्वरस्य मन्दिरेण सह वा देवप्रतिमानां का तुलना? अमरस्येश्वरस्य मन्दिरं यूयमेव। ईश्वरेण तदुक्तं यथा, 'तेषां मध्येऽहं स्वावासं निधास्यामि तेषां मध्ये च यातायातं कुर्व्वन् १७ तेषाम् ईश्वरो भविष्यामि ते च मल्लोका भविष्यन्ति। अतो हेतोः परमेश्वरः कथयति यूयं तेषां मध्याद् बहिर्भूय पृथग् भवत, किमप्यमेध्यं न स्पृशत; तेनाहं युष्मान् ग्रहीष्यामि, १८ युष्माकं पिता भविष्यामि च, यूयञ्च मम कन्यापुत्रा भवि-१९ ष्यथेति सर्व्वशक्तिमता परमेश्वरेणोक्तं।' अतएव हे प्रियतमाः, एतादृशीः प्रतिज्ञाः प्राप्तैरस्माभिः शरीरात्मनोः सर्व्वमालिन्यम् अपमृज्येश्वरस्य भक्त्या पवित्राचारः साध्यतां।

---

## ७ सप्तमोऽध्यायः।

१ करिन्थिनः प्रति पौलस्य विनयः ५ तीतेन तेषां वार्त्तायां प्राप्तायां पौलस्य यत् सुखं तस्य निर्णयश्च।

१ यूयम् अस्मान् गृह्लीत। अस्माभिः कस्याप्यन्यायो न कृतः २ कोऽपि न भ्रंशितः कोऽपि न वञ्चितः। युष्मान् दोषिणः कर्त्तु-३ महं वाक्यमेतद् वदामीति नहि युष्माभिः सह जीवनाय मरणाय वा वयं युष्मान् स्वान्तःकरणै र्धारयाम इति पूर्व्वं ४ मयोक्तं। युष्मान् प्रति मम महोत्साहो जायते युष्मान् अध्यहं बहु श्लाघे च तेन सर्व्वक्लेशसमयेऽहं सान्त्वनया पूर्णो हर्षेण प्रफुल्लितश्च भवामि।

५ अस्मासु माकिदनियादेशम् आगतेष्वस्माकं शरीरस्य

काचिदपि शान्ति र्नाभवत् किन्तु सर्व्वतो वहि र्विरोधेनान्तश्च भीत्या वयम् अपीड्यामहि। किन्तु नम्राणां सान्त्वयिता य ६ ईश्वरः स तीतस्यागमनेनास्मान् असान्त्वयत्। केवलं तस्याग- ७ मनेन तन्नहि किन्तु युष्मत्तो जातया तस्य सान्त्वनयापि, यतोऽस्मासु युष्माकं हार्द्दविलापासक्तत्वेष्वस्माकं समीपे वर्णि- तेषु मम महानन्दो जातः। अहं पत्रेण युष्मान् शोकयुक्तान् ८ कृतवान् इत्यस्माद् अन्वतप्ये किन्त्वधुना नानुतप्ये। तेन पत्रेण यूयं क्षणमात्रं शोकयुक्तीभूता इति मया दृश्यते। इत्यस्मिन् ९ युष्माकं शोकेनाहं हृष्यामि तन्नहि किन्तु मनःपरिवर्त्तनाय युष्माकं शोकोऽभवद् इत्यनेन हृष्यामि यतोऽस्मत्तो युष्माकं कापि हानि र्यन्न भवेत् तदर्थं युष्माकम् ईश्वरीयः शोको जातः। स ईश्वरीयः शोकः परित्राणजनकं निरनुतापं मनः- १० परिवर्त्तनं साधयति किन्तु सांसारिकः शोको मृत्युं साध- यति। पश्यत तेनेश्वरीयेण शोकेन युष्माकं किं न साधितं? ११ यत्नो दोषप्रक्षालनम् असन्तुष्टत्वं हार्द्दम् आसक्तत्वं फलदान- ञ्चैतानि सर्व्वाणि। तस्मिन् कर्म्मणि यूयं निर्म्मला इति प्रमाणं सर्व्वेण प्रकारेण युष्माभि र्दत्तं। येनापराद्धं तस्य कृते किंवा १२ यस्यापराद्धं तस्य कृते मया पत्रम् अलेखि तन्नहि किन्तु युष्मानध्यस्माकं यत्नो यद् ईश्वरस्य साक्षाद् युष्मत्समीपे प्रकाशेत तदर्थमेव। उक्तकारणाद् वयं सान्त्वनां प्राप्ताः; ताञ्च १३ सान्त्वनां विनापरो महाह्लादस्तीतस्याह्लादादस्माभि र्लब्धः, यतस्तस्यात्मा सर्व्वै र्युष्माभिस्तृप्तः। पूर्व्वं तस्य समीपेऽहं युष्माभि- १४ र्यद् अश्लाघे तेन नालज्जे किन्तु वयं यद्वद् युष्मान् प्रति सत्य- भावेन सकलम् अभाषामहि तद्वत् तीतस्य समीपेऽस्माकं

१५ श्लाघनमपि सत्यं जातं। यूयं कीदृक् तस्याज्ञा अपालयत भयकम्पाभ्यां तं गृहीतवन्तश्चैतस्य स्मरणाद् युष्मासु तस्य
१६ स्नेहो बाहुल्येन वर्त्तते। युष्मास्वहं सर्व्वमाशंसे, इत्यस्मिन् ममाह्लादो जायते।

---

## ८ अष्टमोऽध्यायः।

१ अन्यजनानां दृष्टान्तः ख्रीष्टस्य प्रेम्ना यिरूशालमस्थदरिद्रलोकेभ्यो दातुं करिन्थिनः प्रति पौलस्य निवेदनं १६ तान् प्रति तीतस्य तदन्यभ्रात्रोश्च प्रशंसावाक्यं।

१ हे भ्रातरः, माकिदनियादेशस्थासु समितिषु प्रकाशितो
२ य ईश्वरस्यानुग्रहस्तमहं युष्मान् ज्ञापयामि। वस्तुतो बहुक्लेशपरीक्षासमये तेषां महानन्दोऽतीवदीनता च वदान्यतायाः
३ प्रचुरफलम् अफलयतां। ते स्वेच्छया यथाशक्ति किञ्चातिशक्ति
४ दान उद्युक्ता अभवन् इति मया प्रमाणीक्रियते। वयञ्च यत् पवित्रलोकेभ्यस्तेषां दानम् उपकारार्थकम् अंशनञ्च गृह्लामस्तद्
५ बहुनुनयेनास्मान् प्रार्थितवन्तः। वयं यादृक् प्रत्यैक्षामहि तादृग् अकृत्वा तेऽग्रे प्रभवे ततः परम् ईश्वरस्येच्छयास्मभ्यमपि
६ स्वान् न्यवेदयन्। अतो हेतोस्त्वं यथारब्धवान् तथैव करिन्थिनां मध्येऽपि तद् दानग्रहणं साधयेति युष्मान् अधि वयं तीतं
७ प्रार्थयामहि। अतो विश्वासो वाक्पटुता ज्ञानं सर्व्वोत्साहो ऽस्मासु प्रेम चैतै र्गुणै र्यूयं यथापरान् अतिशेध्वे तथैवैतेन गुणे-
८ नाप्यतिशेध्वं। एतद् अहम् आज्ञया कथयामीति नहि किन्त्वन्येषाम् उत्साहकारणाद् युष्माकमपि प्रेम्नः सारल्यं
९ परीक्षितुमिच्छता मयैतत् कथ्यते। यूयञ्चास्मत्प्रभो र्यीशुख्रीष्टस्यानुग्रहं जानीथ यतस्तस्य निर्धनत्वेन यूयं यद् धनिनो

भवथ तदर्थं स धनी सन्नपि युष्मत्कृते निर्धनोऽभवत्। एतस्मिन् १०
अहं युष्मान् स्वविचारं ज्ञापयामि। गतं संवत्सरम् आरभ्य
यूयं केवलं कर्म्म कर्त्तुं तन्नहि किन्त्विच्छुकतां प्रकाशयितुम-
प्युपाक्राम्यध्वं ततो हेतो र्युष्मत्कृते मम मन्त्रणा भद्रा। अतो ११
ऽधुना तत्कर्म्मसाधनं युष्माभिः क्रियतां तेन यद्वद् इच्छुकता-
याम् उत्साहस्तद्वद् एकैकस्य सम्पदनुसारेण कर्म्मसाधनम् अपि
जनिष्यते। यस्मिन् इच्छुकता विद्यते तेन यन्न धार्य्यते तस्मात् १२
सोऽनुगृह्यत इति नहि किन्तु यद् धार्य्यते तस्मादेव। यत इत- १३
रेषां विरामेण युष्माकञ्च क्लेशेन भवितव्यं तन्नहि किन्तु सम-
तयैव। वर्त्तमानसमये युष्माकं धनाधिक्येन तेषां धनन्यूनता १४
पूरयितव्या तस्मात् तेषामप्याधिक्येन युष्माकं न्यूनता पूरयि-
ष्यते तेन समता जनिष्यते। तदेव शास्त्रेऽपि लिखितम् आस्ते १५
यथा, येनाधिकं संगृहीतं तस्याधिकं नाभवत् येन चाल्पं
संगृहीतं तस्याल्पं नाभवत्।

युष्माकं हिताय तीतस्य मनसि य ईश्वर इमम् उद्योगं १६
जनितवान् स धन्यो भवतु। तीतोऽस्माकं प्रार्थनां गृहीतवान् १७
किञ्च स्वयम् उद्युक्तः सन् स्वेच्छया युष्मत्समीपं गतवान्। तेन १८
सह योऽपर एको भ्रातास्माभिः प्रेषितः सुसंवादात् तस्य
सुख्यात्या सर्व्वाः समितयो व्याप्ताः। प्रभो र्गौरवाय युष्मा- १९
कम् इच्छुकतायै च स समितिभिरेतस्यै दानसेवायै अस्माकं
सङ्गित्वे न्ययोज्यत। यतो या महोपायनसेवास्माभि र्विधीयते २०
तामधि वयं यत् केनापि न निन्द्यामहे तदर्थं यतामहे। यतः २१
केवलं प्रभोः साक्षात् तन्नहि किन्तु मानवानामपि साक्षात्
सदाचारं कर्त्तुम् आलोचामहे। ताभ्यां सहापर एको यो २२

भ्रातास्माभिः प्रेषितः सोऽस्माभि र्बहुविषयेषु बहुवारान् परी-
क्षित उद्योगीव प्रकाशितश्च किन्त्वधुना युष्मासु दृढविश्वासात्
२३ तस्योत्साहो बहु ववृधे। यदि कश्चित् तीतस्य तत्त्वं जिज्ञासते
तर्हि स मम सहभागी युष्मन्मध्ये सहकारी च, अपरयो
र्भ्रात्रोस्तत्त्वं वा यदि जिज्ञासते तर्हि तौ समितीनां दूतौ
२४ ख्रीष्टस्य प्रतिबिम्बौ चेति तेन ज्ञायतां। अतो हेतोः समितीनां
समक्षं युष्मत्प्रेम्णोऽस्माकं श्लाघायाश्च प्रामाण्यं तान् प्रति युष्माभिः
प्रकाशयितव्यं।

---

## ९ नवमोऽध्यायः।

१ दान उद्यतान् करिन्थिनः प्रति प्रशंसा ६ दानफलस्य निर्णयश्च।

१ पवित्रलोकानाम् उपकारार्थकसेवामधि युष्मान् प्रति मम
२ लिखनं निष्प्रयोजनं। यत आखायादेशस्था लोका गतवर्षम्
आरभ्य तत्कार्य्य उद्यताः सन्तीति वाक्येनाहं माकिदनीयलो-
कानां समीपे युष्माकं याम् इच्छुकतामधि श्लाघे ताम् अवग-
तोऽस्मि युष्माकं तस्माद् उत्साहाच्चापरेषां बहूनाम् उद्योगो
३ जातः। किञ्चैतस्मिन् युष्मान् अध्यस्माकं श्लाघा यद् अतथ्या
न भवेत् यूयञ्च मम वाक्यानुसाराद् यद् उद्यतास्तिष्ठेत तदर्थ-
४ मेव ते भ्रातरो मया प्रेषिताः। यस्मात् मया सार्द्धं केचित्
माकिदनीयभ्रातृभिरागत्य यूयमनुद्यता इति यदि दृश्यते
तर्हि तस्माद् दृढविश्वासाद् युष्माकं लज्जा जनिष्यत इत्य-
५ स्माभि र्न वक्तव्यं किन्त्वस्माकमेव लज्जा जनिष्यते। अतः
प्राक् प्रतिज्ञातं युष्माकं दानं यत् सञ्चितं भवेत् तच्च यद्
ग्राहकतायाः फलम् अभूत्वा दानशीलताया एव फलं भवेत्

तदर्थं ममाग्रे गमनाय तत्सञ्चयनाय च तान् भ्रातृन् आदेष्टु-मर्हं प्रयोजनम् अमन्ये।

अपरमपि व्याहरामि केनचित् क्षुद्रभावेन वीजेषूप्तेषु स्व-ल्पानि शस्यानि कर्त्तिष्यन्ते, किञ्च केनचिद् बहुदभावेन वीजे-षूप्तेषु बहूनि शस्यानि कर्त्तिष्यन्ते। एकैकेन स्वमनसि यथा निश्चीयते तथैव दीयतां केनापि कातरेण भीतेन वा न दीय-तां यत ईश्वरो हृष्टमानसे दातरि प्रीयते। अपरम् ईश्वरो युष्मान् प्रति सर्व्वविधं बहुप्रदं प्रसादं प्रकाशयितुम् अर्हति तेन यूयं सर्व्वविषये यथेष्टं प्राप्य सर्व्वेण सत्कर्म्मणा बहुफलवन्तो भविष्यथ। एतस्मिन् लिखितमास्ते, यथा,

व्ययते स जनो रायं दुर्गतेभ्यो ददाति च।

नित्यस्थायी च तद्धर्मः——

वीजं भोजनीयम् अन्नञ्च वप्त्रे येन विश्राणते स युष्मभ्यम् १० अपि वीजं विश्राण्य बहुलीकरिष्यति युष्माकं धर्म्मफलानि वर्द्धयिष्यति च। तेन सर्व्वविषये सधनीभूतै र्युष्माभिः सर्व्वविषये ११ दानशीलतायां प्रकाशितायाम् अस्माभिरीश्वरस्य धन्यवादः साधयिष्यते। एतयोपकारसेवया पवित्रलोकानाम् अर्थाभावस्य १२ प्रतीकारो जायत इति केवलं नहि किन्त्वीश्वरस्य धन्यवादोऽपि बाहुल्येनोत्पाद्यते। यत एतस्माद् उपकारकरणाद् युष्माकं १३ परीक्षितत्वं बुद्ध्वा बहुभिः ख्रीष्टसुसंवादाङ्गीकरणे युष्माकम् आज्ञाग्राहित्वात् तद्भागित्वे च तान् अपरांश्च प्रति युष्माकं दातृत्वाद् ईश्वरस्य धन्यवादः करिष्यते, युष्मदर्थं प्रार्थनां कृत्वा १४ च युष्मास्वीश्वरस्य गरिष्ठानुग्रहाद् युष्मासु तैः प्रेम करिष्यते। अपरम् ईश्वरस्यानिर्व्वचनीयदानात् स धन्यो भूयात्। १५

# १० दशमोऽध्यायः ।

१ विपक्षलोकानां सन्निधौ स्वस्य निर्दोषत्वकरणं ७ इतरलोकानां कर्म्म स्वीयं प्रोच्य स्लाघनाद् विपक्षाणां दोषित्वकरणञ्च ।

१ युष्मत्प्रत्यक्षे नम्रः किन्तु परोक्षे प्रगल्भः पौलोऽहं ख्रीष्टस्य
२ क्षान्त्या विनीत्या च युष्मान् प्रार्थये । मम प्रार्थनीयमिदं वयं
यैः शारीरिकाचारिणो मन्यामहे तान् प्रति यां प्रगल्भतां
प्रकाशयितुं निश्चिनोमि सा प्रगल्भता समागतेन मयाचरि-
३ तव्या न भवतु । यतः शरीरे चरन्तोऽपि वयं शारीरिकं
४ युद्धं न कुर्म्मः । अस्माकं युद्धास्त्राणि च न शारीरिकानि
५ किन्त्वीश्वरेण दुर्गभञ्जनाय प्रबलानि भवन्ति, तैश्च वयं वित-
र्कान् ईश्वरीयतत्त्वज्ञानस्य प्रतिबन्धिकां सर्व्वां चित्तसमुन्नतिञ्च
निपातयामः सर्व्वसङ्कल्पञ्च बन्दिनं कृत्वा ख्रीष्टस्याज्ञाग्राहिणं
६ कुर्म्मः, युष्माकम् आज्ञाग्राहित्वे सिद्धे सति सर्व्वस्याज्ञालङ्घनस्य
प्रतीकारं कर्त्तुम् उद्यता आस्महे च ।

७ यद् दृष्टिगोचरं तद् युष्माभि र्दृश्यतां । अहं ख्रीष्टस्य लोक
इति स्वमनसि येन विज्ञायते स यथा ख्रीष्टस्य भवति वयम्
अपि तथा ख्रीष्टस्य भवाम इति पुनर्व्विविच्य तेन बुध्यतां ।
८ युष्माकं निपाताय तन्नहि किन्तु निष्ठायै प्रभुना दत्तं यदस्माकं
सामर्थ्यं तेन यद्यपि किञ्चिद् अधिकं स्लाघे तथापि तस्मान्न
९ त्रपिष्ये । अहं पत्रै र्युष्मान् त्रासयामि युष्माभिरेतन्न मन्यतां ।
१० तस्य पत्राणि गुरुतराणि प्रबलानि च भवन्ति किन्तु तस्य
शारीरसाक्षात्कारो दुर्ब्बल आलापश्च तुच्छनीय इति कैश्चिद्
११ उच्यते । किन्तु परोक्षे पत्रै र्भाषमाणा वयं यादृशाः प्रकाशा-
महे प्रत्यक्षे कर्म्म कुर्व्वन्तोऽपि तादृशा एव प्रकाशिष्यामहे तत्
१२ तादृशेन वाचालेन ज्ञायतां । स्वप्रशंसकानां केषाञ्चिन्मध्ये

स्वान् गणयितुं तैः स्वान् उपमातुं वा वयं प्रगल्भा न भवामः, यतस्ते स्वपरिमाणेन स्वान् परिमिमते स्वैश्च स्वान् उपमिमते तस्मात् निर्ब्बोधा भवन्ति च। वयम् अपरिमितेन न श्लाघि- १३ ष्यामहे किन्त्वीश्वरेण स्वरज्ज्वा युष्मद्देशगामि यत् परिमाणम् अस्मदर्थं निरूपितं तेनैव श्लाघिष्यामहे। युष्माकं देशोऽस्मा- १४ भिरगन्तव्यस्तस्माद् वयं स्वसीमाम् उल्लङ्घामहे तन्नहि यतः खीष्टस्य सुसंवादेनापरेषां प्राग् वयमेव युष्मान् प्राप्तवन्तः। वयं स्वसीमाम् उल्लङ्घ्य परक्षेत्रेण श्लाघामहे तन्नहि, किञ्च १५ युष्माकं विश्वासे वृद्धिं गते युष्मद्देशेऽस्माकं सीमा युष्माभिर्दीर्घं विस्तारयिष्यते, तेन वयं युष्माकं पश्चिमदिक्स्थेषु स्थानेषु सुसं- १६ वादं घोषयिष्यामः, इत्थं परसीमायां परेण यत् परिष्कृतं तेन न श्लाघिष्यामहे।

यः कश्चित् श्लाघमानः स्यात् श्लाघतां प्रभुना स हि। १७ स्वेन यः प्रशंस्यते स परीक्षितो नहि किन्तु प्रभुना यः प्रशंस्यते १८ स एव परीक्षितः।

---

## ११ एकादशोऽध्यायः।

१ अवश्यश्लाघ्यत्वात् पौलस्यात्मश्लाघा १६ विपक्षेभ्यः स्वस्याचुद्रत्वकरणं किन्तु खीष्टार्थं श्रमे दुःखे च स्वस्य महत्त्वज्ञापनञ्च।

यूयं ममाज्ञानतां क्षणं यावत् सोढुम् अर्हथ, अतः सा १ युष्माभिः सह्यतां। ईश्वरे ममासक्तत्वाद् अहं युष्मानधि तपे २ यस्मात् सतीं कन्यामिव युष्मान् एकस्मिन् वरेऽर्थतः खीष्टे सम- र्पयितुम् अहं वाग्दानम् अकार्षं। किन्तु सर्पेण स्वखलतया ३ यद्वद् हवा वञ्चयाञ्चक्रे तद्वत् खीष्टं प्रति सतीत्वाद् युष्माकं भ्रंशः सम्भविष्यतीति बिभेमि। अस्माभिरनाख्यापितोऽपरः ४

कश्चिद् यीशुं यदि केनचिद् आगन्तुकेनाख्याप्यते युष्माभिः प्रागलब्ध आत्मा वा यदि लभ्यते प्रागगृहीतः सुसंवादो वा
५ यदि गृह्यते तर्हि मन्ये यूयं सम्यक् सहिष्यध्वे। किन्तु मुख्येभ्यः प्रेरितेभ्योऽहं केनचित् प्रकारेण न्यूनो नास्मीति बुध्ये। मम
६ वाक्पटुताया न्यूनत्वे सत्यपि ज्ञानस्य न्यूनत्वं नास्ति किन्तु
७ सर्व्वविषये वयं युष्मद्गोचरे प्रकाशामहे। युष्माकम् उन्नत्यै मया नम्रतां स्वीकृत्येश्वरस्य सुसंवादो विना वेतनं युष्माकं
८ मध्ये यद् अघोष्यत तेन मया किं पापम् अकारि? युष्माकं सेवनायाहम् अन्यसमितिभ्यो भृतिं गृह्णन् धनमपहृतवान्,
९ यदा च युष्मन्मध्येऽवर्त्ते तदा ममार्थाभावे जाते युष्माकं कोऽपि मया न पीडितः; यतो मम सोऽर्थाभावो माकिदनियादेशाद् आगतै र्भ्रातृभि र्न्यवार्य्यत, इत्थमहं क्वापि विषये यथा युष्मासु भारो न भवामि तथा मयात्मरक्षा कृता कर्त्तव्या च।
१० ख्रीष्टस्य सत्यता यदि मयि तिष्ठति तर्हि ममैषा श्लाघा
११ निखिलाखायादेशे केनापि न रोत्स्यते। एतस्य कारणं किं? युष्मासु मम प्रेम नास्त्येतत् किं तत्कारणं? तद् ईश्वरो वेत्ति।
१२ ये छिद्रमन्विष्यन्ति ते यत् किमपि छिद्रं न लभन्ते तदर्थमेव तत् कर्म्म मया क्रियते कारिष्यते च तस्मात् ते येन श्लाघन्ते
१३ तेनास्माकं समाना भविष्यन्ति। तादृशा भाक्तप्रेरिताः प्रव-
१४ ञ्चकाः कारवो भूत्वा ख्रीष्टस्य प्रेरितानां वेशं धारयन्ति। तच्चाश्चर्य्यं नहि; यतः स्वयं शयतानपि तेजस्विदूतस्य वेशं धार-
१५ यति, ततस्तस्य परिचारका अपि धर्म्मपरिचारकाणां वेशं धारयन्तीत्यद्भुतं नहि; किन्तु तेषां कर्म्माणि यादृशानि फलान्यपि तादृशानि भविष्यन्ति।

अहं पुन र्वदामि कोऽपि मां निर्ब्बोधं न मन्यतां किञ्च १६
यद्यपि निर्ब्बोधो भवेयं तथापि यूयं निर्ब्बोधमिव मामनुगृह्य
क्षणैकं यावत् ममात्मश्लाघाम् अनुजानीत। एतस्याः श्लाघाया १७
निमित्तं मया यत् कथितव्यं तत् प्रभुनादिष्टेनेव कथ्यते तन्न-
हि किन्तु निर्ब्बोधेनेव। अपरे बहवः शारीरिकश्लाघां कुर्व्वते १८
तस्माद् अहमपि श्लाघिष्ये। बुद्धिमन्तो यूयं सुखेन निर्ब्बोधा- १९
नाम् आचारं सहध्वे। कोऽपि यदि युष्मान् दासान् करोति २०
यदि वा युष्माकं सर्व्वस्वं ग्रसति यदि वा युष्मान् हरति यदि
वात्माभिमानी भवति यदि वा युष्माकं कपोलम् आहन्ति तर्हि
तदपि यूयं सहध्वे। दौर्ब्बल्याद् युष्माभिरवमानिता इव वयं २१
भाषामहे, किन्त्वपरस्य कस्यचिद् येन प्रगल्भता जायते तेन
ममापि प्रगल्भता जायत इति निर्ब्बोधेनेव मया वक्तव्यं। ते २२
किम् इब्रिलोकाः? अहमपीब्री। ते किम् इस्रायेलीयाः?
अहमपीस्रायेलीयः। ते किम् इब्राहीमो वंशाः? अहमपीब्रा-
हीमो वंशः। ते किं ख्रीष्टस्य परिचारकाः? अहं तेभ्योऽपि २३
तस्य महापरिचारकः; किन्तु निर्ब्बोध इव भाषे, तेभ्योऽप्यहं
बहुपरिश्रमे बहुप्रहारे बहुवारं कारायां बहुवारं प्राण-
नाशसंशये च पतितवान्। यिहूदीयैरहं पञ्चकृत्व ऊनचत्वारिं- २४
शत्प्रहारैराहतस्त्रिर्वेत्राघातम् एककृत्वः प्रस्तराघातञ्च प्राप्त-
वान्। वारत्रयं पोतभञ्जनेन क्लिष्टोऽहम् अगाधसलिले दिन- २५
मेकं रात्रिमेकाञ्च यापितवान्। बहुवारं यात्राभि र्नदीनां २६
सङ्कटै र्दस्यूनां सङ्कटैः स्वजातीयानां सङ्कटै र्भिन्नजाती-
यानां सङ्कटै र्नगरस्य सङ्कटै र्मरुभूमेः सङ्कटैः सागरस्य
सङ्कटै र्भाक्तभ्रातृणां सङ्कटैश्च परिश्रमक्लेशाभ्यां वारं वारं २७

जागरणेन क्षुधातृष्णाभ्यां बहुवारं निराहारेण शीतनग्नता-
२८ भ्याञ्चाहं कालं यापितवान्। तादृशं नैमित्तिकं दुःखं विनाहं
प्रतिदिनम् आकुलो भवामि सर्व्वासां समितीनां चिन्ता च
२९ मयि वर्त्तते। येनाहं न दुर्व्वलीभवामि तादृशं दौर्व्वल्यं कः
३० प्राप्नोति? येनाहं न तपे तादृशं विघ्नं वा कः प्राप्नोति? यदि
३१ मया श्लाघितव्यं तर्हि स्वदुर्व्वलतामधि श्लाघिष्ये। मया मृषा-
वाक्यं न कथ्यत इति नित्यं प्रशंसनीयोऽस्माकं प्रभो यीशु-
३२ ख्रीष्टस्य तात ईश्वरो जानाति। दम्मेषकनगरेऽरिताराजस्य
कार्य्याध्यक्षो मां धर्त्तुम् इच्छन् यदा सैन्यैस्तद् दम्मेषकनगरम्
३३ अरक्षयत् तदाहं लोकैः पिटकमध्ये प्राचीरगवाक्षेणावरो-
हितस्तस्य करात् त्राणं प्राप्तं।

---

## १२ द्वादशोऽध्यायः।

१ स्वर्गीयदर्शनेन तस्य दुःखभोगेन च स्वसत्यप्रेरितत्वस्य प्रमाणदानं १९ स्वलाभार्थं पौलस्य तस्य सपक्षलोकानाञ्च श्रमाभावः किन्तु करिन्थिनां मङ्गलार्थं श्रमः।

१ आत्मश्लाघा ममानुपयुक्ता किन्त्वहं प्रभो दर्शनादेशानाम्
२ आख्यानं कथयितुं प्रवर्त्ते। इतश्चतुर्दशवत्सरेभ्यः पूर्व्वं मया
परिचित एको जनस्तृतीयं स्वर्गमनीयत, स सशरीरेण निःश-
रीरेण वा तत् स्थानमनीयत तदहं न जानामि किन्त्वीश्वरो
३ जानाति। स मानवः स्वर्गं नीतः सन् अकथ्यानि मर्त्त्यवाग-
४ तीतानि च वाक्यानि श्रुतवान्। किन्तु तदानीं स सशरीरो
निःशरीरो वासीत् तन्मया न ज्ञायते तद् ईश्वरेणैव ज्ञायते।
५ तमध्यहं श्लाघिष्ये मामधि नान्येन केनचिद् विषयेण श्लाघिष्ये
६ केवलं स्वदौर्व्वल्येन श्लाघिष्ये। यद्यहम् आत्मश्लाघां कर्त्तुम् इच्छेयं
तथापि निर्ब्बोध इव न भविष्यामि यतः सत्यमेव कथयिष्यामि,

किन्तु लोका मां यादृशं पश्यन्ति मम वाक्यं श्रुत्वा वा यादृशं मां मन्यन्ते तस्मात् श्रेष्ठं मां यन्न गणयन्ति तदर्थमहं ततो विरंस्यामि। अपरम् उत्कृष्टदर्शनप्राप्तितो यदहम् आत्माभिमानी ७ न भवामि तदर्थं शरीरवेधकम् एकं शूलं मह्यम् अदायि तत् मदीयात्माभिमाननिवारणार्थं मम ताडयिता शयतानो दूतः। मत्तस्तस्य प्रस्थानं याचितुमहं त्रिस्तमधि प्रभुमुद्दिश्य ८ प्रार्थनां कृतवान्। ततः स मामुक्तवान् ममानुग्रहस्तव सर्व्व- ९ साधकः, यतो दौर्ब्बल्यात् मम शक्तिः पूर्णतां गच्छतीति। अतः ख्रीष्टस्य शक्ति र्यन्माम् आश्रयति तदर्थं स्वदौर्ब्बल्येन मम श्लाघनं सुखदं। तस्मात् ख्रीष्टहेतो र्दौर्ब्बल्यनिन्दादरिद्रताविपक्षता- १० कष्टादिषु सन्तुष्याम्यहं। यदाहं दुर्ब्बलोऽस्मि तदैव सबलो भवामि। एतेनात्मश्लाघनेनाहं निर्ब्बोध इवाभवं किन्तु यूयं ११ तस्य कारणं यतो मम प्रशंसा युष्माभिरेव कर्त्तव्यासीत्। यद्यप्यहम् अगण्यो भवेयं तथापि मुख्यतमेभ्यः प्रेरितेभ्यः केनापि प्रकारेण नाहं न्यूनोऽस्मि। सर्व्वथाद्भुतक्रियाशक्तिलक्षणैः प्रेरि- १२ तस्य चिह्नानि युष्माकं मध्ये सधैर्य्यं मया प्रकाशितानि।

मम पालनार्थं यूयं मया भाराक्रान्ता नाभवतैतद् एकं १३ न्यूनत्वं विनापराभ्यः समितिभ्यो युष्माकं किं न्यूनत्वं जातं? अनेन मम दोषं क्षमध्वं। पश्यत तृतीयवारं युष्मत्समीपं गन्तुमुद्यतोऽस्मि १४ तत्राप्यहं युष्मान् भाराक्रान्तान् न करिष्यामि। युष्माकं सम्पत्तिमहं न मृगये किन्तु युष्मानेव, यतः पित्रोः कृते सन्तानानां धनसञ्चयोऽनुपयुक्तः किन्तु सन्तानानां कृते पित्रो र्धनसञ्चय उपयुक्तः। अपरञ्च युष्मासु बहु प्रीयमाणोऽप्यहं यदि युष्म- १५ त्तोऽल्पं प्रेम लभे तथापि युष्माकं प्राणरक्षार्थं सानन्दं बहु-

१६ वयं सर्व्वव्ययञ्च करिष्यामि। यूयं मया किञ्चिदपि न भारा-
क्रान्ता इति सत्यं, किन्त्वहं धूर्त्तः सन् छलेन युष्मान् वञ्चित-
१७ वान् एतत् किं केनचिद् वक्तव्यं? युष्मत्समीपं मया ये लोकाः
१८ प्रहितास्तेषामेकेन किं मम कोऽप्यर्थलाभो जातः? अहं तीतं
विनीय तेन सार्द्धं भ्रातरमेकं प्रेषितवान् युष्मत्तस्तीतेन किम्
अर्थो लब्धः? एकस्मिन् भाव एकस्य पदचिह्नेषु चावां किं
१९ न चरितवन्तौ? युष्माकं समीपे वयं पुन र्दोषक्षालनकथां कथ-
याम इति किं बुध्यध्वे? हे प्रियतमाः, युष्माकं निष्ठार्थं वयमी-
२० श्वरस्य समक्षं ख्रीष्टेन सर्व्वाण्येतानि कथयामः। अहं यदा-
गमिष्यामि तदा युष्मान् यादृशान् द्रष्टुं नेच्छामि तादृशान्
द्रक्ष्यामि, यूयमपि मां यादृशं द्रष्टुं नेच्छथ तादृशं द्रक्ष्यथ,
युष्मन्मध्ये विवाद ईर्ष्या क्रोधो विपक्षता परापवादः कर्णेजपनं
२१ दर्पः कलहश्चैते भविष्यन्ति; तेनाहं युष्मत्समीपं पुनरागत्य
मदीयेश्वरेण नमयिष्ये, पूर्व्वं कृतपापान् लोकान् स्वीयाशुचि-
तावेश्यागमनलम्पटताचरणाद् अनुतापम् अकृतवन्तो दृष्ट्वा च
तानधि मम शोको जनिष्यत इति बिभेमि।

---

## १३ त्रयोदशोऽध्यायः।

पापिनः प्रति पौलस्य शासनवाक्यं समाजीयलोकानामात्मपरीक्षामधि विनयश्च।

१　एतत्तृतीयवारम् अहं युष्मत्समीपं गच्छामि तेन सर्व्वा
२ कथा द्वयोस्त्रयाणां वा साक्षिणां मुखेन निश्चेष्यते। पूर्व्वं ये
कृतपापास्तेभ्योऽन्येभ्यश्च सर्व्वेभ्यो मया पूर्व्वं कथितं, पुनरपि
विद्यमानेनेवेदानीम् अविद्यमानेन मया कथ्यते, यदा पुन-
३ रागमिष्यामि तदाहं न क्षमिष्ये। ख्रीष्टो मया कथां कथ-

यत्येतस्य प्रमाणं यूयं मृगयध्वे, स तु युष्मान् प्रति दुर्ब्बलो नहि किन्तु सबल एव। यद्यपि स दुर्ब्बलतया क्रुश आरोप्यत ४ तथापीश्वरीयशक्त्या जीवति; वयमपि तस्मिन् दुर्ब्बला भवामः, तथापि युष्मान् प्रति प्रकाशितयेश्वरीयशक्त्या तेन सह जीविष्यामः। अतो यूयं विश्वासयुक्ता आध्वे न वेति ज्ञातुमात्मपरीक्षां कुरुध्वं स्वानेवानुसन्धत्त। यीशुः ख्रीष्टो युष्मन्मध्ये विद्यते ५ स्वानधि तत् किं न प्रतिजानीथ? तस्मिन् अविद्यमाने यूयं निष्प्रमाणा भवथ। किन्तु वयं निष्प्रमाणा न भवाम इति ६ युष्माभि र्भोत्स्यते तत्र मम प्रत्याशा जायते। यूयं किमपि ७ कुत्सितं कर्म्म यन्न कुरुथ तदहम् ईश्वरमुद्दिश्य प्रार्थये। वयं यत् प्रामाणिका इव प्रकाशामहे तदर्थं तत् प्रार्थयामह इति नहि, किन्तु यूयं यत् सदाचारं कुरुथ वयञ्च निष्प्रमाणा इव भवामस्तदर्थं। यतः सत्यताया विपक्षतां कर्त्तुं वयं न समर्थाः किन्तु ८ सत्यतायाः साहाय्यं कर्त्तुमेव। वयं यदा दुर्ब्बला भवामस्तदा ९ युष्मान् सबलान् दृष्ट्वानन्दामो युष्माकं सिद्धत्वं प्रार्थयामहे च। अतो हेतोः प्रभु र्युष्माकं विनाशाय नहि किन्तु निष्ठायै १० यत् सामर्थ्यम् अस्मभ्यं दत्तवान् तेन यद् उपस्थितिकाले काठिन्यं मयाचरितव्यं न भवेत् तदर्थम् अनुपस्थितेन मया सर्व्वाण्येतानि लिख्यन्ते। हे भ्रातरः, शेषे वदामि यूयम् आनन्दत ११ सिद्धा भवत परस्परं प्रबोधयत, एकमनसो भवत प्रणयभावम् आचरत। प्रेमशान्त्योराकर ईश्वरो युष्माकं सहायो भूयात्। यूयं पवित्रचुम्बनेन परस्परं नमस्कुरुध्वं। पवित्रलोकाः सर्व्वे १२ युष्मान् नमन्ति। प्रभो र्यीशुख्रीष्टस्यानुग्रह ईश्वरस्य प्रेम पवित्र- १४ स्यात्मनो भागित्वञ्च सर्व्वान् युष्मान् प्रति भूयात्। तथास्तु।

# गालातिनः प्रति पौलस्य प्रेरितस्य पत्रं।

## १ प्रथमोऽध्यायः।

१ मङ्गलाचरणं ६ गालातिलोकानां ख्रीष्टधर्म्मत्यागात् पौलस्याश्चर्य्यज्ञानं तदन्यधर्म्मे दोषारोपणं ११ एतस्मिन् धर्म्मे प्रेरितत्वपदे च पौलस्य नियुक्तत्वस्याख्यानञ्च।

१ मनुष्येभ्यो नहि मनुष्यैरपि नहि किन्तु यीशुख्रीष्टेन मृतगणमध्यात् तस्योत्थापयित्रा पित्रेश्वरेण च प्रेरितो योऽहं पौलः २ सोऽहं मत्सहवर्त्तिनो भ्रातरश्च वयं गालातीयदेशस्थाः समितीः प्रति पत्रं लिखामः। ३ पित्रेश्वरेणास्माकं प्रभुना यीशुना ४ ख्रीष्टेन च युष्मभ्यम् अनुग्रहः शान्तिश्च दीयतां। अस्माकं तातेश्वरस्येच्छानुसारेण वर्त्तमानात् कुत्सितसंसाराद् अस्मान् नि-५ स्तारयितुं यो यीशुरस्माकं पापहेतोरात्मोत्सर्गं कृतवान् स सर्व्वदा धन्यो भूयात्। तथास्तु।

६ ख्रीष्टस्यानुग्रहेण यो युष्मान् आहूतवान् तस्मान्निवृत्य यूयम् अतितूर्णम् अन्यं सुसंवादम् अन्ववर्त्तत तत्राहं विस्मयं ७ मन्ये। सोऽन्यसुसंवादः सुसंवादो नहि किन्तु केचित् मानवा युष्मान् चञ्चलीकुर्व्वन्ति ख्रीष्टीयसुसंवादस्य विपर्य्ययं कर्त्तुं ८ चेष्टन्ते च। युष्माकं सन्निधौ यः सुसंवादोऽस्माभि र्घोषितस्तस्माद् अन्यः सुसंवादोऽस्माकं स्वर्गीयदूतानां वा मध्ये केन-९ चिद् यदि घोष्यते तर्हि स शप्तो भवतु। पूर्व्वं यद्वद् अकथयाम, इदानीमहं पुनस्तद्वत् कथयामि यूयं यं सुसंवादं गृहीतवन्तस्तस्माद् अन्यो येन केनचिद् युष्मत्सन्निधौ घोष्यते १० स शप्तो भवतु। साम्प्रतं कमहम् अनुनयामि? ईश्वरं किंवा

मानवान्? अहं किं मानुषेभ्यो रोचितुं यते? यद्यहम् इदानीमपि मानुषेभ्यो रुरुचिषेय तर्हि खीष्टस्य परिचारको न भवामि।

हे भ्रातरः, मया यः सुसंवादो घोषितः स मानुषान्न लब्ध- ११ स्तदहं युष्मान् ज्ञापयामि। अहं कस्माच्चित् मनुष्यात् तं न १२ गृहीतवान् न वा शिक्षितवान् केवलं यीशोः खीष्टस्य प्रकाशनादेव। पुरा यिहूदिमताचारी यदाहम् आसं तदा यादृशम् १३ आचरणम् अकरवम् ईश्वरस्य समितिं प्रत्यतीवोपद्रवं कुर्व्वन् यादृक् तां व्यनाशयं तदवश्यं श्रुतं युष्माभिः। अपरञ्च पूर्व्वपु- १४ रुषपरम्परागतेषु वाक्येष्वन्यापेक्षातीवासक्तः सन् अहं यिहूदिधर्म्ममते मम समवयस्कान् बहून् स्वजातीयान् अत्यशयि। किञ्च य ईश्वरो मातृगर्भस्थं मां पृथक् कृत्वा स्वीयानुग्रहेणा- १५ हूतवान् स यदा मयि स्वपुत्रं प्रकाशयितुं भिन्नदेशीयानां १६ समीपे मया तं घोषयितुञ्चाभ्यलषत् तदाहं क्रव्यशोणिताभ्यां सह न मन्त्रयित्वा पूर्व्वनियुक्तानां प्रेरितानां समीपं यिरूशा- १७ लमं न गत्वारवदेशं गतवान् पश्चात् तत्स्थानाद् दम्मेषकनगरं परावृत्यागतवान्। ततः परं वर्षत्रये व्यतीतेऽहं पितरं सम्भा- १८ षितुं यिरूशालमं गत्वा पञ्चदशदिनानि तेन सार्द्धम् अतिष्ठं। किन्तु तं प्रभो र्भ्रातरं याकूबञ्च विना प्रेरितानां नान्यं कम- १९ प्यपश्यं। यान्येतानि वाक्यानि मया लिख्यन्ते तान्यनृतानि न २० सन्ति तद् ईश्वरो जानाति। ततः परम् अहं सुरियां किलि- २१ कियाञ्च देशौ गतवान्। तदानीं यिहूदादेशस्थानां खीष्टस्य २२ समितीनां लोकाः साक्षात् मम परिचयमप्राप्य केवलं जनश्रुतिमिमां लब्धवन्तः, यो जनः पूर्व्वम् अस्मान् प्रत्युपद्रवमकरोत् २३

२४ स तदा यं धर्म्ममनाशयत् तमेवेदानीं प्रचारयतीति। तस्मात् ते मामधीश्वरं धन्यमवदन्।

---

## २ द्वितीयोऽध्यायः।

१ पौलस्य यिरूशालमगमनं तस्य कारणनिर्णयः ११ ख्रीष्टधर्म्मस्य विरुद्धाचरणात पितरस्य दोषित्वकरणञ्च।

१　अनन्तरं चतुर्दशसु वत्सरेषु गतेष्वहं बर्णब्बा सह यिरूशालमनगरं पुनरगच्छं, तदानीं तीतमपि स्वसङ्गिनम् अकरवं। २ तत्कालेऽहम् ईश्वरदर्शनाद् यात्राम् अकरवं मया यः परिश्रमोऽकारि कारिष्यते वा स यन्निष्फलो न भवेत् तदर्थं भिन्नजातीयानां मध्ये मया घोष्यमाणः सुसंवादस्तत्रत्येभ्यो लोकेभ्यो विशेषतो मान्येभ्यो नरेभ्यो मया न्यवेद्यत। ३ ततो मम सहचरस्तीतो यद्यपि यूनानीय आसीत् तथापि तस्य त्वक्छेदोऽप्यावश्यको न बभूव। ४ यतश्छलेनागता अस्मान् दासान् कर्त्तुम् इच्छवः कतिपया भाक्तभ्रातरः ख्रीष्टेन यीशुनास्मभ्यं दत्तं स्वातन्त्र्यम् अनुसन्धातुं चारा इव समाजं प्राविशन्। ५ अतः प्रकृते सुसंवादे युष्माकम् अधिकारो यत् तिष्ठेत् तदर्थं वयं दण्डैकमपि यावद् आज्ञाग्रहणेन तेषां वश्या नाभवाम। ६ परन्तु ये लोका मान्यास्ते ये केचिद् भवेयुस्तानहं न गणयामि यत ईश्वरः कस्यापि मानवस्य पक्षपातं न करोति, ये च मान्यास्ते मां किमपि नवीनं नाज्ञापयन्। ७ किन्तु छिन्नत्वचां मध्ये सुसंवादप्रचारणस्य भारः पितरि यथा समर्पितस्तथैवाच्छिन्नत्वचां मध्ये सुसंवादप्रचारणस्य भारो मयि समर्पित इति ते बुबुधे। ८ यतश्छिन्नत्वचां मध्ये प्रेरितत्वकर्म्मणे यस्य या शक्तिः पितरमाश्रितवती तस्यैव सा शक्ति र्भिन्नजातीयानां मध्ये तस्मै कर्म्मणे माम-

प्याश्रितवती। अतो मह्यं दत्तम् अनुग्रहं प्रतिज्ञाय स्तम्भा इव ९
गणिता ये याकूब् कैफा योहन् चैते सहायतासूचकं दक्षिण-
हस्तग्रहणं विधाय मां बर्णब्बाञ्च जगदुः, युवां भिन्नजातीयानां
सन्निधिं गच्छतं वयं छिन्नत्वचां सन्निधिं गच्छामः, केवलं दरिद्रा १०
युवाभ्यां स्मरणीया इति। अतस्तदेव कर्त्तुम् अहं यते स्म।

अपरम् आन्तियखियानगरं पितर आगतेऽहं तस्य दोषि- ११
त्वात् समक्षं तम् अभर्त्सयं। यतः स पूर्व्वम् अन्यजातीयैः सा- १२
र्द्धम् आहारमकरोत् ततः परं याकूवः समीपात् कतिपयजने-
ष्वागतेषु स छिन्नत्वङ्मनुष्येभ्यो भयेन निवृत्य पृथग् अभवत्।
ततोऽपरे सर्व्वे यिहूदिनोऽपि तेन सार्द्धं कपटाचारम् अकुर्व्वन् १३
बर्णब्बा अपि तेषां कापट्येन विपथगाम्यभवत्। ततस्ते १४
प्रकृतसुसंवादरूपे सरलपथे न चरन्तीति दृष्ट्वाहं सर्व्वेषां
साक्षात् पितरम् उक्तवान् त्वं यिहूदी सन् यदि यिहूदिमतं
विहाय भिन्नजातीय इवाचरसि तर्हि यिहूदिमताचरणाय
भिन्नजातीयान् कुतः प्रवर्त्तयसि? आवां जन्मना यिहूदिनौ १५
भवावो भिन्नजातीयौ पापिनौ न भवावः किन्तु व्यवस्थापाल- १६
नेन मनुष्यः सपुण्यो न भवति केवलं यीशौ ख्रीष्टे यो विश्वा-
सस्तेनैव सपुण्यो भवतीति बुद्ध्वावामपि व्यवस्थापालनं विना
केवलं ख्रीष्टे विश्वासेन पुण्यप्राप्तये ख्रीष्टे यीशौ व्यश्वसिव यतो
व्यवस्थापालनेन कोऽपि मानवः पुण्यं प्राप्तुं न शक्नोति। परन्तु १७
यीशुना पुण्यप्राप्तये यतमानावप्यावां यदि पापिनौ भवावस्तर्हि
किं वक्तव्यं? ख्रीष्टः पापस्य परिचारक इति? तन्न भवतु।
मया यद् भग्नं तद् यदि मया पुनर्निर्म्मीयते तर्हि मयैवात्म- १८
दोषः प्रकाश्यते। अहं यद् ईश्वराय जीवामि तदर्थं व्यवस्थया १९

२० व्यवस्थायै अम्रिये। ख्रीष्टेन सार्द्धं क्रुशे हतोऽस्मि तथापि जीवामि किन्त्वहं जीवामीति नहि ख्रीष्ट एव मदन्त र्जीवति। साम्प्रतं सशरीरेण मया यज्जीवितं धार्य्यते तत् मम दयाकारिणि मदर्थं स्वीयप्राणत्यागिनि चेश्वरपुत्रे विश्वसता मया धा-
२१ र्य्यते। अहमीश्वरस्यानुग्रहं नावजानामि यस्माद् व्यवस्थया यदि पुण्यं भवति तर्हि ख्रीष्टो निरर्थकममियत।

---

## ३ तृतीयोऽध्यायः।

१ ख्रीष्टं परित्यज्य व्यवस्थया परित्राणचेष्टनाद् गालातिलोकान् प्रति पौलस्य भर्त्सनं व्यवस्थया नहि किन्तु ख्रीष्टस्य पुण्येन वयं पुण्यवन्तो भवितुं शक्नुम इत्यस्य दृढ-प्रमाणदानञ्च।

१ हे निर्ब्बोधा गालातिलोकाः, युष्माकं मध्ये क्रुशे हत इव यीशुः ख्रीष्टो युष्माकं समक्षं प्रकाशित आसीत् अतो यूयं यथा
२ सत्यं वाक्यं न गृह्णीथ तथा केनामुह्यत? अहं युष्मत्तः कथामेकां जिज्ञासे यूयम् आत्मानं केनालभध्वं? व्यवस्थापालनेन
३ किं वा विश्वासवाक्यस्य श्रवणेन? यूयं किम् ईदृग् अबोधा यद्
४ आत्मना कर्म्मारभ्य शरीरेण तत् साधयितुं यतध्वे? तर्हि युष्माकं गुरुतरो दुःखभोगः किं निष्फलो भविष्यति? कुफलयुक्तो
५ वा किं भविष्यति? यो युष्मभ्यम् आत्मानं दत्तवान् युष्मन्मध्य आश्चर्य्याणि कर्म्माणि च साधितवान् स किं व्यवस्थापालनेन
६ विश्वासवाक्यस्य श्रवणेन वा तत् कृतवान्? लिखितमास्ते, "इब्राहीम ईश्वरे व्यश्वसीत् स च विश्वासस्तस्मै पुण्यार्थं गणितो बभूव,"
७ अतो ये विश्वासाश्रितास्त एवेब्राहीमः सन्ताना इति युष्माभि
८ र्ज्ञायतां। ईश्वरो भिन्नजातीयान् विश्वासेन सपुण्यीकरिष्यतीति पूर्व्वं ज्ञात्वा शास्त्रदाता पूर्व्वम् इब्राहीमं सुसंवादं श्रावयन

जगाद, "त्वत्तो भिन्नजातीयाः सर्व्वे आशिषं प्राप्स्यन्तीति।" अतो ये विश्वासाश्रितास्ते विश्वासिनेब्राहीमा सार्द्धम् आशिषं लभन्ते। यावन्तो लोका व्यवस्थायाः कर्म्माण्याश्रयन्ति ते १० सर्व्वे शापाधीना भवन्ति यतो लिखितमास्ते, यथा, "यः कश्चिद् एतस्य व्यवस्थाग्रन्थस्य सर्व्ववाक्यानि निश्छिद्रं न पालयति स शप्त इति।" ईश्वरस्य साक्षात् कोऽपि व्यवस्थया सपुण्यो न भवति ११ तद् व्यक्तं, यतः "पुण्यवान् मानवो विश्वासेन जीविष्यतीति" शास्त्रीयं वचः। व्यवस्था तु विश्वाससम्बन्धिनी न भवति कि- १२ न्त्वेतानि यः पालयिष्यति स एव तै र्जीविष्यतीतिनियमसम्बन्धिनी। ख्रीष्टोऽस्मान् परिक्रीय व्यवस्थायाः शापात् मोचितवान् १३ यतोऽस्माकं विनिमयेन स स्वयं शापास्पदमभवत् तदधि लिखितमास्ते, यथा, "यः कश्चित् तरावुल्लम्ब्यते सोऽभिशप्त इति।" तस्माद् ख्रीष्टेन यीशुनेब्राहीम आशी र्भिन्नजातीयलोकेषु वर्त्तते १४ तेन वयं प्रतिज्ञातम् आत्मानं विश्वासेन लब्धुं शक्नुमः। हे १५ भ्रातृगण मानुषाणां रीत्यनुसारेणाहं कथयामि केनचित् मानवेन यो नियमो निरचायि तस्य विकृति र्वृद्धि र्वा केनापि न क्रियते। परन्त्विब्राहीमे तस्य सन्तानाय च प्रतिज्ञाः प्रति- १६ शुश्रुविरे तत्र सन्तानशब्दं बहुवचनान्तम् अभूत्वा तव सन्तानायेत्येकवचनान्तं बभूव स च सन्तानः ख्रीष्ट एव। अतएवाहं १७ वदामि, ईश्वरेण यो नियमः पुरा ख्रीष्टमधि निरचायि ततः परं त्रिंशदधिकचतुःशतवत्सरेषु गतेषु स्थापिता व्यवस्था तं नियमं निरर्थकीकृत्य तदीयप्रतिज्ञा लोप्तुं न शक्नोति। यस्मात् १८ सम्पदधिकारो यदि व्यवस्थया भवति तर्हि प्रतिज्ञया न भवति किन्त्वीश्वरः प्रतिज्ञया तदधिकारित्वम् इब्राहीमे ऽददात्।

१९ तर्हि व्यवस्था किम्भूता? प्रतिज्ञा यस्मै प्रतिश्रुता तस्य सन्तानस्यागमनं यावद् व्यभिचारनिवारणार्थं व्यवस्थापि दत्ता, सा
२० च दूतैराज्ञापिता मध्यस्थस्य करे समर्पिता च। नैकस्य मध्यस्थो
२१ विद्यते किन्त्वीश्वर एक एव। तर्हि व्यवस्था किम् ईश्वरस्य प्रतिज्ञानां विरुद्धा? तन्न भवतु यस्माद् यदि सा व्यवस्था जीवनदाने समर्थाभविष्यत् तर्हि व्यवस्थयैव पुण्यलाभोऽभविष्यत्।
२२ किन्तु यीशुख्रीष्टे यो विश्वासस्तत्सम्बन्धिन्याः प्रतिज्ञायाः फलं यद् विश्वासिलोकेभ्यो दीयते तदर्थं शास्त्रदाता सर्व्वान् पापा-
२३ धीनान् गणयति। अतएव विश्वासस्यानागतसमये वयं व्यवस्थाधीनाः सन्तो विश्वासस्योदयं यावद् रुद्धा इवारक्ष्यामहे।
२४ इत्थं वयं यद् विश्वासेन सपुण्यीभवामस्तदर्थं ख्रीष्टस्य समीपम्
२५ अस्मान् नेतुं व्यवस्थाग्रन्थोऽस्माकं विनेता बभूव। किन्त्वधुनागते
२६ विश्वासे वयं तस्य विनेतुरनधीना अभवाम। ख्रीष्टे यीशौ विश्वस-
२७ नात् सर्व्वे यूयम् ईश्वरस्य सन्ताना जाताः। यूयं यावन्तो लोकाः
२८ ख्रीष्टे मज्जिता अभवत सर्व्वे ख्रीष्टं परिहितवन्तः। अतो युष्मन्मध्ये यिहूदियूनानिनो र्दासस्वतन्त्रयो र्योषापुरुषयोश्च कोऽपि
२९ विशेषो नास्ति; सर्व्वे यूयं ख्रीष्टे यीशावेक एव। किञ्च यूयं यदि ख्रीष्टस्य भवथ तर्हि सुतराम् इब्राहीमः सन्तानाः प्रतिज्ञया सम्पदधिकारिणश्चाध्वे।

---

## ४ चतुर्थोऽध्यायः।

१ उत्तराधिकारिण इव व्यवस्थाया अधीनीभूतत्वं ६ पुत्त्रत्वाद् दासस्य कर्म्माकरणं १२ गालातिलोकानां पूर्व्वीयप्रेम्नः प्रशंसनं मङ्गलचेष्टाकरणं २१ व्यवस्थानुसंवादयो र्भेदनिर्णयश्च।

१ अहं वदामि सम्पदधिकारी यावद् बालस्तिष्ठति तावत् सर्व्व-

स्वस्याधिपतिः सन्नपि स दासात् केनापि विषयेण न विशिष्यते किन्तु पित्रा निरूपितं समयं यावत् पालकानां धनाध्यक्षाणाञ्च निघ्नस्तिष्ठति। तद्वद् वयमपि बाल्यकाले दासा इव संसारस्याक्षरमालाया अधीना आस्महे। अनन्तरं समये सम्पूर्णतां गतवति व्यवस्थाधीनानां मोचनार्थम् अस्माकं पुत्त्रत्वप्राप्त्यर्थञ्चेश्वरः स्त्रिया जातं व्यवस्थाया अधिनीभूतञ्च स्वपुत्त्रं प्रेषितवान्।

यूयं सन्ताना अभवत तत्कारणाद् ईश्वरः स्वपुत्त्रस्यात्मानं युष्माकम् अन्तःकरणानि प्रहितवान् स चात्मा पितः पितरित्याह्वानं कारयति। अत इदानीं यूयं न दासाः किन्तु सन्ताना एव तस्मात् सन्तानत्वाच्च ख्रीष्टेनेश्वरीयसम्पदधिकारिणोऽप्याध्वे। अपरञ्च पूर्व्वं यूयम् ईश्वरं न ज्ञात्वा ये स्वभावतोऽनीश्वरास्तेषां दासत्वेऽतिष्ठत। इदानीम् ईश्वरं ज्ञात्वा यदि वेश्वरेण ज्ञाता यूयं कथं पुनस्तानि विफलानि तुच्छानि चाक्षराणि प्रति परावर्त्तितुं शक्नुथ? यूयं किं पुनस्तेषां दासा भवितुमिच्छथ? यूयं दिवसान् मासान् तिथीन् संवत्सरांश्च सम्मन्यध्वे। युष्मदर्थं मया यः परिश्रमोऽकारि स विफलो जात इति युष्मानध्यहं बिभेमि।

हे भ्रातरः, अहं यादृशोऽस्मि यूयमपि तादृशा भवतेति प्रार्थये यतोऽहमपि युष्मत्तुल्योऽभवं युष्माभि र्मम किमपि नापराद्धं। पूर्व्वमहं कलेवरस्य दौर्ब्बल्येन युष्मान् सुसंवादम् अज्ञापयमिति यूयं जानीथ। तदानीं मम परीक्षकं शारीरक्लेशं दृष्ट्वा यूयं माम् अवज्ञाय ऋतीयितवन्तस्तन्नहि किन्त्वीश्वरस्य दूतमिव साक्षात् ख्रीष्टं यीशुमिव वा मां गृहीतवन्तः। अतस्तदानीं युष्माकं या धन्यताभवत् सा क्व गता? तदानीं यूयं यदि स्वेषां नयना-

न्युत्पाद्य मह्यं दातुम् अशच्यत तर्हि तदप्यकरिष्यतेति प्रमाणम्
१६ अहं ददामि। साम्प्रतमहं सत्यवादित्वात् किं युष्माकं रिपुर्जा-
१७ तोऽस्मि? ते युष्मत्कृते स्पर्द्धन्ते किन्तु सा स्पर्द्धा कुत्सिता यतो यूयं
तानधि यत् स्पर्द्धध्वं तदर्थं ते युष्मान् पृथक् कर्त्तुम् इच्छन्ति।
१८ केवलं युष्मत्समीपे ममोपस्थितिसमये तन्नहि, किन्तु सर्व्वदैव भद्र-
१९ मधि स्पर्द्धनं भद्रं। हे मम बालकाः, युष्मदन्त र्यावत् ख्रीष्टो
मूर्त्तिमान् न भवति तावद् युष्मत्कारणात् पुनः प्रसववेदनेव
२० मम वेदना जायते। अहमिदानीं युष्माकं सन्निधिं गत्वा स्वरा-
न्तरेण युष्मान् सम्भाषितुं कामये यतो युष्मानधि व्याकुलोऽस्मि।
२१ हे व्यवस्थाधीनताकाङ्क्षिणः, यूयं किं व्यवस्थाया वचनं न
२२ गृह्लीथ? तन्मां वदत। लिखितमास्ते, इब्राहीमो द्वौ पुत्रावा-
२३ साते तयोरेको दास्यां द्वितीयश्च पत्न्यां जातः। तयो र्यो
दास्यां जातः स शारीरिकनियमेन जज्ञे यश्च पत्न्यां जातः स
२४ प्रतिज्ञया जज्ञे। इदमाख्यानं दृष्टान्तस्वरूपं। ते द्वे योषिता-
वीश्वरीयसन्धी तयोरेका सीनयपर्व्वताद् उत्पन्ना दासजन-
२५ यित्री च सा तु हाजिरा। यस्माद् हाजिराशब्देनारवदेश-
स्थसीनयपर्व्वतो बोध्यते, सा च वर्त्तमानाया यिरूशालम्-
पुर्य्याः सदृशी। यतः स्वबालैः सहिता सा दासत्व आस्ते।
२६ किन्तु स्वर्गीया यिरूशालम्पुरी पत्नी सर्व्वेषाम् अस्माकं माता
२७ चास्ते। यादृशं लिखितम् आस्ते,

बन्ध्ये सन्तानहीने त्वं स्वरं जयजयं कुरु।
अप्रसूते त्वयोल्लासो जयशब्दश्च गीयतां।
यत एव सनाथाया योषितः सन्तते र्गणात्।
अनाथा या भवेन्नारी तदपत्यानि भूरिशः॥

हे भ्रातृगण, इस्हाक् इव वयं प्रतिज्ञया जाताः सन्तानाः। २८
किन्तु तदानीं शारीरिकनियमेन जातः पुत्रो यद्वद् आत्मि- २९
कनियमेन जातं पुत्रम् उपाद्रवत् तथाधुनापि। किन्तु शास्त्रे ३०
किं लिखितं? 'त्वम् इमां दासीं तस्याः पुत्रञ्चापसारय यत
एष दासीपुत्रः पत्नीपुत्रेण समं नोत्तराधिकारी भविष्यतीति।'
अतएव हे भ्रातरः, वयं दास्याः सन्ताना न भूत्वा पत्न्याः ३१
सन्ताना भवामः।

---

## ५ पञ्चमोऽध्यायः।

१ त्वक्छेदेन त्राणचेष्टानिषेधः परस्परं प्रेम कर्त्तुं विनयः १६ शारीरिककर्म्मात्मिक-कर्म्मणोः कथनञ्च।

ख्रीष्टोऽस्मभ्यं यत् स्वातन्त्र्यं दत्तवान् यूयं तत्र स्थिरास्ति- १
ष्ठत दासत्वयुगेन पुन र्न निबध्यध्वं। पश्यताहं पौलो युष्मान् २
वदामि यदि छिन्नत्वचो भवथ तर्हि ख्रीष्टेन किमपि नोपका-
रिष्यध्वे। अपरं यः कश्चित् छिन्नत्वग् भवति स कृत्स्नव्यव- ३
स्थायाः पालनम् ईश्वराय धारयतीति प्रमाणं ददामि।
युष्माकं यावन्तो लोका व्यवस्थया सपुण्यीभवितुं चेष्टन्ते ते सर्व्वे ४
ख्रीष्टाद् भ्रष्टा अनुग्रहात् पतिताश्च। यतो वयम् आत्मना विश्वा- ५
सात् पुण्यलाभाशासिद्धिं प्रतीक्षामहे। ख्रीष्टे यीशौ त्वक्छेदा- ६
त्वक्छेदयोः किमपि गुणं नास्ति किन्तु प्रेम्ना सफलो विश्वास
एव गुणयुक्तः। पूर्व्वं यूयं सुन्दरम् अधावत किन्त्विदानीं केन ७
बाधां प्राप्य सत्यतां न गृह्णीथ? युष्माकं सा मति र्युष्मदाह्वान- ८
कारिण ईश्वरान्न जाता।

विकारः कृत्स्नशक्तूनां स्वल्पकिण्वेन जायते। ९

युष्माकं मति र्विकारं न गमिष्यतीत्यहं युष्मानधि प्रभुनाशंसे; १०

किन्तु यो युष्मान् विचालयति स यः कश्चिद् भवेत् समुचितं
११ दण्डं प्राप्स्यति। परन्तु हे भ्रातरः, यद्यहम् इदानीम् अपि
त्वक्छेदं प्रचारयेयं तर्हि कुत उपद्रवं भुञ्जीय? तत्कृते क्रुशं
१२ निर्ब्बाधम् अभविष्यत्। ये जना युष्माकं चाञ्चल्यं जनयन्ति तेषां
छेदनमेव मयाभिलष्यते।

१३ हे भ्रातरः, यूयं स्वातन्त्र्यार्थम् आहूता आध्वे किन्तु तत्स्वा-
तन्त्र्यद्वारेण शारीरिकभावो युष्मान् न प्रविशतु। यूयं प्रेम्ना पर-
१४ स्परं परिचर्य्यां कुरुध्वं। यस्मात् त्वं समीपवासिनि स्ववत् प्रेम
१५ कुर्य्या इत्येकाज्ञा कृत्स्नाया व्यवस्थायाः सारसंग्रहः। किन्तु यूयं
यदि परस्परं दंदश्यध्वे ऽशाश्यध्वे च तर्हि युष्माकम् एकोऽन्येन
यन्न ग्रस्यते तत्र युष्माभिः सावधानै र्भवितव्यं।

१६ अहं ब्रवीमि यूयम् आत्मिकाचारं कुरुत शारीरिकाभि-
१७ लाषं मा पूरयत। यतः शारीरिकाभिलाष आत्मनो विप-
रीतः, आत्मिकाभिलाषश्च शरीरस्य विपरीतः, अनयोरुभयोः
परस्परं विरोधो विद्यते तेन युष्माभि र्यद् अभिलष्यते तन्न
१८ कर्त्तव्यं। यूयं यद्यात्मना विनीयध्वे तर्हि व्यवस्थाया अधीना
१९ न भवथ। अपरं परदारगमनं वेश्यागमनम् अशुचिता का-
२० मुकता प्रतिमापूजनम् इन्द्रजालं शत्रुत्वं विवादोऽन्तर्ज्वलनं
२१ क्रोधः कलहोऽनैक्यं पार्थक्यम् ईर्ष्या बधो मत्तत्वं लम्पटत्व-
मित्यादीनि स्पष्टत्वेन शारीरिकभावस्य कर्म्माणि सन्ति। पूर्व्वं
यद्वत् मया कथितं तद्वत् पुनरपि कथ्यते ये जना एतादृ-
शानि कर्म्माण्याचरन्ति तैरीश्वरस्य राज्येऽधिकारः कदाच न
२२ लप्स्यते। किञ्च प्रेमानन्दः शान्तिश्चिरसहिष्णुता हितैषिता
२३ भद्रत्वं विश्वास्यता तितिक्षा परिमितभोजित्वमित्यादीन्यात्मनः

फलानि सन्ति तेषां विरुद्धा कापि व्यवस्था नहि। ये तु २४ ख्रीष्टस्य लोकास्ते रिपुभिरभिलाषैश्च सहितं शारीरिकभावं क्रुशे निहतवन्तः। यदि वयम् आत्मना जीवामस्तर्ह्यात्मि- २५ काचारोऽस्माभिः कर्त्तव्यः, दर्पः परस्परं निर्भर्त्सनं द्वेषश्चा- २६ स्माभि र्न कर्त्तव्यानि।

---

## ६ षष्ठोऽध्यायः।

१ दोषिभ्रातु र्दोषस्यावश्यचन्तव्यत्वं ६ उपदेष्ट्रे दानं सत्कर्म्मणि प्रवृत्तिकथनं ११ त्वक्छेदं न मानित्वा ख्रीष्टे पौलस्य विश्वासः श्लाघनञ्च।

हे भ्रातरः, युष्माकं कश्चिद् यदि कस्मिंश्चित् पापे पतति १ तर्ह्यात्मिकभावयुक्तै र्युष्माभिस्तितिक्षाभावं विधाय स पुनरु- त्थाप्यतां यूयमपि यथा तादृक्परीक्षायां न पतथ तथा सावधाना भवत। युष्माकम् एकैको जनः परस्य भारं वहत्वनेन २ प्रकारेण ख्रीष्टस्य विधिं पालयत। यदि कश्चन क्षुद्रः सन् ३ स्वं महान्तं मन्यते तर्हि तस्यात्मवञ्चना जायते। अत एकैकेन ४ जनेन स्वकीयकर्म्मणः परीक्षा क्रियतां तेन परं नालोक्य केव- लम् आत्मालोकनात् तस्य श्लाघा सम्भविष्यति। यत एकैको ५ जनः स्वकीयं भारं वक्ष्यति।

यो जनो धर्म्मोपदेशं लभते स उपदेष्टारं स्वीयसर्व्वसम्पत्ते ६ र्भागिनं करोतु। युष्माकं भ्रान्ति र्न भवतु, ईश्वरो नोपहसि- ७ तव्यः, येन यद् वीजम् उप्यते तेन तज्जातं शस्यं कर्त्ति- ष्यते। स्वशरीरार्थं येन वीजम् उप्यते तेन शरीराद् विनाश- ८ रूपं शस्यं लप्स्यते किन्त्वात्मनः कृते येन वीजम् उप्यते तेना- त्मतोऽनन्तजीवितरूपं शस्यं लप्स्यते। सत्कर्म्मकरणेऽस्माभिर- ९ श्रान्तै र्भवितव्यं यतोऽक्लान्तैस्तिष्ठद्भिरस्माभिरुपयुक्तसमये तत्

१० फलानि लप्स्यन्ते। अतो यावत् समयस्तिष्ठति तावत् सर्व्वान् प्रति विशेषतो विश्वासवेश्मवासिनः प्रत्यस्माभि र्हिताचारः कर्त्तव्यः।

११ हे भ्रातरः, अहं स्वहस्तेन युष्मान् प्रति कियद्वृहत् पत्रं

१२ लिखितवान् तद् युष्माभि र्दृश्यतां। ये शारीरिकविषये सुदृश्या भवितुमिच्छन्ति ते यत् ख्रीष्टस्य क्रुशस्य कारणादुपद्रवस्य भागिनो न भवन्ति केवलं तदर्थं त्वक्छेदे युष्मान् प्रवर्त्त-

१३ यन्ति। ते त्वक्छेदग्राहिणोऽपि व्यवस्थां न पालयन्ति किन्तु युष्मच्छरीरात् श्लाघालाभार्थं युष्माकं त्वक्छेदम् इच्छन्ति।

१४ किन्तु येनाहं संसाराय हतः संसारोऽपि मह्यं हतस्तदस्मत्-प्रभो र्यीशुख्रीष्टस्य क्रुशं विनान्यत्र कुत्रापि मम श्लाघनं

१५ कदापि न भवतु। ख्रीष्टे यीशौ त्वक्छेदात्वक्छेदयोः किमपि

१६ गुणं नास्ति किन्तु नवीना सृष्टिरेव गुणयुक्ता। अपरं यावन्तो लोका एतस्मिन् मार्गे चरन्ति तेषाम् ईश्वरीयस्य कृत्स्नस्से-

१७ स्रायेलस्य च शान्ति र्दयालाभश्च भूयात्। इतः परं कोऽपि मां न क्लिश्नातु यस्माद् अहं स्वगात्रे प्रभो र्यीशुख्रीष्टस्य चिह्नानि

१८ धारये। हे भ्रातरः, अस्माकं प्रभो र्यीशुख्रीष्टस्य प्रसादो युष्माकम् आत्मनि स्थेयात्। तथास्तु।

---

## इफिषिणः प्रति पौलस्य प्रेरितस्य पत्रं।

### १ प्रथमोऽध्यायः।

१ मङ्गलाचरणं ३ विश्वासिलोकानाम् ईश्वरमनोनीतत्वकथनं १५ एतां निगूढां कथां बोद्धुम् ईश्वरज्ञानार्थं प्रार्थनञ्च।

१ ईश्वरस्येच्छया यीशुख्रीष्टस्य प्रेरितः पौल इफिषनगर-

स्थान् पवित्रान् ख्रीष्टयीशौ विश्वासिनो लोकान् प्रति पत्रं
लिखति। अस्माकं तातस्येश्वरस्य प्रभो र्यीशुख्रीष्टस्य चानु-
ग्रहः शान्तिश्च युष्मासु वर्त्ततां।

अस्माकं प्रभो र्यीशोः ख्रीष्टस्य तात ईश्वरो धन्यो भवतु;
यतः स ख्रीष्टेनास्मभ्यं सर्व्वम् आध्यात्मिकं स्वर्गीयवरं दत्तवान्।
वयं यत् तस्य समक्षं प्रेम्ना पवित्रा निष्कलङ्काश्च भवामस्तदर्थं
स जगतः सृष्टेः पूर्व्वं तेनास्मान् अभिरोचितवान्, निजा-
भिलषितानुरोधाच्च यीशुना ख्रीष्टेन स्वस्य निमित्तं पुत्रत्व-
पदेऽस्मान् स्वकीयानुग्रहस्य महत्त्वस्य प्रशंसार्थं पूर्व्वं नियुक्तवान्।
तस्माद् अनुग्रहात् स येन प्रियतमेन पुत्रेणास्मान् अनुगृही-
तवान्, वयं तस्य शोणितेन मुक्तिम् अर्थतः पापक्षमां लब्ध-
वन्तः। तस्य य ईदृशोऽनुग्रहनिधिस्तस्मात् सोऽस्मभ्यं सर्व्वविधं
ज्ञानं बुद्धिञ्च बाहुल्यरूपेण वितरितवान्। स्वर्गपृथिव्यो र्यद्यद्
विद्यते तत्सर्व्वं स ख्रीष्टे संग्रहीष्यतीति हितैषिणा तेन कृतो यो
मनोरथः सम्पूर्णतां गतवत्सु समयेषु साधयितव्यस्तमधि स स्व-
कीयाभिलाषस्य निगूढं भावम् अस्मान् ज्ञापितवान्। पूर्व्वं ख्रीष्टे
विश्वासिनो ये वयम् अस्मत्तो यत् तस्य महिम्नः प्रशंसा जायते,
तदर्थं यः स्वकीयेच्छायाः मन्त्रणातः सर्व्वाणि साधयति तस्य
मनोरथाद् वयं ख्रीष्टेन पूर्व्वं निरूपिताः सन्तोऽधिकारिणो
जाताः। यूयमपि सत्यं वाक्यम् अर्थतो युष्मत्परित्राणस्य सुसं-
वादं निशम्य तस्मिन्नेव ख्रीष्टे विश्वसितवन्तः प्रतिज्ञातेन पवि-
त्रेणात्मना मुद्रयेवाङ्किताश्च। यतस्तस्य महिम्नः प्रकाशाय तेन
क्रीतानां लोकानां मुक्ति र्यावन्न भविष्यति तावत् स आत्मा-
स्माकम् अधिकारित्वस्य सत्यङ्कारस्य पणस्वरूपो भवति।

१५ प्रभौ यीशौ युष्माकं विश्वासः सर्व्वेषु पवित्रलोकेषु प्रेम चास्त
१६ इति वार्त्तां श्रुत्वाहमपि युष्मानधि निरन्तरम् ईश्वरं धन्यं वदन् प्रार्थनासमये च युष्मान् स्मरन् वरमिमं याचामि।
१७ अस्माकं प्रभो र्यीशुख्रीष्टस्य तातो यः प्रभावाकर ईश्वरः स स्वकीयतत्त्वज्ञानाय युष्मभ्यं ज्ञानजनकम् प्रकाशितवाक्यबोध-
१८ कञ्चात्मानं देयात्। युष्माकं ज्ञानचक्षूंषि च दीप्तियुक्तानि कृत्वा तस्याह्वानं कीदृश्या प्रत्याशया सम्बलितं पवित्रलोकानां मध्ये तेन दत्तोऽधिकारः कीदृशः प्रभावनिधि र्विश्वासिषु
१९ चास्मासु प्रकाशमानस्य तदीयमहापराक्रमस्य महत्त्वं कीदृग्
२० अनुपमं तत् सर्व्वं युष्मान् ज्ञापयतु। यतः स यस्याः शक्तेः प्रबलतां ख्रीष्टे प्रकाशयन् मृतगणमध्यात् तम् उत्थापितवान्,
२१ अधिपतित्वपदं शासनपदं पराक्रमो राजत्वञ्चेतिनामानि यावन्ति पदानीह लोके परलोके च विद्यन्ते तेषां सर्व्वेषाम् ऊर्द्ध्वे
२२ स्वर्गे निजदक्षिणपार्श्वे तम् उपवेशितवान्, सर्व्वाणि तस्य चरणयोरधो निहितवान् या समितिस्तस्य शरीरं सर्व्वत्र सर्व्वेषां
२३ पूरयितुः पूरकञ्च भवति तं तस्या मूर्द्धानं कृत्वा सर्व्वेषाम् उपर्य्युपरि नियुक्तवांश्च सैव शक्तिरस्मास्वपि तेन प्रकाश्यते।

---

## २ द्वितीयोऽध्यायः।

१ विश्वासिलोकः स्वभावतः कीदृग् अनुग्रहेण च कीदृक् तदाख्यानं ११ ख्रीष्टेन तेषां परित्राणं १९ तेषां पवित्रमन्दिरस्वरूपत्वञ्च।

१ पुरा यूयम् अपराधैः पापैश्च मृताः सन्तस्तान्याचरन्त इह-
२ लोकस्य संसारानुसारेणाकाशराज्यस्याधिपतिम् अर्थतः साम्प्रतम् आज्ञालङ्घिवंशेषु कर्म्मकारिणम् आत्मानम् अन्वव्रजत।
३ तेषां मध्ये सर्व्वे वयमपि पूर्व्वं शरीरस्य मनस्कामनायाञ्चेहां

साधयन्तः स्वशरीरस्याभिलाषान् आचराम सर्व्वेऽन्य इव च स्वभावतः क्रोधभाजनान्यभवाम। किन्तु करुणानिधिरीश्वरो ४ येन महाप्रेम्नास्मान् दयितवान् तस्य स्वप्रेम्नो बाहुल्याद् अप- ५ राधै र्मृतानप्यस्मान् ख्रीष्टेन सह जीवितवान् यतोऽनुग्रहाद् यूयं परित्राणं प्राप्ताः। स च ख्रीष्टेन यीशुनास्मान् तेन सार्द्धम् ६ उत्थापितवान् स्वर्ग उपवेशितवांश्च। इत्थं स ख्रीष्टेन यीशुना- ७ स्मान् प्रति स्वहितैषितया भावियुगेषु स्वकीयानुग्रहस्यानुपमं निधिं प्रकाशयितुम् इच्छति। यूयम् अनुग्रहाद् विश्वासेन ८ परित्राणं प्राप्ताः, तच्च युष्मन्मूलकं नहि किन्त्वीश्वरस्यैव दानं, तत् कर्म्मणां फलम् अपि नहि, अतः केनापि न श्लाघितव्यं। ९ यतो वयं तस्य कार्य्यं प्राग् ईश्वरेण निरूपिताभिः सत्क्रियाभिः १० कालयापनाय ख्रीष्टे यीशौ तेन सृष्टाश्च।

पुरा जन्मना भिन्नजातीया हस्तकृतं त्वक्छेदं प्राप्तै र्लोकै- ११ श्चाच्छिन्नत्वच इतिनाम्ना ख्याता ये यूयं तै र्युष्माभिरिदं स्मर्त्तव्यं यत् तस्मिन् समये यूयं ख्रीष्टाद् भिन्ना इस्रायेल्लोकानां १२ सहवासाद् दूरस्थाः प्रतिज्ञासम्बलितनियमानां वहिः स्थिताः सन्तो निराशा निरीश्वराश्च जगत्याध्वम् इति। किन्त्वधुना १३ ख्रीष्टे यीशावाश्रयं प्राप्य पुरा दूरवर्त्तिनो यूयं ख्रीष्टस्य शो- णितेन निकटवर्त्तिनोऽभवत। यतः स एवास्माकं सन्धिः स १४ द्वयम् एकीकृतवान् शत्रुतारूपिणीं मध्यवर्त्तिनीं प्रभेदकभित्तिं भग्नवान् दण्डाज्ञायुक्तं विधिशास्त्रं स्वशरीरेण लुप्तवांश्च। यतः १५ स सन्धिं विधाय तौ द्वौ स्वस्मिन् एकं नूतनं मानवं कर्त्तुं स्वकीयक्रुशे शत्रुतां निहत्य तेनैवैकस्मिन् शरीरे तयो र्द्वयोरी- १६ श्वरेण सन्धिं कारयितुं निश्चतवान्। स चागत्य दूरवर्त्तिनो १७

युष्मान् निकटवर्त्तिनो ऽस्मांश्च मन्धे मङ्गलवार्त्तां ज्ञापितवान्।
१८ यतस्तस्माद् उभयपक्षीया वयम् एकेनात्मना पितुः समीपं गमनाय सामर्थ्यं प्राप्तवन्तः।
१९ अत इदानीं यूयम् असम्पर्कीया विदेशिनश्च न तिष्ठन्तः
२० पवित्रलोकैः सहवासिन ईश्वरस्य वेश्मवासिनश्चाध्वे। अपरं प्रेरिता भविष्यद्वादिनश्च यत्र भित्तिमूलस्वरूपास्तत्र यूयं तस्मिन् मूले निचीयध्वे तत्र च स्वयं यीशुः ख्रीष्टः प्रधानः
२१ कोणस्थप्रस्तरः। तेन कृत्स्ना निर्म्मितिः संग्रथ्यमाना प्रभोः पवित्रं
२२ मन्दिरं भवितुं वर्द्धते। यूयमपि तत्र संग्रथ्यमाना आत्मनेश्वरस्य वासस्थानं भवथ।

---

## ३ तृतीयोऽध्यायः।

१ अन्यदेशिनः प्रति सुसंवादं प्रचारयितुं पौलस्य नियोजनं तेषां कृते तस्य प्रार्थना २० ईश्वरस्य धन्यवदनञ्च।

१ अतो हेतो र्भिन्नजातीयानां युष्माकं निमित्तं यीशुख्रीष्टस्य
२ बन्दी यः सोऽहं पौलो ब्रवीमि। युष्मदर्थम् ईश्वरेण मह्यं दत्तस्य वरस्य नियमः कीदृशस्तद् युष्माभिरश्रावीति मन्ये।
३ अर्थतः पूर्व्वं मया संक्षेपेण यथा लिखितं तयाहं प्रकाशित-
४ वाक्येनेश्वरस्य निगूढं भावं ज्ञापितोऽभवं। अतो युष्माभिस्तत् पठित्वा ख्रीष्टमधि तस्मिन्निगूढे भावे मम ज्ञानं कीदृशं
५ तद् भोत्स्यते। पूर्व्वयुगेषु मानवसन्तानास्तं ज्ञापिता नासन् किन्त्वधुना स भावस्तस्य पवित्रान् प्रेरितान् भविष्यद्वादिनश्च
६ प्रत्यात्मना प्रकाशितोऽभवत्; अर्थत ईश्वरस्य शक्तेः प्रकाशात् तस्यानुग्रहेण यो वरो मह्यम् अदायि तेनाहं यस्य सुसंवादस्य
७ परिचारकोऽभवं, तद्द्वारा ख्रीष्टेन भिन्नजातीया अन्यैः सार्द्धम्

एकाधिकारा एकशरीरा एकस्याः प्रतिज्ञाया अंशिनश्च भवि-
ष्यन्तीति। सर्व्वेषां पवित्रलोकानां क्षुद्रतमाय मह्यं वरोऽयम् ८
अदायि यद् भिन्नजातीयानां मध्ये बोधागम्यस्य गुणनिधेः ख्री-
ष्टस्य मङ्गलवार्त्तां प्रचारयामि, कालावस्थातः पूर्व्वस्माच्च यो नि- ९
गूढभाव ईश्वरे गुप्त आसीत् तदीयनियमं सर्व्वान् ज्ञापयामि।
यत ईश्वरस्य नानारूपं ज्ञानं यत् साम्प्रतं समित्या स्वर्गे प्रा- १०
धान्यपराक्रमयुक्तानां दूतानां निकटे प्रकाश्यते तदर्थं स यी-
शुना ख्रीष्टेन सर्व्वाणि सृष्टवान्। यतो वयं यस्मिन् विश्वस्य ११
दृढभक्त्या निर्भयताम् ईश्वरस्य समागमे सामर्थ्यञ्च प्राप्तवन्त- १२
स्तमस्माकं प्रभुं यीशुं ख्रीष्टमधि स कालावस्थायाः पूर्व्वं तं
मनोरथं कृतवान्। अतोऽहं युष्मन्निमित्तं दुःखभोगेन क्लान्तिं १३
यन्न गच्छामीति प्रार्थये यतस्तदेव युष्माकं गौरवं। अतो १४
हेतोः स्वर्गपृथिव्योः स्थितः कृत्स्नो वंशो यस्य नाम्ना विख्यात-
स्तम् अस्मत्प्रभो र्यीशुख्रीष्टस्य पितरमुद्दिश्याहं जानुनी पात- १५
यित्वा तस्य प्रभावनिधितो वरमिमं प्रार्थये। तस्यात्मना युष्मा- १६
कम् आन्तरिकपुरुषस्य शक्ते र्वृद्धिः क्रियतां। ख्रीष्टस्तु विश्वा- १७
सेन युष्माकं हृदयेषु निवसतु। प्रेमणि युष्माकं बद्धमूलत्वं
सुस्थिरत्वञ्च भवतु। इत्थं प्रस्थताया दीर्घताया गभीरताया १८
उच्चतायाश्च बोधाय सर्व्वैः पवित्रलोकैः प्राप्यं सामर्थ्यं युष्माभि
र्लभ्यतां, ज्ञानातिरिक्तं ख्रीष्टस्य प्रेम ज्ञायताम् ईश्वरस्य सम्पूर्ण- १९
वृद्धिपर्य्यन्तं युष्माकं वृद्धि र्भवतु च।

अस्माकम् अन्तरे या शक्तिः प्रकाशते तया सर्व्वातिरिक्तं कर्म्म २०
कुर्व्वन् अस्माकं प्रार्थनां कल्पनाञ्चातिक्रमितुं यः शक्नोति ख्रीष्ट-
यीशुना समिते र्मध्ये सर्व्वेषु युगेषु तस्य धन्यवादो भवतु। इति। २१

# ४ चतुर्थोऽध्यायः।

१ ऐक्यभवनाय मन्त्रणा सर्व्वेषां पारमार्थिकवराणाम् अभिप्रायनिर्णयः १७ दुष्टस्वभावत्यागार्थम् इफिषीयलोकेषु पौलस्य विनयः २५ धर्म्मकर्म्मकरणाय तान् प्रति विनयश्च।

१ अतो बन्दिरहं प्रभो र्नाम्ना युष्मान् विनये यूयं येनाह्वाने-
२ नाहूतास्तदुपयुक्तरूपेण सर्व्वथा नम्रतां मृदुतां तितिक्षां पर-
३ स्परं प्रेम्ना सहिष्णुताञ्चाचरत। प्रणयबन्धनेन चात्मन ऐक्यं
४ रक्षितुं यतध्वं। यूयम् एकशरीरा एकात्मानश्च तद्वद् आह्वा-
५ नेन यूयम् एकप्रत्याशाप्राप्तये समाहूताः। युष्माकम् एकः
६ प्रभुरेको विश्वास एकं मज्जनं, सर्व्वेषां तातः सर्व्वोपरिस्थः सर्व्व-
७ व्यापी सर्व्वेषां युष्माकं मध्यवर्त्ती चैक ईश्वर आस्ते। किन्तु
ख्रीष्टस्य दानपरिमाणानुसाराद् अस्माकम् एकैकस्मै विशेषो
८ वरोऽदायि। यथा लिखितम् आस्ते,

ऊर्द्धम् आरुह्य जेतॄन् स विजित्य बन्दिनोऽकरोत्।
ततः स मनुजेभ्योऽपि स्वीयान् व्यश्राणयद् वरान्॥

९ ऊर्द्धम् आरुह्येतिवाक्यस्यायमर्थः स पूर्व्वं पृथिवीरूपं सर्व्वाधः-
१० स्थितं स्थानम् अवतीर्णवान्; यश्चावतीर्णवान् स एव स्वर्गा-
११ णाम् उपर्य्युपर्य्यारूढवान् यतः सर्व्वाणि तेन पूरयितव्यानि। स
एव च कांश्चन प्रेरितान् अपरान् भविष्यद्वादिनोऽपरान् सुसं-
वादप्रचारकान् अपरान् पालकान् उपदेशकांश्च नियुक्तवान्।
१२ यावद् वयं सर्व्वे विश्वासस्येश्वरपुत्रविषयकस्य तत्त्वज्ञानस्य चैक्यं
सम्पूर्णं पुरुषार्थञ्चार्थतः ख्रीष्टस्य सम्पूर्णपरिमाणस्य समं परिमाणं
१३ न प्राप्नुमस्तावत् स परिचर्य्याकर्म्मसाधनाय ख्रीष्टस्य शरीरस्य
निष्ठायै च पवित्रलोकानां सिद्धतायास्तादृशम् उपायं नि-
१४ श्चितवान्। अतएव मानुषाणां चातुरीतो भ्रमकधूर्त्तताया-

श्छलाच्च जातेन सर्व्वेण शिक्षावायुना वयं यद् बालका इव दोलायमाना न भ्राम्याम इत्यस्माभि र्यतितव्यं, प्रेम्ना सत्य- १५ ताम् आचरद्भिः सर्व्वविषये ख्रीष्टम् उद्दिश्य वर्द्धितव्यञ्च, यतः स मूर्द्धा, तस्माच्चैकैकस्याङ्गस्य स्वस्वपरिमाणानुसारेण १६ साहाय्यकरणाद् उपकारकैः सर्व्वैः सन्धिभिः कृत्स्नस्य शरीरस्य संयोगे सम्मिलने च जाते प्रेम्ना निष्ठां लभमानं कृत्स्नं शरीरं वृद्धिं प्राप्नोति।

युष्मान् अहं प्रभुनेदं ब्रवीम्यादिशामि च, अन्ये भिन्नजा- १७ तीया इव यूयं पुन र्माचरत। यतस्ते स्वमनोमायाम् आच- १८ रन्त्यान्तरिकाज्ञानात् मानसिककाठिन्याच्च तिमिरावृतबुद्धय ईश्वरीयजीवनस्य बहिर्भूताश्च भवन्ति, स्वान् चैतन्यशून्यान् १९ कृत्वा च लोभेन सर्व्वविधाशौचाचरणाय लम्पटतायां स्वान् समर्पितवन्तः। किन्तु यूयं ख्रीष्टं न तादृशं परिचितवन्तः, २० यतो यूयं तं श्रुतवन्तो या सत्या शिक्षा यीशुतो लभ्या २१ तदनुसारात् तदीयोपदेशं प्राप्तवन्तश्चेति मन्ये। तस्मात् पूर्व्व- २२ कालिकाचारकारी यः पुरातनपुरुषो मायाभिलाषै र्नश्यति तं त्यक्त्वा युष्माभि र्मानसिकभावो नूतनीकर्त्तव्यः, यो नवपुरुष २३ ईश्वरानुरूपेण पुण्येन सत्यतासहितेन धार्म्मिकत्वेन च सृष्टः स २४ एव परिधातव्यश्च।

अतो यूयं सर्व्वे मिथ्याकथनं परित्यज्य समीपवासिभिः सह २५ सत्यालापं कुरुत यतो वयं परस्परम् अङ्गप्रत्यङ्गा भवामः। अपरं क्रोधे जाते पापं मा कुरुध्वम्, अशान्ते युष्माकं रोषे २६ सूर्य्योऽस्तं न गच्छतु। अपरं शयताने स्थानं मा दत्त। चोरः २७ पुनश्चौर्य्यं न करोतु किन्तु दीनाय दाने सामर्थ्यं यज्जायते २८

२९ तदर्थं स्वकराभ्यां सद्वृत्त्या परिश्रमं करोतु। अपरं युष्माकं वदनेभ्यः कोऽपि कदालापो न निर्गच्छतु, किन्तु येन श्रोतुरुपकारो जायते तादृशः प्रयोजनीयनिष्ठायै फलदायक आ-
३० लापो युष्माकं भवतु। अपरञ्च यूयं मुक्तिदिनपर्य्यन्तम् ईश्वरस्य येन पवित्रेणात्मना मुद्रयाङ्किता अभवत तं शोकान्वितं
३१ मा कुरुत। अपरं कटुवाक्यं रोषः कोपः कलहो निन्दा सर्व्व-
३२ विधद्वेषश्चैतानि युष्माकं मध्याद् दूरीभवन्तु। यूयं परस्परं हितैषिणः कोमलान्तःकरणाश्च भवत। अपरम् ईश्वरः ख्रीष्टेन यद्वद् युष्माकं दोषान् क्षमितवान् तद्वद् यूयमपि परस्परं क्षमध्वं।

---

## ५ पञ्चमोऽध्यायः।

१ अशुचिक्रियाः परित्यक्तुं तान् प्रति पौलस्य विनयः १५ सावधानतयाचरितुं तान् प्रति विनयस्र्च स्त्रीपुरुषयोः कर्त्तव्यकर्म्मकथनञ्च।

१ अतो यूयं प्रियबालका इवेश्वरस्यानुकारिणो भवत, ख्रीष्ट
२ इव प्रेमाचारं कुरुत च, यतः सोऽस्मासु प्रेम कृतवान् अस्माकं विनिमयेन चात्मनिवेदनं कृत्वा ग्राह्यसुगन्धार्थकम् उपहारं
३ बलिञ्चेश्वराय दत्तवान्। किन्तु वेश्यागमनं सर्व्वविधाशौचक्रिया लोभश्चैतेषाम् उच्चारणमपि युष्माकं मध्ये न भवतु,
४ एतदेव पवित्रलोकानाम् उचितं। अपरं कुत्सितालापः प्रलापः श्लेषोक्तिश्च न भवतु यत एतान्यनुचितानि किन्त्वी-
५ श्वरस्य धन्यवादो भवतु। वेश्यागाम्यशौचाचारी देवपूजक इव गण्यो लोभी चैतेषां कोऽपि ख्रीष्टस्य राज्येऽर्थत ईश्वरस्य राज्ये कमप्यधिकारं न प्राप्स्यतीति युष्माभिः सम्यक् ज्ञायतां।
६ अनर्थकवाक्येन कोऽपि युष्मान् न वञ्चयतु यतस्तादृगाचार-

हेतोरनाज्ञाग्राहिषु लोकेष्वीश्वरस्य कोपो वर्त्तते। तस्माद् ७
यूयं तैः सहभागिनो न भवत। पूर्व्वं यूयम् अन्धकारस्वरूपा ८
आध्वं किन्त्विदानीं प्रभुना दीप्तिस्वरूपा भवथ तस्माद् दीप्तेः
सन्ताना इव समाचरत। दीप्ते र्यत् फलं तत् सर्व्वविधहितैषि- ९
तायां धर्म्मे सत्यालापे च प्रकाशते। प्रभवे यद् रोचते तत् १०
परीक्षध्वं। यूयं तिमिरस्य विफलकर्म्मणाम् अंशिनो न भूत्वा ११
तेषां दोषित्वं प्रकाशयत। यतस्ते लोका रहसि यद् यद् आ- १२
चरन्ति तदुच्चारणम् अपि लज्जाजनकं। यतो दीप्त्या यद् १३
यत् प्रकाश्यते तत् तया चकास्यते यच्च चकास्ति तद् दीप्ति-
स्वरूपं भवति। एतत्कारणाद् उक्तम् आस्ते, १४

हे निद्रित प्रबुध्यस्व मृतेभ्यश्चोत्थितिं कुरु।
तत्कृते सूर्य्यवत् ख्रीष्टः स्वयं त्वां द्योतयिष्यति।

अतः सावधाना भवत, अज्ञाना इव माचरत किन्तु ज्ञा- १५
निन इव सतर्कम् आचरत। समयं बहुमूल्यं गणयध्वं यतः काला १६
अभद्राः। तस्माद् यूयम् अज्ञाना न भवत किन्तु प्रभोर- १७
भिमतं किं तदवगता भवत। सर्व्वनाशजनकेन सुरापानेन मत्ता १८
मा भवत किन्त्वात्मना पूर्य्यध्वं। अपरं गीतै र्गानैः पारमा- १९
र्थिककीर्त्तनैश्च परस्परम् आलपन्तो मनसा सार्द्धं प्रभुम् उद्दिश्य
गायत वादयत च। सर्व्वदा सर्व्वविषयेऽस्मत्प्रभो र्यीशोः ख्रीष्टस्य २०
नाम्ना तातम् ईश्वरं धन्यं वदत।

यूयम् ईश्वराद् भीताः सन्त अन्येऽपरेषां वशीभूता भवत। २१
हे योषितः, यूयं यथा प्रभोस्तथा स्वस्वस्वामिनो वशङ्गता २२
भवत। यतः ख्रीष्टो यद्वत् समिते र्मूर्द्धा शरीरस्य त्राता च २३
भवति तद्वत् स्वामी योषितो मूर्द्धा। अतः समिति र्यद्वत् २४

ख्रीष्टस्य वशीभूता तद्वद् योषिद्भिरपि स्वस्वस्वामिनो वशता
२५ स्वीकर्त्तव्या। अपरञ्च हे पुरुषाः, यूयं ख्रीष्ट इव स्वस्वयोषित्सु
२६ प्रीयध्वं। स ख्रीष्टोऽपि समितौ प्रीतवान् तस्याः कृते च स्वप्रा-
णान् त्यक्तवान् यतः स वाक्ये जलमज्जनेन तां परिष्कृत्य
२७ पावयितुम् अपरं तिलकवल्यादिविहीनां पवित्रां निष्कल-
ङ्काञ्च तां समितिं तेजस्विनीं कृत्वा स्वहस्ते समर्पयितुञ्चाभि-
२८ लषितवान्। तस्मात् स्वतनुवत् स्वयोषिति प्रेमकरणं पुरुष-
स्योचितं, येन स्वयोषिति प्रेम क्रियते तेनात्मप्रेम क्रियते ।
२९ कोऽपि कदापि न स्वकीयां तनुम् ऋतीयितवान् किन्तु सर्व्वे
तां विभ्रति पुष्णन्ति च। ख्रीष्टोऽपि समितिं प्रति तदेव करोति,
३० यतो वयं तस्य शरीरस्याङ्गानि मांसास्थीनि च भवामः। एत-
३१ दर्थं मानवः स्वमातापितरौ परित्यज्य स्वभार्य्यायाम् आसंक्ष्यति
३२ तौ द्वौ जनावेकाङ्गौ भविष्यतः। एतन्निगूढवाक्यं गुरुतरं मया
३३ च ख्रीष्टसमिती अधि तद् उच्यते । अतएव युष्माकम् एकैको
जन आत्मवत् स्वयोषिति प्रीयतां भार्य्यापि स्वामिनं समादर्त्तुं
यततां ।

---

## ६ षष्ठोऽध्यायः ।

१ बालकानां मातापित्रोश्च कर्त्तव्यकर्म्मकथनं ५ दासानां प्रभूनाञ्च कर्त्तव्यकर्म्मणः कथनं १० ईश्वरीयसज्जायां सज्जीभूतत्व तान् प्रति पौलस्य विनयः २१ तुखिकस्य प्रेषणं भ्रातॄन् प्रति नमस्कारज्ञापनञ्च ।

१ हे बालकाः, यूयं प्रभुम् उद्दिश्य पित्रोराज्ञाग्राहिणो भवत
२ यतस्तत् न्याय्यं। त्वं निजपितरं मातरञ्च सम्मन्यस्वेति यो विधिः
३ स प्रतिज्ञायुक्तः प्रथमो विधिः फलतस्तस्मात् तव कल्याणं देशे
४ च दीर्घकालम् आयु र्भविष्यतीति। अपरं हे पितरः, यूयं स्वबा-

लकान् मा रोषयत किन्तु प्रभो र्विनीत्यादेशाभ्यां तान् विन-
यत। हे दासाः, यूयं ख्रीष्टम् उद्दिश्य सभयाः कम्पान्विताश्च ५
भूत्वा सरलान्तःकरणैरैहिकप्रभूनाम् आज्ञाग्राहिणो भवत।
दृष्टिगोचरीयपरिचर्य्यया मानुषेभ्यो रोचितुं मा यतध्वं किन्तु ६
ख्रीष्टस्य दासा इव निविष्टमनोभिरीश्वरस्येच्छां साधयत।
मानवान् अनुद्दिश्य प्रभुमेवोद्दिश्य सद्भावेन दास्यकर्म्म कुरुध्वं। ७
दासमुक्तयो र्येन यत् सत्कर्म्म क्रियते तेन तस्य फलं प्रभुतो ८
लप्स्यत इति जानीत च। अपरं हे प्रभवः, युष्माभि र्भर्त्सनं ९
विहाय तान् प्रति न्याय्याचरणं क्रियतां यश्च कस्यापि पक्ष-
पातं न करोति युष्माकमपि तादृश एकः प्रभुः स्वर्गे विद्यत
इति ज्ञायतां।

अधिकन्तु हे भ्रातरः, यूयं प्रभुना तस्य विक्रमयुक्तशक्त्या १०
च बलवन्तो भवत। यूयं यत् शयतानश्छलानि निवारयितुं ११
शक्नुथ तदर्थम् ईश्वरीयसुसज्जां परिधद्ध्वं। यतः केवलं रक्त- १२
मांसाभ्याम् इति नहि किन्तु कर्तृत्वपराक्रमयुक्तैस्तिमिरराज्यस्ये-
हलोकस्याधिपतिभिः स्वर्गोद्भवै र्दुष्टात्मभिरेव सार्द्धम् अस्माभि
र्युद्धं क्रियते। अतो हेतो र्यूयं यया संकुले दिनेऽवस्थातुं सर्व्वाणि १३
पराजित्य दृढाः स्थातुञ्च शक्ष्यथ ताम् ईश्वरीयसुसज्जां गृ-
ह्लीत। वस्तुतस्तु सत्यत्वेन शृङ्खलेन कटिं बद्ध्वा पुण्येन वर्म्मणा वक्ष १४
आच्छाद्य शान्तेः सुवार्त्तया जातम् उत्साहं पादुकायुगलं पदे १५
समर्प्य तिष्ठत। येन च दुष्टात्मनोऽग्निबाणान् सर्व्वान् निर्व्वाप- १६
यितुं शक्ष्यथ तादृशं सर्व्वाच्छादकं फलकं विश्वासं धारयत।
शिरस्त्रं परित्राणम् आत्मनः खड्गञ्चेश्वरस्य वाक्यं धारयत। १७
सर्व्वसमये सर्व्वयाचनेन सर्व्वप्रार्थनेन चात्मना प्रार्थनां कुरुध्वं १८

तदर्थं दृढाकाङ्क्षया जाग्रतः सर्व्वेषां पवित्रलोकानां कृते सदा
१९ प्रार्थनां कुरुध्वं। अहञ्च यस्य सुसंवादस्य शृङ्खलबद्धः प्रचा-
रकदूतोऽस्मि तम् उपयुक्तेनोत्साहेन प्रचारयितुं यथा शक्नुयां
२० तथा निर्भयेन स्वरेणोत्साहेन च सुसंवादस्य निगूढवाक्यप्रचा-
राय वक्तृता यत् मह्यं दीयते तदर्थं ममापि कृते प्रार्थनां कुरुध्वं।
२१   अपरं मम यावस्थास्ति यच्च मया क्रियते तत् सर्व्वं यद्
युष्माभि र्ज्ञायते तदर्थं प्रभुना प्रियभ्राता विश्वास्यः परिचार-
२२ कश्च तुखिको युष्मान् तत् ज्ञापयिष्यति। यूयं यद् अस्माकम्
अवस्थां जानीथ युष्माकं मनांसि च यत् सान्त्वनां लभन्ते
२३ तदर्थमेवाहं युष्माकं सन्निधिं तं प्रेषितवान्। अपरम् ईश्वरः
प्रभु र्यीशुख्रीष्टश्च सर्व्वेभ्यो भ्रातृभ्यः शान्तिं विश्वाससहितं प्रेम
२४ च देयात्। ये केचित् प्रभौ यीशुख्रीष्टेऽक्षयं प्रेम कुर्व्वन्ति तान्
प्रति प्रसादो भूयात्। तथास्तु।

---

# फिलिपिनः प्रति पौलस्य प्रेरितस्य पत्रं।

## १ प्रथमोऽध्यायः।

१ मङ्गलाचरणं ३ फिलिपिनां प्रत्ययफलहेतोः पौलस्य धन्यवदनं तेषां कृते तस्य प्रार्थना च १२ ख्रीष्टस्य सुसंवादप्रचारणे तस्य दुःखकथनं २६ सुसंवादस्य विध्यनुसारेणाचरितुं विनयः शत्रुभ्यो भयं न कर्त्तुं तान् प्रति विनयश्च।

१   पौलतीमथिनामानौ यीशुख्रीष्टस्य दासौ फिलिपिनगर-
स्थान् ख्रीष्टयीशोः सर्व्वान् पवित्रलोकान् समितेरध्यक्षान्

परिचारकांश्च प्रति पत्रं लिखतः। अस्माकं तात ईश्वरः प्रभु २
र्यीशुख्रीष्टश्च युष्मभ्यं प्रसादस्य शान्तेश्च भोगं देयास्तां।

अहं निरन्तरं निजसर्व्वप्रार्थनासु युष्माकं सर्व्वेषां कृते ३
सानन्दं प्रार्थनां कुर्व्वन् यति वारान् युष्मान् स्मरामि तति ४
वारान् आ प्रथमाद् अद्य यावद् युष्माकं सुसंवादभागित्वका- ५
रणाद् ईश्वरं धन्यं वदामि। युष्मन्मध्ये येनोत्तमं कर्म्म कर्त्तुम् ६
आरम्भि तेनैव यीशुख्रीष्टस्य दिनं यावत् तत् साधयिष्यत
इत्यस्मिन् दृढविश्वासो ममास्ते। युष्मान् सर्व्वान् अधि मम ७
तादृशो भावो यथार्थो यतोऽहं कारावस्थायां प्रत्युत्तरकरणे
सुसंवादस्य प्रामाण्यकरणे च युष्मान् सर्व्वान् मया सार्द्धम्
एकानुग्रहस्य भागिनो मत्वा स्वहृदये धारयामि। अपरम् ८
अहं ख्रीष्टयीशोः स्नेहवत् स्नेहेन युष्मान् कीदृशं काङ्क्षामि
तदधीश्वरो मम साक्षी विद्यते। मया यत् प्रार्थ्यते तद् इदं ९
युष्माकं प्रेम नित्यं वृद्धिं गत्वा ज्ञानस्य विशिष्टानां परीक्षि- १०
कायाश्च सर्व्वविधबुद्धे र्बाहुल्यं फलतु, ख्रीष्टस्य दिनं यावद् ११
युष्माकं सारल्यं निर्विघ्नत्वञ्च भवतु, ईश्वरस्य गौरवाय प्रशंसायै
च यीशुना ख्रीष्टेन पुण्यफलानां पूर्णता युष्मभ्यं दीयताम् इति।

हे भ्रातरः, मां प्रति यद् यद् घटितं तेन सुसंवादप्रचा- १२
रस्य बाधा नहि किन्तु वृद्धिरेव जाता तद् युष्मान् ज्ञापयितुं
कामयेऽहं। अपरम् अहं ख्रीष्टस्य कृते बद्धोऽस्मीति राज- १३
पुर्य्याम् अन्यस्थानेषु च सर्व्वेषां निकटे सुस्पष्टम् अभवत्, प्रभु- १४
सम्बन्धीया अनेके भ्रातरश्च मम बन्धनाद् आश्वासं प्राप्य वर्द्ध-
मानेनोत्साहेन निःक्षोभं कथां प्रचारयन्ति। केचिद् द्वेषाद् १५
विरोधाच्चापरे केचिच्च सद्भावात् ख्रीष्टं घोषयन्ति; ये विरो- १६

धात् ख्रीष्टं घोषयन्ति ते पवित्रभावात् तन्न कुर्व्वन्तो मम
१७ बन्धनानि बहुतरक्लेशदायीनि कर्त्तुम् इच्छन्ति । ये च प्रेम्ना
घोषयन्ति ते सुसंवादस्य प्रामाण्यकरणेऽहं नियुक्तोऽस्मीति
१८ ज्ञात्वा तत् कुर्व्वन्ति । किं बहुना ? कापट्यात् सरलभावाद्
वा भवेत्, येन केनचित् प्रकारेण ख्रीष्टस्य घोषणा भवतीत्य-
१९ स्मिन् अहम् आनन्दाम्यानन्दिष्यामि च । युष्माकं प्रार्थनया
यीशुख्रीष्टस्यात्मनश्चोपकारेण तत् मन्निस्तारजनकं भविष्यतीति
२० जानामि । तत्र च ममाकाङ्क्षा प्रत्याशा च सिद्धिं गमिष्यति
फलतोऽहं केनापि प्रकारेण न लज्जिष्ये किन्तु गते सर्व्वस्मिन्
काले यद्वत् तद्वद् इदानीमपि सम्पूर्णोत्साहद्वारा मम शरी-
२१ रेण ख्रीष्टस्य महिमा जीवने मरणे वा प्रकाशिष्यते । यतो मम
२२ जीवनं ख्रीष्टाय मरणञ्च लाभाय । किन्तु यदि शरीरे मया
जीवितव्यं तर्हि तत् कर्म्मफलं फलिष्यति तस्मात् किं वरितव्यं
२३ तन्मया न ज्ञायते । द्वाभ्याम् अहं सम्पीड्ये, देहवासत्यजनाय
ख्रीष्टेन सहवासाय च ममाभिलाषो भवति यतस्तत् सर्व्वो-
२४ त्तमं । किन्तु देहे ममावस्थित्या युष्माकम् अधिकप्रयोजनं ।
२५ अहम् अवस्थास्ये युष्माभिः सर्व्वैः सार्द्धम् अवस्थितिं करिष्ये च
तया च विश्वासे युष्माकं वृद्ध्यानन्दौ जनिष्येते तदहं निश्चितं
२६ जानामि । तेन च मत्तोऽर्थतो युष्मत्समीपे मम पुनरुपस्थितत्वात्
यूयं ख्रीष्टेन यीशुना बहुतरम् आह्लादं लप्स्यध्वे ।

२७ यूयं सावधाना भूत्वा ख्रीष्टस्य सुसंवादस्योपयुक्तम् आचारं
कुरुध्वं यतोऽहं युष्मान् उपागत्य साक्षात् कुर्व्वन् किं वा दूरे
तिष्ठन् युष्माकं यां वार्त्तां श्रोतुम् इच्छामि सेयं यूयम्
एकात्मानस्तिष्ठथ, एकमनसा सुसंवादसम्बन्धीयविश्वासस्य पक्षे

यतध्वे, विपक्षैश्च केनापि प्रकारेण न व्याकुलीक्रियध्व इति। २८
तत् तेषां विनाशस्य लक्षणं युष्माकञ्चेश्वरदत्तं परित्राणस्य
लक्षणं भविष्यति। यतो येन युष्माभिः ख्रीष्टे केवलविश्वासः २९
क्रियते तन्नहि किन्तु तस्य कृते क्लेशोऽपि सह्यते तादृशो वरः
ख्रीष्टस्यानुरोधाद् युष्माभिः प्रापि, तस्मात् मम यादृशं युद्धं ३०
युष्माभिरदर्शि साम्प्रतं श्रूयते च तादृशं युद्धं युष्माकम् अपि
भवति।

---

## २ द्वितीयोऽध्यायः।

१ परस्परं प्रेम कर्त्तुं विनयः ५ ख्रीष्टस्य दृष्टान्तेन नम्रीभवितुं विनयः १२ अन्य-लोकानां तेषाञ्च फलार्थं धर्म्ममाचरितुं विनयः १७ तेषां सेवां कर्त्तुं पौलस्य वाञ्छा तेषां निकटं तीमथियम् इपाफ्रदीतञ्च प्रेरयितुम् ईहा च।

ख्रीष्टाद् यदि किमपि सान्त्वनं कश्चित् प्रेमजातो हर्षः १
किञ्चिद् आत्मनः समभागित्वं काचिद् अनुकम्पा कृपा वा जायते
तर्हि यूयं ममाह्लादं पूरयन्त एकभावा एकप्रेमाण एकमनस २
एकचेष्टाश्च भवत। विरोधाद् दर्पाद् वा किमपि मा कुरुत ३
किन्तु नम्रतया स्वेभ्योऽपरान् विशिष्टान् मन्यध्वं। केवलम् ४
आत्महिताय न चेष्टमानाः परहितायापि चेष्टध्वं।

ख्रीष्टस्य यीशो र्यादृशः स्वभावो युष्माकम् अपि तादृशो ५
भवतु। स ईश्वररूपी सन् स्वकीयाम् ईश्वरतुल्यतां श्लाघास्पदं ६
नामन्यत, किन्तु स्वं शून्यं कृत्वा दासरूपी बभूव नराकृतिं ७
लेभे च। इत्थं नरमूर्त्तिम् आश्रित्य नम्रतां स्वीकृत्य मृत्योर- ८
र्थतः क्रुशीयमृत्योरेव भोगायाज्ञाग्राही बभूव। तत्कारणाद् ९
ईश्वरोऽपि तं सर्व्वोन्नतं चकार यच्च नाम सर्व्वेषां नाम्नां श्रेष्ठं
तदेव तस्मै ददौ, ततस्तस्मै यीशुनाम्ने स्वर्गमर्त्यपातालस्थितैः १०

११ सर्व्वै र्जानुपातः कर्त्तव्यः, तातस्येश्वरस्य महिम्ने च यीशुख्रीष्टः प्रभुरिति जिह्वाभिः स्वीकर्त्तव्यं।

१२ अतो हे प्रियतमाः, युष्माभि र्यद्वत् सर्व्वदा क्रियते तद्वत् केवले ममोपस्थितिकाले तन्नहि किन्त्विदानीम् अनुपस्थितेऽपि मयि बहुतरयत्नेनाज्ञां गृहीत्वा भयकम्पाभ्यां स्वस्वपरित्राणं

१३ साध्यतां। यत ईश्वर एव स्वकीयानुरोधाद् युष्मन्मध्ये मन-

१४ स्कामनां कर्म्मसिद्धिञ्च विदधाति। यूयं कलहविवादवर्जितम्

१५ आचारं कुर्व्वन्तोऽनिन्दनीया अकुटिला ईश्वरस्य निष्कलङ्काश्च सन्तानाइव वक्रभावानां कुटिलाचारिणाञ्च लोकानां मध्ये

१६ तिष्ठत, यतस्तेषां मध्ये यूयं जीवनवाक्यं धारयन्तो जगतो दीपका इव दीप्यध्वे। युष्माभिस्तथा कृते मम यत्नः परिश्रमो वा न निष्फलो जात इत्यहं ख्रीष्टस्य दिने श्लाघां कर्त्तुं शक्ष्यामि।

१७ युष्माकं विश्वासार्थकाय बलिदानाय सेवनाय च यद्यप्यहं निवेदितव्यो भवेयं तथापि तेनानन्दामि सर्व्वेषां युष्माकम्

१८ आनन्दस्यांशी भवामि च। तद्वद् यूयमप्यानन्दत मदीया-

१९ नन्दस्यांशिनो भवत च। युष्माकम् अवस्थाम् अवगत्याहमपि यत् सान्त्वनां प्राप्नुयां तदर्थं तीमथियं त्वरया युष्मत्समीपं प्रेष-

२० यिष्यामीति प्रभौ प्रत्याशां कुर्व्वे। यः सत्यरूपेण युष्माकं हितं चिन्तयति तादृश एकभावस्तस्मादन्यः कोऽपि मम सन्निधौ

२१ नास्ति। यतोऽपरे सर्व्वे यीशोः ख्रीष्टस्य विषयान् न चिन्त-

२२ यन्त आत्मविषयान् चिन्तयन्ति। किन्तु तस्य परीक्षितत्वं युष्माभि र्ज्ञायते यतः पुत्रो यादृक् पितुः सहकारी भवति

२३ तथैव सुसंवादस्य परिचर्य्यायां स मम सहकारी जातः। अत-

एव मम भाविदशां ज्ञात्वा तत्क्षणात् तमेव प्रेषयितुं प्रत्याशां २४
कुर्व्वे स्वयम् अहमपि तूर्णं युष्मत्समीपं गमिष्यामीत्याशां प्रभुना
कुर्व्वे। अपरं य इपाफ्रदीतो मम भ्राता कर्म्मयुद्धाभ्यां मम २५
सहायश्च युष्माकं दूतो मदीयोपकाराय प्रतिनिधिश्चास्ति
युष्मत्समीपे तस्य प्रेषणम् आवश्यकम् अमन्ये। यतः स युष्मान् २६
सर्व्वान् अकाङ्क्षत युष्माभिस्तस्य रोगस्य वार्त्ताश्रावीति बुद्ध्वा
पर्य्यशोचच्च। स पीडया मृतकल्पोऽभवदिति सत्यं किन्त्वी- २७
श्वरस्तं दयितवान् मम च दुःखात् परं पुनर्दुःखं यन्न भवेत्
तदर्थं केवलं तं न दयित्वा मामपि दयितवान्। अतएव यूयं २८
तं विलोक्य यत् पुनरानन्देत ममापि दुःखस्य ह्रासो यद्
भवेत् तदर्थम् अहं त्वरया तम् अप्रेषयं। अतो यूयं प्रभोः कृते २९
सम्पूर्णेनानन्देन तं गृह्लीत तादृशान् लोकांश्चादरणीयान्
मन्यध्वं। यतो मम सेवने युष्माकं त्रुटिं पूरयितुं स प्राणान् ३०
पणीकृत्य ख्रीष्टस्य कार्य्यार्थं मृतप्रायोऽभवत्।

---

## ३ तृतीयोऽध्यायः।

१ त्वक्छेदादिभिः परित्राणाभावः केवलख्रीष्टविश्वासेन परित्राणं, ख्रीष्टं प्राप्तुं पौल-
स्योद्योगः १७ दुष्टलोकानाम् अनुगामिनो न भवितुं स्वस्यानुगामिनो भवितुं
विनयश्च।

हे भ्रातरः, शेषे वदामि यूयं प्रभावानन्दत। पुनः पुन- १
रेकस्य वचो लेखनं मम क्लेशदं नहि युष्मदर्थञ्च भ्रमनाशकं
भवति। यूयं कुक्कुरेभ्यः सावधाना भवत दुष्कर्म्मकारिभ्यः २
सावधाना भवत छिन्नमूलेभ्यो लोकेभ्यश्च सावधाना भवत।
वयमेव छिन्नत्वचो लोका यतो वयम् आत्मनेश्वरं सेवामहे ३
ख्रीष्टेन यीशुना श्लाघामहे शरीरेण च प्रगल्भतां न कुर्व्वामहे।

४ किन्तु शरीरे मम प्रगल्भताया: कारणं विद्यते, अपर: कश्चिद् यदि शरीरेण प्रगल्भतां चिकीर्षति तर्हि तस्माद् अपि मम प्र-
५ गल्भताया गुरुतरं कारणं विद्यते। यतोऽहम् अष्टमदिवसे त्वक्छेदप्राप्त इस्रायेल्वंशीयो बिन्यामीनगोष्ठीय इब्रिकुलजात
६ इब्रीयो व्यवस्थाचरणे फिरूशी धर्म्मोत्साहकारणात् समितेरुप-
७ द्रवकारी व्यवस्थातो लभ्ये पुण्ये चानिन्दनीयः। किन्तु मम यद्यत् लभ्यम् आसीत् तत् सर्व्वम् अहं ख्रीष्टस्यानुरोधात् चतिम्
८ अमन्ये। किञ्चाधुनाप्यहं मत्प्रभोः ख्रीष्टस्य यीशो र्ज्ञानस्योत्कृ-
९ ष्टतां बुद्धा तत् सर्व्वं चतिं मन्ये। यतो हेतोरहं यत् ख्रीष्टं लभेय व्यवस्थातो जातं स्वकीयपुण्यञ्च न धारयन् किन्तु ख्रीष्टे विश्वसनात् लभ्यं यत् पुण्यम् ईश्वरेण विश्वासं दृष्ट्वा दीयते तदेव धारयन् यत् ख्रीष्टे विद्येय तदर्थं तस्यानुरोधात् सर्व्वेषां चतिं
१० स्वीकृत्य तानि सर्व्वाण्यवकरानिव मन्ये। यतो हेतोरहं ख्रीष्टं तस्य पुनरुत्थिते र्गुणं तस्य दुःखानां भागित्वञ्च ज्ञात्वा तस्य
११ मृत्योराकृतिञ्च गृहीत्वा येन केनचित् प्रकारेण मृतानां पुन-
१२ रुत्थितिं प्राप्तुं यते। मया तत् सर्व्वम् अधुना प्रापि सिद्धता वालम्भि तन्नहि किन्तु यदर्थम् अहं ख्रीष्टेन धारितस्तद्
१३ धारयितुं धावामि। हे भ्रातरः, मया तद् धारितम् इति न मन्यते किन्त्वेतदेकमात्रं वदामि यानि पश्चात् स्थितानि तानि
१४ विस्मृत्याहम् अग्रस्थितान्युद्दिश्य पूर्णयत्नेन लक्ष्यं प्रति धावन् ख्रीष्टयीशुनोर्द्ध्वात् माम् आह्वयत ईश्वरात् जेतृपणं प्राप्तुं
१५ चेष्टे। अस्माकं मध्ये ये सिद्धास्तैः सर्व्वैस्तदेव भाव्यतां, यदि च कञ्चन विषयम् अधि युष्माकम् अपरो भावो भवति तर्हीश्वरस्तमपि युष्माकं प्रति प्रकाशयिष्यति। किन्तु वयं यद्यद्

अवगता आस्मस्तत्रास्माभिरेको विधिराचरितव्य एकभावै र्भवितव्यञ्च।

हे भ्रातरः, यूयं ममानुगामिनो भवत वयञ्च यादृगाच- १७ रणस्य निदर्शनस्वरूपा भवामस्तादृगाचारिणो लोकान् आ- लोकयध्वं। यतोऽनेके विपथे चरन्ति ते च ख्रीष्टस्य क्रुशस्य १८ शत्रव इति पुरा मया पुनः पुनः कथितम् अधुनापि रुदता मया कथ्यते। तेषां शेषदशा सर्व्वनाश उदरश्चेश्वरो लज्जा च १९ श्लाघा पृथिव्याञ्च लग्नं मनः। किन्त्वस्माकं जनपदः स्वर्गे वि- २० द्यते तस्माच्चागमिष्यन्तं त्रातारं प्रभुं यीशुख्रीष्टं वयं प्रतीक्षा- महे। स च यया शक्त्या सर्व्वाण्येव स्वस्य वशीकर्त्तुं पारयति २१ तयास्माकम् अधमं शरीरं रूपान्तरीकृत्य स्वकीयतेजोमय- शरीरस्य समाकारं करिष्यति।

---

## ४ चतुर्थोऽध्यायः।

१ विशेषं निवेदनं ४ नाना धर्म्मकर्म्मार्थम् उपदेशः १० पौलस्य कृतज्ञत्वं नमस्कारप्रेरणञ्च।

हे मदीयानन्दमुकुटस्वरूपाः प्रियतमा अभीष्टतमा भ्रा- १ तरः, हे मम स्नेहपात्राः, यूयम् इत्थं प्रभौ स्थिरास्तिष्ठत। हे इवदिये हे सुन्तुखि युवां प्रभौ एकभावे भवतम् एतद् अहं २ प्रार्थये। हे मम सत्य सहकारिन् त्वामपि विनीय वदामि ३ एतयोरुपकारस्त्वया क्रियतां यतस्ते क्लीमिनादिभिः सहका- रिभिः सार्द्धं सुसंवादप्रचारणाय मम साहाय्यार्थं परिश्रमम् अकुर्व्वतां तेषां सर्व्वेषां नामानि च जीवनपुस्तके लिखितानि विद्यन्ते।

४ यूयं प्रभौ सर्व्वदानन्दत। पुन र्वदामि यूयम् आनन्दत।
५ युष्माकं विनीतत्वं सर्व्वमानवै र्ज्ञायतां, प्रभुः सन्निधौ विद्यते।
६ यूयं किमपि न चिन्तयत किन्तु धन्यवादयुक्ताभ्यां प्रार्थना-
७ याञ्चाभ्यां सर्व्वविषये स्वप्रार्थनीयम् ईश्वराय निवेदयत। तथा
कृत ईश्वरीया या शान्तिः सर्व्वां बुद्धिम् अतिशेते सा युष्माकं
८ चित्तानि मनांसि च ख्रीष्टे यीशौ रक्षिष्यति। हे भ्रातरः,
शेषे वदामि यद्यत् सत्यम् आदरणीयं न्याय्यं साधु प्रियं सुख्या-
तम् अन्येन येन केनचित् प्रकारेण वा गुणयुक्तं प्रशंसनीयं
९ वा भवति तत्रैव मनांसि निधध्वं। यूयं मां दृष्ट्वा श्रुत्वा च
यद्यत् शिक्षितवन्तो गृहीतवन्तश्च तदेवाचरत तस्मात् शान्ति-
दायक ईश्वरो युष्माभिः सार्द्धं स्थास्यति।

१० ममोपकाराय युष्माकं या चिन्ता पूर्व्वम् आसीत् किन्तु
कर्म्मद्वारं न प्राप्नोत् इदानीं सा पुनरफलत् इत्यस्मिन् प्रभौ
११ मम परमाह्लादोऽजायत। अहं यद् दैन्यकारणाद् इदं वदामि
तन्नहि यतो मम या काचिद् अवस्था भवेत् तस्यां सन्तोष्टुम्
१२ अशिक्षयं। दरिद्रतां भोक्तुं शक्नोमि धनाढ्यताम् अपि भोक्तुं
शक्नोमि सर्व्वथा सर्व्वविषयेषु विनीतोऽहं प्रचुरतां क्षुधाञ्च धनं
१३ दैन्यञ्चावगतोऽस्मि। मम शक्तिदायकेन ख्रीष्टेन सर्व्वमेव मया
१४ शक्यं भवति। किन्तु युष्माभि र्दैन्यनिवारणाय माम् उपकृत्य
१५ सत्कर्म्माकारि। हे फिलिपीयलोकाः, सुसंवादस्योदयकाले
यदाहं माकिदनियादेशात् प्रतिष्ठे तदा केवलान् युष्मान् वि-
नापरया कयापि समित्या सह दानादानयो र्मम कोऽपि
१६ सम्बन्धो नासीद् इति यूयमपि जानीथ। यतो युष्माभि र्मम
प्रयोजनाय थिषलनीकीनगरमपि मां प्रति पुनः पुनर्दानं

प्रेषितं। अहं यद् दानं मृगये तन्नहि किन्तु युष्माकं लाभ- १७
वर्द्धकं फलं मृगये। किन्तु मम कस्याप्यभावो नास्ति सर्व्वं प्रचु- १८
रम् आस्ते यत ईश्वरस्य ग्राह्यं तुष्टिजनकं सुगन्धिनैवेद्यस्वरूपं
युष्माकं दानं इपाफ्रदिताद् गृहीत्वाहं परितृप्तोऽस्मि। ममे- १९
श्वरोऽपि ख्रीष्टेन यीशुना स्वकीयविभवनिधितः प्रयोजनीयं
सर्व्वविषयं पूर्णरूपं युष्मभ्यं देयात्। अस्माकं पितुरीश्वरस्य २०
धन्यवादोऽनन्तकालं यावद् भवतु। आमेन्। यूयं यीशुख्रीष्ट- २१
स्यैकैकं पवित्रजनं नमस्कुरुत। मम सङ्गिभ्रातरो युष्मान् नम-
स्कुर्व्वते। सर्व्वे पवित्रलोका विशेषतः कैसरस्य परिजना २२
युष्मान् नमस्कुर्व्वते। अस्माकं प्रभो र्यीशुख्रीष्टस्य प्रसादः २३
सर्व्वान् युष्मान् प्रति भूयात्। आमेन्।

---

# कलसिनः प्रति पौलस्य प्रेरितस्य पत्रं।

## १ प्रथमोऽध्यायः।

१ मङ्गलाचरणं ३ कलसीयलोकानां विश्वासनिमित्तं पौलस्य धन्यवदनं ९ तेषां पारमार्थिकमङ्गलार्थं तस्य प्रार्थना ख्रीष्टस्येश्वरत्वस्य प्रमाणं तान् प्रति ख्रीष्टस्यानुग्रहः २४ सुसंवादं प्रचारयितुं पौलस्य तदनुग्रहप्राप्तिश्च।

ईश्वरस्येच्छया यीशुख्रीष्टस्य प्रेरितः पौलस्तीमथियो १
भ्राता च कलसीनगरस्थान् पवित्रान् विश्वस्तान् ख्रीष्टाश्रित-
भ्रातॄन् प्रति पत्रं लिखतः। अस्माकं तात ईश्वरः प्रभु र्यीशु- २
ख्रीष्टश्च युष्मान् प्रति प्रसादं शान्तिञ्च क्रियास्तां।

ख्रीष्टे यीशौ युष्माकं विश्वासस्य सर्व्वान् पवित्रलोकान् ३

४ प्रति प्रेम्नश्च वार्त्तां श्रुत्वा वयं सदा युष्मदर्थं प्रार्थनां कुर्व्वन्तः स्वर्गे निहिताया युष्माकं भाविसम्पदः कारणात् स्वकीयप्रभो ५ र्यीशुख्रीष्टस्य तातम् ईश्वरं धन्यं वदामः। यूयं तस्या भावि- ६ सम्पदो वार्त्तां यया सुसंवादरूपिण्या सत्यवाण्या ज्ञापिताः सा यद्वत् कृत्स्नं जगद् अभिगच्छति तद्वद् युष्मान् अप्यभ्यगमत्, यूयञ्च यद् दिनम् आरभ्येश्वरस्यानुग्रहस्य वार्त्तां श्रुत्वा सत्य- रूपेण ज्ञातवन्तस्तदारभ्य युष्माकं मध्येऽपि फलति वर्द्धते च। ७ अस्माकं प्रियः सहदासो युष्माकं कृते च ख्रीष्टस्य विश्वस्तपरि- ८ चारको य इपफ्रास्तद् वाक्यं युष्मान् आदिष्टवान् स एवास्मान् आत्मना जनितं युष्माकं प्रेम ज्ञापितवान्।

९ वयं यद् दिनम् आरभ्य तां वार्त्तां श्रुतवन्तस्तदारभ्य नि- रन्तरं युष्माकं कृते प्रार्थनां कुर्म्मः फलतो यूयं यत् पूर्णा- भ्याम् आत्मिकज्ञानबुद्धिभ्याम् ईश्वरस्याभिमतं सम्पूर्णरूपेणा- १० वगच्छेत, प्रभो र्योग्यं सर्व्वथा सन्तोषजनकञ्चाचारं कुर्य्याता- ११ र्थत ईश्वरज्ञाने वर्द्धमानाः सर्व्वसत्कर्म्मरूपं फलं फलेत, यथा चेश्वरस्य महिमयुक्तया शक्त्या सानन्देन पूर्णां सहिष्णुतां तितिक्षाञ्चाचरितुं शक्ष्यथ तादृशेन पूर्णबलेन यद् बलवन्तो १२ भवेत, यश्च पिता तेजोवासिनां पवित्रलोकानाम् अधिका- रस्यांशित्वायास्मान् योग्यान् कृतवान् तं यद् धन्यं वदेत १३ वरम् एनं याचामहे। यतः सोऽस्मान् तिमिरस्य कर्त्तृत्वाद् १४ उद्धृत्य स्वकीयस्य प्रियपुत्रस्य राज्ये स्थापितवान्। तस्मात् पुत्राद् १५ वयं परित्राणम् अर्थतः पापमोचनं प्राप्तवन्तः। स चादृ- १६ श्यस्येश्वरस्य प्रतिमूर्त्तिः कृत्स्नायाः सृष्टेरादिकर्त्ता च। यतः सर्व्वमेव तेन ससृजे सिंहासनराजत्वपराक्रमादीनि स्वर्गमर्त्त्य-

स्थितानि दृश्यादृश्यानि वस्तूनि सर्व्वाणि तेनैव तस्मै च ससृजिरे। स सर्व्वेषाम् आदिः सर्व्वेषां स्थितिकारकश्च। सएव १७ समितिरूपायास्तनो र्मूर्द्धा किञ्च सर्व्वविषये स यद् अग्रियो १८ भवेत् तदर्थं स एव मृतानां मध्यात् प्रथमत उत्थितोऽग्रश्च। यत १९ ईश्वरस्य कृत्स्नं पूर्णत्वं तमेवावासयितुं क्रुशे पातितेन तस्य रक्तेन २० सन्धिं विधाय तेनैव स्वर्गमर्त्त्यस्थितानि सर्व्वाणि स्वेन सह सन्धापयितुञ्चेश्वरेणाभिलेषे। पूर्व्वं दूरस्था दुष्क्रियारतमन- २१ स्कत्वात् तस्य रिपवश्चास्त ये यूयं तान् युष्मान् अपि स इदानीं तस्य मांसलशरीरे मरणेन स्वेन सह सन्धापितवान्। यतः स २२ स्वसम्मुखे पवित्रान् निष्कलङ्कान् अनिन्दनीयांश्च युष्मान् स्था- पयितुम् इच्छति। किन्त्वेतदर्थं युष्माभि र्बद्धमूलैः सुस्थिरैश्च २३ भवितव्यम्, आकाशमण्डलस्याधःस्थितानां सर्व्वलोकानां मध्ये च घुष्यमाणो यः सुसंवादो युष्माभिरश्रावि तज्जातायां प्रत्या- शायां युष्माभिरचलै र्भवितव्यं।

तस्य सुसंवादस्यैकः परिचारको योऽहं पौलः सोऽहम् २४ इदानीम् आनन्देन युष्मदर्थं दुःखानि सहे ख्रीष्टस्य क्लेशभोगस्य योंशोऽपूर्णस्तमेव तस्य तनोः समितेः कृते स्वशरीरे पूरयामि च। यत ईश्वरस्य मन्त्रणया युष्मदर्थम् ईश्वरीयवाक्यस्य २५ प्रचारस्य भारो मयि समर्पितस्तस्माद् अहं तस्याः समितेः परिचारकोऽभवं। तत् निगूढं वाक्यं पूर्व्वयुगेषु पूर्व्वपुरुषेभ्यः २६ प्रच्छन्नम् आसीत् किन्त्विदानीं तस्य पवित्रलोकानां सन्निधौ तेन प्राकाश्यत। यतो भिन्नजातीयानां मध्ये तत् निगूढवाक्यं २७ कीदृग्गौरवनिधिसम्बलितं तत् पवित्रलोकान् ज्ञापयितुम् ईश्वरोऽभ्यलषत्। युष्मन्मध्यवर्त्ती ख्रीष्ट एव स निधि र्गौरवाशा-

२८ भूमिश्च। तस्माद् वयं तमेव घोषयन्तो यद् एकैकं मानवं सि-
द्धीभूतं ख्रीष्टे स्थापयेम तदर्थमेकैकं मानवं प्रबोधयामः पूर्ण-
२९ ज्ञानेन चैकैकं मानवं उपदिशामः। एतदर्थं तस्य या शक्तिः
प्रबलरूपेण मम मध्ये प्रकाशते तयाहं यतमानः श्राम्यामि।

---

## २ द्वितीयोऽध्यायः।

१ ख्रीष्टधर्म्मे स्थातुं तान् प्रति पौलस्य विनयः ८ निरर्थककापट्यविद्याया निषेधः १६ दिव्यदूतानां पूजाया निषेधः २० सांसारिककर्म्मसूत्रं मानुषाणां विधिश्च त्यक्तुं निवेदनञ्च।

१ युष्माकं लायदिकेयास्थभ्रातॄणाञ्च कृते यावन्तो भ्रात-
रश्च मम शारीरिकमुखं न दृष्टवन्तस्तेषां कृते मम कियान्
२ यत्नो भवति तद् युष्मान् ज्ञापयितुम् इच्छामि। फलतः
पूर्णबुद्धिरूपधनभोगाय प्रेम्ना संयुक्तानां तेषां मनांसि यत्
पितुरीश्वरस्य ख्रीष्टस्य च निगूढवाक्यस्य ज्ञानार्थं सान्त्वनां
३ प्राप्नुयुरित्यर्थमहं यते। यतो विद्याज्ञानयोः सर्व्वे निधयः ख्रीष्टे
४ गुप्ताः सन्ति। कोऽपि युष्मान् विनयवाक्येन यन्न वञ्चयेत् तद-
५ र्थम् एतानि मया कथ्यन्ते। युष्मत्सन्निधौ मम शरीरेऽवर्त्त-
मानेऽपि ममात्मा वर्त्तते तेन युष्माकं सुरीतिं ख्रीष्टविश्वासे
६ स्थिरत्वञ्च दृष्ट्वाहम् आनन्दामि। अतो यूयं प्रभुं यीशुख्रीष्टं
७ यादृग् गृहीतवन्तस्तादृक् तम् अनुचरत। तस्मिन् बद्धमूलाः
स्थापिताश्च भवत या च शिक्षा युष्माभि र्लब्धा तदनुसाराद्
विश्वासे सुस्थिराः सन्तस्तेनैव नित्यं धन्यवादं कुरुत।

८ सावधाना भवत मानुषिकशिक्षात इहलोकस्य वर्णमाला-
तश्चोत्पन्ना ख्रीष्टस्य विपक्षा या दर्शनविद्या मिथ्याप्रतारणा च
९ तया कोऽपि युष्माकं क्षतिं न जनयतु। यत ईश्वरस्य कृत्स्ना

पूर्णता मूर्त्तिमती ख्रीष्टे वसति। यूयञ्च तेन पूर्णा भवथ यतः स १०
सर्व्वेषां राजत्वकर्त्तृत्वपदानां मूर्द्धास्ति, तेन च यूयम् अहस्त- ११
कृतत्वक्छेदेनार्थतो येन शारीरपापानां विग्रहस्त्यज्यते तेन
ख्रीष्टस्य त्वक्छेदेन छिन्नत्वचो जाता मज्जने च तेन सार्द्धं श्मशानं १२
प्राप्ताः पुन र्मृतानां मध्यात् तस्योत्थापयितुरीश्वरस्य शक्तेः
फलं यो विश्वासस्तद्वारा तस्मिन्नेव मज्जने तेन सार्द्धम् उत्था-
पिता अभवत। स च युष्मान् अपराधैः शारीरिकात्वक्छेदेन च १३
मृतान् दृष्ट्वा तेन सार्द्धं जीवितवान् युष्माकं सर्व्वान् अपराधान्
क्षमितवान्, यच्च दण्डाज्ञारूपं ऋणपत्रम् अस्माकं विरुद्धम् १४
आसीत् तत् प्रमार्ज्जितवान् शलाकाभिः क्रुशे बद्ध्वा दूरीकृत-
वांश्च। किञ्च तेन राजत्वकर्त्तृत्वपदानि निस्तेजांसि कृत्वा परा- १५
जितान् रिपूनिव प्रगल्भतया सर्व्वेषां दृष्टिगोचरे ह्रेपितवान्।

अतो हेतोः खाद्याखाद्ये पेयापेये उत्सवः प्रतिपद् विश्राम- १६
वारश्चैतेषु सर्व्वेषु युष्माकं न्यायाधिपतिरूपं कमपि मा गृह्णीत।
यत एतानि छायास्वरूपाणि किन्तु सत्या मूर्त्तिः ख्रीष्टः। १७
अपरञ्च नम्रता स्वर्गदूतानां सेवा चैतादृशम् इष्टकर्म्माचरन् यः १८
कश्चित् परोक्षविषयान् प्रविशति स्वकीयशारीरिकभावेन च
मुधा गर्व्वितः सन् सन्धिभिः शिराभिश्चोपकृतं संयुक्तञ्च कृत्स्नं १९
शरीरं यस्मात् मूर्द्धत ईश्वरीयवृद्धिं प्राप्नोति तं मूर्द्धानं न
धारयति तेन मानवेन युष्मत्तः फलापहरणं नानुजानीत।

यदि यूयं ख्रीष्टेन सार्द्धं संसारस्य वर्णमालायै मृता अभ- २०
वत तर्हि ये द्रव्यै र्भोगेन क्षयं गन्तव्यं तानि मा स्पृश मा भुंक्ष्व २१
—''ह्याणेति मानवैरादिष्टान् शिक्षितांश्च विधीन् आचरन्तो २२
यूयं कुतः संसारे जीवन्त इव भवथ? ते विधयः स्वेच्छाभक्त्या २३

नम्रतया शरीरक्लेशनेन च ज्ञानविधिवत् प्रकाशन्ते तथापि तेऽगण्याः शारीरिकभाववर्द्धकाश्च सन्ति ।

---

## ३ तृतीयोऽध्यायः ।

१ स्वर्गस्थख्रीष्टस्योपरि मनो निधातुं पौलस्य विनयः ५ पापदमनार्थं नानाधर्म्मकर्म्मकरणार्थञ्च निवेदनं १८ स्त्रीपुरुषयो र्बालकानां मातापित्रो र्दासानां प्रभूनाञ्च कर्त्तव्यकर्म्मनिर्णयः ।

१ यदि यूयं ख्रीष्टेन सार्द्धम् उत्थापिता अभवत तर्हि यस्मिन् स्थाने ख्रीष्ट ईश्वरस्य दक्षिणपार्श्वे उपविष्ट आस्ते तस्योर्द्ध्वस्था- २ नस्य विषयान् चेष्टध्वं । पार्थिवविषयेषु न यतमाना ऊर्द्ध्वस्थ- ३ विषयेषु यतध्वं । यतो यूयं मृतवन्तो युष्माकं जीवितञ्च ख्रीष्टेन ४ सार्द्धम् ईश्वरे गुप्तम् अस्ति । अस्माकं जीवनस्वरूपः ख्रीष्टो यदा प्रकाशिष्यते तदा तेन सार्द्धं यूयमपि विभवेन प्रकाशिष्यध्वे ।

५ अतो वेश्यागमनम् अशुचिक्रिया रागः कुत्सिताभिलाषो देवपूजातुल्यो लोभश्चैतानि पार्थिवपुरुषस्याङ्गानि युष्माभि ६ र्निहन्यन्तां । यत एतेभ्यः कर्म्मभ्य आज्ञालङ्घिनो लोकान् प्रती- ७ श्वरस्य क्रोधो वर्त्तते । पूर्व्वं यदा यूयं तान्युपाजीवत तदा यूय- ८ मपि तान्येवाचरत; किन्त्विदानीं क्रोधो रोषो जिहिंसिषा दुर्मुखता वदननिर्गतकदालापश्चैतानि सर्व्वाणि दूरीकुरुध्वं । ९ यूयं परस्परं मृषाकथां न वदत यतो यूयं स्वकर्म्मसहितं पुरा- १० तनपुरुषं त्यक्तवन्तः स्वसृष्टुः प्रतिमूर्त्या तत्त्वज्ञानाय नूतनीकृतं ११ नवीनपुरुषं परिहितवन्तश्च । तेन च यिहूदिभिन्नजातीययो- श्छिन्नत्वगच्छिन्नत्वचो र्म्लेच्छस्कुथीययो र्दासमुक्तयोश्च कोऽपि १२ विशेषो नास्ति किन्तु सर्व्वेषु सर्व्वः ख्रीष्ट एवास्ते । अतएव यूयम् ईश्वरस्य मनोभिलषिताः पवित्राः प्रियाश्च लोका इव स्नेह-

युक्ताम् अनुकम्पां हितैषितां नम्रतां तितिक्षां सहिष्णुताञ्च परिधद्धं। यूयम् एकैकस्याचरणं सहध्वं येन च यस्य किमप्य- १३ पराध्यते तस्य तं दोषं स क्षमतां, ख्रीष्टो युष्माकं दोषान् यद्वत् क्षमितवान् यूयमपि तद्वत् कुरुध्वं। विशेषतः सिद्धिजनकेन १४ प्रेमबन्धनेन बद्धा भवत। यस्याः प्राप्तये यूयम् एकस्मिन् शरीरे १५ समाहूता अभवत सेश्वरीया शान्ति र्युष्माकं मनांस्यधितिष्ठतु यूयञ्च कृतज्ञा भवत। ख्रीष्टस्य वाक्यं सर्व्वविधज्ञानाय सम्पूर्ण- १६ रूपेण युष्मदन्तरे निवसतु, यूयञ्च गीतै र्गानैः पारमार्थिक- सङ्कीर्त्तनैश्च परस्परम् आदिशत प्रबोधयत च, अनुगृहीतत्वात् प्रभुम् उद्दिश्य स्वमनोभि र्गायत च। वाचा कर्म्मणा वा यद् १७ यत् कुरुत तत् सर्व्वं प्रभो र्यीशो र्नाम्ना कुरुत तेन पितरम् ईश्वरं धन्यं वदत च।

हे योषितः, यूयं स्वामिनां वश्या भवत यतस्तदेव प्रभवे १८ रोचते। हे स्वामिनः, यूयं भार्य्यासु प्रीयध्वं ताः प्रति परु- १९ षालापं मा कुरुध्वं। हे बालाः, यूयं सर्व्वविषये पित्रोराज्ञा- २० ग्राहिणो भवत यतस्तदेव प्रभोः सन्तोषजनकं। हे पितरः, २१ युष्माकं सन्ताना यत् कातरा न भवेयुस्तदर्थं तान् प्रति मा रोषयत। हे दासाः, यूयं सर्व्वविषय ऐहिकप्रभूनाम् आज्ञा- २२ ग्राहिणो भवत दृष्टिगोचरीयसेवया मानवेभ्यो रोचितुं मा यतध्वं किन्तु सरलान्तःकरणैः प्रभो र्भीत्या कार्य्यं कुरुध्वं। यच्च २३ कुरुध्वे तत् मानुषमनुद्दिश्य प्रभुम् उद्दिश्य प्रफुल्लमनसा कुरुध्वं, यतो वयं प्रभुतः स्वर्गाधिकाररूपं फलं लप्स्यामह इति यूयं २४ जानीथ यस्माद् यूयं प्रभोः ख्रीष्टस्य दासा भवथ। किन्तु यः २५ कश्चिद् अनुचितं कर्म्म करोति स तस्यानुचितकर्म्मणः फलं

२६ लप्स्यते तत्र कोऽपि पक्षपातो न भविष्यति । अपरञ्च हे अधिपतयः, यूयं दासान् प्रति न्याय्यं यथार्थञ्चाचरणं कुरुध्वं युष्माकमप्येकोऽधिपतिः स्वर्गे विद्यत इति जानीत ।

---

## ४ चतुर्थोऽध्यायः ।

१ प्रार्थनायां नित्यं प्रवर्त्तितुं सांसारिकलोकानां समीपे सावधानतयाचरितुञ्च निवेदनं ७ भ्रातृगणेषु नानाकथा नमस्कारप्रेषणञ्च ।

१ यूयं प्रार्थनायां नित्यं प्रवर्त्तध्वं धन्यवादं कुर्व्वन्तस्तत्र प्रबु-
२ द्धास्तिष्ठत च । प्रार्थनाकाले ममापि कृते प्रार्थनां कुरुध्वं,
३ फलतः ख्रीष्टस्य यन्निगूढवाक्यकारणाद् अहं बद्धोऽभवं तत्-
४ प्रकाशायेश्वरो यत् मदर्थं वाग्द्वारं कुर्य्यात्, अहञ्च यथोचितं
५ तत् प्रकाशयितुं शक्नुयाम् एतत् प्रार्थयध्वं । यूयं समयं बहुमूल्यं
६ ज्ञात्वा वहिःस्थान् लोकान् प्रति ज्ञानाचारं कुरुध्वं । युष्माकम् आलापः सर्व्वदानुग्रहसूचको लवणेन सुस्वादुश्च भवतु यस्मै यदुत्तरं दातव्यं तद् युष्माभिरवगम्यतां ।

७ मम या दशास्ति तां तुखिकनामा प्रभौ प्रियो मम भ्राता विश्वसनीयः परिचारकः सहदासश्च युष्मान् ज्ञापयि-
८ ष्यति । स यद् युष्माकं दशां जानीयात् युष्माकं मनांसि
९ सान्त्वयेच्च तदर्थमेवाहं तम् ओनीषिमनामानञ्च युष्मद्देशीयं विश्वस्तं प्रियञ्च भ्रातरं प्रेषितवान् तौ युष्मान् अत्रत्यां सर्व्व-
१० वार्त्तां ज्ञापयिष्यतः । आरिष्टार्खनामा मम सहवन्दी वर्णब्बा भागिनेयो मार्को युष्टनाम्ना विख्यातो यीशुश्चैते छिन्नत्वचो भ्रातरो युष्मान् नमस्कारं ज्ञापयन्ति, तेषां मध्ये मार्कमधि यूयं पूर्व्वम् आज्ञापिताः स यदि युष्मत्समीपम् उपतिष्ठेत् तर्हि
११ युष्माभि र्गृह्यतां । केवलमेत ईश्वरराज्ये मम सान्त्वनाज-

नकाः सहकारिणोऽभवन्। ख्रीष्टस्य दासो यो युष्मद्देशीय १२ इपफ्राः स युष्मान् नमस्कारं ज्ञापयति यूयञ्चेश्वरस्य सर्व्वस्मिन् मनोऽभिलाषे यत् सिद्धाः पूर्णाश्च भवेत तदर्थं स नित्यं प्रार्थनया युष्माकं कृते यतते। युष्माकं लायदिकेयास्थितानां हिय- १३ रापलिस्थितानाञ्च भ्रातृणां हिताय सोऽतीव चेष्टत इत्यस्मिन् अहं तस्य साक्षी भवामि। लूकनामा प्रियश्चिकित्सको दीमाश्च १४ युष्मभ्यं नमस्कुर्व्वाते। यूयं लायदिकेयास्थान् भ्रातॄन् नुम्फां १५ तद्गृहस्थितां समितिञ्च मम नमस्कारं ज्ञापयत। अपरं युष्म- १६ त्सन्निधौ पत्रस्यास्य पाठे कृते लायदिकेयास्थसमितावपि तस्य पाठो यथा भवेत् लायदिकेयाञ्च यत् पत्रं मया प्रहितं तद् यथा युष्माभिरपि पठ्येत तथा चेष्टध्वं। अपरम् आर्खिप्पं वदत १७ प्रभो र्यत् परिचर्य्यापदं त्वयाप्रापि तत्साधनाय सावधानो भव। अहं पौलः स्वहस्ताक्षरेण युष्मान् नमस्कारं ज्ञापयामि यूयं १८ मम बन्धनं स्मरत। युष्मान् प्रत्यनुग्रहो भूयात्। आमेन।

---

# थिषलनीकिनः प्रति पौलस्य प्रेरितस्य प्रथमं पत्रं।

---

## १ प्रथमोऽध्यायः।

१ मङ्गलाचरणं २ थिषलनीकिनां प्रत्ययप्रत्याशाप्रेमाचरणस्य प्रशंसनम्।

पौलः सिल्वानस्तीमथियश्च पितुरीश्वरस्य प्रभो र्यीशु- १ ख्रीष्टस्य चाश्रयं प्राप्तां थिषलनीकीयसमितिं प्रति पत्रं लिखन्ति। अस्माकं तात ईश्वरः प्रभु र्यीशुख्रीष्टश्च युष्मान् प्रत्यनुग्रहं शान्तिञ्च क्रियास्तां।

२ वयं सर्व्वेषां युष्माकं कृते नित्यम् ईश्वरं धन्यं वदामः प्रार्थ-
३ नासमये युष्माकं नामोच्चारयामः, अस्माकं तातस्येश्वरस्य सा-
क्षात् प्रभौ यीशुख्रीष्टे युष्माकं विश्वासेन यत् कार्य्यं प्रेम्ना यः
४ परिश्रमः प्रत्याशया च या तितिक्षा जायते तत् सर्व्वं निरन्तरं
स्मरामश्च। हे प्रियभ्रातरः, यूयम् ईश्वरेणाभिरुचिता लोका
५ इति वयं जानीमः। यतोऽस्माकं सुसंवादः केवलशब्देन
युष्मान् न प्रविश्य शक्त्या पवित्रेणात्मना महोत्साहेन च युष्मान्
प्राविशत्। वयन्तु युष्माकं कृते युष्मन्मध्ये कीदृशा अभवाम
६ तद् युष्माभि र्ज्ञायते। यूयमपि बहुक्लेशभोगेन पवित्रेणात्मना
दत्तेनानन्देन च वाक्यं गृहीत्वास्माकं प्रभोश्चानुगामिनोऽभ-
७ वत। तेन माकिदनियाखायादेशयो र्यावन्तो विश्वासिनो
८ लोकाः सन्ति यूयं तेषां सर्व्वेषां निदर्शनस्वरूपा जाताः। यतो
युष्मत्तः प्रतिनादितया प्रभो र्वाण्या माकिदनियाखायादेशौ
व्याप्तौ केवलमेतन्नहि किन्त्वीश्वरे युष्माकं यो विश्वासस्तस्य
वार्त्ता सर्व्वत्राश्रावि, तस्मात् तत्र वाक्यकथनम् अस्माकं निष्प्र-
९ योजनं। यतो युष्मन्मध्ये वयं कीदृशं प्रवेशं प्राप्ता यूयञ्च कथं
प्रतिमा विहायेश्वरं प्रत्यावर्त्तध्वम् अमरं सत्यमीश्वरं सेवितुं
१० मृतगणमध्याच्च तेनोत्थापितस्य पुत्रस्यार्थत आगामिक्रोधाद्
अस्माकं निस्तारयितु र्यीशोः स्वर्गाद् आगमनं प्रतीक्षितुम्
आरभध्वम् एतत् सर्व्वं ते लोकाः स्वयम् अस्मान् ज्ञापयन्ति।

---

## २ द्वितीयोऽध्यायः।

१ पौलः केन प्रकारेण थिषलनीकिनां सन्निधौ सुसंवादं प्राचारयत् तदाख्यानं
१३ ते कथं सुसंवादं गृहीतवन्त इत्यस्य कथनं १७ तान् साक्षात् कर्त्तुं पौल-
स्येच्छा च।

हे भ्रातरः, युष्मन्मध्ये ऽस्माकं प्रवेशो निष्फलो न जात १
इति यूयं स्वयं जानीथ। अपरं युष्माभि र्यथाश्रावि तथा २
पूर्व्वं फिलिपीनगरे क्लिष्टा निन्दिताश्च सन्तोऽपि वयम् ईश्व-
राद् उत्साहं लब्ध्वा बहुयत्नेन युष्मान् ईश्वरस्य सुसंवादम्
अबोधयाम। यतोऽस्माकम् आदेशो भ्रान्तेरशुचिभावाद् वो- ३
त्पन्नः प्रवञ्चनायुक्तो वा न भवति। किन्त्वीश्वरेणास्मान् परीक्ष्य ४
विश्वसनीयान् मत्वा च यद्वत् सुसंवादोऽस्मासु समार्प्यत तद्वद्
वयं मानवेभ्यो न रुरोचिषमाणाः किन्त्वस्मदन्तःकरणानां
परीक्षकायेश्वराय रुरोचिषमाणा भाषामहे। वयं कदापि ५
स्तुतिवादिनो नाभवामेति यूयं जानीथ कदापि छलवस्त्रेण
लोभं नाच्छादयामेत्यस्मिन् ईश्वरः साक्षी विद्यते। वयं ख्री- ६
ष्टस्य प्रेरिता इव गौरवान्विता भवितुम् अशक्ष्याम किन्तु
युष्मत्तः परस्माद् वा कस्मादपि मानवाद् गौरवं न लिप्स-
माना युष्मन्मध्ये मृदुभावा भूत्वावर्त्तामहि। यथा काचि- ७
न्माता स्वकीयशिशून् पालयति तथा वयमपि युष्मान् काङ्क्ष- ८
माणा युष्मभ्यं केवलम् ईश्वरस्य सुसंवादं तन्नहि किन्तु
स्वकीयप्राणान् अपि दातुं मनोभिरभ्यलषाम, यतो यूयम्
अस्माकं स्नेहपात्राण्यभवत। हे भ्रातरः, अस्माकं श्रमः क्लेशश्च ९
युष्माभिः स्मर्य्यते युष्माकं कोऽपि यद् भारग्रस्तो न भवेत् तदर्थं
वयं दिवानिशं परिश्राम्यन्तो युष्मन्मध्य ईश्वरस्य सुसंवादमघो-
षयाम। अपरञ्च विश्वासिनो युष्मान् प्रति वयं कीदृक् पवि- १०
त्रत्वयथार्थत्वनिर्दोषत्वाचारिणोऽभवामेत्यस्मिन् ईश्वरो यूयञ्च
साक्षिण आध्वे। अपरञ्च यद्वत् पिता स्वबालकान् तद्वद् वयं ११
युष्माकम् एकैकं जनम् उपदिष्टवन्तः सान्त्वितवन्तश्च, य ईश्वरः १२

स्वीयराज्याय विभवाय च युष्मान् आहूतवान् तदुपयुक्ताच-
रणाय युष्मान् प्रवर्त्तितवन्तश्चेति यूयं जानीथ।

१३ यस्मिन् समये यूयम् अस्माकं मुखाद् ईश्वरेण प्रतिश्रुतं
वाक्यम् अलभध्वं तस्मिन् समये तत् मानुषाणां वाक्यं न मत्त्वे-
श्वरस्य वाक्यं मत्त्वा गृहीतवन्त इति कारणाद् वयं निरन्तरम्
ईश्वरं धन्यं वदामः, यतस्तद् ईश्वरस्य वाक्यम् इति सत्यं वि-
१४ श्वासिनां युष्माकं मध्ये तस्य गुणः प्रकाशते च। हे भ्रातरः,
ख्रीष्टाश्रितवत्य ईश्वरस्य याः समित्यो यिहूदादेशे सन्ति यूयं
तासाम् अनुकारिणोऽभवत, तद्भुक्ता लोकाश्च यद्वद् यिहूदि-
लोकेभ्यस्तद्वद् यूयमपि स्वजातीयलोकेभ्यो दुःखम् अलभध्वं।
१५ ते यिहूदीयाः प्रभुं यीशुं भविष्यद्वादिनश्च हतवन्तो ऽस्मान्
दूरीकृतवन्तश्च, त ईश्वराय न रोचन्ते सर्व्वेषां मानवानां
१६ विपक्षा भवन्ति च; अपरं भिन्नजातीयलोकानां परित्राणार्थं
तेषां मध्ये सुसंवादघोषणाद् अस्मान् प्रतिषेधन्ति चेत्थं स्वीय-
पापानां परिमाणम् उत्तरोत्तरं पूरयन्ति, किन्तु तेषाम् अन्त-
कारी क्रोधस्तान् उपक्रमते।

१७ हे भ्रातरः, मनसा नहि किन्तु वदनेन कियत्कालं युष्मत्तो
ऽस्माकं विच्छेदे जाते वयं युष्माकं मुखानि द्रष्टुम् अत्याका-
१८ ङ्क्षया बहु यतितवन्तः। द्विरेकक्वत्वो वा युष्मत्समीपगमनायो-
ऽस्माकं विशेषतः पौलस्य ममाभिलाषोऽभवत् किन्तु शयतानो
१९ ऽस्मान् निवारितवान्। यतोऽस्माकं का प्रत्याशा को वानन्दः
किं वा श्लाघ्यकिरीटं? अस्माकं प्रभो र्यीशुख्रीष्टस्यागमनकाले
२० तत्सम्मुखस्था यूयं किं तन्न भविष्यथ? यूयम् एवास्माकं गौरवा-
नन्दस्वरूपा भवथ।

# ३ तृतीयोऽध्यायः।

१ तेषां सान्त्वनार्थं तीमथियस्य प्रेषणं, तीमथिये प्रत्यागते तेषां वार्त्ताश्रुत्वा पौलस्य धन्यवादः प्रार्थना च।

अतोऽहं यदा सन्देहं पुनः सोढुं नाशक्नुवं तदानीम् आथीनीनगर एकाकी स्थातुं निश्चित्य स्वभ्रातरं ख्रीष्टस्य सुसंवादे सहकारिणञ्चेश्वरस्य परिचारकं तीमथियं युष्मत्समीपम् अप्रेषयं। वर्त्तमानैः क्लेशैः कस्यापि चाञ्चल्यं यथा न जायते तथा ते त्वया स्थिरीक्रियन्तां स्वकीयधर्म्ममधि समाश्वास्यन्ताञ्चेति तम् आदिशं। वयमेतादृशे क्लेशे नियुक्ता आस्मह इति यूयं स्वयं जानीथ, यतोऽस्माकं दुर्गति र्भविष्यतीति वयं युष्माकं समीपे स्थितिकालेऽपि युष्मान् अबोधयाम, तादृशमेव चाभवत् तदपि जानीथ। तस्मात् परीक्षकेण युष्मासु परीक्षितेष्वस्माकं परिश्रमो विफलो भविष्यतीति भयं सोढुं यदाहं नाशक्नुवं तदा युष्माकं विश्वासस्य तत्त्वावधारणाय तम् अप्रेषयं। किन्त्वधुना तीमथियो युष्मत्समीपाद् अस्मत्सन्निधिम् आगत्य युष्माकं विश्वासप्रेमणी अध्यस्मान् सुवार्त्तां ज्ञापितवान् वयञ्च यथा युष्मान् स्मरामस्तथा यूयमप्यस्मान् सर्व्वदा प्रणयेन स्मरथ द्रष्टुम् आकाङ्क्षध्वे चेति कथितवान्। हे भ्रातरः, वार्त्तामिमां प्राप्य युष्मानधि विशेषतो युष्माकं क्लेशदुःखान्यधि युष्माकं विश्वासाद् अस्माकं सान्त्वनाजायत ; यतो यूयं यदि प्रभाववतिष्ठथ तर्ह्यनेन वयम् अधुना जीवामः। वयञ्चास्मदीयेश्वरस्य साक्षाद् युष्मत्तो जातेन येनानन्देन प्रफुल्ला भवामस्तस्य कृत्स्नस्यानन्दस्य योग्यरूपेणेश्वरं धन्यं वदितुं कथं शक्ष्यामः? वयं येन युष्माकं वदनानि द्रष्टुं युष्माकं विश्वासे यद् असिद्धं

विद्यते तत् सिद्धीकर्त्तुञ्च शच्यामस्तादृशं वरं दिवानिशं प्रार्थ-
११ यामहे। अस्माकं तातेनेश्वरेण प्रभुना यीशुख्रीष्टेन च युष्म-
१२ त्समीपगमनायास्माकं पन्था सुगमः क्रियतां। परस्परं सर्व्वांश्च
प्रति युष्माकं प्रेम युष्मान् प्रति चास्माकं प्रेम प्रभुना वर्द्धतां
१३ बहुफलं क्रियताञ्च। अपरमस्माकं प्रभु र्यीशुख्रीष्टः स्वकीयैः
सर्व्वैः पवित्रलोकैः सार्द्धं यदागमिष्यति तदा यूयं यथास्माकं
तातस्येश्वरस्य सम्मुखे पवित्रतया निर्दोषा भविष्यथ तथा
युष्माकं मनांसि स्थिरीक्रियन्तां।

---

## ४ चतुर्थोऽध्यायः।

१ आज्ञापालनकारणात् तेषां प्रशंसा ३ अशुचित्वस्य निषेधः ९ परस्परं प्रेम कर्त्तुं कर्म्म कर्त्तुञ्चाज्ञा १३ मृतलोकार्थम् अतिशयशोकनिषेधः शेषदिवसीयघटनाया निर्णयश्च।

१ हे भ्रातरः, युष्माभिः कीदृग् आचरितव्यं ईश्वराय
रोचितव्यञ्च तदध्यस्मत्तो या शिक्षा लब्धा तदनुसारात् पुन-
रतिशयं यत्नः क्रियतामिति वयं प्रभुयीशुना युष्मान् विनी-
२ यादिशामः। यतो वयं प्रभुयीशुना कीदृशीराज्ञा युष्मासु
समर्पितवन्तस्तद् यूयं जानीथ।

३ ईश्वरस्यायम् अभिलाषो यद् युष्माकं पवित्रता भवेत्, यूयं
४ व्यभिचाराद् दूरे तिष्ठत। युष्माकम् एकैको जनः स्वकीयं प्राणा-
५ धारं पवित्रं मान्यञ्च रक्षतु, ये च भिन्नजातीया लोका ईश्वरं
न जानन्ति त इव तत् कामाभिलाषस्याधीनं न करोतु।
६ एतस्मिन् विषये कोऽप्यत्याचारी भूत्वा स्वभ्रातरं न वञ्चयतु
यतोऽस्माभिः पूर्व्वं यथोक्तं प्रमाणीकृतञ्च तथैव प्रभुरेतादृ-
७ शानां कर्म्मणां समुचितं फलं दास्यति। यस्माद् ईश्वरोऽस्मान्

अशुचितायै नाह्वतवान् किन्तु पवित्रत्वायैवाह्वतवान्। अतो ८
हेतो र्यः कश्चिद् वाक्यमेतन्न गृह्लाति स मनुष्यम् अवजानातीति
नहि येन स्वकीयात्मा युष्मदन्तरे समर्पितस्तम् ईश्वरम् एवा-
वजानाति।

भ्रातृषु प्रेमकरणमधि युष्मान् प्रति मम लिखनं नि- ९
ष्प्रयोजनं यतो यूयं परस्परं प्रेमकरणायेश्वरशिक्षिता लोका
आध्वे। कृत्स्ने माकिदनियादेशे च यावन्तो भ्रातरः सन्ति १०
तान् सर्व्वान् प्रति युष्माभिस्तत् प्रेम प्रकाश्यते तथापि हे
भ्रातरः, वयं युष्मान् विनयामहे यूयं पुन र्बहुतरं प्रेम
प्रकाशयत। अपरं ये वहिःस्थितास्तेषां दृष्टिगोचरे युष्मा- ११
कम् आचरणं यत् मनोरम्यं भवेत् कस्यापि वस्तुनश्चाभावो
युष्माकं यन्न भवेत्, एतदर्थं यूयम् अस्मत्तो यादृशम् आदेशं १२
प्राप्नवन्तस्तादृशं निर्विरोधाचारं कर्त्तुं स्वस्वकर्म्मणि मनांसि
निधातुं निजकरैश्च कार्य्यं साधयितुं यतध्वं।

हे भ्रातरः, निराशा अन्ये लोका इव यूयं यन्न शोचेध्वं तदर्थं १३
महानिद्रागतान् लोकानधि युष्माकम् अज्ञानता मया नाभि-
लष्यते। यीशु र्मृतवान् पुनरुत्थितवांश्चेति यदि वयं विश्वसि- १४
मस्तर्हि यीशुम् आश्रितान् महानिद्राप्राप्तान् लोकानपीश्व-
रोऽवश्यं तेन सार्द्धम् आनेष्यति। यतोऽहं प्रभो र्वाक्येन १५
युष्मान् इदं ज्ञापयामि; अस्माकं मध्ये ये जनाः प्रभोराग-
मनं यावत् जीवन्तोऽवशेक्ष्यन्ते ते महानिद्रितानाम् अग्रगा-
मिनो न भविष्यन्ति; यतः प्रभुः सिंहनादेन प्रधानस्वर्गदूतस्योच्चैः १६
शब्देनेश्वरीयतूरीवाद्येन च स्वयं स्वर्गाद् अवरोक्ष्यति तेन ख्री-
ष्टाश्रिता मृतलोकाः प्रथमम् उत्थास्यन्ति। अपरम् अस्माकं १७

मध्ये ये जीवन्तोऽवशेच्यन्ते त आकाशे प्रभोः साचात्करणार्थं तैः सार्द्धं मेघवाहनेन ह्वरिष्यन्ते; इत्थञ्च वयं सर्व्वदा प्रभुना सार्द्धं
१८ स्थास्यामः। अतो यूयम् एताभिः कथाभिः परस्परं सान्त्वयत।

---

## ५ पञ्चमोऽध्यायः।

१ शेषदिनार्थं सज्जीभवितुं विनयः १२ नानाप्रकारकर्म्मणां करणाज्ञा पत्रसमाप्तेः कथा च।

१ हे भ्रातरः, कालान् समयांश्चाधि युष्मान् प्रति मम लि-
२ खनं निष्प्रयोजनं, यतो रात्रौ यादृक् तस्करस्तादृक् प्रभो
३ र्दिनम् उपस्थास्यतीति यूयं स्वयमेव सम्यग् जानीथ। शान्ति र्निर्व्विघ्नत्वञ्च विद्यत इति यदा मानवा वदिष्यन्ति तदा प्रसववेदना यद्वद् गर्ब्भिनीम् उपतिष्ठति तद्वद् अकस्माद् विनाश-
४ स्तान् उपस्थास्यति तैरुद्धारो न लप्स्यते। किन्तु हे भ्रातरः, यूयम् अन्धकारेणावृता न भवथ तस्मात् तद्दिनं तस्कर इव
५ युष्मान् न प्राप्स्यति। सर्व्वे यूयं दीप्तेः सन्ताना दिवायाश्च सन्ताना भवथ वयं निशावंशास्तिमिरवंशा वा न भवामः।
६ अतो ऽपरे यथा निद्रागताः सन्ति तद्वद् अस्माभि र्न भवि-
७ तव्यं किन्तु जागरितव्यं सचेतनैश्च भवितव्यं। ये निद्रान्ति ते निशायामेव निद्रान्ति ये च मत्ता भवन्ति ते रजन्यामेव
८ मत्ता भवन्ति। किन्तु वयं दिवसस्य वंशा भवामः; अतो ऽस्माभि र्वक्षसि प्रत्ययप्रेमरूपं कवचं शिरसि च परित्राणा-
९ शारूपं शिरस्त्रं परिधाय सचेतनै र्भवितव्यं। यत ईश्वरोऽस्मान् क्रोधे न नियुज्यास्माकं प्रभुना यीशुख्रीष्टेन परित्राणस्याधि-
१० कारे नियुक्तवान्, जाग्रतो निद्रागता वा वयं यत् तेन प्रभुना
११ सह जीवामस्तदर्थं सोऽस्माकं कृते प्राणान् त्यक्तवान्। अतएव

यूयं यद्वत् कुरुथ तद्वत् परस्परं सान्त्वयत सुस्थिरीकुरुध्वञ्च।

हे भ्रातरः, युष्माकं मध्ये ये जनाः परिश्रमं कुर्व्वन्ति प्रभो १२ र्नाम्ना युष्मान् अधितिष्ठन्त्युपदिशन्ति च तान् यूयं सम्मन्यध्वं। स्वकर्म्महेतुना च प्रेम्ना तान् अतीवादृयध्वमिति मम प्रार्थना, १३ यूयं परस्परं निर्व्विरोधा भवत। हे भ्रातरः, युष्मान् विन- १४ यामहे यूयम् अविहिताचारिणो लोकान् भर्त्सयध्वं, क्षुद्र-मनसः सान्त्वयत, दुर्ब्बलान् उपकुरुत, सर्व्वान् प्रति सहिष्णवो भवत च। अपरं कमपि प्रत्यनिष्टस्य फलम् अनिष्टं केनापि १५ यन्न क्रियेत तदर्थं सावधाना भवत, किन्तु परस्परं सर्व्वान् मानवांश्च प्रति नित्यं हिताचारिणो भवत। सर्व्वदानन्दत। १६ निरन्तरं प्रार्थनां कुरुध्वं। सर्व्वविषये कृतज्ञतां स्वीकुरुध्वं यत १८ एतदेव ख्रीष्टयीशुना युष्मान् प्रति प्रकाशितम् ईश्वराभिमतं। पवित्रम् आत्मानं न निर्व्वापयत। ईश्वरीयादेशं नावजानीत। २० सर्व्वाणि परीक्ष्य यद् भद्रं तदेव धारयत। यत् किमपि पाप- २२ रूपं भवति तस्माद् दूरं तिष्ठत। शान्तिदायक ईश्वरः स्वयं २३ युष्मान् सम्पूर्णत्वेन पवित्रान् करोतु, अपरम् अस्मत्प्रभो र्यीशुख्रीष्टस्यागमनं यावद् युष्माकम् आत्मानः प्राणाः शरीराणि च निखिलानि निर्द्दोषत्वेन रक्ष्यन्तां। यो युष्मान् आह्व- २४ यति स विश्वसनीयोऽतः स तत् साधयिष्यति।

हे भ्रातरः, अस्माकं कृते प्रार्थनां कुरुध्वं। पवित्रचुम्बनेन २५ सर्व्वान् भ्रातॄन् प्रति सत्कुरुध्वं। पत्रमिदं सर्व्वेषां पवित्राणां २७ भ्रातॄणां श्रुतिगोचरे युष्माभिः पठ्यतामिति प्रभो र्नाम्ना युष्मान् शपयामि। अस्माकं प्रभो र्यीशुख्रीष्टस्यानुग्रहो युष्मासु भूयात्। २८ आमेन्।

# थिषलनीकिनः प्रति पौलस्य प्रेरितस्य द्वितीयं पत्रं।

## १ प्रथमोऽध्यायः।

१ मङ्गलाचरणं २ धर्म्माचरणार्थं दुःखसहनार्थञ्च तेषां प्रशंसा सान्त्वनञ्च तेषां कृते प्रार्थना च।

१ पौलः सिल्वानस्तीमथियश्चेतिनामानो वयम् अस्मदीयतातम् ईश्वरं प्रभुं यीशुख्रीष्टञ्चाश्रितां थिषलनीकिनां समितिं
२ प्रति पत्रं लिखामः। अस्माकं तात ईश्वरः प्रभु र्यीशुख्रीष्टश्च युष्मास्वनुग्रहं शान्तिञ्च क्रियास्तां।

३ हे भ्रातरः, युष्माकं कृते सर्व्वदा यथायोग्यम् ईश्वरस्य धन्यवादो ऽस्माभिः कर्त्तव्यः, यतो हेतो र्युष्माकं विश्वास उत्तरोत्तरं वर्द्धते परस्परम् एकैकस्य प्रेम च बहुफलं भवति।
४ तस्माद् युष्माभि र्यावन्त उपद्रवक्लेशाः सह्यन्ते तेषु यद् धैर्य्यं यश्च विश्वासः प्रकाश्यते तत्कारणाद् वयम् ईश्वरीयसमितिषु
५ युष्माभिः श्लाघामहे। तच्चेश्वरस्य न्यायविचारस्य प्रमाणं भवति यतो यूयं यस्य कृते दुःखं सहध्वं तस्येश्वरीयराज्यस्य योग्या
६ भवथ। यतः स्वकीयस्वर्गदूतानां बलैः सहितस्य प्रभो र्यीशोः स्वर्गाद् आगमनकाले युष्माकं क्लेशकेभ्यः क्लेशेन फलदानं
७ सार्द्धमस्माभिश्च क्लिश्यमानेभ्यो युष्मभ्यं शान्तिदानम् ईश्वरेण
८ न्याय्यं भोत्स्यते; तदानीम् ईश्वरानभिज्ञेभ्यो ऽस्मत्प्रभो र्यीशुख्रीष्टस्य सुसंवादाग्राहकेभ्यश्च लोकेभ्यो जाज्वल्यमानेन वह्निना
९ समुचितं फलं यीशुना दास्यते; ते च प्रभो र्वदनात् पराक्रमयुक्त-
१० विभवाच्च सदातनविनाशरूपं दण्डं लप्स्यन्ते, किन्तु तस्मिन्

दिने स्वकीयपवित्रलोकेषु विराजितुं युष्मान् अपरांश्च सर्व्वान् विश्वासिलोकान् विस्मापयितुञ्च स आगमिष्यति यतो ऽस्माकं प्रमाणे युष्माभि र्विश्वासोऽकारि। अतोऽस्माकम् ईश्वरो युष्मान् ११ तस्याह्वानस्य योग्यान् करोतु सौजन्यस्य शुभफलं विश्वासस्य गुणञ्च पराक्रमेण साधयत्विति प्रार्थनास्माभिः सर्व्वदा युष्मन्निमित्तं क्रियते, यतस्तथा सत्यस्माकम् ईश्वरस्य प्रभो र्यीशु- १२ ख्रीष्टस्य चानुग्रहाद् अस्मत्प्रभो र्यीशुख्रीष्टस्य नाम्नो गौरवं युष्मासु युष्माकमपि गौरवं तस्मिन् प्रकाशिष्यते।

---

## २ द्वितीयोऽध्यायः।

१ स्थिरत्वे पौलस्य विनयः पापपुरुषस्य निर्णयः १३ तेषां मनोनीतत्वाथम् ईश्वरस्य धन्यवादः १५ तेषां कृते प्रार्थना च।

हे भ्रातरः, अस्माकं प्रभो र्यीशुख्रीष्टस्यागमनं तस्य समीपे १ ऽस्माकं संस्थितिञ्चाधि वयं युष्मान् इदं प्रार्थयामहे, प्रभोस्तद् २ दिनं प्रायेणोपस्थितम् इति यदि कश्चिद् आत्मना वाचा वा पत्रेण वास्माकम् आदेशं कल्पयन् युष्मान् गदति तर्हि यूयं तेन चञ्चलमनस उद्विग्नाश्च न भवत। केनापि प्रकारेण कोऽपि ३ युष्मान् न वञ्चयतु यतस्तस्माद् दिनात् पूर्व्वं धर्म्मलोपेनोपस्थातव्यं, यश्च जनो विपक्षतां कुर्व्वन् सर्व्वस्माद् देवात् पूजनीय- ४ वस्तुतश्चोन्नंस्यते स्वम् ईश्वरमिव दर्शयन् ईश्वरवद् ईश्वरस्य मन्दिर उपवेक्ष्यति च तेन विनाशपात्रेण पापपुरुषेणोदेतव्यं। यदाहं युष्माकं सन्निधावासं तदानीम् एतद् अकथय- ५ मिति यूयं किं न स्मरथ? साम्प्रतं स येन निवार्य्यते तद् ६ यूयं जानीथ, किन्तु स्वसमये तेनोदेतव्यं। विधर्म्मस्य निगूढो गुण ७

इदानीमपि फलति किन्तु यस्तं निवारयति सोऽद्यापि दूरी-
८ कृतो नाभवत्। तस्मिन् दूरीकृते स विधर्म्म्युदेष्यति किन्तु प्रभु
र्यीशुः स्वमुखपवनेन तं विध्वंसयिष्यति निजोपस्थितेस्तेजसा
९ विनाशयिष्यति च। शयतानस्य शक्तिप्रकाशनाद् विनाश्यमा-
नानां मध्ये सर्व्वविधाः पराक्रमा भ्रमिका आश्चर्य्यक्रिया लक्ष-
णान्यधर्म्मजाता सर्व्वविधप्रतारणा च तस्योपस्थितेः फलं भवि-
१० ष्यति; यतो हेतोस्ते परित्राणप्राप्तये सत्यधर्म्मस्यानुरागं न
११ गृहीतवन्तस्तस्मात् कारणाद् ईश्वरेण तान् प्रति भ्रान्तिकर-
१२ मायायां प्रेषितायां ते मृषावाक्ये विश्वसिष्यन्ति। यतो या-
वन्तो मानवाः सत्यधर्म्मे न विश्वस्याधर्म्मेण तुष्यन्ति तैः सर्व्वै
र्दण्डभाजनै र्भवितव्यं।

१३ हे प्रभोः प्रिया भ्रातरः, युष्माकं कृत ईश्वरस्य धन्यवादो-
ऽस्माभिः सर्व्वदा कर्त्तव्यो यत ईश्वर आ प्रथमाद् आत्मनः
पावनेन सत्यधर्म्मे विश्वासेन च परित्राणार्थं युष्मान् वरीतवान्
१४ तदर्थञ्चास्माभि र्घोषितेन सुसंवादेन युष्मान् आहूयास्माकं
प्रभो र्यीशुख्रीष्टस्य तेजसोऽधिकारिणः करिष्यति।

१५ अतो हे भ्रातरः, यूयम् अस्माकं वाक्यैः पत्रैश्च यां शिक्षां
१६ लब्धवन्तस्तां कृत्स्नां शिक्षां धारयन्तः सुस्थिरा भवत। अस्माकं
प्रभु र्यीशुख्रीष्टस्तात ईश्वरश्चार्थतो यो युष्मासु प्रेम कृतवान्
नित्याञ्च सान्त्वनाम् अनुग्रहेणोत्तमप्रत्याशाञ्च युष्मभ्यं दत्तवान्
१७ स स्वयं युष्माकम् अन्तःकरणानि सान्त्वयतु सर्व्वस्मिन् सद्वाक्ये
सत्कर्म्मणि च सुस्थिरीकरोतु च।

---

# ३ तृतीयोऽध्यायः।

१ स्वस्य कृते प्रार्थनार्थं तान् प्रति पौलस्य विनयः ६ अनाज्ञाग्राहिणोऽलसांश्च प्रति तस्योपदेशः पत्रसमाप्तिः कथा च।

हे भ्रातरः, शेषे वदामि, यूयम् अस्मभ्यमिदं प्रार्थयध्वं यत् १ प्रभो र्वाक्यं युष्माकं मध्ये यथा तथैवान्यत्रापि प्रचरेत् मान्यञ्च भवेत्; यच्च वयम् अविवेचकेभ्यो दुष्टेभ्यश्च लोकेभ्यो रक्षां २ प्राप्नुयाम यतः सर्व्वेषां विश्वासो न भवति। किन्तु प्रभु र्विश्वास्यः ३ स एव युष्मान् स्थिरीकरिष्यति दुष्टस्य करात् उद्धरिष्यति च। यूयम् अस्माभि र्यद् आदिश्यध्वे तत् कुरुथ करिष्यथ ४ चेति विश्वासो युष्मानधि प्रभुनास्माकं जायते। ईश्वरस्य प्रेम्नि ५ ख्रीष्टस्य सहिष्णुतायाञ्च प्रभुः स्वयं युष्माकम् अन्तःकरणानि विनयतु।

हे भ्रातरः, अस्मत्प्रभो र्यीशुख्रीष्टस्य नाम्ना वयं युष्मान् ६ इदम् आदिशामः, अस्मत्तो युष्माभि र्या शिक्षालम्भि तां विहाय कश्चिद् भ्राता यद्यविहिताचारं करोति तर्हि यूयं तस्मात् पृथग् भवत। यतो वयं युष्माभिः कथम् अनुकर्त्तव्या- ७ स्तद् यूयं स्वयं जानीथ। युष्माकं मध्ये वयम् अविहिताचारिणो नाभवाम, विनामूल्यं कस्याप्यन्नं नाभुंज्महि किन्तु कोऽपि यद् ८ अस्माभि र्भारग्रस्तो न भवेत् तदर्थं श्रमेण क्लेशेन च दिवानिशं कार्य्यम् अकुर्म्म। अत्रास्माकम् अधिकारो नास्तीत्थं नहि ९ किन्त्वस्माकम् अनुकरणाय युष्मान् दृष्टान्तं दर्शयितुम् इच्छ- न्तस्तद् अकुर्म्म। यतो येन कार्य्यं न क्रियते तेनाहारोऽपि न १० क्रियतामिति वयं युष्मत्समीप उपस्थितिकालेऽपि युष्मान् आदिशाम। युष्मन्मध्ये ऽविहिताचारिणः केऽपि जना विद्यन्ते ११

ते च कार्य्यम् अकुर्व्वन्त आलस्यम् आचरन्तीत्यस्माभिः श्रूयते।
१२ तादृशान् लोकान् अस्मत्प्रभो यीशुख्रीष्टस्य नाम्ना वयम्
इदम् आदिशाम आज्ञापयामश्च, ते शान्तभावेन कार्य्यं कुर्व्वन्तः
१३ स्वकीयमन्नं भुञ्जतां। अपरं हे भ्रातरः, यूयं सदाचरणे न
१४ क्लाम्यत। यदि च कश्चिदेतत्पत्रे लिखिताम् अस्माकम् आज्ञां
न गृह्लाति तर्हि यूयं तं मानुषं लक्षयत तस्य संसर्गं त्यजत
१५ च तेन स त्रपिष्यते। किन्तु तं न शत्रुं मन्यमाना भ्रात-
१६ रमिव चेतयत। शान्तिदाता प्रभुः सर्व्वत्र सर्व्वथा युष्मभ्यं
शान्तिं देयात्। प्रभु र्युष्माकं सर्व्वेषां सङ्गी भूयात्।
१७ नमस्कार एष पौलस्य मम करेण लिखितोऽभूत् सर्व्वस्मिन्
१८ पत्र एतन्मम चिह्नम् एतादृशैरक्षरै र्मया लिख्यते। अस्माकं
प्रभो र्यीशुख्रीष्टस्यानुग्रहः सर्व्वेषु युष्मासु भूयात्। आमेन्।

---

## तीमथियं प्रति पौलस्य प्रेरितस्य प्रथमं पत्रं।

### १ प्रथमोऽध्यायः।

१ मङ्गलाचरणं ३ वंशावलिव्यवस्थासुसंवादप्रेरितत्वपदेषु तीमथियं प्रति पौलस्योपदेशः १८ स्थिरं स्थातुं विनयः कतिपयलोकानां धर्म्मत्यागप्रकाशनञ्च।

१ अस्माकं त्राणकर्त्तुरीश्वरस्यास्माकं प्रत्याशाभूमेः प्रभो
र्यीशुख्रीष्टस्य चाज्ञानुसारतो यीशुख्रीष्टस्य प्रेरितः पौलः
२ स्वकीयं सत्यं धर्म्मपुत्रं तीमथियं प्रति पत्रं लिखति। अस्माकं
तात ईश्वरोऽस्माकं प्रभु र्यीशुख्रीष्टश्च त्वयि अनुग्रहं दयां
शान्तिञ्च कुर्य्यास्तां।

माकिदनियादेशे मम गमनकाले त्वम् इफिषनगरे तिष्ठन् ३ इतरशिक्षा न ग्रहीतव्या, अनन्तेषूपाख्यानेषु वंशावलिषु च युष्माभि र्मनो न निवेशितव्यम् इति कांश्चित् लोकान् यद् ४ उपदिशेरेतत् मयादिष्टोऽभवः, यतः सर्व्वैरेतै र्विश्वासयुक्तेश्वरीयनिष्ठा न जायते किन्तु विवादो जायते। उपदेशस्य त्वभि- ५ प्रेतं फलं निर्म्मलान्तःकरणेन सत्संवेदेन निष्कपटविश्वासेन च युक्तं प्रेम। केचित् जनाश्च सर्व्वाण्येतानि विहाय निरर्थक- ६ कथानाम् अनुगमनेन विपथगामिनोऽभवन्, यद् भाषन्ते ७ यच्च निश्चिन्वन्ति तन्न बुध्यमाना व्यवस्थोपदेष्टारो भवितुम् इच्छन्ति। सा व्यवस्था यदि योग्यरूपेण गृह्यते तर्ह्युत्तमा ८ भवतीति वयं जानीमः। अपरं सा व्यवस्था धार्म्मिकस्य वि- ९ रुद्धा न भवति किन्त्वधार्म्मिको ऽवाध्यो दुष्टः पापिष्ठो ऽपवित्रो ऽशुचिः पितृहन्ता मातृहन्ता नरहन्ता वेश्यागामी १० पुंमैथुनी मनुष्यविक्रेता मिथ्यावादी मिथ्याशपथकारी च सर्व्वेषामेतेषां विरुद्धा, तथा सच्चिदानन्देश्वरस्य यो विभवयुक्तः ११ सुसंवादो मयि समर्पितस्तदनुयायिहितोपदेशस्य विपरीतं यत् किञ्चिद् भवति तद्विरुद्धा सा व्यवस्थेति तद्ग्राहिणा ज्ञातव्यं। मह्यं शक्तिदाता योऽस्माकं प्रभुः ख्रीष्टयीशुस्तमहं १२ धन्यं वदामि। यतः पुरा निन्दक उपद्रावी हिंसकश्च भूत्वा- १३ प्यहं तेन विश्वास्यो ऽमन्ये परिचारकत्वे न्ययुज्ये च। तद् अविश्वासाचरणम् अज्ञानेन मया कृतमिति हेतोरहं तेनानुकम्पितोऽभवं। अपरं ख्रीष्टे यीशौ विश्वासप्रेमभ्यां सहितोऽस्म- १४ त्प्रभोरनुग्रहो ऽतीव प्रचुरोऽभत्। पापिनः परित्रातुं ख्रीष्टो १५ यीशु र्जगति समवतीर्णोऽभवत्, एषा कथा विश्वसनीया सर्व्वै

१६ र्ग्रहणीया च। तेषां पापिनां मध्येऽहं प्रथम आसं किन्तु ये मानवा अनन्तजीवनप्राप्त्यर्थं तस्मिन् विश्वसिष्यन्ति तेषां दृष्टान्ते मयि प्रथमे यीशुना ख्रीष्टेन स्वकीया कृत्स्ना चिरसहिष्णुता
१७ यत् प्रकाश्यते तदर्थमेवाहम् अनुकम्पां प्राप्तवान्। अनादिरक्षयोऽदृश्यो राजा योऽद्वितीयः सर्व्वज्ञ ईश्वरस्तस्य गौरवं महिमा चानन्तकालं यावद् भूयात्। आमेन।

१८ हे पुत्र तीमथिय त्वयि यानि भविष्यद्वाक्यानि पुरा कथितानि तदनुसाराद् अहम् एनमादेशं त्वयि समर्पयामि, तस्या-
१९ भिप्रायोऽयं यत्त्वं तै र्वाक्यैरुत्तमयुद्धं करोषि विश्वासं सत्संवेदञ्च धारयसि च। अनयोः परित्यागात् केषाञ्चिद्
२० विश्वासतरी भग्नाभवत्। हुमिनायसिकन्दरौ तेषां यौ द्वौ जनौ, तौ यद् धर्म्मनिन्दां पुन र्न कर्त्तुं शिक्षेते तदर्थं मया शयतानस्य करे समर्पितौ।

---

## २ द्वितीयोऽध्यायः।

१ सर्व्वसाधारणलोकानां कृते प्रार्थयितुं पौलस्य निदेशः ८ योषिताम् अलङ्कारस्यानुपदेशस्य च कथनम्।

१ मम प्रथम आदेशोऽयं, प्रार्थनाविनयनिवेदनधन्यवादाः
२ कर्त्तव्याः, सर्व्वेषां मानवानां कृते विशेषतो वयं यत् शान्तत्वेन निर्व्विरोधत्वेन चेश्वरभक्तिं विनीतत्वञ्चाचरन्तः कालं यापयामस्तदर्थं नृपतीनाम् उच्चपदस्थानाञ्च कृते ते कर्त्तव्याः।
३ यतोऽस्माकं तारकस्येश्वरस्य साक्षात् तदेवोत्तमं ग्राह्यञ्च
४ भवति, स सर्व्वेषां मानवानां परित्राणं सत्यज्ञानप्राप्तिञ्चेच्छति।
५ यत एकोऽद्वितीय ईश्वरो विद्यते किञ्चेश्वरे मानवेषु चैको
६ ऽद्वितीयो मध्यस्थः स नरावतारः ख्रीष्टो यीशु र्विद्यते यः

सर्व्वेषां मुक्ते मूल्यम् आत्मदानं कृतवान्। एतेन येन प्रमा-
णेनोपयुक्ते समये प्रकाशितव्यं, तद्घोषयिता दूतो विश्वासे ७
सत्यधर्म्मे च भिन्नजातीयानाम् उपदेशकश्चाहं न्ययुज्ये, एतदहं
ख्रीष्टस्य नाम्ना यथातथ्यं वदामि नानृतं कथयामि।

अतो ममाभिमतमिदं पुरुषैः क्रोधसन्देहौ विना पवित्रक- ८
रान् उत्तोल्य सर्व्वस्मिन् स्थाने प्रार्थना क्रियतां। तद्वत् नार्य्यो- ९
ऽपि सलज्जाः संयतमनसश्च सत्यो योग्यमाच्छादनं परिदधतु
किञ्च केशसंस्कारैः कणकमुक्ताभि र्महार्घ्यपरिच्छदैश्चात्मभूषणं
न कुर्व्वत्यः स्वीकृतेश्वरभक्तीनां योषितां योग्यैः सत्कर्म्मभिः १०
स्वभूषणं कुर्व्वतां। नारी सम्पूर्णविनीतत्वेन निर्व्विरोधं शिक्षतां। ११
नार्य्याः शिक्षादानं पुरुषायाज्ञादानं वाहं नानुजानामि तया १२
निर्व्विरोधत्वम् आचरितव्यं। यतः प्रथमम् आदमस्ततः परं १३
हवायाः सृष्टि र्बभूव। किञ्चादम् भ्रान्तियुक्तो नाभवत् योषिदेव १४
भ्रान्तियुक्ता भूत्वात्याचारिणी बभूव। तथापि नारीगणो यदि १५
विश्वासे प्रेम्नि पवित्रतायां संयतमनसि च तिष्ठति तर्ह्यपत्य-
प्रसववर्त्मना परित्राणं प्राप्स्यति।

---

## ३ तृतीयोऽध्यायः।

१ अध्यक्षाणां व्यवहारनिर्णयः ८ परिचारकाणां व्यवहारनिर्णयः १४ तीमथियं प्रति लिखितुं पौलस्याभिप्रायः।

यदि कश्चिद् अध्यक्षपदम् आकाङ्क्षते तर्हि स उत्तमं १
कर्म्म लिप्सत इति सत्यं। अतोऽध्यक्षेणानिन्दितेनैकस्या योषितो २
भर्त्रा परिमितभोगेन संयतमनसा सभ्येनातिथिसेवकेन शिक्षणे
निपुणेन न मद्यपेन न प्रहारकेण किन्तु मृदुभावेन निर्व्विवा- ३
देन निर्लोभेन स्वपरिवाराणाम् उत्तमशासकेन पूर्णविनी- ४

५ तस्माद् वश्यानां सन्तानानां नियन्त्रा च भवितव्यं । यत आत्मपरिवारान् शासितुं यो न शक्नोति तेनेश्वरस्य समि-
६ तेस्तत्त्वावधारणं कथं कारिष्यते? अपरं स गर्व्वितो भूत्वा यत् शयतान इव दण्डयोग्यो न भवेत् तदर्थं तेन नवशिष्येण न
७ भवितव्यं । यच्च निन्दायां शयतानस्य जाले च न पतेत् तदर्थं तेन वहिःस्थलोकानामपि मध्ये सुख्यातियुक्तेन भवितव्यं ।

८ तद्वत् परिचारकैरपि विनीतै र्द्विविधवाक्यरहितै र्बहु-
९ मद्यपाने ऽनासक्तै र्निर्लोभैश्च भवितव्यं, निर्म्मलसंवेदेन च वि-
१० श्वासस्य निगूढवाक्यं धारितव्यञ्च । अग्रे तेषां परीक्षा क्रियतां
११ ततः परम् अनिन्दिता भूत्वा ते परिचर्य्यां कुर्व्वन्तु । अपरं योषिद्भिरपि विनीताभिरनपवादिकाभिः सतर्काभिः सर्व्वत्र
१२ विश्वास्याभिश्च भवितव्यं । परिचारका एकैकयोषितो भर्त्तारो भवेयुः, निजसन्तानानां परिजनानाञ्च सुशासनं कुर्य्युश्च ।
१३ यतः सा परिचर्य्या यै र्भद्ररूपेण साध्यते ते श्रेष्ठपदं प्राप्नुवन्ति ख्रीष्टे यीशौ विश्वासेन महोत्सुका भवन्ति च ।

१४ त्वां प्रत्येतत्पत्रलेखनसमये शीघ्रं त्वत्समीपगमनस्य प्रत्याशा
१५ मम विद्यते । यदि वा विलम्बेय तर्हीश्वरस्य गृहे ऽर्थतः सत्य-धर्म्मस्य स्तम्भभित्तिमूलस्वरूपायाम् अमरेश्वरस्य समितौ त्वया
१६ कीदृश आचारः कर्त्तव्यस्तत् ज्ञातुं शक्ष्यते । अपरं यस्य महत्त्वं सर्व्वस्वीकृतम् ईश्वरभक्तेस्तत् निगूढवाक्यमिदम् ईश्वरो मानवदेहे प्रकाशित आत्मना सपुण्यीकृतो दूतैः सन्दृष्टः सर्व्वजातीयानां निकटे घोषितो जगतो विश्वासपात्रीभूतस्तेजः-प्राप्तये स्वर्गं नीतश्चेति ।

# ४ चतुर्थोऽध्यायः।

१ धर्म्मत्यागस्य भविष्यद्वाक्यं ७ धर्म्मे तीमथियं प्रति पौलस्य नानाविधोपदेशश्च।

पवित्र आत्मा स्पष्टम् इदं वाक्यं वदति चरमकाले कति- १
पयलोका वह्निनाङ्कितत्वात् कठोरमनसां कापट्याद् अनृत- २
वादिनां विवाहनिषेधकानां भक्ष्यविशेषनिषेधकानाञ्च भूत- ३
स्वरूपाणां शिक्षायां भ्रमकात्मनां वाक्येषु च मनांसि निवेश्य
धर्म्माद् भ्रंशिष्यन्ते। तानि तु भक्ष्याणि विश्वासिनां स्वीकृत- ४
सत्यधर्म्माणाञ्च धन्यवादसहिताय भोगायेश्वरेण ससृजिरे।
यत ईश्वरेण यद्यत् सृष्टं तत् सर्व्वम् उत्तमं यदि च धन्यवादेन
भुज्यते तर्हि तस्य किमपि नाग्राह्यं भवति, यत ईश्वरस्य वाक्येन ५
प्रार्थनया च तत् पवित्रीभवति। एतानि वाक्यानि यदि ६
त्वं भ्रातृन् ज्ञापयेस्तर्हि यीशुख्रीष्टस्योत्तमः परिचारको
भविष्यसि यो विश्वासो हितोपदेशश्च त्वया गृहीतस्तदीयवा-
क्यैराप्यायिष्यसे च।

यान्युपाख्यानानि दुर्भावानि वृद्धयोषितामेव योग्यानि च ७
तानि त्वया विसृज्यन्ताम् ईश्वरभक्तये यत्नः क्रियताञ्च। यतः ८
शारीरिको यत्नः स्वल्पफलदो भवति किन्त्वीश्वरभक्तिरै-
हिकपारत्रिकजीवनयोः प्रतिज्ञायुक्ता सती सर्व्वत्र फलदा
भवति। वाक्यमेतद् विश्वसनीयं सर्व्वै ग्रहणीयञ्च वयञ्च तद- ९
र्थमेव श्राम्यामो निन्दां भुंज्महे च। यतो हेतोः सर्व्वमान-१०
वानां विशेषतो विश्वासिनां त्राता योऽमर ईश्वरस्तस्मिन् वयं
विश्वसामः। त्वम् एतानि वाक्यानि प्रचारय समुपदिश च।११
अल्पवयस्कत्वात् केनाप्यवज्ञेयो न भव किन्त्वालापेनाचरणेन १२
प्रेम्ना सदात्मत्वेन विश्वासेन शुचित्वेन च विश्वासिनाम् आदर्शो

१३ भव। यावन्नाहम् आगमिष्यामि तावत् त्वं पाठे चेतयने
१४ उपदेशे च मनो निधत्स्व। प्राचीनगणहस्तार्पणसहितेन भवि-
ष्यद्वाक्येन यद्दानं तुभ्यं विश्राणितं तवान्तःस्थे तस्मिन् दाने
१५ शिथिलमना मा भव। एतेषु मनो निवेशय, एतेषु वर्त्तस्व,
१६ इत्थञ्च सर्व्वविषये तव गुणवृद्धिः प्रकाशतां। स्वस्मिन् उपदेशे
च सावधानो भूत्वावतिष्ठस्व तत् कृत्वा त्वयात्मपरित्राणं श्रोतृ-
णाञ्च परित्राणं साधयिष्यते।

---

## ५ पञ्चमोऽध्यायः।

१ भर्त्सनं विधवापालनस्य १७ प्राचीनलोकानां निरूपणं २१ तीमथियं प्रति पौलस्य विशेषोपदेशस्य।

१ त्वं प्राचीनं न भर्त्सय किन्तु तं पितरमिव यूनश्च भ्रातृ-
२ निव वृद्धाः स्त्रियश्च मातृनिव युवतीश्च पूर्णशुचित्वेन भगिनी-
३ रिव विनयस्व। अपरं सत्यविधवाः सम्मन्यस्व। कस्याश्चिद्
४ विधवाया यदि पुत्राः पौत्रा वा विद्यन्ते तर्हि ते प्रथमतः
स्वीयपरिजनान् सेवितुं पित्रोः प्रत्युपकर्त्तुञ्च शिक्षन्तां यतस्त-
५ देवेश्वरस्य साक्षाद् उत्तमं ग्राह्यञ्च कर्म्म। अपरं या नारी
सत्यविधवा नाथहीना चास्ति सा ईश्वरस्याश्रये तिष्ठन्ती दिवा-
६ निशं निवेदनप्रार्थनाभ्यां कालं यापयति। किन्तु या विधवा
७ सुखभोगासक्ता सा जीवत्यपि मृता भवति। अतएव ता यद्
८ अनिन्दिता भवेयुस्तदर्थम् एतानि त्वया निदिश्यन्तां। यदि
कश्चित् स्वजातीयान् लोकान् विशेषतः स्वीयपरिजनान् न
पालयति तर्हि स विश्वासाद् भ्रष्टो ऽविश्वासिनो ऽप्यधमश्च
९ भवति। विधवावर्गे यस्या गणना भवति तया षष्टिवत्सरेभ्यो
न्यूनवयस्कया न भवितव्यं; अपरं पूर्व्वम् एकस्वामिका भूत्वा

सा यत् शिशुपोषणेनातिथिसेवनेन पवित्रलोकानां चरणप्रक्षा- १०
लनेन क्लिष्टानाम् उपकारेण सर्व्वविधसत्कर्म्माचरणेन च सत्कर्म्म-
करणात् सुख्यातिप्राप्ता भवेत् तदप्यावश्यकं । किन्तु युवती ११
र्विधवा न गृहाण यतः ख्रीष्टस्य वैपरीत्येन तासां दर्पे जाते
ता विवाहम् इच्छन्ति । तस्माच्च पूर्व्वधर्म्मं परित्यज्य दण्डनीया १२
भवन्ति । अनन्तरं ता गृहाद् गृहं पर्य्यटन्त्य आलस्यं शिक्षन्ते १३
केवलमालस्यं नहि किन्त्वनर्थकालापं पराधिकारचर्च्चाञ्चापि
शिक्षमाणा अनुचितानि वाक्यानि भाषन्ते । अतो ममेच्छेयं १४
युवत्यो विधवा विवाहं कुर्व्वताम् अपत्यवत्यो भवन्तु गृहकर्म्म
कुर्व्वताञ्चेत्थं विपक्षाय किमपि निन्दाद्वारं न ददतु । यत १५
इतः पूर्व्वम् अपि काश्चित् शयतानस्य पश्चाद्गामिन्यो जाताः ।
अपरं विश्वासिन्या विश्वासिनो वा कस्यापि परिवाराणां १६
मध्ये यदि विधवा विद्यन्ते तर्हि स ताः प्रतिपालयतु तस्मात्
समितौ भारे ऽनारोपिते सत्यविधवानां प्रतिपालनं कर्त्तुं
तया शक्यते ।

ये प्राञ्चः समितिं सम्यग् अधितिष्ठन्ति विशेषत ईश्वर- १७
वाक्येनोपदेशेन च ये यत्नं विदधते ते द्विगुणस्यादरस्य
योग्या मान्यन्तां । यस्मात् शास्त्रे लिखितमिदमास्ते, त्वं शस्य- १८
मर्द्दकवृषस्यास्यं मा बधानेति, अपरमपि कार्य्यकृद् वेतनस्य
योग्यो भवतीति । द्वौ त्रीन् वा साक्षिणो विना कस्यचित् १९
प्राचीनस्य विरुद्धम् अभियोगस्त्वया न गृह्यतां । अपरं ये २०
पापमाचरन्ति तान् सर्व्वेषां समक्षं भर्त्सयस्व तेनापरेषामपि
भीति र्जनिष्यते । अहम् ईश्वरस्य प्रभो यीशुख्रीष्टस्य मनो- २१
नीतदिव्यदूतानाञ्च गोचरे त्वाम् इदम् आज्ञापयामि त्वं

कस्याप्यनुरोधेन किमपि न कुर्व्वन् विनापक्षपातम् एतान् विधीन् पालय।

२२ कस्यापि मूर्द्धि हस्तार्पणं त्वरया माकार्षीः। परपापानाम् २३ अंशी मा भव। स्वं शुचिं रक्ष। अपरं तवोदरपीडायाः पुनः पुन दुर्व्वलतायाश्च निमित्तं केवलं तोयं न पिवन् किञ्चिन् २४ मद्यं पिव। केषाञ्चित् मानवानां पापानि विचारात् पूर्व्वं २५ केषाञ्चित् पश्चात् प्रकाशन्ते। तथैव सत्कर्म्माण्यपि प्रकाशन्ते तदन्यथा सति प्रच्छन्नानि स्थातुं न शक्नुवन्ति।

---

## ६ षष्ठोऽध्यायः।

१ दासानां कर्त्तव्यं कर्म्म दुष्टोपदेशकस्य त्यागो धर्म्मफलञ्च ११ धर्म्मे तीमथियं प्रति पौलस्य निवेदनं १७ धनिलोकाः किमुपदेष्टव्यास्तत्कथनं २० पत्रस्य समाप्तिश्च।

१ यावन्तो लोका युगधारिणो दासाः सन्ति ते स्वस्वामिनं पूर्णसमादरयोग्यं मन्यन्तां नो चेद् ईश्वरस्य नाम्न उपदेशस्य २ च निन्दा सम्भविष्यति। येषाञ्च स्वामिनो विश्वासिनः भवन्ति तैस्ते भ्रातृत्वात् नावज्ञेयाः किन्तु ते कर्म्मफलभोगिनो विश्वासिनः प्रियाश्च भवन्तीति हेतोः सेवनीया एव, त्वम् ३ एतानि शिक्षय समुपदिश च। यः कश्चिद् इतरशिक्षां करोति, अस्माकं प्रभो र्यीशुख्रीष्टस्य हितवाक्यानीश्वरभक्ते ४ र्योग्यां शिक्षाञ्च न स्वीकरोति स दर्पध्मातः सर्व्वथा ज्ञान- ५ हीनश्च विवादे र्वाग्युद्धे च रोगयुक्तश्च भवति। तादृशाद् भावाद् ईर्ष्याविरोधापवाददुष्टासूया भ्रष्टमनसां सत्यज्ञानहीनानाम् ईश्वरभक्तिं लाभोपायम् इव मन्यमानानां लोकानां विवादाश्च जायन्ते तादृशेभ्यो लोकेभ्यस्त्वं पृथक् तिष्ठ।

संयतेच्छया युक्ता येश्वरभक्तिः सा महालाभोपायो भवतीति ६
सत्यं। एतज्जगत्प्रवेशनकालेऽस्माभिः किमपि नानायि तत्त्य- ७
जनकालेऽपि किमपि नेतुं न शक्यत इति निश्चितं। अतएव ८
खाद्यान्याच्छादनानि च प्राप्यास्माभिः सन्तुष्टै र्भवितव्यं। ये ९
तु धनिनो भवितुं चेष्टन्ते ते परीक्षायाम् उन्माथे पतन्ति ये
चाभिलाषा मानवान् विनाशे नरके च मज्जयन्ति तादृशेष्व-
ज्ञानाहिताभिलाषेष्वपि पतन्ति। यतोऽर्थस्पृहा सर्व्वेषां दुरि- १०
तानां मूलं भवति तामवलम्ब्य केचिद् विश्वासाद् अभ्रंशन्त
नानाक्लेशैश्च स्वान् अविध्यन्।

हे ईश्वरस्य लोक त्वम् एतेभ्यः पलाय्य धर्म्म ईश्वरभक्ति ११
र्विश्वासः प्रेम सहिष्णुता क्षान्तिश्चैतान्याचर। विश्वासरूपम् १२
उत्तमयुद्धं कुरु, अनन्तजीवनम् आलम्बस्व यतस्तदर्थं त्वम्
आहूतो ऽभवः, बहुसाक्षिणां समक्षञ्चोत्तमां प्रतिज्ञां स्वीकृत-
वान्। अपरं सर्व्वेषां जीवयितुरीश्वरस्य साक्षाद् यश्च ख्रीष्टो १३
यीशुः पन्तीयपीलातस्य समक्षम् उत्तमां प्रतिज्ञां स्वीकृतवान्
तस्य साक्षाद् अहं त्वाम् इदम् आज्ञापयामि। ईश्वरेण १४
स्वसमये प्रकाशितव्यम् अस्माकं प्रभो र्यीशुख्रीष्टस्यागमनं यावत्
त्वया निष्कलङ्कत्वेन निर्द्दोषत्वेन च विधी रक्ष्यतां। स ईश्वरः १५
सच्चिदानन्दः, अद्वितीयसम्राट्, राज्ञां राजा, प्रभूनां प्रभुः,
अमरताया अद्वितीय आकरः, अगम्यतेजोनिवासी, मर्त्त्यानां १६
केनापि न दृष्टः केनापि न दृश्यश्च। तस्य गौरवपराक्रमौ
सदातनौ भूयास्तां। आमेन्।

इहलोके ये धनिनस्ते चित्तसमुन्नतिं चपले धने विश्वा- १७
सञ्च न कुर्व्वतां किन्तु भोगार्थम् अस्मभ्यं प्रचुरत्वेन सर्व्व-

१८ दाता योऽमर ईश्वरस्तस्मिन् विश्वसन्तु सदाचारं कुर्व्वन्तु
१९ सत्कर्म्मधनेन धनिनो सुकला दातारश्च भवन्तु, यथा च
सत्यं जीवनं प्राप्नुयुस्तथा पारत्रिकाम् उत्तमसम्पदं सञ्चिन्व-
न्त्वेति त्वयादिश्यन्तां।

२० हे तीमथिय, त्वम् उपनिधिं गोपय काल्पनिकविद्याया
२१ अपवित्रं प्रलापं विरोधोक्तिञ्च त्यज च, यतः कतिपया लोका-
स्तां विद्यामवलम्ब्य विश्वासाद् भ्रष्टा अभवन्। प्रसादस्तव
सहायो भूयात्। आमेन्।

---

# तीमथियं प्रति पौलस्य प्रेरितस्य द्वितीयं पत्रं।

## १ प्रथमोऽध्यायः।

१ मङ्गलाचरणं २ सत्यविश्वासकारणात् तीमथियं प्रति पौलस्य प्रेम ६ तथा धर्म्म-
कर्म्मणि दुःखभोगे च तीमथियं प्रति पौलस्योपदेशः १२ धर्म्मे स्थातुम् उपदेशः
१५ कियतां लोकानां धर्म्मत्यागः, अनीषिफरस्य धर्म्मशीलत्वप्रकाशश्च।

१ ख्रीष्टेन यीशुना या जीवनस्य प्रतिज्ञा तामधीश्वरस्ये-
च्छया यीशोः ख्रीष्टस्यैकः प्रेरितः पौलोऽहं स्वकीयं प्रियं
२ धर्म्मपुत्रं तीमथियं प्रति पत्रं लिखामि। तात ईश्वरोऽस्माकं
प्रभु र्यीशुख्रीष्टश्च त्वयि प्रसादं दयां शान्तिञ्च क्रियास्तां।

३ अहम् आ पूर्व्वपुरुषात् यम् ईश्वरं पवित्रमनसा सेवे तं
धन्यं वदन् कथयामि, अहम् अहोरात्रं प्रार्थनासमये त्वां
४ निरन्तरं स्मरामि। यश्च विश्वासः प्रथमे लोयीनामिकायां
तव मातामह्याम् ऊनीकीनामिकायां मातरि चातिष्ठत्
५ तवान्तरेऽपि तिष्ठतीति मन्ये तव तं निष्कपटं विश्वासं मनसि

कुर्व्वन् तवाश्रुपातं स्मरन् यथानन्देन प्रफुल्लो भवेयं तदर्थं तव दर्शनम् आकाङ्क्षे।

अतो हेतो र्मम हस्तार्पणेन लब्धो य ईश्वरस्य वरस्त्वयि ६ विद्यते तम् उज्ज्वालयितुं त्वां स्मारयामि। यत ईश्वरोऽस्मभ्यं ७ भयजनकम् आत्मानम् अदत्त्वा शक्तिप्रेमसतर्कतानाम् आकरम् आत्मानं दत्तवान्। अतएवास्माकं प्रभुमधि तस्य वन्दिदासं ८ मामधि च प्रमाणं दातुं न त्रपस्व किन्त्वीश्वरीयशक्त्या सुसंवादस्य कृते दुःखस्य सहभागी भव। सोऽस्मान् परित्राण- ९ पात्राणि कृतवान् पवित्रेणाह्वानेनाहूतवांश्च; अस्मत्कर्म्महेतुनेति नहि स्वीयनिरूपणस्य प्रसादस्य च कृते तत् कृतवान्। स प्रसादः सृष्टेः पूर्व्वकाले ख्रीष्टेन यीशुनास्मभ्यम् अदायि, किन्त्वधुनास्माकं परित्रातु र्यीशोः ख्रीष्टस्यागमनेन प्राकाशत। १० ख्रीष्टो मृत्युं पराजितवान् सुसंवादेन च जीवनम् अमरताञ्च प्रकाशितवान्। तस्य घोषयिता दूतश्चान्यजातीयानां शिक्ष- ११ कश्चाहं नियुक्तोऽस्मि। तस्मात् कारणात् ममायं क्लेशो भवति १२ तेन मम लज्जा न जायते यतोऽहं यस्मिन् विश्वसितवान् तमवगतोऽस्मि महादिनं यावत् ममोपनिधे र्गोपनस्य शक्तिस्तस्य विद्यत इति निश्चितं जानामि।

हितदायकानां वाक्यानाम् आदर्शरूपेण मत्तः श्रुताः ख्रीष्टे १३ यीशौ विश्वासप्रेम्नोः कथा धारय। अपरम् अस्मदन्तर्वासिना १४ पवित्रेणात्मना तामुत्तमाम् उपनिधिं गोपय।

आशियादेशीयाः सर्व्वे मां त्यक्तवन्त इति त्वं जानासि तेषां १५ मध्ये फुगिल्लो हर्म्मगिनिश्च विद्येते। प्रभुरनीषिफरस्य परिवा- १६ रान् प्रति कृपां विदधातु यतः स पुनः पुन र्माम् आप्यायि-

१७ तवान् मम शृङ्खलेन न त्रपित्वा रोमानगरे उपस्थितिसमये
१८ यत्नेन मां मृगयित्वा ममोद्देशं प्राप्तवान्। अतो विचारदिने स
यथा प्रभोः कृपाभाजनं भवेत् तादृशं वरं प्रभुस्तस्मै देयात्।
इफिषनगरेऽपि स कति प्रकारै र्माम् उपकृतवान् तत् त्वं
सम्यग् वेत्सि।

---

## २ द्वितीयोऽध्यायः।

१ धर्म्मकर्म्मणि नित्यप्रवृत्ति र्दुःखसहिष्णुत्वं १४ तीमथियं प्रति कर्त्तव्याकर्त्तव्ययो र्नानोपदेशश्च।

१ हे मम पुत्र, ख्रीष्टयीशुतो योऽनुग्रहस्तस्य बलेन त्वं बल-
२ वान् भव। अपरं बहुभिः साक्षिभिः प्रमाणीकृतां यां शिक्षां
श्रुतवानसि तां विश्वास्येषु परस्मै शिक्षादाने निपुणेषु च
३ लोकेषु समर्पय। त्वं यीशुख्रीष्टस्योत्तमो योद्धेव क्लेशं सहस्व।
४ यो युद्धं करोति स सांसारिके व्यापारे मग्नो न भवति किन्तु
५ स्वनियोजयित्रे रोचितुं चेष्टते। अपरं यो मल्लै र्युध्यति स यदि
६ नियमानुसारेण न युध्यति तर्हि किरीटं न लप्स्यते। अपरं
यः कृषीवलः कर्म्म करोति तेन प्रथमेन फलभागिना भवि-
७ तव्यं। मया यदुच्यते तत् त्वया बुध्यतां यतः प्रभुस्तुभ्यं सर्व्वत्र
८ बुद्धिं दास्यति। मम सुसंवादस्य वचनानुसाराद् दायूद्-
९ वंशीयं मृतगणमध्याद् उत्थापितञ्च यीशुं ख्रीष्टं स्मर। तत्-
सुसंवादकारणाद् अहं दुष्कर्म्मेव बन्धनदशापर्य्यन्तं क्लेशं भुञ्जे
१० किन्त्वीश्वरस्य वाक्यम् अबद्धं तिष्ठति। ख्रीष्टेन यीशुना यद्
अनन्तगौरवसहितं परित्राणं जायते तदभिरुचितै र्लोकैरपि
११ यत् लभ्येत तदर्थमहं तेषां निमित्तं सर्व्वाण्येतानि सहे। अप-
रम् एषा भारती सत्या यदि वयं तेन सार्द्धं म्रियामहे तर्हि

तेन सार्द्धं जीविष्यामः, यदि च क्लेशं सहामहे तर्हि तेन सार्द्धं राजत्वमपि करिष्यामहे। यदि वयं तम् अनङ्गीकुर्म्मस्तर्हि १२ सो ऽस्मानप्यनङ्गीकरिष्यति। यदि वयं न विश्वसामस्तर्हि स १३ विश्वास्यस्तिष्ठति यतः स्वम् अपह्नोतुं न शक्नोति।

त्वमेतानि स्मारयन् ते यथा निष्फलं श्रोतृणां भ्रंशज- १४ नकं वाग्युद्धं न कुर्य्युस्तथा प्रभोः समक्षं दृढं विनीयादिश। अपरं त्वम् ईश्वरस्य साक्षात् स्वं परीक्षितम् अनिन्दनीयकर्म्म- १५ कारिणञ्च सत्यमतस्य वाक्यानां सद्विभजने निपुणञ्च दर्शयितुं यतस्व। किन्त्वपवित्रा अनर्थककथा दूरीकुरु यतस्तदालम्बिन १६ उत्तरोत्तरम् अधर्म्मे वर्द्धिष्यन्ते, तेषाञ्च वाक्यं गलितक्षतवत् १७ क्षयवर्द्धको भविष्यति तेषां मध्ये हुमिनायः फिलीतश्चेतिना- मानौ द्वौ जनौ सत्यमताद् भ्रष्टौ जातौ, मृतानां पुनरु- १८ त्थिति र्व्यतीतेति वदन्तौ केषाञ्चिद् विश्वासम् उत्पाटयतश्च। तथापीश्वरस्य भित्तिमूलम् अचलं तिष्ठति तस्मिंश्चेयं लिपि १९ र्मुद्राङ्किता विद्यते। यथा,

जानाति परमेशस्तु स्वकीयान् सर्व्वमानवान्।
अपगच्छेद् अधर्म्माच्च यः कश्चित् ख्रीष्टनामकृत्॥

किन्तु बृहन्निकेतने केवलं सुवर्णमयानि रौप्यमयाणि च भा- २० जनानि विद्यन्त इति नहि काष्ठमयानि मृण्मयान्यपि विद्यन्ते तेषाञ्च कियन्ति सम्मानाय कियन्त्यपमानाय च भवन्ति। अतो यदि कश्चिद् एतादृशेभ्यः स्वं परिष्करोति तर्हि स २१ पावितं प्रभोः कार्य्ययोग्यं सर्व्वसत्कार्य्यायोपयुक्तं सम्मानार्थ- कञ्च भाजनं भविष्यति। यौवनावस्थाया अभिलाषास्त्वया २२ परित्यज्यन्तां धर्म्मो विश्वासः प्रेम ये च शुचिमनोभिः प्रभुम्

उद्दिश्य प्रार्थनां कुर्व्वते तैः सार्द्धम् ऐक्यभावश्चैतेषु त्वया यत्नो
२३ विधीयतां। अपरं त्वम् अनर्थकान् अज्ञानांश्च प्रश्नान् वाग्-
२४ युद्धोत्पादकान् ज्ञात्वा दूरीकुरु। यतः प्रभो र्दासेन युद्धम्
अकर्त्तव्यं किन्तु सर्व्वान् प्रति शान्तेन शिक्षादानेच्छुकेन सहि-
२५ ष्णुना च भवितव्यं, विपक्षाश्च तेन नम्रत्वेन चेतितव्याः। तथा
कृते यदीश्वरः सत्यमतस्य ज्ञानार्थं तेभ्यो मनःपरिवर्त्तनरूपं
२६ वरं दद्यात्, तर्हि ते येन शयतानेन निजाभिलाषसाधनाय
धृतास्तस्य जालात् चेतनां प्राप्योद्धारं लब्धुं शक्ष्यन्ति।

---

## ३ तृतीयोऽध्यायः।

१ भ्रष्टलोकेषु भविष्यद्वाक्यं १० पौलस्य स्वीयाचारस्य प्रकाशनं धर्म्मपुस्तकस्य प्रशंसा च।

१ चरमदिनेषु क्लेशजनकाः समया उपस्थास्यन्तीति जानी-
२ हि। यतस्तात्कालिका लोका आत्मप्रेमिणो ऽर्थप्रेमिण आत्म-
श्लाघिनो ऽभिमानिनो निन्दकाः पित्रोरनाज्ञाग्राहिणः कृतघ्ना
३ अपवित्राः प्रीतिवर्जिता असन्धेया मृषापवादिनो ऽजितेन्द्रियाः
४ प्रचण्डा भद्रद्वेषिणो विश्वासघातका दुःसाहसिनो दर्पध्माता
५ ईश्वराप्रेमिणः किन्तु सुखप्रेमिणो भक्तवेशाः किन्त्वस्वीकृत-
भक्तिगुणा भविष्यन्ति; एतादृशानां लोकानां संसर्गं परि-
६ त्यज। यतो ये जनाः प्रच्छन्नं गेहान् प्रविशन्ति पापै र्भार-
ग्रस्ता नानाविधाभिलाषैश्चालिता याः कामिन्यो नित्यं शिक्ष-
७ न्ते किन्तु सत्यमतस्य तत्त्वज्ञानं प्राप्तुं कदाचित् न शक्नुवन्ति
८ ता दासीवद् वशीकुर्व्वते च ते तादृशा लोकाः। यान्नि र्या-
म्ब्रिश्च यथा मूससं प्रति विपक्षत्वम् अकुरुतां तथैव भ्रष्टमनसो
विश्वासविषये ऽग्राह्याश्चैते लोका अपि सत्यमतं प्रति विपक्षतां

कुर्व्वन्ति। किन्तु ते बहुदूरम् अग्रसरा न भविष्यन्ति यतस्तयो ९
र्मूढता यद्वत् तद्वद् एतेषामपि मूढता सर्व्वदृश्या भविष्यति।

ममोपदेशः शिष्टताभिप्रायो विश्वासो धैर्य्यं प्रेम सहिष्णुतो- १०
पद्रवः क्लेशा आन्तियखियायाम् इकनिये लूस्त्रायाञ्च मां प्रति ११
यद्यद् अघटत यांश्चोपद्रवान् अहम् असहे सर्व्वमेतत् त्वम् अव-
गतोऽसि किन्तु तत्सर्व्वतः प्रभु र्माम् उद्धृतवान्। परन्तु यावन्तो १२
लोकाः ख्रीष्टेन यीशुनेश्वरभक्तिम् आचरितुम् इच्छन्ति तेषां
सर्व्वेषाम् उपद्रवो भविष्यति। अपरं पापिष्ठाः खलाश्च लोका १३
भ्राम्यन्तो भ्रमयन्तश्चोत्तरोत्तरं दुष्टत्वेन वर्द्धिष्यन्ते। किन्तु त्वं १४
यद् यद् अशिक्षथाः, यच्च त्वयि समर्पितम् अभूत् तस्मिन् अव-
तिष्ठ, यतः कस्मात् शिक्षां प्राप्तोऽसि तद् वेत्सि; यानि च धर्म्म- १५
शास्त्राणि ख्रीष्टे यीशौ विश्वासेन परित्राणप्राप्तये त्वां ज्ञानिनं
कर्त्तुं शक्नुवन्ति तानि त्वं शैशवकालाद् अवगतोऽसि। तत् सर्व्वं १६
शास्त्रम् ईश्वरस्यात्मना दत्तं शिक्षायै दोषबोधाय शोधनाय
धर्म्मविनयाय च फलयुक्तं भवति तेन चेश्वरस्य लोको निपुणः १७
सर्व्वस्मै सत्कर्म्मणे सुसज्जश्च भवति।

---

## ४ चतुर्थोऽध्यायः।

१ सुसंवादप्रचारणे नित्यं प्रवर्त्तितुं विनयः ६ निजस्तुतिभाविसुखयोः पैालस्य कथनं ९ नानासंवादकथा १९ नमस्कारज्ञापनञ्च।

ईश्वरस्य गोचरे यश्च यीशुः ख्रीष्टः स्वीयागमनकाले १
स्वराजत्वेन जीवतां मृतानाञ्च लोकानां विचारं करिष्यति
तस्य गोचरे ऽहं त्वाम् इदं दृढम् आज्ञापयामि। त्वं वाक्यं २
घोषय कालेऽकाले चोत्सुको भव पूर्णया सहिष्णुतया शिक्षया
च लोकान् प्रबोधय भर्त्सय विनयस्व च। यत एतादृशः ३

समय आयाति यस्मिन् लोका यथार्थम् उपदेशम् असह्य-
मानाः कर्णकण्डूयनविशिष्टा भूत्वा निजाभिलाषात् शिक्षकान्
४ संग्रहीष्यन्ति सत्यमताच्च श्रोत्राणि निवर्त्त्य विपथगामिनो भूत्वो-
५ पाख्यानेषु प्रवर्त्तिष्यन्ते; किन्तु त्वं सर्व्वविषये प्रबुद्धो भव दुःख-
भोगं स्वीकुरु सुसंवादप्रचारकस्य कर्म्म साधय निजपरिचर्य्यां
पूर्णत्वेन कुरु च।

६ मम प्राणानाम् उत्सर्गो भवति मम प्रस्थानकालश्चोपातिष्ठत्।
७ अहम् उत्तमयुद्धं कृतवान् गन्तव्यमार्गस्यान्तं यावद् धावित-
८ वान् विश्वासञ्च रक्षितवान्। शेषं पुण्यमुकुटं मदर्थं रक्षितं
विद्यते तच्च तस्मिन् महादिने यथार्थविचारकेण प्रभुना मह्यं
दायिष्यते केवलं मह्यम् इति नहि किन्तु यावन्तो लोकास्त-
स्यागमनम् आकाङ्क्षन्ते तेभ्यः सर्व्वेभ्यो ऽपि दायिष्यते।

९ त्वं त्वरया मत्समीपम् आगन्तुं यतस्व, यतो दीमा ऐहि-
१० कसंसारम् ईहमानो मां परित्यज्य थिषलनीकीं गतवान् तथा
क्रीष्कि गालातियां गतवान् तीतश्च दाल्मातियां गतवान्।
११ केवलो लूको मया सार्द्धं विद्यते। त्वं मार्कं सङ्गिनं कृत्वागच्छ
१२ यतः स परिचर्य्यया ममोपकारी भविष्यति, तुखिकञ्चाहम्
१३ इफिषनगरं प्रेषितवान्। यद् आच्छादनवस्त्रं त्रोयानगरे
कार्पस्य सन्निधौ मया निक्षिप्तं त्वमागमनसमये तत् पुस्तकानि च
१४ विशेषतश्चर्म्मग्रन्थान् आनय। कांस्यकारः सिकन्दरो मम बह्व-
१५ निष्टं कृतवान् प्रभुस्तस्य कर्म्मणां समुचितफलं ददातु। त्वमपि
तस्मात् सावधानस्तिष्ठ यतः सोऽस्माकं वाक्यानाम् अतीव विपक्षो
१६ जातः। मम प्रथमप्रत्युत्तरसमये कोऽपि मम सहायो नाभवत्
सर्व्वे मां पर्य्यत्यजन् तान् प्रति तस्य दोषस्य गणना न भूयात्;

किन्तु प्रभु र्मम सहायो ऽभवत् यथा च मया घोषणा साध्येत १७ भिन्नजातीयाश्च सर्व्वे सुसंवादं शृणुयुस्तथा मह्यं शक्तिम् अद-दात् ततो ऽहं सिंहस्य मुखाद् उद्धृतः। अपरं सर्व्वस्माद् दुष्क- १८ र्म्मतः प्रभु र्माम् उद्धरिष्यति निजस्वर्गीयराज्यं नेतुं मां तार-यिष्यति च। तस्य धन्यवादः सदाकालं भूयात्। आमेन्।

त्वं प्रिष्काम् आक्किलम् अनीषिफरस्य परिजनांश्च नम- १९ स्कुरु। इरास्तः करिन्थनगरे ऽतिष्ठत् त्रफिमश्च पीडितत्वात् २० मिलीतनगरे मया व्यहीयत। त्वं हेमन्तकालात् पूर्व्वम् आगन्तुं २१ यतस्व। उबूलः पूदि र्लीनः क्लौदिया सर्व्वे भ्रातरश्च त्वां नम-स्कुर्व्वते। प्रभु र्यीशुः ख्रीष्टस्तवात्मना सह भूयात्। युष्मास्वनु- २२ ग्रहो भूयात्। आमेन्।

---

## तीतं प्रति पौलस्य प्रेरितस्य पत्रं।

---

### १ प्रथमोऽध्यायः।

१ मङ्गलाचरणं ५ क्रीत्युपद्वीपे तीतस्य स्थितेरभिप्रायः, उत्तमोपदेशकानां गुणनि-र्णयः, दुष्टोपदेशकानां गुणनिर्णयश्च।

अनन्तजीवनस्याशातो जाताया ईश्वरभक्ते र्योग्यस्य सत्यम- १ तस्य यत् तत्त्वज्ञानं यश्च विश्वास ईश्वरस्याभिरुचितलोकै र्लभ्यते तदर्थं यीशुख्रीष्टस्य प्रेरित ईश्वरस्य दासः पौलोऽहं साधार- २ णविश्वासात् मम प्रकृतं धर्म्मपुत्रं तीतं प्रति लिखामि। निष्क- ३ पट ईश्वर आदिकालात् पूर्व्वं तत् जीवनं प्रतिज्ञातवान् स्वनि-रूपितसमये च घोषणया तत् प्रकाशितवान्। मम त्रातुरीश्व- ४

रस्याज्ञया च तस्य घोषणं मयि समर्पितम् अभूत्। अस्माकं
तात ईश्वरः परित्राता प्रभु र्यीशुख्रीष्टश्च तुभ्यम् अनुग्रहं
दयां शान्तिञ्च वितरतु।

५ त्वं यद् असम्पूर्णकार्य्याणि सम्पूरये र्मदीयादेशाच्च प्रतिनगरं
प्राचीनगणान् नियोजयेस्तदर्थमहं त्वां क्रीत्युपद्वीपे स्थाप-
६ यित्वा गतवान्। तस्माद् यो नरो ऽनिन्दित एकस्या योषितः
स्वामी विश्वासिनाम् अपचयस्यावाध्यत्वस्य वा दोषेणालिप्तानाञ्च
७ सन्तानानां जनको भवति स एव योग्यः। यतो हेतोरध्यक्षेणे-
श्वरस्य गृहाध्यक्षेणेवानिन्दनीयेन भवितव्यं। तेन स्वेच्छाचा-
रिणा क्रोधिना पानासक्तेन प्रहारकेण लोभिना वा न भवितव्यं
८ किन्त्वतिथिसेवकेन सल्लोकानुरागिणा विनीतेन न्याय्येन धार्म्मि-
९ केण जितेन्द्रियेण च भवितव्यं, उपदेशे च विश्वस्तं वाक्यं तेन
धारितव्यं यतः स यद् यथार्थेनोपदेशेन लोकान् विनेतुं विघ्न-
१० कारिणश्च निरुत्तरान् कर्त्तुं शक्नुयात् तद् आवश्यकं। यतस्ते
बहवो ऽवाध्या अनर्थकवाक्यवादिनः प्रवञ्चकाश्च सन्ति विशेष-
११ तश्छिन्नत्वचां मध्ये केचित् तादृशा लोकाः सन्ति। तेषाञ्च
वाग्रोध आवश्यको यतस्ते कुत्सितलाभस्याशयानुचितानि वा-
क्यानि शिक्षयन्तो निखिलपरिवाराणां सुमतिं नाशयन्ति।
१२ तेषां स्वदेशीय एको भविष्यद्वादी वचनमिदमुक्तवान्, यथा,

क्रीतीयमानवाः सर्व्वे सदा कापट्यवादिनः।
हिंस्रजन्तुसमानास्ते ऽलसाश्चोदरभारतः॥

१३ साक्ष्यमेतत् तथ्यं, अतो हेतोस्त्वं तान् गाढं भर्त्सय ते च यथा
१४ विश्वासे स्वस्था भवेयु र्यिहूदीयोपाख्यानेषु सत्यमतभ्रष्टानां
मानवानाम् आज्ञासु च मनांसि न निवेशयेयुस्तथादिश।

शुचीनां कृते सर्व्वाण्येव शुचीनि भवन्ति किन्तु कलङ्कितानाम् १५
अविश्वासिनाञ्च कृते शुचि किमपि न भवति यतस्तेषां बुद्धयः
संवेदाश्च कलङ्किताः सन्ति। ईश्वरस्य ज्ञानं ते प्रतिजानन्ति १६
किन्तु कर्म्मभिस्तद् अनङ्गीकुर्व्वते यतस्ते गर्हिता अनाज्ञाग्रा-
हिणः सर्व्वसत्कर्म्मणश्चायोग्याः सन्ति।

---

## २ द्वितीयोऽध्यायः।

१ स्थविरस्थविरायुवजनदासाः कथमुपदेष्टव्या इति निर्णयः ११ सुसंवादाभि-
प्रायश्च।

यथार्थस्योपदेशस्य वाक्यानि त्वया कथ्यन्तां विशेषतः प्रा- १
चीनलोका यथा प्रबुद्धा धीरा विनीता विश्वासे प्रेम्नि सहि- २
ष्णुतायाञ्च स्वस्था भवेयुस्तद्वत् प्राचीनयोषितोऽपि यथा धर्म्म- ३
योग्यम् आचारं कुर्य्युः परनिन्दका बहुमद्यपानस्य निघ्नाश्च न
भवेयुः किन्तु सुशिक्षाकारिण्यः सत्य ईश्वरस्य वाक्यं यत् न ४
निन्द्येत तदर्थं युवतीः सुशीलताम् अर्थतः पतिस्नेहम् अपत्यस्नेहं
विनीतिं शुचित्वं गृहिणीत्वं सौजन्यं स्वामिनिघ्नत्वञ्चादिशेयु- ५
स्तथा त्वया कथ्यतां। तद्वद् यूनोऽपि विनीतये प्रबोधय। ६
त्वञ्च सर्व्वविषये स्वं सत्कर्म्मणां दृष्टान्तं दर्शय शिक्षायाञ्चावि- ७
कृतत्वं धीरतां यथार्थं निर्द्दोषञ्च वाक्यं प्रकाशय तेन विपक्षो ८
युष्माकम् अपवादस्य किमपि छिद्रं न प्राप्य त्रपिष्यते। दासाश्च ९
यत् स्वप्रभूनां निघ्नाः सर्व्वविषये तुष्टिजनकाश्च भवेयुः प्रत्युत्तरं
न कुर्य्युः किमपि नापहरेयुः किन्तु पूर्णां सुविश्वस्ततां प्रका- १०
शयेयुरिति तान् आदिश। यत एवम्प्रकारेणास्माकं त्रातु-
रीश्वरस्य शिक्षा सर्व्वविषये तै र्भूषितव्या।

यतो हेतोस्त्राणजनक ईश्वरस्यानुग्रहः सर्व्वान् मानवान् ११

१२ प्रत्युदितवान् स चास्मान् इदं शिक्षयति यद् वयम् अधर्म्मं सांसारिकाभिलाषांश्चानङ्गीकृत्य विनीतत्वेन न्यायेनेश्वरभक्त्या
१३ चेहलोके आयु र्यापयामः, परमसुखस्याशाम् अर्थतो ऽस्माकं महत ईश्वरस्य त्राणकर्त्तु र्यीशुख्रीष्टस्य प्रभावस्योदयं प्रतीक्षा-
१४ महे। यतः स यथास्मान् सर्व्वस्माद् अधर्म्मात् मोचयित्वा निजाधिकारस्वरूपं सत्कर्म्मसूत्सुकम् एकं प्रजावर्गं पावयेत् तदर्थम्
१५ अस्माकं कृते आत्मदानं कृतवान्। एतानि भाषस्व पूर्णसामर्थ्येन चादिश प्रबोधय च, कोऽपि त्वां नावमन्यतां।

---

## ३ तृतीयोऽध्यायः।

१ कथम् उपदेष्टव्यम् इत्यस्य निर्णयः १२ तीतं प्रति पौलस्य विनयः पत्रसमाप्तिश्च।

१ ते यथा देशाधिपानां शासकानाञ्च निघ्ना आज्ञाग्राहि-
२ णश्च सर्व्वस्मै सत्कर्म्मणे सुसज्जाश्च भवेयुः कमपि न निन्देयु र्निर्व्विरोधिनः क्षान्ताश्च भवेयुः सर्व्वान् प्रति च पूर्णं मृदुत्वं
३ प्रकाशयेयुश्चेति तान् आदिश। यतः पूर्व्वं वयमपि निर्ब्बोधा अनाज्ञाग्राहिणो भ्रान्ता नानाभिलाषाणां सुखानाञ्च दासेया
४ दुष्टत्वेर्ष्याचारिणो घृणिताः परस्परं द्वेषिणश्चाभवामः। किन्त्वस्माकं त्रातुरीश्वरस्य या दया मर्त्त्यानां प्रति च या प्रीति-
५ स्तस्याः प्रादुर्भावे जाते वयम् आत्मकृतेभ्यो धर्म्मकर्म्मभ्यस्तन्नहि किन्तु तस्य कृपातः पुनर्जन्मरूपेण प्रक्षालनेन प्रवित्रस्यात्मनो
६ नूतनीकरणेन च तस्मात् परित्राणं प्राप्ताः स चास्माकं त्रात्रा यीशुख्रीष्टेनास्मदुपरि तम् आत्मानं प्रचुरत्वेन वृष्टवान्।
७ इत्थं वयं तस्यानुग्रहेण सपुण्णीभूय प्रत्याशयानन्तजीवनस्याधि-
८ कारिणो जाताः। वाक्यमेतद् विश्वसनीयम् अतो हेतोरीश्वरे

ये विश्वसितवन्तस्ते यथा सत्कर्म्माण्यनुतिष्ठेयुस्तथा तान् दृढम् आज्ञापयेति ममाभिमतं। तान्येवोत्तमानि मानवेभ्यः फलदानि च भवन्ति।

मूढेभ्यः प्रश्नवंशावलिविवादेभ्यो व्यवस्थाया वितण्डाभ्यश्च ९ निवर्त्तस्व यतस्ता निष्फला अनर्थकाश्च भवन्ति। यो जनो वि- १० भिन्नस्तम् एकवारं द्विर्वा प्रबोध्य दूरीकुरु, यतस्तादृशो जनो ११ विपथगामी पापिष्ठ आत्मदोषकश्च भवतीति त्वया ज्ञायतां।

यदाहम् आर्त्तिमां तुखिकं वा तव समीपं प्रेषयिष्यामि १२ तदा त्वं नीकपलौ मम समीपम् आगन्तुं यतस्व यतस्तत्रैवाहं शीतकालं यापयितुं मतिम् अकार्षं। व्यवस्थापकः सीना आप- १३ ल्लुश्चैतयोः कस्याप्यभावो यन्न भवेत् तदर्थं तौ यत्नेन त्वया विसृज्येतां। अपरम् अस्मदीयलोका यन्निष्फला न भवेयु- १४ स्तदर्थं प्रयोजनीयोपकाराय सत्कर्म्माण्यनुष्ठातुं शिक्षन्तां। मम १५ सङ्गिनः सर्व्वे त्वां नमस्कुर्व्वते। ये विश्वासाद् अस्मासु प्रीयन्ते तान् नमस्कुरु; सर्व्वेषु युष्मास्वनुग्रहो भूयात्। आमेन्।

---

# फिलीमोनं प्रति पौलस्य प्रेरितस्य पत्रं।

## १ प्रथमोऽध्यायः।

१ मङ्गलाचरणं ४ फिलीमोनस्य विश्वासप्रेमकारणात् पौलस्यानन्दः ८ ओनीषिमं चन्तुं भ्रातृवद् ग्रहीतुञ्च फिलीमोनं प्रति पौलस्य निवेदनञ्च।

ख्रीष्टस्य यीशो र्बन्दिदासः पौलस्तीमथियनामा भ्राता १ च प्रियं सहकारिणं फिलीमोनं प्रियाम् आप्पियां सहसेनाम् २

आर्खिप्पं फिलीमोनस्य गृहे स्थितां समितिञ्च प्रति पत्रं लिखतः।
३ अस्माकं तात ईश्वरः प्रभु र्यीशुख्रीष्टश्च युष्मान् प्रति शान्तिम् अनुग्रहञ्च क्रियास्तां।

४ प्रभुं यीशुं प्रति सर्व्वान् पवित्रलोकान् प्रति च तव प्रेम-
५ विश्वासयो र्वृत्तान्तं निशम्याहं प्रार्थनासमये तव नामोच्चारयन्
६ निरन्तरं ममेश्वरं धन्यं वदामि। अस्मासु यद्यत् सौजन्यं विद्यते तत् सर्व्वं ख्रीष्टं यीशुं प्रति भवतीति ज्ञानाय तव विश्वासमूलिका दानशीलता यत् सफला भवेत् तदहम्
७ इच्छामि। हे भ्रातः, त्वया पवित्रलोकानां प्राणा आप्यायिता अभवन् एतस्मात् तव प्रेम्नास्माकं महान् आनन्दः सान्त्वना च जातः।

८ त्वया यत् कर्त्तव्यं तत् त्वाम् आज्ञापयितुं यद्यप्यहं ख्रीष्टेना-
९ तीवोत्सुको भवेयं तथापि वृद्ध इदानीं यीशुख्रीष्टस्य बन्दि-
१० दासश्चैवम्भूतो यः पौलः सोऽहं त्वां विनेतुं वरं मन्ये। अतः शृङ्खलबद्धोऽहं यमजनयं तं मदीयतनयम् ओनीषिमम् अधि
११ त्वां विनये। स पूर्व्वं तवानुपकारक आसीत् किन्त्विदानीं तव
१२ मम चोपकारी भवति। तमेवाहं तव समीपं प्रेषयामि, अतो
१३ मदीयप्राणस्वरूपः स त्वयानुगृह्यतां। सुसंवादस्य कृते शृङ्खल-बद्धोऽहं परिचारकमिव तं स्वसन्निधौ वर्त्तयितुम् ऐच्छं।
१४ किन्तु तव सौजन्यं यद् बलेन न भूत्वा स्वेच्छायाः फलं भवेत्
१५ तदर्थं तव सम्मतिं विना किमपि कर्त्तव्यं नामन्ये। को जानाति क्षणकालार्थं त्वत्तस्तस्य विच्छेदोऽभवद् एतस्यायम् अभिप्रायो
१६ यत् त्वम् अनन्तकालार्थं तं लप्स्यसे पुन र्दासमिव लप्स्यसे तन्नहि किन्तु दासात् श्रेष्ठं मम प्रियं तव च शारीरिकसम्बन्धात्

प्रभुसम्बन्धाच्च ततोऽधिकं प्रियं भ्रातरमिव। अतो हेतो र्यदि १७
मां सहभागिनं जानासि तर्हि मामिव तमनुगृहाण। तेन यदि १८
तव किमप्यपराद्धं तुभ्यं किमपि धार्य्यते वा तर्हि तत् ममेति
विदित्वा गणय। अहं तत् परिशोत्स्यामि, एतत् पौलोऽहं १९
स्वहस्तेन लिखामि, यतस्त्वं स्वप्राणान् अपि मह्यं धारयसि तद्
वक्तुं नेच्छामि। भो भ्रातः, प्रभोः कृते मम वाञ्छां पूरय २०
ख्रीष्टस्य कृते मम प्राणान् आप्यायय। तवाज्ञाग्राहित्वे विश्वस्य २१
मया एतत् लिख्यते मया यदुच्यते ततोऽधिकं त्वया कारिष्यत
इति जानामि। तत्करणसमये मदर्थमपि वासगृहं त्वया सज्जी- २२
क्रियतां यतो युष्माकं प्रार्थनानां फलरूपो वर इवाहं युष्मभ्यं
दायिष्ये ममेति प्रत्याशा जायते। ख्रीष्टस्य यीशोः कृते मया २३
सह बन्दिरिपाफ्रा मम सहकारिणो मार्क आरिष्टार्खो दीमा २४
लूकस्च त्वां नमस्कारं वेदयन्ति। अस्माकं प्रभो र्यीशुख्रीष्ट- २५
स्यानुग्रहो युष्माकम् आत्मना सह भूयात्। आमेन्।

---

# इब्रिणः प्रति पौलस्य प्रेरितस्य पत्रं।

---

## १ प्रथमोऽध्यायः।

ईश्वरस्य समीपाद् अस्मान् प्रति ख्रीष्टस्यागमनं गुणेन कर्म्मणा च दिव्यदूतेभ्यस्तस्य श्रेष्ठत्वञ्च।

पुरा य ईश्वरो भविष्यद्वादिभिः पितृलोकेभ्यो नानासमये १
नानाप्रकारं कथितवान् स एतस्मिन् शेषकाले निजपुत्रेणा- २
स्मभ्यं कथितवान्। स तं पुत्रं सर्व्वाधिकारिणं कृतवान् तेनैव

३ च सर्व्वजगन्ति सृष्टवान्। स पुत्रस्तस्य प्रभावस्य प्रतिबिम्बस्तस्य तत्त्वस्य मूर्त्तिश्चास्ति स्वीयशक्तिवाक्येन सर्व्वं धत्ते च स्वप्राणैरस्माकं पापमार्ज्जनं कृत्वा ऊर्द्धस्थाने महामहिम्नो दक्षिणपार्श्वे
४ समुपविष्टवान्। दिव्यदूतगणाद् यथा स विशिष्टनाम्नो ऽधि-
५ कारी जातस्तथा तेभ्योऽपि श्रेष्ठो जातः। यतो दूतानां मध्ये कदाचिदीश्वरेणेदं क उक्तः? यथा,

मदीयतनयो ऽसि त्वम् अद्यैव जनितो मया।

पुनश्च 'अहं तस्य पिता भविष्यामि स च मम पुत्रो भविष्यति'।
६ अपरं जगति स्वकीयाद्वितीयपुत्रस्य पुनरानयनकाले तेनोक्तं, यथा,

ईशस्य सकलै र्दूतैरेष एव प्रणम्यतां।

७ दूतान् अधि तेनेदम् उक्तं, यथा,

स करोति निजान् दूतान् गन्धवाहस्वरूपकान्।
वह्निशिखास्वरूपांश्च करोति निजसेवकान्॥

८ किन्तु पुत्रमुद्दिश्य तेनोक्तं, यथा,

हे ईश्वर सदा स्थायि तव सिंहासनं भवेत्।
याथार्थ्यस्य भवेद्दण्डो राजदण्डस्त्वदीयकः।
९ पुण्ये प्रेम करोषि त्वं किञ्चाधर्म्मम् ऋतीयसे।
तस्माद् य ईश ईशस्ते स ते मित्रगणादपि।
अधिकाह्लादतैलेन सेचनं कृतवान् तव॥

१० पुनश्च, यथा,

हे प्रभो पृथिवीमूलम् आदौ संस्थापितं त्वया।
तथा त्वदीयहस्तेन कृतं गगनमण्डलं।
११ इमे विनंक्ष्यतस्त्वन्तु नित्यमेवावतिष्ठसे।

इदन्तु सकलं विश्वं संजरिष्यति वस्त्रवत्।
सङ्कोचितं त्वया तत्तु वस्त्रवत् परिवर्त्स्यते। १२
त्वन्तु नित्यं स एवासी र्निरन्तास्तव वत्सराः॥

अपरं दूतानां मध्ये कः कदाचिदीश्वरेणेदमुक्तः? यथा, १३
तवारीन् पादपीठं ते यावन्नहि करोम्यहं।
मम दक्षिणदिग्भागे तावत् त्वं समुपाविश॥

ये परित्राणस्याधिकारिणो भविष्यन्ति तेषां परिचर्य्यार्थं १४ प्रेष्यमाणाः सेवनकारिण आत्मानः किं ते सर्व्वे दूता नहि?

---

## २ द्वितीयोऽध्यायः।

मर्त्त्यानां त्राणार्थं ख्रीष्टोऽवतीर्ण इति हेतोस्तस्य दुःखभोगस्यावश्यकता।

अतो वयं यद् भ्रमस्रोतसा नापनीयामहे तदर्थमस्माभि १ र्यद्यद् अश्रावि तस्मिन् मनांसि निधातव्यानि। यतो हेतो २ र्दूतैः कथितं वाक्यं यद्यमोघम् अभवद् यदि च तल्लङ्घनकारिणे तस्याग्राहकाय च सर्व्वस्मै समुचितं दण्डम् अदीयत, तर्ह्य- ३ स्माभिस्तादृशं महापरित्राणम् अवज्ञाय कथं रक्षा प्राप्स्यते, यत् प्रथमतः प्रभुना प्रोक्तं ततोऽस्मान् यावत् तस्य श्रोतृभिः स्थिरीकृतं, अपरं लक्षणैरद्भुतकर्म्मभि र्विविधशक्तिप्रकाशेन निजे- ४ च्छातः पवित्रस्यात्मनो विभागेन च यद् ईश्वरेण प्रमाणीकृतम् अभूत्। वयं तु यस्य भाविराज्यस्य कथां कथयामः, तत् तेन ५ दिव्यदूतानाम् अधीनीकृतमिति नहि। किन्तु कुत्रापि कश्चित् ६ प्रमाणम् ईदृशं दत्तवान्, यथा,

किं वस्तु मानवो यत् स नित्यं संस्मर्य्यते त्वया।
किं वा मानवसन्तानो यत् स आलोच्यते त्वया।

७　दिव्यदूतगणेभ्यः स किञ्चिन् न्यूनः कृतस्त्वया ।
　तेजोगौरवरूपेण किरीटेन विभूषितः ।
　सृष्टं यत् ते कराभ्यां स तत्प्रभुत्वे नियोजितः ।
८　चरणाधश्च तस्यैव त्वया सर्व्वं वशीकृतं ॥

तेन सर्व्वं यस्य वशीकृतं तस्यावशीभूतं किमपि नावशेषितं किन्त्व-
९ धुनापि वयं सर्व्वाणि तस्य वशीभूतानि न पश्यामः । तथापि
दिव्यदूतगणेभ्यो यः किञ्चिन् न्यूनीकृतोऽभवत् तं यीशुं मृत्यु-
भोगहेतोस्तेजोगौरवरूपेण किरीटेन विभूषितं पश्यामः, यत
१० ईश्वरस्यानुग्रहात् स सर्व्वेषां कृते मृत्युम् अस्वदत । अपरञ्च
यस्मै येन च कृत्स्नं वस्तु सृष्टं विद्यते बहुसन्तानानां विभवा-
यानयनकाले तेषां परित्राणाग्रसरस्य दुःखभोगेन सिद्धीकर-
११ णमपि तस्योपयुक्तम् अभवत् । यतः पावकः पूयमानाश्च सर्व्वे
एकस्मादेवोत्पन्ना भवन्ति, इति हेतोः स तान् भ्रातॄन् वदितुं
१२ न लज्जते । तेन स उक्तवान्, यथा,

　　द्योतयिष्यामि ते नाम भ्रातृणां मध्यतो मम ।
　　परन्तु समिते र्मध्ये करिष्ये ते प्रशंसनं ॥

१३ पुनरपि, यथा, तस्मिन् विश्वस्य स्याताहं————
पुनरपि, यथा,

　　पश्याहम् अपत्यानि च दत्तानि मह्यम् ईश्वरात् ।

१४ तेषाम् अपत्यानां रुधिरपललविशिष्टत्वात् सोऽपि तद्वत् तद्वि-
शिष्टोऽभूत् तस्याभिप्रायोऽयं यत् स मृत्युबलाधिकारिणं शय-
१५ तानं मृत्युना बलहीनं कुर्य्यात् ये च मृत्युभयाद् यावज्जी-
१६ वनं दासत्वस्य निघ्ना आसन् तान् उद्धारयेत् । स दूतानाम्
उपकारी न भवति किन्त्विब्राहीमो वंशस्यैवोपकारी भवति ।

अतो हेतोः स यथा कृपावान् प्रजानां पापशोधनार्थम् ईश्व- १७
रोद्देश्यविषये विश्वास्यो महायाजको भवेत् तदर्थं सर्व्वविषये
स्वभ्रातृणां सदृशीभवनं तस्योचितम् आसीत्। यतः स स्वयं १८
परीक्षां गत्वा यं दुःखभोगम् अवगतस्तेन परीक्षाक्रान्तान् उप-
कर्त्तुं शक्नोति।

---

## ३ तृतीयोऽध्यायः।

१ मूससः ख्रीष्टस्य श्रेष्ठत्वं ७ इस्रायेलीयलोकदण्डात् तस्मिन्नविश्वासिलोकानाम् अधिकदण्डनीयत्वञ्च।

हे स्वर्गीयस्याह्वानस्य सहभागिनः पवित्रभ्रातरः, अस्माकं १
धर्म्मप्रतिज्ञाया दूतोऽग्रसरश्च यो यीशुस्तम् आलोचध्वं।
मूसा यद्वत् तस्य सर्व्वपरिवारमध्ये विश्वास्य आसीत्, तद्वद् २
अयमपि स्वनियोजकस्य समीपे विश्वास्यो भवति। परिवाराच्च ३
यद्वत् तत्स्थापयितुरधिकं गौरवं भवति तद्वत् मूससोऽयं
बहुतरगौरवस्य योग्यो भवति। एकैकस्य निवेशनस्य परिजनानां ४
स्थापयिता कश्चिद् विद्यते यश्च सर्व्वस्थापयिता स ईश्वर एव।
मूसाश्च वक्ष्यमाणानां साक्षी भृत्य इव तस्य सर्व्वपरिजनमध्ये ५
विश्वास्योऽभवत् किन्तु ख्रीष्टस्तस्य परिजनानामध्यक्ष इव। वयं ६
तु यदि विश्वासस्योत्साहं श्लाघनञ्च शेषं यावद् धारयामस्तर्हि
तस्य परिजना भवामः।

अतो हेतोः पवित्रेणात्मना यद्वत् कथितं, तद्वत्, ७

अद्य यूयं कथां तस्य यदि संश्रोतुमिच्छथ।
तर्हि पुरा परीक्षाया दिने प्रान्तरमध्यतः। ८
मदाज्ञानिग्रहस्थाने युष्माभिस्तु कृतं यथा।
तथा मा कुरुतेदानीं कठिनानि मनांसि वः। ९

युष्माकं पितरस्तत्र मत्परीक्षाम् अकुर्व्वत।
कुर्व्वद्भि र्मेऽनुसन्धानं तैरदृश्यन्त मत्क्रियाः।
१० चत्वारिंशत्समा यावत् क्रुद्धाहन्तु तदन्वये।
अवादिषम् इमे लोका भ्रान्तान्तःकरणाः सदा।
मामकीनानि वर्त्मानि परिजानन्ति नो इमे।
११ इति हेतोरहं कोपात् शपथं कृतवान् इमं।
प्रवेक्ष्यते जनैरेतै र्न विश्रामस्थलं मम॥
१२ हे भ्रातरः सावधाना भवत, अमरेश्वरात् निवर्त्तको योऽवि-
१३ श्वासस्तद्युक्तं दुष्टान्तःकरणं युष्माकं कस्यापि न भवतु। किन्तु यावद् अद्यनामा समयो विद्यते तावद् युष्मन्मध्ये कोऽपि पापस्य वञ्चनया यत् कठोरीकृतो न भवेत् तदर्थं प्रतिदिनं पर-
१४ स्परम् उपदिशत। यतो वयं ख्रीष्टस्यांशिनो जाताः किन्तु प्रथमविश्वासस्य दृढत्वम् अस्माभिः शेषं यावद् अमोघं धार-
१५ यितव्यं। अद्य यूयं कथां तस्य यदि संश्रोतुमिच्छथ, तर्ह्याज्ञालङ्घनस्थाने युष्माभिस्तु कृतं यथा, तथा मा कुरुतेदानीं
१६ कठिनानि मनांसि व इति तेन यदुक्तं, तदनुसाराद् ये श्रुत्वा तस्य कथां न गृहीतवन्तस्ते के? किं मूससा मिसरदेशाद्
१७ आगताः सर्व्वे लोका नहि? केभ्यो वा स चत्वारिंशद्वर्षाणि यावद् अक्रुध्यत्? पापं कुर्व्वतां येषां कुणपाः प्रान्तरेऽपतन् किं
१८ तेभ्यो नहि? प्रवेक्ष्यते जनैरेतै र्न विश्रामस्थलं ममेति शपथः केषां विरुद्धं तेनाकारि? किम् अविश्वासिनां विरुद्धं नहि?
१९ अतस्ते तत् स्थानं प्रवेष्टुम् अविश्वासात् नाशक्नुवन् इति वयं वीक्षामहे।

---

# ४ चतुर्थोऽध्यायः।

१ विश्वासेन विश्रामप्राप्तिः १२ ईश्वरस्य वादस्य शक्तिः १४ खीष्टेनेश्वरसमीपगमनञ्च।

अपरं तद्विश्रामप्राप्तेः प्रतिज्ञा यदि तिष्ठति तर्ह्यस्माकं १ कश्चित् चेत् तस्याः फलेन वञ्चितो भवेत् वयम् एतस्माद् बिभीमः। यतोऽस्माकं समीपे यद्वत् तद्वत् तेषां समीपेऽपि २ सुसंवादः प्रचारितोऽभवत् किन्तु तैः श्रुतं वाक्यं तान् प्रति निष्फलम् अभवत्, यतस्ते श्रोतारो विश्वासेन सार्द्धं तन्नामिश्रयन्। तद् विश्रामस्थानं विश्वासिभिरस्माभिः प्रविश्यते ३ यतस्तेनोक्तं, अहं कोपात् शपथं कृतवान् इमं, प्रवेक्ष्यते जनैरेतै र्न विश्रामस्थलं मम। किन्तु तस्य कर्म्माणि जगतः सृष्टिकालात् समाप्तानि सन्ति। यतः कस्मिंश्चित् स्थाने सप्तमं ४ दिनमधि तेनेदम् उक्तं, यथा, ईश्वरः सप्तमे दिने स्वकृतेभ्यः सर्व्वकर्म्मभ्यो विशश्राम। किन्त्वेतस्मिन् स्थाने पुनस्तेनोच्यते, ५ यथा, प्रवेक्ष्यते जनैरेतै र्न विश्रामस्थलं मम। फलतस्तत् ६ स्थानं कैश्चित् प्रवेष्टव्यं किन्तु ये पुरा सुसंवादं श्रुतवन्तस्तैरविश्वासात् तन्न प्रविष्टम्, इति हेतोः स पुनरद्यनामकं दिनं ७ निरूप्य दीर्घकाले गतेऽपि पूर्व्वोक्तां वाचं दायूदा कथयति, यथा, अद्य यूयं कथां तस्य यदि संश्रोतुमिच्छथ, तर्हि मा कुरुतेदानीं कठिनानि मनांसि वः। अपरं यिहोशूयो यदि ८ तान् व्यश्रामयिष्यत् तर्हि ततः परम् अपरस्य दिनस्य वाग् ईश्वरेण नाकथयिष्यत। अत ईश्वरस्य प्रजाभिः कर्त्तव्य एको ९ विश्रामस्तिष्ठति। अपरम् ईश्वरो यद्वत् स्वकृतकर्म्मभ्यो विश- १० श्राम तद्वत् तस्य विश्रामस्थानं प्रविष्टो जनोऽपि स्वकृतकर्म्मभ्यो

११ विश्राम्यति । अतो वयं तद् विश्रामस्थानं प्रवेष्टुं यतामहे, तदविश्वासोदाहरणेन कोऽपि न पततु ।

१२ ईश्वरस्य वादोऽमरः प्रभावविशिष्टश्च सर्व्वस्माद् द्विधारखड्गादपि तीक्ष्णः, अपरं प्राणात्मनो ग्रन्थिमज्जयोश्च परिभेदाय विच्छेदकारी मनसश्च सङ्कल्पानाम् अभिप्रेतानाञ्च वि-
१३ चारकः । अपरं यस्य समीपे स्वीया स्वीया कथास्माभिः कथयितव्या तस्यागोचरः कोऽपि प्राणी नास्ति तस्य दृष्टौ सर्व्वमेवानावृतं प्रकाशितञ्चास्ते ।

१४ अपरं य उच्चतमं स्वर्गं प्रविष्ट एतादृश एको व्यक्तिरर्थत ईश्वरस्य पुत्रो यीशुरस्माकं महायाजकोऽस्ति, अतो हेतो र्वयं
१५ धर्म्मप्रतिज्ञां दृढम् आलम्बामहै । अस्माकं यो महायाजकोऽस्ति सोऽस्माकं दुःखै र्दुःखितो भवितुम् अशक्तो नहि किन्तु
१६ पापं विना सर्व्वविषये वयमिव परीक्षितः । अतएव कृपां ग्रहीतुं प्रयोजनीयोपकारार्थम् अनुग्रहं प्राप्तुञ्च वयम् उत्साहेनानुग्रहसिंहासनस्य समीपं यामः ।

---

## ५ पञ्चमोऽध्यायः ।

१ खीष्टस्य महायाजकत्वं ४ परमेश्वरेण तस्य महायाजकत्वपदे नियुक्तत्वं ११ इब्रिलोकानाम् अज्ञानत्वकारणाद् भर्त्सनञ्च ।

१ यः कश्चित् महायाजको भवति स मानवानां मध्यात् नीतः सन् मानवानां कृत ईश्वरोद्देश्यविषयेऽर्थत उपहाराणां
२ पापार्थकबलीनाञ्च दान नियुज्यते । स चाज्ञानां भ्रान्तानाञ्च लोकानां दुःखेन दुःखी भवितुं शक्नोति, यतो हेतोः स स्वयमपि
३ दौर्ब्बल्यवेष्टितो भवति । एतस्मात् कारणाच्च यद्वत् लोकानां कृते तद्वद् आत्मकृतेऽपि पापार्थकबलिदानं तेन कर्त्तव्यं ।

स चोच्चपदः स्वेच्छातः केनापि न गृह्यते किन्तु हारोण ४
इव य ईश्वरेणाहूयते तेनैव गृह्यते। एवम्प्रकारेण ख्रीष्टोऽपि ५
महायाजकत्वं ग्रहीतुं स्वीयगौरवं स्वयं न कृतवान्, किन्तु
मदीयतनयोऽसि त्वम् अद्यैव जनितो मयेति वाचं यस्तं भाषि-
तवान् स एव तस्य गौरवं कृतवान्। तद्वद् अन्यगीतेऽपीदमुक्तं, ६
त्वं मल्कीषेदकः श्रेण्यां याजकोऽसि सदातनः। स च देह- ७
वासकाले बहुक्रन्दनेनाश्रुपातेन च मृत्युत उद्धरणे समर्थस्य
पितुः समीपे पुनः पुनर्विनतिं प्रार्थनाञ्च कृत्वा तत्फलरूपिणीं
शङ्कातो रक्षां प्राप्य च यद्यपि पुत्रोऽभवत् तथापि यैर- ८
क्लिश्यत तैराज्ञाग्रहणम् अशिक्षत। इत्थं सिद्धीभूय निजाज्ञा- ९
ग्राहिणां सर्व्वेषाम् अनन्तपरित्राणस्य कारणस्वरूपो ऽभवत्।
तस्मात् स मल्कीषेदकः श्रेणीभुक्तो महायाजक ईश्वरेणाख्यातः। १०

तमध्यस्माकं बहुकथाः कथयितव्याः किन्तु ताः स्तब्धकर्णै ११
र्युष्माभि र्दुर्गम्याः। यतो यूयं यद्यपि समयस्य दीर्घत्वात् शिक्षका १२
भवितुम् अशक्ष्यत तथापीश्वरस्य वाक्यानां या प्रथमा वर्ण-
माला तामधि शिक्षाप्राप्ति र्युष्माकं पुनरावश्यका भवति, तथा
कठिनद्रव्ये नहि किन्तु दुग्धे युष्माकं प्रयोजनम् आस्ते। यो १३
दुग्धपायी स शिशुरेवेतिकारणात् धर्म्मवाक्ये तत्परो नास्ति।
किन्तु सदसद्विचारे येषां चेतांसि व्यवहारेण शिक्षितानि १४
तादृशानां सिद्धलोकानां कठोरद्रव्येषु प्रयोजनमस्ति।

---

## ६ षष्ठोऽध्यायः।

१ धर्म्माधिकाभ्यासकरणार्थं विनयः ४ धर्म्मत्यागनिषेधः ९ धर्म्मे स्थिरीभवितुं विनयः, धर्म्मफलं दातुम् ईश्वरस्याङ्गीकारः शपथश्च।

वयं मृतिजनककर्म्मभ्यो मनःपरावर्त्तनम् ईश्वरे विश्वासो १

२ मज्जनशिक्षणं हस्तार्पणं मृतलोकानाम् उत्थानम् अनन्तकाल-
स्थायिविचाराज्ञा चैतैः पुनर्भित्तिमूलं न स्थापयन्तः ख्रीष्टवि-
षयकं प्रथमोपदेशं पश्चात्कृत्य सिद्धिं यावद् अग्रसरा भवाम।
३ ईश्वरस्यानुमत्या च तद् अस्माभिः कारिष्यते।
४ य एककृत्वो दीप्तिमया भूत्वा स्वर्गीयवररसम् आस्वदि-
५ तवन्तः पवित्रस्यात्मनोऽंशिनो जाता ईश्वरस्य सुवाक्यं भावि-
६ कालस्य शक्तिञ्चास्वदितवन्तश्च ते भ्रष्ट्वा यदि स्वमनोभिरी-
श्वरस्य पुत्रं पुनः क्रुशे घ्नन्ति लज्जास्पदं कुर्व्वते च तर्हि मनः-
७ परावर्त्तनाय पुनस्तान् नवीनीकर्त्तुं कोऽपि न शक्नोति। यतो
या भूमिः स्वोपरि भूयः पतितं वृष्टिं पिवती तत्फलाधिका-
रिणां निमित्तम् इष्टानि शाकादीन्युत्पादयति सा ईश्वराद्
८ आशिषं प्राप्ता। किन्तु या भूमि र्गोक्षुरकण्टकवृक्षान् उत्पाद-
यति सा न ग्राह्या शापार्हा च शेषे तस्या दाहो भविष्यति।
९ हे प्रियतमाः, यद्यपि वयम् एतादृशं वाक्यं भाषामहे
तथापि यूयं तत उत्कृष्टाः परित्राणपथस्य पथिकाश्चाध्व इति
१० विश्वसामः। यतो युष्माभिः पवित्रलोकानां य उपकारोऽकारि
क्रियते च तेनेश्वरस्य नाम्ने प्रकाशितं प्रेम श्रमञ्च विस्मर्त्तुम्
११ ईश्वरोऽन्यायकारी न भवति। अपरं युष्माकम् एकैको जनो
यत् प्रत्याशापूरणार्थं शेषं यावत् तमेव यत्नं प्रकाशयेदित्यहम्
१२ इच्छामि। अतः शिथिला न भवत किन्तु ये विश्वासेन सहिष्णु-
तया च प्रतिज्ञानां फलाधिकारिणो जातास्तेषाम् अनुगा-
१३ मिनो भवत। ईश्वरो यदा इब्राहीमे प्रत्यजानात् तदा श्रेष्ठस्य
कस्याप्यपरस्य नाम्ना शपथं कर्त्तुं नाशक्नोत्, अतो हेतोः स्व-
१४ नाम्ना शपथं कृत्वा तेनोक्तं यथा, सत्यम् अहं त्वाम् आशिषं

गदिष्यामि तवान्वयं वर्द्धयिष्यामि च। अनेन प्रकारेण स सहि- १५
ष्णुतां विधाय तस्याः प्रत्याशायाः फलं लब्धवान्। अथ मा- १६
नवाः श्रेष्ठस्य कस्यचित् नाम्ना शपन्ते, शपथश्च प्रमाणार्थं तेषां
सर्व्वविवादान्तको भवति। इत्यस्मिन् ईश्वरः प्रतिज्ञायाः १७
फलाधिकारिणः स्वीयमन्त्रणाया अमोघतां बाहुल्यतो दर्श-
यितुमिच्छन् शपथेन स्वप्रतिज्ञां स्थिरीकृतवान्। अतएव १८
यस्मिन् अनृतकथनम् ईश्वरस्य न साध्यं तादृशेनाचलेन विष-
यद्वयेन सम्मुखस्थरक्षास्थलस्य प्राप्तये पलायितानाम् अस्माकं
सुदृढा सान्त्वना जायते। सा प्रत्याशास्माकं मनोनौकाया १९
अचलो लङ्गरो भूत्वा विच्छेदकवस्त्रस्याभ्यन्तरं प्रविष्टा। तत्रै- २०
वास्माकम् अग्रसरो यीशुः प्रविश्य मल्कीषेदकः श्रेण्यां नित्य-
स्थायी याजकोऽभवत्।

---

## ७ सप्तमोऽध्यायः।

१ मल्कीषेदक इव ख्रीष्टस्य महायाजकत्वं ११ हारोणादिसर्व्वयाजकेभ्यस्तस्य श्रेष्ठत्वञ्च।

शालमस्य राजा सर्व्वोपरिस्थस्येश्वरस्य याजकश्च सन् यो १
नृपतीनां मारणात् प्रत्यागतम् इब्राहीमं साक्षात्कृत्याशिषं
गदितवान्, यस्मै चेब्राहीम् सर्व्वद्रव्याणां दशमांशं दत्तवान् २
स मल्कीषेदक् स्वनाम्नोऽर्थेन प्रथमतो धर्म्मराजः पश्चात् शा-
लमस्य राजार्थतः शान्तिराजो भवति। अपरं तस्य पिता ३
माता वंशस्य निर्णय आयुष आरम्भो जीवनस्य शेषश्चैतेषाम्
अभावो भवति, इत्थं स ईश्वरपुत्रस्य सदृशीकृतः, स त्वनन्त-
कालं यावद् याजकस्तिष्ठति। अतएवास्माकं पूर्व्वपुरुष इब्रा- ४
हीम् यस्मै लुठितद्रव्याणां दशमांशं दत्तवान् स कीदृक्

५ महान् तद् आलोचयत। याजकत्वप्राप्ता लेवेः सन्ताना व्यवस्थानुसारेण लोकेभ्योऽर्थत इब्राहीमो जातेभ्यः स्वीयभ्रातृभ्यो
६ दशमांशग्रहणस्यादेशं लब्धवन्तः। किन्त्वसौ यद्यपि तेषां वंशात् नोत्पन्नस्तथापीब्राहीमो दशमांशं गृहीतवान् प्रतिज्ञानाम्
७ अधिकारिणम् आशिषं गदितवांश्च। अपरं यः श्रेयान् स
८ क्षुद्रतरायाशिषं ददातीत्यत्र कोऽपि सन्देहो नास्ति। अपरम् इदानीं ये दशमांशं गृह्णन्ति ते मृत्योरधीना मानवाः किन्तु
९ तदानीं यो गृहीतवान् स जीवतीतिप्रमाणप्राप्तः। अपरं दशमांशग्राही लेविरपीब्राहीम्द्वारा दशमांशं दत्तवान्
१० एतदपि कथयितुं शक्यते। यतो यदा मल्कीषेदक् तस्य पितरं साक्षात् कृतवान् तदानीं स लेविः पितुरुरस्यासीत्।

११ अपरं यस्य सम्बन्धे लोका व्यवस्थां लब्धवन्तस्तेन लेवीययाजकवर्गेण यदि सिद्धिः समभविष्यत् तर्हि हारोणस्य श्रेण्या मध्याद् याजकं न निरूप्येश्वरेण मल्कीषेदकः श्रेण्या मध्याद्
१२ अपरस्यैकस्य याजकस्योत्थापनं कुत आवश्यकम् अभविष्यत्? यतो याजकवर्गस्य विनिमयेन सुतरां व्यवस्थाया अपि विनिमयो
१३ जायते। अपरञ्च तद् वाक्यं यस्योद्देश्यं सोऽपरेण वंशेन संयुक्तोऽस्ति तस्य वंशस्य च कोऽपि कदापि वेद्याः कर्म्म न कृतवान्।
१४ वस्तुतस्तु यं वंशमधि मूसा याजकत्वस्यैकां कथामपि न कथितवान् तस्मिन् यिहूदावंशेऽस्माकं प्रभु र्जन्म गृहीतवान् इति
१५ सुस्पष्टं। तस्य स्पष्टतरम् अपरं प्रमाणमिदं यत् मल्कीषेदकः
१६ सादृश्यवतापरेण तादृशेन याजकेनोदेतव्यं, यस्य निरूपणं शरीरसम्बन्धीयविधियुक्तया व्यवस्थया न भवति किन्त्वक्षय-
१७ जीवनयुक्तया शक्त्या भवति। यत ईश्वर इदं साक्ष्यं दत्तवान्,

यथा, त्वं मल्कीषेदकःश्रेण्यां याजकोऽसि सदातनः। अनेना- १८
यवर्त्तिनो विधे दुर्ब्बलताया निष्फलतायाश्च हेतोरर्थतो व्यव-
स्थया किमपि सिद्धं न जातमितिहेतोस्तस्य लोपो भवति।
यया च वयम् ईश्वरस्य निकटवर्त्तिनो भवाम एतादृशी श्रेष्ठ- १९
प्रत्याशा संस्थाप्यते।

अपरं यीशुः शपथं विना न नियुक्तस्तस्मादपि स श्रेष्ठनि- २०
यमस्य मध्यस्थो जातः। यतस्ते शपथं विना याजका जाताः २१
किन्त्वसौ शपथेन जातः यतः स इदमुक्तः, यथा, २२

परमेश इदं शेपे न च तस्मान्निवर्त्स्यते।
त्वं मल्कीषेदकः श्रेण्यां याजकोऽसि सदातनः।

ते च बहवो याजका अभवन् यतस्ते मृत्युना नित्यस्थायित्वात् २३
निवारिताः, किन्त्वसावनन्तकालं यावत् तिष्ठति तस्मात् तस्य २४
याजकत्वं न परिवर्त्तनीयं। ततो हेतो र्ये मानवास्तेनेश्वरस्य २५
सन्निधिं गच्छन्ति तान् स शेषं यावत् परित्रातुं शक्नोति यत-
स्तेषां कृते प्रार्थनां कर्त्तुं स सततं जीवति। अपरम् अस्माकं २६
तादृशमहायाजकस्य प्रयोजनमासीद् यः पवित्रो ऽहिंसको नि-
ष्कलङ्कः पापिभ्यो भिन्नः स्वर्गादप्युच्चीकृतश्च स्यात्। अपरं २७
महायाजकानां यथा तथा तस्य प्रतिदिनं प्रथमं स्वपापानां
कृते ततः परं लोकानां पापानां कृते बलिदानस्य प्रयोजनं
नास्ति यत आत्मबलिदानं कृत्वा तद् एककृत्वस्तेन सम्पादितं।
यतो व्यवस्थया ये महायाजका निरूप्यन्ते ते दौर्ब्बल्ययुक्ता २८
मानवाः किन्तु व्यवस्थातः परं शपथयुक्तेन वाक्येन यो महा-
याजको निरूपितः सो ऽनन्तकालार्थं सिद्धः पुत्र एव।

# ८ अष्टमोऽध्यायः।

ख्रीष्टस्य महायाजकत्वपदेन हारोणस्य महायाजकत्वपदस्य लोपः सुसंवादस्य नवीननियमेन पुरातननियमस्य लोपश्च।

१ कथ्यमानानां वाक्यानां सारोऽयम् अस्माकम् एतादृश एको महायाजकोऽस्ति यः स्वर्गे महामहिम्नः सिंहासनस्य दक्षिण-
२ पार्श्वे समुपविष्टवान् यच्च दूष्यं न मनुजैः किन्त्वीश्वरेण स्थापितं
३ तस्य सत्यदूष्यस्य पवित्रवस्तूनाञ्च सेवकः स भवति। यत एकैको महायाजको नैवेद्यानां बलीनाञ्च दाने नियुज्यते, अतो हेतो-
४ रेतस्यापि किञ्चिद् उत्सर्जनीयं विद्यत इत्यावश्यकं। किञ्च स यदि पृथिव्याम् अस्थास्यत् तर्हि याजको नाभविष्यत्, यतो ये व्यवस्थानुसारात् नैवेद्यानि ददत्येतादृशा याजका विद्यन्ते।
५ ते तु स्वर्गीयवस्तूनां दृष्टान्तेन छायया च सेवामनुतिष्ठन्ति यतो मूससि दूष्यं साधयितुम् उद्यते सतीश्वरस्तदेव तमादिष्टवान् फलतः स तमुक्तवान्, यथा, अवधेहि गिरौ त्वां
६ यद्यन्निदर्शनं दर्शितं तद्वत् सर्व्वाणि त्वया क्रियन्तां। किन्त्विदानीम् असौ तस्मात् श्रेष्ठं सेवकपदं प्राप्तवान् यतः स श्रेष्ठप्रति-
७ ज्ञाभिः स्थापितस्य श्रेष्ठनियमस्य मध्यस्थोऽभवत्। स प्रथमो नियमो यदि निर्द्दोषोऽभविष्यत तर्हि द्वितीयस्य नियमस्य किमपि
८ प्रयोजनं नाभविष्यत्। किन्तु स दोषमारोपयन् तेभ्यः कथयति, यथा, 'परमेश्वर इदं भाषते पश्य यस्मिन् समयेऽहम् इस्रायेलवंशेन यिहूदावंशेन च सार्द्धम एकं नवीनं नियमं स्थिरीकरि-
९ ष्याम्येतादृशः समय आयाति। परमेश्वरोऽपरमपि कथयति तेषां पूर्व्वपुरुषाणां मिसरदेशाद् आनयनार्थं यस्मिन् दिनेऽहं तेषां करं धृत्वा तैः सह नियमं स्थिरीकृतवान् तद्दिनस्य नियमानुसारेण नहि यतस्ते मम नियमे लङ्घितेऽहं तान् प्रति

चिन्तां नाकरवं। किन्तु परमेश्वरः कथयति तद्दिनात् परमहं १०
इस्रायेलवंशीयैः सार्द्धम् इमं नियमं स्थिरीकरिष्यामि, तेषां
चित्ते मम विधीन् स्थापयिष्यामि तेषां हृत्पत्रे च तान् लेखि-
ष्यामि, अपरमहं तेषाम् ईश्वरो भविष्यामि ते च मम लोका
भविष्यन्ति। अपरं त्वं परमेश्वरं जानीहीतिवाक्येन तेषामेकैको ११
जनः स्वं स्वं समीपवासिनं भ्रातरञ्च पुन र्न शिक्षयिष्यति यत आ-
क्षुद्रात् महान्तं यावत् सर्व्वे मां ज्ञास्यन्ति। यतो हेतोरहं १२
तेषाम् अधर्म्मान् क्षमिष्ये तेषां पापान्यपराधांश्च पुनः कदापि
न स्मरिष्यामि।' अनेन तं नियमं नूतनं गदित्वा स प्रथमं १३
नियमं पुरातनीकृतवान्; यच्च पुरातनं जीर्णञ्च जातं तस्य
लोपो निकटो ऽभवत्।

---

## ९ नवमोऽध्यायः।

१ व्यवस्थाया बलिदानादिकथनं ११ एतेभ्यः सर्व्वेभ्यः ख्रीष्टीयबलिदानस्य श्रेष्ठत्वञ्च।

स प्रथमो नियम आराधनाया विविधरीतिभिरैहिकपवि- १
त्रस्थानेन च विशिष्ट आसीत्। यतो दूष्यमेकं निरमीयत तस्य २
प्रथमकोष्ठस्य नाम पवित्रस्थानमित्यासीत् तत्र दीपवृक्षो भोज-
नासनं दर्शनीयपूपानां श्रेणी चासीत्। तत्पश्चाद् द्वितीयाया- ३
स्तिरस्करिण्या अभ्यन्तरे ऽतिपवित्रस्थानमितिनामकं कोष्ठमा-
सीत्, तत्र च सुवर्णमयो धूपाधारः परितः सुवर्णमण्डिता नि- ४
यममञ्जूषा चासीत् तन्मध्ये मान्नायाः सुवर्णघटो हारोणस्य
मञ्जरितदण्डस्तक्षितौ नियमप्रस्तरौ, तदुपरि च करुणासने ५
छायाकारिणौ तेजोमयौ किरूबावास्ताम्, एतेषां विशेषवृत्ता-
न्तकथनाय नायं समयः। एतेष्वीदृक् निर्म्मितेषु याजका ईश्व- ६

७ एषैवाम् अनुतिष्ठन्तो दूष्यस्य प्रथमकोष्ठं नित्यं प्रविशन्ति। किन्तु द्वितीयं कोष्ठं प्रतिवर्षम् एककृत्व एकाकिना महायाजकेन प्रविश्यते किन्त्वात्मनिमित्तं लोकानाम् अज्ञानकृतपापानाञ्च निमित्तम् उत्सर्ज्जनीयं रुधिरम् अनादाय तेन न प्रविश्यते। ८ इत्यनेन पवित्र आत्मा यत् ज्ञापयति तदिदं तत् प्रथमं दूष्यं यावत् तिष्ठति तावत् महापवित्रस्थानगामी पन्था अप्रकाशि- ९ तस्तिष्ठति। तच्च दूष्यं वर्त्तमानसमयस्य दृष्टान्तः, यतो हेतोः साम्प्रतं संशोधनकालं यावद् यन्निरूपितं तदनुसारात् सेवा- १० कारिणो मानसिकसिद्धिकरणेऽसमर्थाभिः केवलं खाद्यपेयेषु विविधमज्जनेषु च शारीरिकरीतिभि र्युक्तानि नैवेद्यानि बलिदानानि च भवन्ति।

११ अपरं भाविमङ्गलानां महायाजकः ख्रीष्ट उपस्थायाहस्तनिर्म्मितेनार्थत एतत्सृष्टे र्बहिर्भूतेन श्रेष्ठेन सिद्धेन च दूष्येण गत्वा १२ छागानां गोवत्सानां वा रुधिरम् अनादाय स्वीयरुधिरम् आदायैककृत्व एव महापवित्रस्थानं प्रविश्यानन्तकालिकां मुक्तिं १३ प्राप्तवान्। वृषच्छागानां रुधिरेण गवीभस्मनः प्रक्षेपेण च १४ यद्यशुचिलोकाः शारीरिकशुचित्वाय पूयन्ते, तर्हि किं मन्यध्वे यः सदातनेनात्मना निष्कलङ्कबलिमिव स्वमेवेश्वराय दत्तवान्, तस्य ख्रीष्टस्य रुधिरेण युष्माकं मनांस्यमरेश्वरस्य सेवायै १५ किं मृत्युजनकेभ्यः कर्म्मभ्यो न पवित्रीकारिष्यन्ते? स नूतननियमस्य मध्यस्थोऽभवत् तस्याभिप्रायोऽयं यत् प्रथमनियमलङ्घनरूपपापेभ्यो मृत्युना मुक्तौ जातायाम् आहूतलोका अ- १६ नन्तकालीयसम्पदः प्रतिज्ञाफलं लभेरन्। यत्र नियमो भवति १७ तत्र नियमसाधकस्य बले र्मृत्युना भवितव्यं। यतो हतेन

बलिना नियमः स्थिरीभवति किन्तु नियमसाधको बलि यावत् जीवति तावत् नियमो निरर्थकस्तिष्ठति। तस्मात् स पूर्व्वनिय- १८ मोऽपि रुधिरपातं विना न साधितः। फलतः सर्व्वलोकान् १९ प्रति व्यवस्थानुसारेण सर्व्वा आज्ञाः कथयित्वा मूसा जलेन सि- न्दूरवर्णलोम्ना एषोवतृणेन च सार्द्धं गोवत्सानां छागानाञ्च रुधिरं गृहीत्वा ग्रन्थे सर्व्वलोकेषु च प्रक्षिप्य बभाषे, युष्मान् २० अधीश्वरो यं नियमं निरूपितवान् तस्य रुधिरमेतत्। तद्वत् २१ स दूष्येऽपि सेवार्थकेषु सर्व्वपात्रेषु च रुधिरं प्रक्षिप्तवान्। अपरं २२ व्यवस्थानुसारेण प्रायशः सर्व्वाणि रुधिरेण परिष्क्रियन्ते रुधि- रपातं विना पापमोचनं न भवति च। अपरं यानि स्वर्गीय- २३ वस्तूनां दृष्टान्तास्तेषाम् एतैः पावनम् आवश्यकम् आसीत् किन्तु साक्षात् स्वर्गीयवस्तूनाम् एतेभ्यः श्रेष्ठै र्बलिदानैः पाव- नमावश्यकं। यतः ख्रीष्टः सत्यपवित्रस्थानस्य दृष्टान्तरूपं हस्तकृतं २४ पवित्रस्थानं न प्रविष्टवान् किन्त्वस्मन्निमित्तम् इदानीम् ईश्वरस्य साक्षाद् उपस्थातुं स्वर्गमेव प्रविष्टः। यथा च महायाजकः २५ प्रतिवर्षं परशोणितमादाय महापवित्रस्थानं प्रविशति तथा ख्रीष्टेन पुनः पुनरात्मोत्सर्गो न कर्त्तव्यः, कर्त्तव्ये सति जगतः २६ सृष्टिकालमारभ्य बहुवारं तस्य मृत्युभोग आवश्यकोऽभवत्; किन्त्विदानीं स आत्मोत्सर्गेण पापनाशार्थम् एककृत्वो जगतः शेषकाले प्रचकाशे। अपरं यथा मानुषस्यैककृत्वो मरणं तत्- २७ पश्चाद् विचारो निरूपितोऽस्ति, तद्वत् ख्रीष्टोऽपि बहूनां पाप- २८ वहनार्थं बलिरूपेणैककृत्व उत्ससृजे, अपरं द्वितीयवारं पापाद् भिन्नः सन् ये तं प्रतीक्षन्ते तेषां परित्राणार्थं दर्शनं दास्यति।

# १० दशमोऽध्यायः।

१ व्यवस्थानुयायिबलिदानेन सर्व्वथा पापमोचनाभावः ५ ख्रीष्टस्य बलिदानेन सर्व्वथा पापमोचनं ११ तस्य बलिदानस्यैकत्वं सम्पूर्णत्वञ्च १९ तेन तदीयलोकानामक्षोभः २६ धर्म्मत्यागनिषेधः ३२ धर्म्मार्थं दुःखभोगसहनप्रशंसा च।

१ व्यवस्था भविष्यन्मङ्गलानां छायास्वरूपा न च वस्तूनां मूर्त्तिस्वरूपा ततो हेतो र्नित्यं दीयमानैरेकविधै र्वार्षिकबलिभिः
२ शरणागतलोकान् सिद्धान् कर्त्तुं कदापि न शक्नोति। यद्यशक्ष्यत् तर्हि तेषां बलीनां दानं किं न न्यवर्त्तिष्यत? यतः सेवाकारिष्वेककृत्वः पवित्रीभूतेषु तेषां कोऽपि पापबोधः पुन र्नाभविष्यत्।
३ किन्तु तै र्बलिदानैः प्रतिवत्सरं पापानां स्मारणं जायते। यतो
४ वृषाणां छागानां वा रुधिरेण पापमोचनं न सम्भवति।

५ एतत्कारणात् ख्रीष्टेन जगत् प्रविश्येदम् उच्यते, यथा,

नेष्ट्वा बलिं न नैवेद्यं देहो मे निर्म्मितस्त्वया।

६ न च त्वं बलिभि र्हव्यैः पापघ्नै र्वा प्रतुष्यसि।

७ अवादिषं तदैवाहं पश्य कुर्व्वे समागमं।

धर्म्मग्रन्थस्य सर्गे मे विद्यते लिखिता कथा।

ईश मनोऽभिलाषस्ते मया सम्पूरयिष्यते।

८ इत्यस्मिन् प्रथमतो येषां दानं व्यवस्थानुसाराद् भवति तान्यधि तेनेदमुक्तं यथा, बलिनैवेद्यहव्यानि पापघ्नञ्चोपचारकं,
९ नेमानि वाञ्छसि त्वं हि न चैतेषु प्रतुष्यसीति। ततः परं तेनोक्तं यथा, पश्य मनोऽभिलाषं ते कर्त्तुं कुर्व्वे समागमं;
१० द्वितीयम् एतद् वाक्यं स्थिरीकर्त्तुं स प्रथमं लुम्पति। तेन मनोऽभिलाषेण च वयं यीशुख्रीष्टस्यैककृत्वः स्वशरीरोत्सर्गात् पवित्रीकृता अभवाम।

११ अपरम् एकैको याजकः प्रतिदिनम् उपासनां कुर्व्वन् यैश्च

पापानि नाशयितुं कदापि न शक्यन्ते तादृशान् एकरूपान् बलीन् पुनः पुनरुत्सृजन् तिष्ठति। किन्त्वसौ पापनाशकम् एकं १२ बलिं दत्त्वानन्तकालार्थम् ईश्वरस्य दक्षिण उपविश्य यावत् तस्य १३ शत्रवस्तस्य पादपीठं न भवन्ति तावत् प्रतीक्षमाणस्तिष्ठति। यत एकेन बलिदानेन सोऽनन्तकालार्थं पूयमानान् लोकान् १४ साधितवान्। एतस्मिन् पवित्र आत्माप्यस्माकं पक्षे प्रमाण- १५ यति यतो हेतोस्तद्दिनात् परम् अहं तैः सार्द्धम् इमं नियमं १६ स्थिरीकरिष्यामीति प्रथमत उक्त्वा परमेश्वरेणेदं कथितं, तेषां चित्ते मम विधीन् स्थापयिष्यामि तेषां मनःसु च तान् लेखिष्यामि च, अपरञ्च तेषां पापान्यपराधांश्च पुनः कदापि १७ न स्मरिष्यामि। किन्तु यत्र पापमोचनं भवति तत्र पापार्थक- १८ बलिदानं पुन र्न भवति।

अतो हे भ्रातरः, यीशो रुधिरेण पवित्रस्थानप्रवेशायास्माकम् उत्साहो भवति, यतः सोऽस्मदर्थं तिरस्करिण्यार्थतः २० स्वशरीरेण नवीनं जीवनयुक्तञ्चैकं पन्थानं निर्म्मितवान्, अपरञ्चे- २१ श्वरीयपरिवारस्याध्यक्ष एको महायाजकोऽस्माकमस्ति। अतो २२ हेतोरस्माभिः सरलान्तःकरणै र्दृढविश्वासैः पापबोधात् प्रक्षालितमनोभि र्निर्म्मलजले स्नातशरीरैश्चेश्वरम् उपागत्य प्रत्याशायाः प्रतिज्ञा निश्चला धारयितव्या। यतो यस्ताम् अङ्गी- २३ कृतवान् स विश्वसनीयः। अपरं प्रेम्नि सत्क्रियासु चैकैकस्योत्साह- २४ वृद्ध्यर्थम् अस्माभिः परस्परं मन्त्रयितव्यं। अपरं कतिपयलोका २५ यथा कुर्व्वन्ति तथास्माभिः सभाकरणं न परित्यक्तव्यं परस्परम् उपदेष्टव्यञ्च यतस्तत् महादिनम् उत्तरोत्तरं निकटवर्त्ति भवतीति युष्माभि र्दृश्यते।

१९

२६　सत्यमतस्य ज्ञानप्राप्तेः परं यदि वयं स्वेच्छया पापाचारं कुर्म्मस्तर्हि पापानां कृते ऽन्यत् किमपि बलिदानं नावशिष्यते
२७ किन्तु विचारस्य भयानका प्रतीक्षा रिपुनाशकानलस्य ताप-
२८ श्चावशिष्यते। यः कश्चित् मूससो व्यवस्थाम् अवमन्यते स दयां
२९ विना द्वयोस्तिसृणां वा साक्षिणां प्रमाणेन हन्यते, तस्मात् किं बुध्यध्वे यो जन ईश्वरस्य पुत्रम् अवजानाति येन च पवित्रीकृतो ऽभवत् तत् नियमस्य रुधिरम् अपवित्रं जानाति, अनुग्रहकरम् आत्मानम् अपमन्यते च, स कियन्महाघोरतर-
३० दण्डस्य योग्यो भविष्यति? यतः परमेश्वरः कथयति,

दानं फलस्य मत्कर्म्म सूचितं प्रददाम्यहं।

पुनरपि,　तदा विचारयिष्यन्ते परेशेन निजाः प्रजाः।

३१ इदं यः कथितवान् तं वयं जानीमः। अमरेश्वरस्य करयोः पतनं महाभयानकं।

३२　हे भ्रातरः, पूर्व्वदिनानि स्मरत यतस्तदानीं यूयं दीप्तिं
३३ प्राप्य बहुदुर्गतिरूपं संग्रामं सहमाना एकतो निन्दाक्लेशैः कौतुकीकृता अभवत, अन्यतश्च तद्भोगिनां समांशिनो ऽभवत।
३४ यूयं मम बन्धनस्य दुःखेन दुःखिनो ऽभवत, युष्माकम् उत्तमा नित्या च सम्पत्तिः स्वर्गे विद्यत इति ज्ञात्वा सानन्दं सर्व्वस्व-
३५ स्यापहरणम् असहध्वञ्च। अतएव महापुरस्कारयुक्तं युष्माकम्
३६ उत्साहं न परित्यजत। यतो यूयं येनेश्वरस्येच्छां पालयित्वा प्रतिज्ञायाः फलं लभध्वं तदर्थं युष्माभि र्धैर्य्यावलम्बनं कर्त्तव्यं।
३७ येनागन्तव्यं स स्वल्पकालात् परम् आगमिष्यति न च विल-
३८ म्बिष्यते। पुण्यवान् जनो विश्वासेन जीविष्यति किन्तु यदि
३९ निवर्त्तते तर्हि मम मनस्तस्मिन् न तोषं यास्यति। किन्तु वयं

विनाशजनिका धर्म्मात् निवृत्तिं न कुर्व्वाणा आत्मनः परित्राणाय विश्वासं कुर्व्वामहे।

---

## ११ एकादशोऽध्यायः।

१ विश्वासस्य निर्णयः बहुदृष्टान्तैस्तत्फलस्य निर्णयः ३२ विश्वासेन यद् आश्चर्य्यकर्म्म दुःखभोगश्चाभवत् तस्य निर्णयश्च।

विश्वास आशंसितानां निश्चयः, अदृश्यानां विषयाणां १ दर्शनं भवति। तेन विश्वासेन प्राञ्चो लोकाः प्रामाण्यं प्राप्तवन्तः। २ अपरम् ईश्वरस्य वाक्येन जगन्त्यसृज्यन्त, दृष्टवस्तूनि च प्रत्यक्ष- ३ वस्तुभ्यो नोदपद्यन्तैतद् वयं विश्वासेन बुध्यामहे। विश्वासेन ४ हाबिल् ईश्वरमुद्दिश्य काबिलः श्रेष्ठं बलिदानं कृतवान् तस्माच्चेश्वरेण तस्य दानान्यधि प्रमाणे दत्ते स धार्म्मिक इत्यस्य प्रमाणं लब्धवान् तेन विश्वासेन च स मृतः सन् अद्यापि भाषते। विश्वासेन हनोक् यथा मृत्युं न पश्येत् तथा लोकान्तरं ५ नीतः, तस्योद्देशश्च केनापि न प्रापि यत ईश्वरस्तं लोकान्तरं नीतवान्, तत्प्रमाणमिदं तस्य लोकान्तरीकरणात् पूर्व्वं स ईश्वराय रोचितवान् इति प्रमाणं प्राप्तवान्। किन्तु विश्वासं विना ६ कोऽपीश्वराय रोचितुं न शक्नोति यत ईश्वरोऽस्ति स्वान्वेषिलोकेभ्यः पुरस्कारं ददाति चेतिकथायाम् ईश्वरशरणागतै र्विश्वसितव्यं। अपरं तदानीं यान्यदृश्यान्यासन् तानीश्वरेणादिष्टः ७ सन् नोहो विश्वासेन भीत्वा स्वपरिजनानां रक्षार्थं पोतं निर्म्मितवान् तेन च जगज्जनानां दोषान् दर्शितवान् विश्वासात् लभ्यस्य पुण्यस्याधिकारी बभूव च। विश्वासेनेब्राहीम् आहूतः ८ सन् आज्ञां गृहीत्वा यस्य स्थानस्याधिकारस्तेन प्राप्तव्यस्तत् स्थानं प्रस्थितवान् किन्तु प्रस्थानसमये क्क यामीति नाजानात्।

९ विश्वासेन स प्रतिज्ञाते देशे परदेशवत् प्रवसन् तस्याः प्रति-
ज्ञायाः समानांशिभ्याम् इस्हाका याकूबा च सह दूष्यवास्य-
१० भवत्। यस्मात् स ईश्वरेण निर्म्मितं स्थापितञ्च भित्तिमूलयुक्तं
११ नगरं प्रत्यैचत। अपरञ्च विश्वासेन सारा वयोतिक्रान्ता
सन्त्यपि गर्भधारणाय शक्तिं प्राप्य पुत्रवत्यभवत्, यतः सा
१२ प्रतिज्ञाकारिणं विश्वास्यम् अमन्यत। ततो हेतो र्मृतकल्पाद्
एकस्मात् जनाद् आकाशीयनक्षत्राणीव गणनातीताः समुद्र-
१३ तीरस्थसिकता इव चासंख्या लोका उत्पेदिरे। एते सर्व्वे प्रति-
ज्ञायाः फलान्यप्राप्य केवलं दूरात् तानि निरीक्ष्य वन्दित्वा
च, पृथिव्यां वयं विदेशिनः प्रवासिनश्चास्मह इति स्वीकृत्य
१४ विश्वासेन प्राणान् तत्यजुः। ये तु जना इत्थं कथयन्ति तैः पैतृ-
१५ कदेशो ऽस्माभिरन्विष्यत इति प्रकाश्यते। ते यस्माद् देशात्
निर्गतास्तं यद्यस्मरिष्यन् तर्हि परावर्त्तनाय समयम् अलप्स्यन्त।
१६ किन्तु ते सर्व्वोत्कृष्टम् अर्थतः स्वर्गीयं देशम् आकाङ्क्षन्ति
तस्माद् ईश्वरस्तानधि न लज्जमानस्तेषाम् ईश्वर इति नाम
गृहीतवान् यतः स तेषां कृते नगरमेकं संस्थापितवान्।
१७ अपरम् इब्राहीमः परीक्षायां जातायां स विश्वासेनेस्हाकम्
१८ उत्ससर्ज, वस्तुत इस्हाकि तव वंशो विख्यास्यत इति वाग्
यमधि कथिता तम् अद्वितीयं पुत्रं प्रतिज्ञाप्राप्तः स उत्ससर्ज।
१९ यत ईश्वरो मृतानप्युत्थापयितुं शक्नोतीति स मेने तस्मात्
२० स उपमारूपं तं लेभे। अपरम् इस्हाक् विश्वासेन याकूबे
२१ एषावे च भाविविषयानध्याशिषं ददौ। अपरं याकूब् मरण-
काले विश्वासेन यूषफः पुत्रयोरेकैकस्मै जनायाशिषं ददौ
२२ यष्ट्या अग्रभागे समालम्ब्य प्रणनाम च। अपरं यूषफ् चरम-

काले विश्वासेनेस्रायेल्वंशीयानां मिसरदेशाद् बहिर्गमनस्य वार्त्तां जगाद निजास्थीनि चाधि समादिदेश। नवजातो २३ मूसास्य विश्वासात् त्रीन् मासान् स्वपितृभ्याम् अगोप्यत यतस्तौ स्वशिशुं परमसुन्दरं दृष्टवन्तौ राजाज्ञाञ्च न शङ्कितवन्तौ। अपरं वयःप्राप्तो मूसा विश्वासात् फिरौणो दौहित्र २४ इति नाम नाङ्गीचकार। यतः स क्षणिकात् पापजसुखभोगाद् २५ ईश्वरस्य प्रजाभिः सार्द्धं दुःखभोगं वव्रे। तथा मिसरदेशीय- २६ निधिभ्यः ख्रीष्टनिमित्तां निन्दां महतीं सम्पत्तिं मेने यतो हेतोः स पुरस्कारदानम् अपैक्षत। अपरं स विश्वासेन राज्ञः २७ क्रोधात् न भीत्वा मिसरदेशं परितत्याज, यतस्तेनादृश्यं वीक्षमाणेनेव धैर्य्यम् आलम्बि। अपरं प्रथमजातानां हन्ता यत् २८ स्वीयलोकान् न स्पृशेत् तदर्थं स विश्वासेन निस्तारपर्व्वीयबलिच्छेदनं रुधिरसेचनञ्चानुष्ठितवान्। अपरं ते विश्वासात् २९ स्थलेनेव सूफ्सागरेण जग्मुः किन्तु मिस्रीयलोकास्तत् कर्त्तुम् उपक्रम्य तोयेषु ममज्जुः। अपरञ्च विश्वासात् तैः सप्ताहं ३० यावद् यिरीहोः प्राचीरस्य प्रदक्षिणे कृते तत् निपपात। विश्वासाद् राहब्नामिका वेश्यापि प्रीत्या चारान् अनुगृह्या- ३१ विश्वासिभिः सार्द्धं न विननाश।

अधिकं किं कथयिष्यामि? गिदियोनो बारकः शिम्शोनो ३२ यिप्तहो दायूद् शिमूयेलो भविष्यद्वादिनश्चैतेषां वृत्तान्तकथनाय मम समयाभावो भविष्यति। विश्वासात् ते राज्यानि ३३ वशीकृतवन्तो धर्म्मकर्म्माणि साधितवन्तः प्रतिज्ञानां फलं लब्धवन्तः सिंहानां मुखानि रुद्धवन्तो वह्नेर्दाहं निर्व्वापितवन्तः ३४ खड्गधाराद् रक्षां प्राप्तवन्तो दौर्ब्बल्ये सबलीकृता युद्धे परा-

३५ क्रमिणो जाताः परेषां सैन्यानि द्रवयितवन्तश्च। योषितः पुनरुत्थानेन मृतान् आत्मजान् लेभिरे, अपरे च श्रेष्ठोत्थानस्य
३६ प्राप्तेराशया रक्षाम् अगृहीत्वा ताडनेन मृतवन्तः। अपरे
३७ तिरस्कारैः कशाभि र्बन्धनैः कारया च परीक्षिताः। बहवश्च प्रस्तराघातै र्हताः करपत्रै र्वा विदीर्णा यन्त्रै र्वा क्लिष्टाः खड्गधारै र्वा व्यापादिताः। ते मेषाणां छागानां वा चर्म्माणि
३८ परिधाय दीनाः पीडिता दुःखार्त्ताश्चाभ्राम्यन्। संसारो येषाम् अयोग्यस्ते निर्जनस्थानेषु पर्व्वतेषु गह्वरेषु पृथिव्याश्छि-
३९ द्रेषु च पर्य्यटन्। एतैः सर्व्वै र्विश्वासात् प्रमाणं प्रापि किन्तु
४० प्रतिज्ञायाः फलं न प्रापि। यतस्ते यथास्मान् विना सिद्धा न भवेयुस्तथैवेश्वरेणास्माकं कृते श्रेष्ठतरं किमपि निर्दिदिशे।

---

## १२ द्वादशोऽध्यायः।

१ विश्वासे दुःखभोगे धर्म्मे च स्थिरत्वं १२ धर्म्मत्यागे सावधानत्वं १८ व्यवस्थाया मङ्गलात् सुसंवादस्य मङ्गलं महत् २५ सुसंवादे ऽवश्यस्थिरत्वञ्च।

१ अतो हेतोरेतावत्साक्षिमेघै र्वेष्टिताः सन्तो वयमपि सर्व्वभारम् आशुबाधकं पापञ्च निक्षिप्यास्माकं गमनाय निरू-
२ पिते मार्गे धैर्य्येण धावाम। यश्चास्माकं विश्वासस्याग्रेसरः सिद्धिकर्त्ता चास्ति तं यीशुं वीक्षामहै यतः स स्वसम्मुखस्थितानन्दस्य प्राप्त्यर्थम् अपमानं तुच्छीकृत्य क्रुशस्य यातनां सोढ-
३ वान् ईश्वरीयसिंहासनस्य दक्षिणपार्श्वे समुपविष्टवांश्च। यः पापिभिः स्वविरुद्धम् एतादृशं वैपरीत्यं सोढवान् तम् आलोचयत तेन यूयं स्वमनःसु श्रान्ताः क्लान्ताश्च न भविष्यथ।
४ यूयं पापेन सह युध्यन्तोऽद्यापि शोणितव्ययपर्य्यन्तं प्रतिरोधं

नाकुरुत। तथा च पुत्रान् प्रतीव युष्मान् प्रति य उपदेश ५
उक्तस्तं किं विस्मृतवन्तः?

परेशेन कृतां शास्तिं हे मत्पुत्त्र न तुच्छय।
तेन संभर्त्सितश्चापि नैव क्लाम्य कदाचन।
परेशः प्रीयते यस्मिन् तस्मै शास्तिं ददाति यत्। ६
यन्तु पुत्रं स गृह्णाति तमेव प्रहरत्यपि।

यदि यूयं शास्तिं सहध्वं तर्हीश्वरः पुत्रैरिव युष्माभिः सार्द्धं ७
व्यवहरति यतः पिता यस्मै शास्तिं न ददाति तादृशः पुत्त्रः
कः? सर्व्वे यस्याः शास्तेरंशिनो भवन्ति सा यदि युष्माकं न ८
भवति तर्हि यूयम् आत्मजा न किन्तु जारजा आध्वे। अपरम् ९
अस्माकं शारीरिकजन्मदातारोऽस्माकं शास्तिकारिणोऽभवन्
ते चास्माभिः सम्मानितास्तस्माद् य आत्मनां जनयिता वयं किं
ततोऽधिकं तस्य वशीभूय न जीविष्यामः? ते त्वल्पदिनानि १०
यावत् स्वमनोऽभिमतानुसारेण शास्तिं कृतवन्तः किन्त्वेषोऽस्माकं
हिताय तस्य पवित्रताया अंशित्वाय चास्मान् शास्ति। शास्तिश्च ११
वर्त्तमानसमये केनापि नानन्दजनिका किन्तु शोकजनिकैव
मन्यते तथापि ये तया विनीयन्ते तेभ्यः सा पश्चात् शान्तियुक्तं
धर्म्मफलं ददाति।

अतएव यूयं शिथिलान् हस्तान् दुर्ब्बलानि जानूनि च १२
सबलानि कुरुध्वं। यथा च दुर्ब्बलस्य सन्धिस्थानं न भज्येत स्वस्थं १३
तिष्ठेत् तथा स्वचरणार्थं सरलं मार्गं निर्म्मात। अपरञ्च सर्व्वैः १४
सार्द्धम् ऐक्यभावं यच्च विना परमेश्वरस्य दर्शनं केनापि न
लप्स्यते तत् पवित्रत्वं चेष्टध्वं। यथा कश्चिद् ईश्वरस्यानुग्रहात् न १५
पतेत्, यथा च तिक्तताया मूलं प्ररुह्य बाधाजनकं न भवेत्

१६ तेन च बहवोऽपवित्रा न भवेयुः, यथा च कश्चित् लम्पटो वा एककृत्व आहारार्थं स्वीयज्येष्ठाधिकारविक्रेता य एषौस्तद्वद्
१७ अधर्म्माचारी न भवेत् तथा सावधाना भवत। यतः स एषौः पश्चाद् आशीर्व्वादाधिकारी भवितुम् इच्छन्नपि नानुगृहीत इति यूयं जानीथ, स चाश्रुपातेन मत्यन्तरं प्रार्थयमानोऽपि तदुपायं न लेभे।

१८ 　अपरञ्च स्पृश्यः पर्व्वतः प्रज्वलितो वह्निः कृष्णवर्णो मेघो
१९ ऽन्धकारो झञ्भ्भा तूरीवाद्यं वाक्यानां शब्दश्च नैतेषां सन्निधौ यूयम् आगताः। तं शब्दं श्रुत्वा श्रोतारस्तादृशं सम्भाषणं
२० यत् पुन र्न जायते तत् प्रार्थितवन्तः। यतः पशुरपि यदि धराधरं स्पृशति तर्हि स पाषाणाघातै र्हन्तव्य इत्यादेशं
२१ सोढुं ते नाशक्नुवन्। तच्च दर्शनम् एवं भयानकं यत् मूससोक्तं
२२ भीतस्त्रासयुक्तश्चास्मीति। किन्तु सीयोन्पर्व्वतो ऽमरेश्वरस्य नगरं स्वर्गस्थयिरूशालमम् अयुतानि दिव्यदूताः स्वर्गे लि-
२३ खितानां प्रथमजातानाम् उत्सवः समितिश्च सर्व्वेषां विचाराधिपतिरीश्वरः सिद्धीकृतधार्म्मिकानाम् आत्मानो नूतन-
२४ नियमस्य मध्यस्थो यीशुः, अपरं हाबिलो रक्तात् श्रेयः प्रचारकं प्रोक्षणस्य रक्तञ्चैतेषां सन्निधौ यूयम् आगताः।

२५ 　सावधाना भवत तं वक्तारं नावजानीत यतो हेतोः पृथिवीस्थितः स वक्ता यैरवज्ञातस्तै र्यदि रक्षा नाप्रापि तर्हि स्वर्गी-
२६ यवक्तुः पराङ्मुखीभूयास्माभिः कथं रक्षा प्राप्स्यते? तदा तस्य रवात् पृथिवी कम्पिता किन्त्विदानीं तेनेदं प्रतिज्ञातं यथा, अहं पुनरेककृत्वः पृथिवीं कम्पयिष्यामि केवलं तन्नहि गगन-
२७ मपि कम्पयिष्यामि। स एककृत्वः शब्दो निश्चलविषयाणां

स्थितये निर्म्मितानामिव चञ्चलवस्तूनां स्थानान्तरीकरणं प्रकाशयति। अतएव निश्चलराज्यप्राप्तेरस्माभिः सोऽनुग्रह आलम्बितव्या येन वयं सादरं सभयञ्च तुष्टिजनकरूपेणेश्वरं सेवितुं शक्नुयाम। यतोऽस्माकम् ईश्वरः संहारको वह्निः। २८ २९

## १३ त्रयोदशोऽध्यायः।

१ भ्रातृषु प्रेमादेः कथनं ९ नानाशिचाभिश्चालितत्वनिषेधः १७ शिचकाणां मानमकथनं २० मङ्गलप्रार्थना २२ वार्त्तानमस्कारप्रेषणञ्च।

भ्रातृषु प्रेम तिष्ठतु। अतिथिसेवा युष्माभि र्न विस्मर्य्यतां १ यतस्तया प्रच्छन्नरूपेण दिव्यदूताः केषाञ्चिद् अतिथयोऽभवन्। २ बन्दिनः सहबन्दिभिरिव दुःखिनश्च देहवासिभिरिव युष्माभिः स्मर्य्यन्तां। विवाहः सर्व्वेषां समीपे सम्मानितव्यस्तदीयशय्या च शुचिः किन्तु वेश्यागामिनः पारदारिकाश्चेश्वरेण दण्डयिष्यन्ते। यूयम् आचारे निर्लोभा भवत विद्यमानविषये सन्तुष्यत च यस्माद् ईश्वर एवेदं कथितवान्, यथा, त्वां न त्यक्ष्यामि न त्वां हास्यामि। अतएव वयम् उत्साहेनेदं कथयितुं शक्नुमः, ३ ४ ५ ६

मत्पक्षे परमेशोऽस्ति न भेष्यामि कदाचन।
यस्मात् मां प्रति किं कर्त्तुं मानवः पारयिष्यति॥

युष्माकं ये नायका युष्मभ्यम् ईश्वरस्य वाक्यं कथितवन्तस्ते युष्माभिः स्मर्य्यन्तां तेषाम् आचारस्य परिणामम् आलोच्य युष्माभिस्तेषां विश्वासोऽनुक्रियतां। यीशुः ख्रीष्टः श्वोऽद्य सदा च स एवास्ते। ७ ८

यूयं नानाविधनूतनशिक्षाभि र्न परिवर्त्तध्वं यतोऽनुग्रहेणान्तःकरणस्य सुस्थिरीभवनं क्षेमं न च खाद्यद्रव्यैः। यतस्- ९

१० दाचारिणस्ते नोपकृताः। ये दूष्यस्य सेवां कुर्व्वन्ति ते यस्या द्रव्यभोजनस्यानधिकारिणस्तादृशी यज्ञवेदिरस्माकम् आस्ते।
११ यतो येषां पशूनां शोणितं पापनाशाय महायाजकेन महापवित्रस्थानस्याभ्यन्तरं नीयते तेषां शरीराणि शिविराद् बहि
१२ र्दह्यन्ते। तस्माद् यीशुरपि यत् स्वरुधिरेण प्रजाः पवित्री-
१३ कुर्य्यात् तदर्थं नगरद्वारस्य बहि र्दुःखं भुक्तवान्। अतो हेतोरस्माभिरपि तस्यापमानं सहमानैः शिविराद् बहिस्तस्य समीपं
१४ गन्तव्यं। यतो ऽत्रास्माकं स्थायि नगरं न विद्यते किन्तु भावि
१५ नगरम् अस्माभिरन्विष्यते। अतएव यीशुनास्माभि र्नित्यं प्रशंसारूपो बलिरर्थतस्तस्य नामाङ्गीकुर्व्वताम् ओष्ठाधराणां फलम्
१६ ईश्वराय दातव्यं। अपरञ्च परोपकारो दानञ्च युष्माभि र्न विस्मर्य्यतां यतस्तादृशं बलिदानम् ईश्वराय रोचते।
१७ यूयं स्वनायकानाम् आज्ञाग्राहिणो वश्याश्च भवत यतो यैरुपनिधिः प्रतिदातव्यस्तादृशा लोका इव ते युष्मदीयात्मनां रक्षणार्थं जाग्रति, अतस्ते यथा सानन्दास्तत् कुर्य्यु र्न च सार्त्तस्वरा अत्र यतध्वं यतस्तेषाम् आर्त्तस्वरो युष्माकम् इष्टजनको
१८ न भवेत्। अपरञ्च यूयम् अस्मन्निमित्तं प्रार्थनां कुरुत यतो वयम् उत्तममनोविशिष्टाः सर्व्वत्र सदाचारं कर्त्तुम् इच्छुकाश्च
१९ भवाम इति निश्चितं जानीमः। विशेषतो ऽहं यथा त्वरया युष्मभ्यं पुन र्दीये तदर्थं प्रार्थनायै युष्मान् अधिकं विनये।
२० अनन्तनियमस्य रुधिरेण विशिष्टो महान् मेषपालको येन मृतगणमध्यात् पुनरानायि स शान्तिदायक ईश्वरो निजा-
२१ भिमतसाधनाय सर्व्वस्मिन् सत्कर्म्मणि युष्मान् सिद्धान् करोतु, तस्य दृष्टौ च यद्यत् तुष्टिजनकं तदेव युष्माकं मध्ये यीशुना

ख्रीष्टेन साधयतु। तस्मै महिमा सर्व्वदा भूयात्। आमेन।

हे भ्रातरः, विनयेऽहं यूयम् इदम् उपदेशवाक्यं सहध्वं २२ यतोऽहं संक्षेपेण युष्मान् प्रति लिखितवान्। अस्माकं भ्राता २३ तीमथियो मुक्तोऽभवद् इति जानीत, स च यदि त्वरया समा- गच्छति तर्हि तेन सार्द्धम् अहं युष्मान् साक्षात् करिष्यामि। युष्माकं सर्व्वान् नायकान् पवित्रलोकांश्च नमस्कुरुत। अपरम् २४ इतालियादेशीयानां नमस्कारं ज्ञास्यथ। अनुग्रहो युष्माकं २५ सर्व्वेषां सहायो भूयात्। आमेन्।

---

# याकूबः सर्व्वसाधारणपत्रं।

## १ प्रथमोऽध्यायः।

१ मङ्गलाचरणं २ दुःखेऽप्याह्लादनं ५ ईश्वराद् धैर्य्ययाचनं ९ धने ऽभिमाननिषेधः १२ ईश्वरस्य पापमूलत्वं नहि किन्तु सर्व्वस्य मङ्गलस्य मूलत्वं २१ काल्पनिकताया विरुद्धा कथा च।

ईश्वरस्य प्रभो र्यीशुख्रीष्टस्य च दासो याकूब् विकीर्णी- १ भूतान् द्वादश वंशान् प्रति नमस्कृत्य पत्रं लिखति।

हे मम भ्रातरः, यूयं यदा बहुविधपरीक्षाषु निपतत तदा २ तत् पूर्णानन्दस्य कारणं मन्यध्वं। यतो युष्माकं विश्वासस्य ३ परीक्षितत्वेन धैर्य्यं सम्पाद्यत इति जानीथ। तच्च धैर्य्यं सिद्धफलं ४ भवतु तेन यूयं सिद्धाः सम्पूर्णाश्च भविष्यथ कस्यापि गुणस्याभा- वश्च युष्माकं न भविष्यति।

५　युष्माकं कस्यापि ज्ञानाभावो यदि भवेत् तर्हि य ईश्वरः सरलभावेन तिरस्कारञ्च विना सर्व्वेभ्यो ददाति ततः
६ स याचतां ततस्तस्मै दायिष्यते। किन्तु स निःसन्देहः सन् विश्वासेन याचतां यतः सन्दिग्धो मानवो वायुना चालित-
७ स्योत्प्लवमानस्य च समुद्रतरङ्गस्य सदृशो भवति। तादृशो
८ मानवः प्रभोः किञ्चित् प्राप्स्यतीति न मन्यतां। द्विमना लोकः सर्व्वगतिषु चञ्चलो भवति।

९　यो भ्राता नम्रः स निजोन्नत्या श्लाघतां। यश्च धनवान् स
१० निजनम्रतया श्लाघतां यतः स तृणपुष्पवत् क्षयं गमिष्यति।
११ यतः सतापेन सूर्य्येणोदित्य तृणं शोष्यते तत्पुष्पञ्च भ्रश्यति तेन तस्य रूपस्य सौन्दर्य्यं नश्यति तद्वद् धनिलोकोऽपि स्वीयमूढतया म्लास्यति।

१२　यो जनः परीक्षां सहते स एव धन्यः, यतः परीक्षितत्वं प्राप्य स प्रभुना स्वप्रेमकारिभ्यः प्रतिज्ञातं जीवनमुकुटं लप्स्यते।
१३ ईश्वरो मां परीक्षत इति परीक्षासमये कोऽपि न वदतु यतः पापायेश्वरस्य परीक्षा न भवति स च कमपि न परीक्षते।
१४ किन्तु यः कश्चित् स्वीयमनोवाञ्छयाकृष्यते लोभ्यते च तस्यैव
१५ परीक्षा भवति। तस्मात् सा मनोवाञ्छा सगर्भा भूत्वा दुष्कृतिं
१६ प्रसूते दुष्कृतिश्च परिणामं गत्वा मृत्युं जनयति। हे मम प्रिय-
१७ भ्रातरः, यूयं न भ्राम्यत। यत् किञ्चिद् उत्तमं दानं पूर्णो वरश्च तत् सर्व्वम् ऊर्द्ध्वाद् अर्थतो यस्मिन् दशान्तरं परिवर्त्तनजातच्छाया वा नास्ति तस्माद् दीप्त्याकरात् पितुरवरो-
१८ हति। तस्य सृष्टवस्तूनां मध्ये वयं यत् प्रथमफलस्वरूपा भवामस्तदर्थं स स्वेच्छातः सत्यमतस्य वाक्येनास्मान् जनयामास।

अतएव हे मम प्रियभ्रातरः, युष्माकम् एकैको जनः श्रवणे १९
त्वरितः कथने धीरः क्रोधेऽपि धीरो भवतु। यतो मानवस्य २०
क्रोध ईश्वरीयधर्म्मं न साधयति।

अतो हेतो यूयं सर्व्वाम् अशुचिक्रियां दुष्टताबाहुल्यञ्च २१
निक्षिप्य युष्मन्मनसां परित्राणे समर्थं रोपितं वाक्यं नम्रभावेन
गृह्णीत। अपरञ्च यूयं केवलम् आत्मवञ्चयितारो वाक्यस्य २२
श्रोतारो न भवत किन्तु वाक्यस्य कर्म्मकारिणो भवत। यतो २३
यः कश्चिद् वाक्यस्य कर्म्मकारी न भूत्वा केवलं तस्य श्रोता
भवति स दर्पणे स्वीयशारीरिकवदनं निरीक्षमाणस्य मनुजस्य
सदृशः। आत्माकारे दृष्टे स प्रस्थाय कीदृश आसीत् तत् २४
तत्क्षणाद् विस्मरति। किन्तु यः कश्चित् नत्वा मुक्तेः सिद्धां २५
व्यवस्थाम् आलोक्य तिष्ठति स विस्मृतियुक्तः श्रोता न भूत्वा
कर्म्मकर्त्तैव सन् स्वकार्य्ये धन्यो भविष्यति। अनायत्तरसनः २६
सन् यः कश्चित् स्वमनो वञ्चयित्वा स्वं भक्तं मन्यते तस्य भक्ति
र्मुधा भवति। क्लेशकाले पितृहीनानां विधवानाञ्च यद् २७
अवेक्षणं संसाराच्च निष्कलङ्केन यद् आत्मरक्षणं तदेव पितु-
रीश्वरस्य साक्षात् शुचि र्निर्म्मला च भक्तिः।

---

## २ द्वितीयोऽध्यायः।

१ धनिलोकानां समादरार्थं दरिद्रलोकानां यत् तुच्छीकरणं तस्य निषेधः १४ धर्म्म-
रहितो विश्वासो मुधा, निष्फलसफलप्रत्यययोः कथनञ्च।

हे मम भ्रातरः, यूयम् अस्माकं तेजस्विनः प्रभो यीशु- १
ख्रीष्टस्य धर्म्मं मुखापेक्षया न धारयत। यतो युष्माकं सभायां २
स्वर्णाङ्गुरीयकयुक्ते भ्राजिष्णुपरिच्छदे पुरुषे प्रविष्टे मलिनवस्त्रे
कस्मिंश्चिद् दरिद्रेऽपि प्रविष्टे यूयं यदि तं भ्राजिष्णुपरिच्छद- ३

वसानं जनं निरीक्ष्य वदेत भवान् अत्रोत्तमस्थान उपविशत्विति
किञ्च तं दरिद्रं यदि वदेत त्वम् अमुस्मिन् स्थाने तिष्ठ यद्वात्र
४ मम पादपीठ उपविशेति, तर्हि मनःसु विशेष्य यूयं किं कुतर्कैः
५ कुविचारका न भवथ? हे मम प्रियभ्रातरः, शृणुत, संसारे
ये दरिद्रास्तान् ईश्वरो विश्वासेन धनिनः स्वप्रेमकारिभ्यश्च
६ प्रतिश्रुतस्य राज्यस्याधिकारिणः कर्त्तुं किं न वरीतवान्? किन्तु
दरिद्रो युष्माभिरवज्ञायते। धनवन्त एव किं युष्मान् नोप-
७ द्रवन्ति बलाच्च विचारासनानां समीपं न नयन्ति? युष्मदुपरि
८ परिकीर्त्तितं परमं नाम किं तैरेव न निन्द्यते? किञ्च त्वं स्वस-
मीपवासिनि स्वात्मवत् प्रीयस्व, एतच्छास्त्रीयवचनानुसारतो
९ यदि यूयं राजकीयव्यवस्थां पालयथ तर्हि भद्रं कुरुथ। यदि
च मुखापेक्षां कुरुथ तर्हि पापम् आचरथ व्यवस्थया चाज्ञाल-
१० ङ्घिन इव दूष्यध्वे। यतो यः कश्चित् कृत्स्नां व्यवस्थां पालयति
स यद्येकस्मिन् विधौ स्खलति तर्हि सर्व्वेषाम् अपराधी भवति।
११ यतो हेतोस्त्वं परदारान् मा गच्छेति यः कथितवान् स एव
नरहत्यां मा कुर्य्या इत्यपि कथितवान् तस्मात् त्वं परदारान्
न गत्वा यदि नरहत्यां करोषि तर्हि व्यवस्थालङ्घी भवसि।
१२ मुक्ते र्व्यवस्थातो येषां विचारेण भवितव्यं तादृशा लोका इव
१३ यूयं कथां कथयत कर्म्म कुरुत च। यो दयां नाचरति तस्य
विचारो निर्द्दयेन कारिष्यते, किन्तु दया विचारम् अभि-
भविष्यति।

१४ हे मम भ्रातरः, मम प्रत्ययोऽस्तीति यः कथयति तस्य कर्म्मा-
णि यदि न विद्यन्त तर्हि तेन किं फलं? तेन प्रत्ययेन किं
१५ तस्य परित्राणं भवितुं शक्नोति? केषुचिद् भ्रातृषु भगिनीषु

वा वसनहीनेषु प्रात्यहिकाहारहीनेषु च सत्सु युष्माकं कोऽपि १६ तेभ्यः शरीरार्थं प्रयोजनीयानि द्रव्याणि न दत्त्वा यदि तान् वदेत्, यूयं सकुशलं गत्वोष्णगात्रा भवत तृप्यत चेति तर्ह्येतेन किं फलं? तद्वत् प्रत्ययो यदि कर्म्मभि र्युक्तो न भवेत् तर्ह्येका- १७ किलात् मृत एवास्ते। किञ्च कश्चिद् इदं वदिष्यति तव प्रत्ययो १८ विद्यते मम च कर्म्माणि विद्यन्ते, त्वं कर्म्महीनं स्वप्रत्ययं मां दर्शय तर्ह्यहमपि मत्कर्म्मभ्यः स्वप्रत्ययं त्वां दर्शयिष्यामि। एक ईश्वरो १९ ऽस्तीति त्वं प्रत्येषि। भद्रं करोषि। भूता अपि तत् प्रतियन्ति कम्पन्ते च। किन्तु हे निर्ब्बोधमानव, कर्म्महीनः प्रत्ययो मृत २० एवास्त्येतद् अवगन्तुं किम् इच्छसि? अस्माकं पूर्व्वपुरुषो य २१ इब्राहीम् स्वपुत्रम् इस्हाकं यज्ञवेद्याम् उत्सृष्टवान् स किं कर्म्मभ्यो न सपुण्यीकृतः? प्रत्यये तस्य कर्म्मणां सहकारिणि जाते २२ कर्म्मभिः प्रत्ययः सिद्धो ऽभवत् तत् किं पश्यसि? इत्यस्येदं २३ शास्त्रीयवचनं सफलम् अभवत्, इब्राहीम् परमेश्वरे विश्वसितवान् तच्च तस्य पुण्यायागण्यत स चेश्वरस्य मित्र इति नाम लब्धवान्। पश्यत मानवः कर्म्मभ्यः सपुण्यीक्रियते न चैकाकिना २४ प्रत्ययेन। तद्वद् या राहब्नामिका वाराङ्गना चारान् अनुगृ- २५ ह्यापरेण मार्गेण विससर्ज सापि किं कर्म्मभ्यो न सपुण्यीकृता? अतएवात्महीनो देहो यथा मृतोऽस्ति तथैव कर्म्महीनः प्रत्य- २६ योऽपि मृतोऽस्ति।

---

## ३ तृतीयोऽध्यायः।

१ अन्यजनं दोषिणम् अकृत्वा स्वजिह्वाया अवश्यदमनीयत्वं १३ ज्ञानिसाधस्य पूर्व्वोक्तदोषपरिहारश्च।

हे मम भ्रातरः, शिक्षकैरस्माभि र्गुरुतरदण्डो लप्स्यत इति १

२ ज्ञात्वा यूयम् अनेके शिक्षका मा भवत। यतः सर्व्वे वयं बहु-
विषयेषु स्खलामः, यः कश्चिद् वाक्ये न स्खलति स सिद्धपुरुषः
३ कृत्स्नं देहं वशीकर्त्तुं समर्थश्चास्ति। पश्यत वयम् अश्वान् वशी-
कर्त्तुं तेषां वक्त्रेषु खलीनान् निधाय तेषां कृत्स्नं शरीरम्
४ अनुवर्त्तयामः। पश्यत ये पोता अतीव बृहदाकाराः प्रचण्ड-
वातैश्च चालितास्तेऽपि कर्णधारस्य मनोऽभिमताद् अतिक्षुद्रेण
५ कर्णेन वाञ्छितं स्थानं प्रत्यनुवर्त्तन्ते। तद्वद् रसनापि क्षुद्रत-
राङ्गं सन्ती दर्पवाक्यानि भाषते। पश्य कीदृङ्महारण्यं दह्यते
६ ऽल्पेन वह्निना। रसनापि भवेद् वह्निरधर्म्मरूपपिष्टपे। अस्म-
दङ्गेषु रसना तादृशं सन्तिष्ठति सा कृत्स्नं देहं कलङ्कयति सृष्टि-
७ रथस्य चक्रं प्रज्वलयति नरकानलेन ज्वलति च। पश्वपक्षि-
रोगजलचराणां सर्व्वेषां स्वभावो दमयितुं शक्यते मानुषि-
८ कस्वभावेन दमयाञ्चक्रे च। किन्तु मानवानां केनापि जिह्वा
दमयितुं न शक्यते सा न निवार्य्यम् अनिष्टं हलाहलविषेण
९ पूर्णा च। तया वयं पितरम् ईश्वरं धन्यं वदामः, तया चेश्वरस्य
१० सादृश्ये सृष्टान् मानवान् शपामः। एकस्माद् वदनाद् धन्य-
वादशापौ निर्गच्छतः। हे मम भ्रातरः, एतादृशं न कर्त्तव्यं।
११ प्रस्रवणः किम् एकस्मात् छिद्रात् मिष्टं तिक्तञ्च तोयं निर्गम-
१२ यति? हे मम भ्रातरः, उडुम्बरतरुः किं जितफलानि द्राक्षा-
लता वा किम् उडुम्बरफलानि फलितुं शक्नोति? तद्वद् एकः
प्रस्रवणो लवणमिष्टे तोये निर्गमयितुं न शक्नोति।

१३ 　युष्माकं मध्ये ज्ञानी सुबोधश्च क आस्ते? तस्य कर्म्माणि
१४ ज्ञानमूलकमृदुतायुक्तानीति सदाचारात् स प्रमाणयतु। किन्तु
युष्मदन्तःकरणमध्ये यदि तिक्तेर्ष्या विवादेच्छा च विद्यते तर्हि

सत्यमतस्य विरुद्धं न श्लाघध्वं नचानृतं कथयत। तादृशं १५ ज्ञानम् ऊर्द्धाद् आगतं नहि किन्तु पार्थिवं शरीरि भौतिकञ्च। यतो हेतोरीर्ष्या विवादेच्छा च यत्र विद्येते तत्रैव कलहः सर्व्वं १६ दुष्कृतञ्च विद्यते। किन्तूर्द्धाद् आगतं यत् ज्ञानं तत् प्रथमं शुचि १७ ततः परं शान्तं क्षान्तम् आशुसन्धेयं दयादिसत्फलैः परिपूर्णम् असन्दिग्धं निष्कपटञ्च भवति। शान्त्याचारिभिः शान्त्या १८ धर्म्मफलं रोप्यते।

---

## ४ चतुर्थोऽध्यायः।

१ युद्धलोभेर्ष्याहङ्कारादीनां विरुद्धा कथा ११ अज्ञानिकथनं १२ वाणिज्यदीर्घायुषो ऽहितस्य श्लाघाया अकर्त्तव्यत्वञ्च।

युष्माकं मध्ये समरा रणाश्च कुत उत्पद्यन्ते? युष्मदङ्ग- १ शिविराश्रिताभ्यः सुखेच्छाभ्यः किं नोत्पद्यन्ते? यूयं वाञ्छथ २ किन्तु नाप्नुथ, यूयं नरहत्याम् ईर्ष्याञ्च कुरुथ किन्तु कृतार्था भवितुं न शक्नुथ, यूयं युध्यथ रणं कुरुथ च किन्त्वप्राप्तास्तिष्ठथ, यतो हेतोः प्रार्थनां न कुरुथ। यूयं प्रार्थयध्वे किन्तु ३ न लभध्वे यतो हेतोः स्वसुखभोगेषु व्ययार्थं कु प्रार्थयध्वे। हे व्यभिचारिणो व्यभिचारिण्यश्च, संसारस्य यत् मैत्र्यं तद् ४ ईश्वरस्य शात्रवमिति यूयं किं न जानीथ? अत एव यः कश्चित् संसारस्य मित्रं भवितुम् अभिलषति स एवेश्वरस्य शत्रुर्भवति। यूयं किं मन्यध्वे? शास्त्रस्य वाक्यं किं फलहीनं भवेत्? ५ अस्मदन्तर्वासी य आत्मा स वा किम् ईर्ष्यार्थं प्रेम करोति? तन्नहि किन्तु स प्रतुलं वरं वितरति तस्माद् उक्तमास्ते यथा, ६

आत्माभिमानलोकानां विपक्षो भवतीश्वरः।
किन्तु तेनैव नम्रेभ्यः प्रसादाद् दीयते वरः॥

७ अतएव यूयम् ईश्वरस्य वश्या भवत शयतानं संरुन्ध तेन स
८ युष्मत्तः पलायिष्यते । ईश्वरस्य समीपवर्त्तिनो भवत तेन स
युष्माकं समीपवर्त्ती भविष्यति । हे पापिनः, यूयं स्वकरान्
परिष्कुरुध्वं । हे द्विमनोलोकाः, यूयं स्वान्तःकरणानि शुचीनि
९ कुरुध्वं । यूयम् उद्विजध्वं शोचत विलपत च, युष्माकं हासः
१० शोकाय, आनन्दश्च कातरतायै परिवर्त्तेतां । प्रभोः समक्षं नम्रा
भवत तस्मात् स युष्मान् उच्चीकरिष्यति ।

११ हे भ्रातरः, यूयं परस्परं मा दूषयत । यः कश्चिद् भ्रातरं
दूषयति भ्रातु र्विचारञ्च करोति स व्यवस्थां दूषयति व्यव-
स्थायाश्च विचारं करोति । त्वं यदि व्यवस्थाया विचारं करोषि
तर्हि व्यवस्थापालयिता न भवसि किन्तु विचारयिता भवसि ।
१२ अद्वितीयो व्यवस्थापको विचारयिता च स एवास्ते यो रक्षितुं
नाशयितुञ्च पारयति। किन्तु कस्त्वं यत् परस्य विचारं करोषि?

१३ अद्य श्वो वा वयम् अमुकनगरं गत्वा तत्र वर्षमेकं यापयन्तो
वाणिज्यं करिष्यामः लाभं प्राप्स्यामश्चेति कथां भाषमाणा
१४ यूयम् इदानीं शृणुत। श्वः किं घटिष्यते तद् यूयं न जानीथ
यतो जीवनं वो भवेत् कीदृक् तत्तु वाष्पस्वरूपकं, क्षणमात्रं
१५ भवेद् दृश्यं लुप्यते च ततः परं । तदनुक्त्वा युष्माकम् इदं
कथनीयं प्रभोरिच्छातो वयं यदि जीवामस्तर्ह्येतत् कर्म्म तत्
१६ कर्म्म वा करिष्याम इति । किन्त्विदानीं यूयं गर्व्ववाक्यैः श्लाघनं
१७ कुरुध्वे तादृशं सर्व्वं श्लाघनं कुत्सितमेव । अतो यः कश्चित्
सत्कर्म्म कर्त्तुं विदित्वा तन्न करोति तस्य पापं जायते ।

---

## ५ पञ्चमोऽध्यायः।

१ दण्डाद् दुष्टधनिलोकानां भीतत्वमुचितं ७ धार्म्मिकलोकानाम् अवश्यदुःखमोचकत्वं १२ निरर्थकदिव्यनिषेधः १३ पीडासमये प्रार्थयितव्यं १९ भ्रान्तभ्रातुः परावर्त्तनीयत्वकथनं।

हे धनवन्तः, यूयम् इदानीं शृणुत युष्माभिरागमिष्यत्क्लेश- १
हेतोः क्रन्द्यतां विलप्यताञ्च। युष्माकं द्रविणं जीर्णं कीट- २
भुक्ताः सुचेलकाः। कनकं रजतञ्चापि विकृतिं प्रगमिष्यति, ३
तत्कलङ्कश्च युष्माकं पापं प्रमाणयिष्यति, हुताशवच्च युष्माकं
पिशितं खादयिष्यति। इत्थम् अन्तिमघस्रेषु युष्माभिः सञ्चितं
धनं। पश्यत यैः कृषीवलै र्युष्माकं शस्यानि छिन्नानि तेभ्यो ४
युष्माभि र्यद् वेतनं छिन्नं तद् उच्चै र्ध्वनिं करोति तेषां शस्य-
च्छेदकानाम् आर्त्तरावः सेनापतेः परमेश्वरस्य कर्णकुहरं
प्रविष्टः। यूयं पृथिव्यां सुखभोगं कामुकताञ्चाचरितवन्तः, ५
महाभोजस्य दिन इव निजान्तःकरणानि परितर्पितवन्तश्च।
अपरञ्च युष्माभि र्धार्म्मिकस्य दण्डाज्ञा हत्या चाकारि तथापि ६
स युष्मान् न प्रतिरुद्धवान्।

हे भ्रातरः, यूयं प्रभोरागमनं यावद् धैर्य्यमालम्बध्वं। ७
पश्यत कृषिवलो भूमे र्बहुमूल्यं फलं प्रतीक्षमाणो यावत् प्रथमम्
अन्तिमञ्च वृष्टिजलं न प्राप्नोति तावद् धैर्य्यम् आलम्बते।
यूयमपि धैर्य्यमालम्ब्य स्वान्तःकरणानि स्थिरीकुरुत, यतः ८
प्रभोरुपस्थितिः समीपवर्त्तिन्यभवत्। हे भ्रातरः, यूयं यद् दण्ड्या ९
न भवेत तदर्थं परस्परं न ग्लायत, पश्यत विचारयिता द्वार-
समीपे तिष्ठति। हे मम भ्रातरः, ये भविष्यद्वादिनः प्रभो १०
र्नाम्ना भाषितवन्तस्तान् यूयं दुःखसहनस्य धैर्य्यस्य च दृष्टान्तान्
जानीत। पश्यत धैर्य्यशीला अस्माभि र्धन्या उच्यन्ते। आयूबो ११

धैर्य्यं युष्माभिरश्रावि प्रभोः परिणामश्चादर्शि यतः प्रभु र्बहुकृपः सकरुणश्चास्ति।

१२ हे भ्रातरः, विशेषत इदं वदामि स्वर्गस्य वा पृथिव्या वान्यवस्तुनो नाम गृहीत्वा युष्माभिः कोऽपि शपथो न क्रियतां, किन्तु यथा दण्ड्या न भवेत तदर्थं युष्माकं तथैव तन्नहि चेतिवाक्यं यथेष्टं भवतु।

१३ युष्माकं कश्चिद् दुःखी भवति? स प्रार्थनां करोतु। कश्चिद्
१४ वानन्दितो भवति? स गीतं गायतु। युष्माकं कश्चित् पीडितोऽस्ति? स समितेः प्राचीनान् आह्वातु ते च प्रभो र्नाम्ना तं
१५ तैलेनाभिषिच्य तस्य कृते प्रार्थनां कुर्व्वन्तु। तस्माद् विश्वासजातप्रार्थनया स रोगी रक्षां यास्यति प्रभुश्च तम् उत्थापयि-
१६ ष्यति यदि च कृतपापो भवेत् तर्हि स तं क्षमिष्यते। यूयं परस्परम् अपराधान् अङ्गीकुरुध्वम् आरोग्यप्राप्त्यर्थञ्चैकजनोऽन्यस्य कृते प्रार्थनां करोतु धार्म्मिकस्य सयत्ना प्रार्थना बहुशक्ति-
१७ विशिष्टा भवति। य एलियो वयमिव सुखदुःखभोगी मर्त्त्य आसीत् स प्रार्थनयानावृष्टिं याचितवान् तेन देशे सार्द्धवत्सर-
१८ त्रयं यावद् वृष्टि र्न बभूव। पश्चात् तेन पुनः प्रार्थनायां कृतायाम् आकाशस्तोयान्यवर्षीत् पृथिवी च स्वफलानि प्रारोहयत्।

१९ हे भ्रातरः, युष्माकं कस्मिंश्चित् सत्यमताद् भ्रष्टे यदि
२० कश्चित् तं परावर्त्तयति तर्हि यो जनः पापिनं विपथभ्रमणात् परावर्त्तयति स तस्यात्मानं मृत्युत उद्धरिष्यति बहुपापान्यावरिष्यति चेति जानातु।

---

# पितरस्य प्रथमं सर्व्वसाधारणपत्रं।

## १ प्रथमोऽध्यायः।

१ मङ्गलाचरणं ४ अनुग्रहकारणाद् ईश्वरस्य धन्यवदनं भविष्यद्वादिभ्यः ख्रीष्टेन परित्राणकथनं १३ ईश्वरीयामोघवाक्यानुसारतो धर्म्मम् आचरितुं पितरस्य विनयश्च।

पन्त-गालातिया-कप्पदकिया-आशिया-बिथुनियादेशेषु १ प्रवासिनो ये विकीर्णलोकाः पितुरीश्वरस्य पूर्व्वनिर्णयाद् आ- २ त्मनः पावनेन यीशुख्रीष्टस्याज्ञाग्रहणाय शोणितप्रोक्षणाय चाभिरुचितास्तान् प्रति यीशुख्रीष्टस्य प्रेरितः पितरः पत्रं लिखति। युष्मान् प्रति बाहुल्येन शान्तिरनुग्रहश्च भूयास्तां।

अस्माकं प्रभो र्यीशुख्रीष्टस्य तात ईश्वरो धन्यः, यतः स ३ स्वकीयबहुकृपातो मृतगणमध्याद् यीशुख्रीष्टस्योत्थानेन जीवनप्रत्याशार्थम् अर्थतो ऽक्षयनिष्कलङ्काम्लानसम्पत्तिप्राप्त्यर्थम् ४ अस्मान् पुन र्जनयामास। सा सम्पत्तिः स्वर्गे ऽस्माकं कृते सञ्चिता तिष्ठति, यूयञ्चेश्वरस्य शक्तितः शेषकाले प्रकाश्यपरित्राणार्थं वि- ५ श्वासेन रक्ष्यध्वे। तस्माद् यूयं यद्यप्यानन्देन प्रफुल्ला भवथ ६ तथापि साम्प्रतं प्रयोजनहेतोः कियत्कालपर्य्यन्तं नानाविधपरीक्षाभिः क्लिश्यध्वे। यतो वह्निना यस्य परीक्षा भवति ७ तस्मात् नश्वरसुवर्णादपि बहुमूल्यं युष्माकं विश्वासरूपं यत् परीक्षितं स्वर्णं तेन यीशुख्रीष्टस्यागमनसमये प्रशंसायाः समादरस्य गौरवस्य च योग्यता प्राप्तव्या। यूयं तं ख्रीष्टम् अदृष्ट्वापि ८ तस्मिन् प्रीयध्वे साम्प्रतं तं न पश्यन्तोऽपि तस्मिन् विश्वसन्तो ऽनिर्व्वचनीयेन प्रभावयुक्तेन चानन्देन प्रफुल्ला भवथ, स्वविश्वा- ९ सस्य परिणामरूपम् आत्मनां परित्राणं लभध्वे च। युष्मासु १०

यो ऽनुग्रहो वर्त्तते तद्विषये य ईश्वरीयवाक्यं कथितवन्तस्ते भविष्यद्वादिनस्तस्य परित्राणस्यान्वेषणम् अनुसन्धानञ्च कृतवन्तः।
११ विशेषतस्तेषामन्तर्व्वासी यः ख्रीष्टस्यात्मा ख्रीष्टे वर्त्तिष्यमाणानि दुःखानि तदनुगामिप्रभावञ्च पूर्व्वं प्राकाशयत् तेन कः कीदृशो
१२ वा समयो निरदिश्यतैतस्यानुसन्धानं कृतवन्तः। ततस्तै र्विषयैस्ते यन्न स्वान् किन्त्वस्मान् उपकुर्व्वन्त्येतत् तेषां निकटे प्राकाश्यत। यांश्च तान् विषयान् दिव्यदूता अप्यवनतशिरसो निरीक्षितुम् अभिलषन्ति ते विषयाः साम्प्रतं स्वर्गात् प्रेषितस्य पवित्रस्यात्मनः साहाय्याद् युष्मत्समीपे सुसंवादप्रचारयितृभिः प्राकाश्यन्त।
१३ अतएव यूयं मनःकटिबन्धनं कृत्वा प्रबुद्धाः सन्तो यीशुख्रीष्टस्य प्रकाशसमये युष्मासु वर्त्तिष्यमानस्यानुग्रहस्य सम्पूर्णां
१४ प्रत्याशां कुरुत। अपरं पूर्व्वीयाज्ञानतावस्थायाः कुत्सिताभिलाषाणां योग्यम् आचारं न कुर्व्वन्तो युष्मदाह्वानकारी यथा
१५ पवित्रो ऽस्ति यूयमप्याज्ञाग्राहिसन्ताना इव सर्व्वस्मिन् आचारे
१६ तादृक् पवित्रा भवत। यतो लिखितम् आस्ते, यूयं पवित्रा-
१७ स्तिष्ठत यस्मादहं पवित्रः। अपरञ्च यो विनापक्षपातम् एकैकमानुषस्य कर्म्मानुसाराद् विचारं करोति स यदि युष्माभिस्तात आख्यायते तर्हि स्वप्रवासस्य कालो युष्माभि र्भीत्या
१८ याप्यतां। यूयं निरर्थकात् पैतृकाचारात् क्षयणीयै रूप्यसुव-
१९ र्णादिभि र्मुक्तिं न प्राप्य निष्कलङ्कनिर्म्मलमेषशावकस्येव ख्रीष्टस्य
२० बहुमूल्येन रुधिरेण मुक्तिं प्राप्तवन्त इति जानीथ। स जगतो भित्तिमूलस्थापनात् पूर्व्वं नियुक्तः किन्तु चरमदिनेषु युष्मदर्थं
२१ प्रकाशितो ऽभवत्। यतस्तेनैव मृतगणात् तस्योत्थापयितरि तस्मै गौरवदातरि चेश्वरे विश्वसिथ तस्माद् ईश्वरे युष्माकं

विश्वासः प्रत्याशा चास्ते। यूयम् आत्मना सत्यमतस्याज्ञाग्रहण- २२
द्वारा निष्कपटाय भ्रातृप्रेम्ने पावितमनसो भूत्वा निर्म्मलान्तः-
करणैः परस्परं गाढं प्रेम कुरुत। यस्माद् यूयं क्षयणीयवीर्य्यात् २३
नहि किन्त्वक्षयणीयवीर्य्याद् ईश्वरस्य जीवनदायकेन नित्यस्था-
यिना वाक्येन पुनर्जन्म गृहीतवन्तः।

सर्व्वप्राणी तृणैस्तुल्यस्तत्तेजस्तृणपुष्पवत्। २४
तृणानि परिशुष्यन्ति पुष्पाणि निपतन्ति च।
किन्तु वाक्यं परेशस्यानन्तकालं वितिष्ठते। २५

तदेव च वाक्यं सुसंवादेन युष्माकम् अन्तिके प्रकाशितं।

---

## २ द्वितीयोऽध्यायः।

१ ख्रीष्टस्य भित्तिमूलत्वं विश्वासिलोकानां मन्दिरतुल्यत्वं ११ सुखाभिलाषत्यागस्य शासकानां वश्यत्वस्य चाज्ञा १८ प्रभोः समीपे दासानां वश्यत्वस्यादेशश्च।

सर्व्वान् द्वेषान् सर्व्वांश्च छलान् कापट्यानीर्ष्याः समस्तग्ला- १
निकथाश्च दूरीकृत्य युष्माभिः परित्राणाय वृद्धिप्राप्त्यर्थं नव- २
जातशिशुभिरिव प्रकृतं वाग्दुग्धं पिपास्यतां। यतः प्रभु ३
र्मधुर एतस्यास्वादं यूयं प्राप्तवन्तः। अपरं मानुषैरवज्ञातस्य ४
किन्त्वीश्वरेणाभिरुचितस्य बहुमूल्यस्य जीवत्प्रस्तरस्येव तस्य
प्रभोः सन्निधिम् आगता यूयमपि जीवत्प्रस्तरा इव निचीय- ५
माना आत्मिकमन्दिरं ख्रीष्टेन यीशुना चेश्वरतोषकाणाम्
आत्मिकबलीनां दानार्थं पवित्रो याजकवर्गो भवथ। यतः ६
शास्त्रे लिखितमास्ते, यथा,

पश्य पाषाण एको ऽस्ति सीयोनि स्थापितो मया।
मुख्यकोणस्य योग्यः स वृतश्चातीव मूल्यवान्।
यो जनो विश्वसेत् तस्मिन् स लज्जां न गमिष्यति।

७ विश्वासिनां युष्माकमेव समीपे स मूल्यवान् भवति किन्त्वविश्वासिनां कृते निचेतृभिरवज्ञातः स पाषाणः कोणस्य भित्तिमूलं भूत्वा बाधाजनकः पाषाणः स्खलनकारकश्च शैलो जातः । ८ ते चाविश्वासाद् वाक्येन स्खलन्ति स्खलने च नियुक्ताः सन्ति ।
९ किन्तु यूयं येनान्धकारमध्यात् स्वकीयाश्चर्य्यदीप्तिमध्यम् आहूतास्तस्य गुणान् प्रकाशयितुम् अभिरुचितो वंशो राजकीयो याजकवर्गः पवित्रा जातिरधिकर्त्तव्याः प्रजाश्च जाताः । १० पूर्व्वं यूयं तस्य प्रजा नाभवत किन्त्वीदानीम् ईश्वरस्य प्रजा आध्वे । पूर्व्वम् अननुकम्पिता अभवत किन्त्विदानीम् अनुकम्पिता आध्वे ।
११ हे प्रियतमाः, यूयं प्रवासिनो विदेशिनश्च लोका इव मनसः प्रातिकूल्येन योधिभ्यः शारीरिकसुखाभिलाषेभ्यो निवर्त्तध्वम् इत्यहं विनये । १२ देवपूजकानां मध्ये युष्माकम् आचार एवम् उत्तमो भवतु यथा ते युष्मान् दुष्कर्म्मकारिलोकानिव पुनर्न निन्दन्तः कृपादृष्टिदिने स्वचक्षुर्गोचरीयसत्क्रियाभ्य ईश्वरस्य प्रशंसां कुर्य्युः । १३ ततो हेतो र्यूयं प्रभोरनुरोधात् मानवसृष्टानां कर्तृत्वपदानां वशीभवत विशेषतो भूपालस्य यतः स श्रेष्ठः, १४ देशाध्यक्षाणाञ्च यतस्ते दुष्कर्म्मकारिणां दण्डदानार्थं सत्कर्म्मकारिणां प्रशंसार्थञ्च तेन प्रेरिताः । १५ इत्थं निर्ब्बोधमानुषाणाम् अज्ञानत्वं यत् सदाचारिभि र्युष्माभि र्निरुत्तरीक्रियते तद् ईश्वरस्याभिमतं । १६ यूयं स्वाधीना इवाचरत तथापि दुष्टताया वेशस्वरूपां स्वाधीनतां धारयन्त इव नहि किन्त्वीश्वरस्य दासा इव । १७ सर्व्वान् समाद्रियध्वं भ्रातृवर्गे प्रीयध्वम् ईश्वराद् बिभीत भूपालं सम्मन्यध्वं ।
१८ हे दासाः, यूयं सम्पूर्णादरेण प्रभूनां वश्या भवत केवलं

भद्राणां दयालूनाञ्च नहि किन्त्वनृजूनामपि । यतो ऽन्यायेन १९ दुःखभोगकाल ईश्वरचिन्तया यत् क्लेशसहनं तदेव प्रियं । पापं कृत्वा युष्माकं चपेटाघातसहनेन का प्रशंसा ? किन्तु सदा- २० चारं कृत्वा युष्माकं यद् दुःखसहनं तदेवेश्वरस्य प्रियं। तदर्थमेव २१ यूयम् आहूता यतः ख्रीष्टोऽपि युष्मन्निमित्तं दुःखं भुक्त्वा यूयं यत् तस्य पदचिह्नै र्व्रजेत तदर्थं दृष्टान्तमेकं दर्शितवान् । स किमपि पापं न कृतवान् तस्य वदने कापि छलस्य कथा २२ नासीत् । निन्दितो ऽपि सन् स प्रतिनिन्दां न कृतवान् दुःखं २३ सहमानो ऽपि न भर्त्सितवान् किन्तु यथार्थविचारयितुः समीपे स्वं समर्पितवान् । वयं यत् पापेभ्यो निवृत्य धर्म्मार्थं जीवा- २४ मस्तदर्थं स स्वशरीरेणास्माकं पापानि क्रुश ऊढवान् तस्य प्रहारै र्यूयं स्वस्था अभवत । यतः पूर्व्वं यूयं भ्रमणकारिमेषा २५ इवाध्वं किन्त्वधुना युष्माकम् आत्मनां पालकस्याध्यक्षस्य च समीपं प्रत्यावर्त्तिताः ।

---

## ३ तृतीयोऽध्यायः ।

१ स्त्रीपुरुषयोः कर्त्तव्यकर्म्मनिर्णयः ८ परस्परं प्रेमकथनं धर्म्मार्थं दुःखभोगकथनम् आत्मना पूर्व्वकालीनलोकान् प्रतीश्वरस्य कथाप्रचारणञ्च ।

हे योषितः, यूयमपि निजस्वामिनां वश्या भवत तथा सति १ यदि केचिद् वाक्ये विश्वासिनो न सन्ति तर्हि ते विनावाक्यं योषिताम् आचारेणार्थतस्तेषां प्रत्यक्षेण युष्माकं सभयसती- २ त्वाचारेणाकृष्टुं शक्ष्यन्ते । अपरं केशरचनया स्वर्णालङ्कारधा- ३ रणेन परिच्छदपरिधानेन वा युष्माकं वाह्यभूषा न भवतु, किन्त्वीश्वरस्य साक्षाद् बहुमूल्यक्षमाशान्तिभावाक्षयरत्नेन युक्तो ४ गुप्त आन्तरिकमानव एव । यतः पूर्व्वकाले याः पवित्रस्त्रिय ५

ईश्वरे प्रत्याशामकुर्व्वन् ता अपि तादृशीमेव भूषां धारयन्त्यो
६ निजस्वामिनां वश्या अभवन्। तथैव सारा इब्राहीमो वश्या
सती तं पतिमाख्यातवती यूयञ्च यदि सदाचारिण्यो भवथ
व्याकुलतया च भीता न भवथ तर्हि तस्याः कन्या आध्वे।
७ हे पुरुषाः, यूयं ज्ञानतो दुर्व्वलतरभाजनैरिव योषिद्भिः
सहवासं कुरुत,एकस्य जीवनवरस्य सहभागिनीभ्यस्ताभ्यः समा-
दरं वितरत च न चेद् युष्माकं प्रार्थनानां बाधा जनिष्यते।
८ विशेषतो यूयं सर्व्वे एकमनसः परदुःखै र्दुःखिता भ्रातृ-
९ प्रेमिणः कृपावन्तः प्रीतिभावाश्च भवत। अनिष्टस्य परिशोधे-
नानिष्टं निन्दाया वा परिशोधेन निन्दां न कुर्व्वन्त आशिषं
दत्त यतो यूयम् आशिरधिकारिणो भवितुमाहूता इति
१० जानीथ। अपरञ्च,

जीवने प्रीयमाणो यः सुदिनानि दिदृक्षते।
पापात् जिह्वां मृषावाक्यात् स्वाधरौ स निवर्त्तयेत्।
११ स त्यजेद् दुष्टतामार्गं सत्क्रियाञ्च समाचरेत्।
मृगयाणश्च शान्तिं स नित्यमेवानुधावतु।
१२ लोचने परमेशस्योन्मीलिते धार्म्मिकान् प्रति।
प्रार्थनायाः कृते तेषां तच्छ्रोत्रे सुगमे सदा।
क्रोधास्यञ्च परेशस्य कदाचारिषु वर्त्तते।

१३ अपरं यदि यूयम् उत्तमस्यानुगामिनो भवथ तर्हि को युष्मान्
१४ हिंसिष्यते? यदि च धर्म्मार्थं क्लिश्यध्वं तर्हि धन्या भविष्यथ।

तेषाम् आशङ्कया यूयं न बिभीत न विङ्क्त वा।
१५ मनोभिः किन्तु मन्यध्वं पवित्रं प्रभुमीश्वरं।

अपरञ्च युष्माकम् आन्तरिकप्रत्याशायास्तत्त्वं यः कश्चित् पृच्छति

तस्मै शान्तिभीतिभ्याम् उत्तरं दातुं सदा सुसज्जा भवत।
ये च ख्रीष्टधर्म्मे युष्माकं सदाचारं दूषयन्ति ते दुष्कर्म्मकारि- १६
णामिव युष्माकम् अपवादेन यत् लज्जिता भवेयुस्तदर्थं युष्मा-
कम् उत्तमः संवेदो भवतु। ईश्वरस्याभिमताद् यदि युष्माभिः १७
क्लेशः सोढव्यस्तर्हि सदाचारिभिः क्लेशसहनं वरं न च कदा-
चारिभिः। यस्माद् ईश्वरस्य सन्निधिम् अस्मान् आनेतुम् १८
अधार्म्मिकाणां विनिमयेन धार्म्मिकः ख्रीष्टो ऽप्येककृत्वः पापानां
दण्डं भुक्तवान्, स च शरीरसम्बन्धे मारितः किन्त्वात्मनः
सम्बन्धे पुन र्जीवितो ऽभवत्। तत्सम्बन्धे च स यात्रां विधाय १९
कारावद्धानाम् आत्मनां समीपे वाक्यं घोषितवान्। पुरा २०
नोहस्य समये यावत् पोतो निरमीयत तावद् ईश्वरस्य दीर्घ-
सहिष्णुता यदा व्यलम्बत तदा तेऽनाज्ञाग्राहिणोऽभवन्। तेन
पोतेनाल्पेऽर्थाद् अष्टावेव प्राणिनस्तोयम् उत्तीर्णाः। तन्निद- २१
र्शनञ्चावगाहनं (अर्थतः शारीरिकमलिनताया यस्त्यागः स
नहि किन्त्वीश्वरायोत्तमसंवेदस्य या प्रतिज्ञा सैव) यीशुख्रीष्टस्य
पुनरुत्थानेनेदानीम् अस्मान् उत्तारयति, यतः स स्वर्गं गत्वे- २२
श्वरस्य दक्षिणे विद्यते स्वर्गीयदूताः शासका बलानि च तस्य
वशीभूता अभवन्।

---

## ४ चतुर्थोऽध्यायः।

१ ख्रीष्ट इव दुःखं भोक्तुं सज्जीभवतेति विनयः ७ धर्म्मम् आचरितुं विनयः १२ धर्म्मार्थं दुःखभोगिनां सान्त्वनायाः कथनञ्च।

अस्माकं विनिमयेन ख्रीष्टः शरीरसम्बन्धे दण्डं भुक्तवान् १
अतो हेतोः शरीरसम्बन्धे यो दण्डं भुक्तवान् स पापात् मुक्त
इतिभावेन यूयमपि सुसज्जीभूय देहवासस्यावशिष्टं समयं पुन- २

र्मानवानाम् इच्छासाधनार्थं नहि किन्त्वीश्वरस्येच्छासाधनार्थं
३ यापयत। आयुषो यः समयो व्यतीतस्तस्मिन् युष्माभि र्यद् देव-
पूजकानाम् इच्छासाधनं कामकुत्सिताभिलाषमद्यपानरङ्गर-
४ समत्तताघृणार्हदेवपूजाचरणञ्चाकारि तेन बाहुल्यं। यूयं तैः
सह तस्मिन् सर्व्वनाशपङ्के मज्जितुं न धावथ, इत्यनेनाश्चर्य्यं
५ विज्ञाय ते युष्मान् निन्दन्ति। किन्तु यो जीवतां मृतानाञ्च
६ विचारं कर्त्तुम् उद्यतोऽस्ति तस्मै तैरुत्तरं दायिष्यते। यतो
हेतो र्ये मृतास्तेषां यत् मानवोद्देश्यः शारीरिकविचारः किन्त्वी-
श्वरोद्देश्यम् आत्मिकजीवनं भवेत् तदर्थं तेषामपि सन्निधौ सुस-
माचारः प्रकाशितोऽभवत्।

७ सर्व्वेषाम् अन्तिमकाल उपस्थितस्तस्माद् यूयं सुबुद्धयः प्रा-
८ र्थनार्थं जाग्रतश्च भवत। विशेषतः परस्परं गाढं प्रेम कुरुत, यतः,

पापानामपि बाहुल्यं प्रेम्नैवाच्छादयिष्यते।

९ कातरोक्तिं विना परस्परम् आतिथ्यं कुरुत। येन यो वरो लब्ध-
१० स्तेनैव स परम् उपकरोतु, इत्थं यूयम् ईश्वरस्य बहुविधप्रसा-
११ दस्योत्तमा भाण्डागाराधिपा भवत। यो वाक्यं कथयति स
ईश्वरस्य वाक्यमिव कथयतु यश्च परम् उपकरोति स ईश्वरद-
त्तसामर्थ्यादिवोपकरोतु। सर्व्वविषये यीशुख्रीष्टेनेश्वरस्य गौरवं
प्रकाश्यतां तस्यैव गौरवं पराक्रमश्च सर्व्वदा भूयात्। आमेन्।

१२ हे प्रियतमाः, युष्माकं परीक्षार्थं यस्तापो युष्मासु वर्त्तते तम्
१३ असम्भवघटितं मत्वा नाश्चर्य्यं जानीत, किन्तु ख्रीष्टेन क्लेशानां
सहभागित्वाद् आनन्दत तेन तस्य प्रतापप्रकाशेऽप्यानन्देन
१४ प्रफुल्ला भविष्यथ। यदि ख्रीष्टस्य नामहेतुना युष्माकं निन्दा
भवति तर्हि यूयं धन्या यतो गौरवदायक ईश्वरस्यात्मा युष्मा-

खधितिष्ठति तेषां मध्ये स निन्द्यते किन्तु युष्मन्मध्ये प्रशंस्यते। किन्तु युष्माकं कोऽपि हन्ता वा चौरो वा दुष्कर्म्मकृद् वा १५ पराधिकारचर्च्चक इव दण्डं न भुङ्क्तां। यदि च ख्रीष्टीयान १६ इव दण्डं भुङ्क्ते तर्हि स न लज्जमानस्तत्कारणाद् ईश्वरं प्रशंसतु। यतो विचारस्यारम्भसमय ईश्वरस्य मन्दिरे युज्यते १७ यदि चास्मत्स्वारभते तर्हीश्वरीयसुसंवादाग्राहिणां शेषदशा का भविष्यति?

धार्म्मिकेनापि चेत् त्राणम् अतिकृच्छ्रेण गम्यते। १८
तर्ह्यधार्म्मिकपापिभ्याम् आश्रयः कुत्र लप्स्यते।

अत ईश्वरेच्छातो ये दुःखं भुञ्जते ते सदाचारेण स्वात्मानो १९ विश्वास्यस्रष्टुरीश्वरस्य कराभ्यां निदधतां।

---

## ५ पञ्चमोऽध्यायः।

१ प्राचीनलोकानां कर्त्तव्यं कर्म्म ५ यूनामन्येषाञ्च कर्त्तव्यं कर्म्म १० मङ्गलप्रार्थना १२ समाप्तिकथा नमस्कारप्रेषणञ्च।

ख्रीष्टस्य क्लेशानां साक्षी प्रकाशिष्यमाणस्य प्रतापस्यांशी १ प्राचीनश्चाहं युष्माकं प्राचीनान् विनीयेदं वदामि। युष्माकं २ मध्यवर्त्ती य ईश्वरस्य मेषवृन्दो यूयं तं पालयत तस्य वीक्षणं कुरुत च, आवश्यकत्वेन नहि किन्तु स्वेच्छातो न वा कुलोभेन किन्त्विच्छुकमनसा। अपरम् अंशानाम् अधिकारिण इव न ३ प्रभवत किन्तु वृन्दस्य दृष्टान्तस्वरूपा भवत। तेन प्रधानपालक ४ उपस्थिते यूयम् अम्लानं गौरवकिरीटं लप्स्यध्वे।

हे युवानः, यूयमपि प्राचीनलोकानां वश्या भवत सर्व्वे ५ च सर्व्वेषां वशीभूय नम्रताभरणेन भूषिता भवत, यतः,

आत्माभिमानिलोकानां विपक्षो भवतीश्वरः।
किन्तु तेनैव नम्रेभ्यः प्रसादाद् दीयते वरः।

६ अतो यूयम् ईश्वरस्य बलवत्करस्याधो नम्रीभूय तिष्ठत तेन स
७ उचितसमये युष्मान् उच्चीकरिष्यति। यूयं सर्व्वचिन्तां तस्मिन्
८ निक्षिपत यतः स युष्मान् प्रति चिन्तयति। यूयं प्रबुद्धा जाग्रतश्च
तिष्ठत यतो युष्माकं प्रतिवादी यः शयतानः स गर्ज्जनकारी
९ सिंह इव पर्य्यटन् कं ग्रसिष्यामीति मृगयते, अतो विश्वासे
सुस्थिरास्तिष्ठन्तस्तेन सार्द्धं युध्यत, युष्माकं जगन्निवासिभ्रातृ-
ष्वपि तादृशाः क्लेशा वर्त्तन्त इति जानीत।

१० क्षणिकदुःखभोगात् परम् अस्मभ्यं ख्रीष्टेन यीशुना स्वकीया-
नन्तगौरवदानार्थं योऽस्मान् आहूतवान् स सर्व्वानुग्राहीश्वरः
स्वयं युष्मान् सिद्धान् स्थिरान् सबलान् निश्चलांश्च करोतु।
११ तस्य गौरवं पराक्रमश्चानन्तकालं यावद् भूयात्। आमेन्।

१२ यः सिल्वानो (मन्ये) युष्माकं विश्वास्यो भ्राता भवति तद्द्वा-
राहं संक्षेपेण लिखित्वा युष्मान् विनीतवान् यूयञ्च यस्मिन्
अधितिष्ठथ स एवेश्वरस्य सत्यो ऽनुग्रह इति प्रमाणं दत्तवान्।
१३ युष्माभिः सहाभिरुचिता या समिति र्बाबिलि विद्यते सा मम
१४ पुत्रो मार्कश्च युष्मान् नमस्कारं वेदयति। यूयं प्रेमचुम्बनेन
परस्परं नमस्कुरुत। यीशुख्रीष्टाश्रितानां युष्माकं सर्व्वेषां शान्ति
र्भूयात्। आमेन्।

---

# पितरस्य द्वितीयं सर्व्वसाधारणपत्रं।

## १ प्रथमोऽध्यायः।

१ मङ्गलाचरणम् ३ अनुग्रहार्थं कृतज्ञत्वं, नानाधर्म्मकर्म्म कर्त्तुं पितरस्य विनयः १२ निजमरणस्य कथनं ख्रीष्टस्य सत्यत्रातृत्वकथनञ्च।

ये जना अस्माभिः सार्द्धम् अस्मदीश्वरे त्रातरि यीशुख्रीष्टे १
च पुण्यसम्बलितविश्वासधनस्य समानांशित्वं प्राप्तास्तान् प्रति
यीशुख्रीष्टस्य दासः प्रेरितश्च शिमोन् पितरः पत्रं लिखति।
ईश्वरस्यास्माकं प्रभो र्यीशोश्च तत्त्वज्ञानेन युष्मास्वनुग्रहशान्त्यो २
र्बाहुल्यं वर्त्ततां।

जीवनार्थम् ईश्वरभक्त्यर्थञ्च यद्यद् आवश्यकं तत् सर्व्वं गौरव- ३
सद्गुणाभ्याम् अस्मदाह्वानकारिणस्तत्त्वज्ञानद्वारा तस्येश्वरीय-
शक्तिरस्मभ्यं दत्तवती। तत्सर्व्वेण चास्मभ्यं तादृशा बहुमूल्या ४
महाप्रतिज्ञा दत्ता याभि र्यूयं संसारव्याप्तात् कुत्सिताभिलाष-
मूलात् सर्व्वनाशाद् रक्षां प्राप्येश्वरीयस्वभावस्यांशिनो भवितुं
शक्नुथ। ततो हेतो र्यूयं सम्पूर्णं यत्नं विधाय विश्वासे सौजन्यं ५
सौजन्ये ज्ञानं ज्ञान आयतेन्द्रियताम् आयतेन्द्रियतायां धैर्य्यं धैर्य्य ६
ईश्वरभक्तिम् ईश्वरभक्तौ भ्रातृस्नेहं भ्रातृस्नेहे च प्रेम युङ्क्त। ७
एतानि यदि युष्मासु विद्यन्ते वर्द्धन्ते च तर्ह्यस्मत्प्रभो र्यीशुख्री- ८
ष्टस्य तत्त्वज्ञाने युष्मान् अलसान् निष्फलांश्च न स्थापयिष्यन्ति।
किन्त्वेतानि यस्य न विद्यन्ते सोऽन्धो मुद्रितलोचनः स्वकीय- ९
पूर्व्वपापानां मार्ज्जनस्य विस्मृतिं गतश्च। तस्माद् हे भ्रातरः, १०
यूयं स्वकीयाह्वानवरणयो र्दृढकरणे बहु यतध्वं, तत् कृत्वा
कदाच न स्खलिष्यथ। यतोऽनेन प्रकारेणास्माकं प्रभोस्त्रातु ११
र्यीशुख्रीष्टस्यानन्तराज्यस्य प्रवेशेन यूयं सुकलेन योजयिष्यध्वे।

१२ यद्यपि यूयम् एतत् सर्व्वं जानीथ वर्त्तमाने सत्यमते सुस्थिरा भवथ च तथापि युष्मान् सर्व्वदा तत् स्मारयितुम् अहम्
१३ अयत्नवान् न भविष्यामि। यावद् एतस्मिन् दूष्ये तिष्ठामि
१४ तावद् युष्मान् स्मारयन् प्रबोधयितुं विहितं मन्ये। यतो ऽस्माकं प्रभु र्यीशुख्रीष्टो मां यत् ज्ञापितवान् तदनुसाराद् दूष्यमेतत्
१५ मया शीघ्रं त्यक्तव्यम् इति जानामि। मम परलोकगमनात् परमपि यूयं यदेतानि स्मर्त्तुं शक्ष्यथ तस्मिन् सर्व्वथा यतिष्ये।
१६ यतो ऽस्माकं प्रभो र्यीशुख्रीष्टस्य पराक्रमं पुनरागमनञ्च युष्मान् ज्ञापयन्तो वयं कल्पितान्युपाख्यानान्यन्वगच्छामेति नहि किन्तु
१७ तस्य महिम्नः प्रत्यक्षसाक्षिणो भूत्वा भाषितवन्तः। यतः स पितुरीश्वराद् गौरवं प्रशंसाञ्च प्राप्तवान् विशेषतो महिमयुक्त-तेजोमध्याद् एतादृशी वाणी तं प्रति निर्गतवती, यथा, एष मम
१८ प्रियपुत्र एतस्मिन् मम परमसन्तोषः। स्वर्गात् निर्गतेयं वाणी
१९ पवित्रपर्व्वते तेन सार्द्धं विद्यमानैरस्माभिरश्रावि। अपरम् अस्मत्समीपे दृढतरं भविष्यद्वाक्यं विद्यते यूयञ्च यदि दिना-रम्भं युष्मन्मनःसु प्रभातीयनक्षत्रस्योदयञ्च यावत् तिमिरमये स्थाने ज्वलन्तं प्रदीपमिव तद् वाक्यं सम्मन्यध्वे तर्हि भद्रं करि-
२० ष्यथ। शास्त्रीयं किमपि भविष्यद्वाक्यं मनुष्यस्य स्वकीयभावबो-
२१ धकं नहि, एतद् युष्माभिः सम्यक् ज्ञायतां। यतो भविष्यद्वाक्यं पुरा मानुषाणाम् इच्छातो नोत्पन्नं किन्त्वीश्वरस्य पवित्रलोकाः पवित्रेणात्मना प्रवर्त्तिताः सन्तो वाक्यम् अभाषन्त।

---

## २ द्वितीयोऽध्यायः।

१ मिथ्याभविष्यद्वक्तॄन् उद्दिश्य कथनं ४ तेषां दोषो दण्डो धार्म्मिकाणां रक्षायाः कथनञ्च।

अपरं पूर्व्वकाले यथा लोकानां मध्ये मिथ्याभविष्यद्वादिन १ उपातिष्ठन् तथा युष्माकं मध्येऽपि मिथ्याशिक्षका उपस्थास्यन्ति, ते स्वेषां क्रेतारं प्रभुम् अनङ्गीकृत्य सत्वरं विनाशं स्वेषु वर्त्त- यन्ति विनाशकवैधर्म्म्यं गुप्तं युष्मन्मध्यम् आनेष्यन्ति। ततो ऽनेकेषु २ तेषां विनाशकमार्गं गतेषु तेभ्यः सत्यमार्गस्य निन्दा सम्भविष्यति। अपरञ्च ते लोभात् कापट्यवाक्यै र्युष्मत्तो लाभं करिष्यन्ते किन्तु ३ तेषां पुरातनदण्डाज्ञा न विलम्बते तेषां विनाशश्च न निद्राति।

ईश्वरः कृतपापान् दूतान् न क्षमित्वा तिमिरशृङ्खलैः ४ पाताले रुद्ध्वा विचारार्थं समर्पितवान्। पुरातनं संसारमपि न ५ क्षमित्वा तं दुष्टानां संसारं जलाप्लावनेन मज्जयित्वा सप्तजनैः सहितं धर्म्मप्रचारकं नोहं रक्षितवान्। सिदोमम् अमोरा ६ चेतिनामके नगरे भविष्यतां दुष्टानां दृष्टान्तं विधाय भस्मी- कृत्य विनाशेन दण्डितवान्; किन्तु तैः कुत्सितव्यभिचारिभि ७ र्दुष्टात्मभिः क्लिष्टं धार्म्मिकं लोटं रक्षितवान्। स धार्म्मिको ८ जनस्तेषां मध्ये निवसन् स्वीयदृष्टिश्रोत्रगोचरेभ्यस्तेषाम् अध- र्म्माचारेभ्यः स्वकीयधार्म्मिकमनसि दिने दिने तप्तवान्। प्रभु ९ र्भक्तान् परीक्षाद् उद्धर्त्तुं विचारदिनञ्च यावद् दण्ड्यमानान् अधार्म्मिकान् रोद्धुं पारयति, विशेषतो ये ऽमेध्याभिलाषात् १० शारीरिकसुखम् अनुगच्छन्ति कर्त्तृत्वपदानि चावजानन्ति ता- नेव (रोद्धुं पारयति।) ते दुःसाहसिनः प्रगल्भाश्च। अपरं ११ बलगौरवाभ्यां श्रेष्ठा दिव्यदूताः प्रभोः सन्निधौ येषां वैपरीत्येन निन्दासूचकं विचारं न कुर्व्वन्ति तेषाम् उच्चपदस्थानां निन्द- नाद् इमे न भीताः। किन्तु ये बुद्धिहीनाः प्रकृता जन्तवो १२ धर्त्तव्यतायै विनाश्यतायै च जायन्ते तत्सदृशा इमे यन्न बुध्यन्ते

तत् निन्दन्तः स्वकीयविनाश्यतया विनंच्यन्ति स्वीयाधर्म्मस्य
१३ फलं प्राप्स्यन्ति च। ते दिवा प्रकृष्टभोजनं सुखं मन्यन्ते निज-
छलैः सुखभोगिनः सन्तो युष्माभिः सार्द्धं भोजनं कुर्व्वन्तः
१४ कलङ्किनो दोषिणश्च भवन्ति। तेषां लोचनानि परदाराका-
ङ्क्षीणि पापे चाश्रान्तानि ते चञ्चलानि मनांसि मोहयन्ति लोभे
१५ तत्परमनसः सन्ति च। ते शापग्रस्ता वंशाः सरलमार्गं विहाय
बियोरपुत्रस्य बिलियमस्य विपथेन व्रजन्तो भ्रान्ता अभवन्। स
१६ बिलियमो ऽप्यधर्म्मात् प्राप्ये पारितोषिकेऽप्रीयत, किन्तु निजा-
पराधाद् भर्त्सनाम् अलभत यतो वचनशक्तिहीनं वाहनं मानु-
१७ षिकगिरम् उच्चार्य्य भविष्यद्वादिन उन्मत्तताम् अबाधत। इमे
निर्जलानि प्रस्रवणानि प्रचण्डवायुना चालिता मेघाश्च तेषां
१८ कृते नित्यस्थायी घोरतरान्धकारः सञ्चितो ऽस्ति। ये च जना
भ्रान्त्याचारिगणात् कृच्छ्रेणोद्धृतास्तान् इमे ऽपरिमितदर्पकथा
भाषमाणाः शारीरिकसुखाभिलाषैः कामक्रीडाभिश्च मोह-
१९ यन्ति। तेभ्यः स्वाधीनतां प्रतिज्ञाय स्वयं विनाश्यताया दासा
भवन्ति, यतः,

यो येनैव पराजिग्ये स जातस्तस्य किङ्करः।

२० त्रातुः प्रभो र्यीशुख्रीष्टस्य ज्ञानेन संसारस्य मलेभ्य उद्धृता ये
पुनस्तेषु निमज्ज्य पराजीयन्ते तेषां प्रथमदशातः शेषदशा
२१ कुत्सिता भवति। तेषां पक्षे धर्म्मपथस्य ज्ञानाप्राप्ति र्वरं न च
२२ निर्द्दिष्टात् पवित्रविधिमार्गात् ज्ञानप्राप्तानां परावर्त्तनं। किन्तु
येयं सत्या दृष्टान्तकथा सैव तेषु फलितवती, यथा,

कुक्कुरः स्वीयवान्ताय व्यावर्त्तते पुनः पुनः।
लुठितुं कर्द्दमे तद्वत् क्षालितश्चैव शूकरः॥

# ३ तृतीयोऽध्यायः।

१ ख्रीष्टस्यागमनस्य जगतो दग्धत्वस्य च कथनं १४ धर्म्मम् आचरितुं पितरस्य विनयश्च।

हे प्रियतमाः, यूयं यथा पवित्रभविष्यद्वक्तृभिः पूर्व्वोक्तानि १ वाक्यानि त्राता प्रभुना प्रेरितानाम् अस्माकम् आदेशञ्च स्मरथ तथा युष्मान् स्मारयित्वा युष्माकं सरलभावं प्रबोधयितुम् अहं २ द्वितीयम् इदं पत्रं लिखामि। प्रथमं युष्माभिरिदं ज्ञायतां ३ यत् शेषे काले स्वेच्छाचारिणो निन्दका उपस्थाय वदिष्यन्ति ४ प्रभोरागमनस्य प्रतिज्ञा कुत्र? यतः पितृलोकानां महानिद्रागमनात् परं सर्व्वाणि सृष्टेरारम्भकाले यथा तथैवावतिष्ठन्ते। पूर्व्वम् ईश्वरस्य वाक्येनाकाशमण्डलं जलाद् उत्पन्ना ५ जले सन्तिष्ठमाना च पृथिव्यविद्यतैतद् अनिच्छुकतातस्ते न जानन्ति, ततस्तात्कालिकसंसारो जलेनाप्लावितो विनाशं गतः। ६ किन्त्वधुना वर्त्तमाने आकाशभूमण्डले तेनैव वाक्येन वह्न्यर्थं गुप्ते ७ विचारदिनं दुष्टमानवानां विनाशञ्च यावद् रक्ष्येते। हे प्रिय- ८ तमाः, यूयम् एतदेकं वाक्यम् अनवगता मा भवत यत् प्रभोः साचाद् दिनमेकं वर्षसहस्रवद् वर्षसहस्रञ्च दिनैकवत्। केचिद् ९ यथा विलम्बं मन्यन्ते तथा प्रभुः स्वप्रतिज्ञायां विलम्बते तन्नहि किन्तु कोऽपि यन्न विनश्येत् सर्व्वे एव मनःपरावर्त्तनं गच्छेयुरित्यभिलषन् सोऽस्मान् प्रति दीर्घसहिष्णुतां विदधाति। किन्तु १० क्षपायां चैार इव प्रभो र्दिनम् आगमिष्यति तस्मिन् महाशब्देन गगनमण्डलं लोप्स्यते मूलवस्तूनि च तापेन गलिष्यन्ते पृथिवी तन्मध्यस्थितानि कर्म्माणि च धक्ष्यन्ते। अतः सर्व्वैरेतै ११ र्विकारे गन्तव्ये सति यस्मिन् आकाशमण्डलं दाहेन विकारिष्यते मूलवस्तूनि च तापेन गलिष्यन्ते तस्येश्वरदिनस्यागमनं १२

प्रतीक्षमाणैराकाङ्क्षमाणैश्च युष्माभि र्धर्म्माचारेश्वरभक्तिभ्यां
१३ कीदृशै र्लोकै र्भवितव्यं? तथापि वयं तस्य प्रतिज्ञानुसारेण
धर्म्मस्य वासस्थानं नूतनम् आकाशमण्डलं नूतनं भूमण्डलञ्च
प्रतीक्षामहे।

१४ अतएव हे प्रियतमाः, तानि प्रतीक्षमाणा यूयं निष्कलङ्का
अनिन्दिताश्च भूत्वा यत् शान्त्याश्रितास्तिष्ठथैतस्मिन् यतध्वं।
१५ अस्माकं प्रभो र्दीर्घसहिष्णुताञ्च परित्राणजनिकां मन्यध्वं।
अस्माकं प्रियभ्रात्रे पौलाय यत् ज्ञानम् अदायि तदनुसारेण
१६ सोऽपि पत्रे युष्मान् प्रति तदेवालिखत्। स्वकीयसर्व्वपत्रेषु
चैतान्यधि प्रस्तुत्य तदेव गदति। तेषु पत्रेषु कतिपयानि दुरू-
ह्याणि वाक्यानि विद्यन्ते ये च लोका अज्ञानाश्चञ्चलाश्च ते
निजविनाशार्थम् अन्यशास्त्रीयवचनानीव तान्यपि विकार-
१७ यन्ति। तस्माद् हे प्रियतमाः, यूयं पूर्व्वं बुद्ध्वा सावधानास्तिष्ठत,
अधार्म्मिकाणां भ्रान्तिस्रोतसापहृताः स्वकीयसुस्थिरत्वात् मा
१८ भ्रश्यत। किन्त्वस्माकं प्रभोस्त्रातु र्यीशुख्रीष्टस्यानुग्रहे ज्ञाने च
वर्द्धध्वं। तस्य गौरवम् इदानीं सदाकालञ्च भूयात्। आमेन्।

---

# योहनः प्रथमं सर्व्वसाधारणपत्रं।

---

## १ प्रथमोऽध्यायः।

१ ख्रीष्टस्य कथनं ५ तेन सार्द्धम् अस्माकं मैत्री तेनास्माकं पापमोचनञ्च।

१ आदितो य आसीद् यस्य वाग् अस्माभिरश्रावि यञ्च वयं
स्वनेत्रै र्दृष्टवन्तो यञ्च वीक्षितवन्तः स्वकरैः स्पृष्टवन्तश्च तं जीव-

नवादं वयं ज्ञापयामः। स जीवनस्वरूपः प्रकाशत वयञ्च २ तं दृष्टवन्तस्तमधि साक्ष्यं दद्मश्च, यश्च पितुः सन्निधाववर्त्तताऽस्माकं समीपे प्रकाशत च तम् अनन्तजीवनस्वरूपं वयं युष्मान् ज्ञापयामः। अस्माभि र्यद् दृष्टं श्रुतञ्च तदेव युष्मान् ३ ज्ञाप्यते तेनास्माभिः सहांशित्वं युष्माकं भविष्यति। अस्माकञ्च सहांशित्वं पित्रा तत्पुत्रेण यीशुख्रीष्टेन च सार्द्धं भवति। अपरञ्च युष्माकम् आनन्दो यत् सम्पूर्णो भवेद् तदर्थं वयम् ४ एतानि लिखामः।

वयं यां वार्त्तां तस्मात् श्रुत्वा युष्मान् ज्ञापयामः सेयम्। ५ ईश्वरो ज्योतिस्तस्मिन् अन्धकारस्य लेशोऽपि नास्ति। वयं तेन ६ सहांशिन इति गदित्वा यद्यन्धकारे चरामस्तर्हि सत्याचारिणो न सन्तोऽनृतवादिनो भवामः। किन्तु स यथा ज्योतिषि वर्त्तते ७ तथा वयमपि यदि ज्योतिषि चरामस्तर्हि परस्परं सहभागिनो भवामस्तस्य पुत्रस्य यीशुख्रीष्टस्य रुधिरञ्चास्मान् सर्व्वस्मात् पापात् शुद्धयति। वयं निष्पापा इति यदि वदामस्तर्हि ८ स्वयमेव स्वान् वञ्चयामः सत्यमतञ्चास्माकम् अन्तरे न विद्यते। यदि स्वपापानि स्वीकुर्म्महे तर्हि स विश्वास्यो यायार्थिकश्चास्ति ९ तस्माद् अस्माकं पापानि क्षमिष्यते सर्व्वस्माद् अधर्म्माच्चास्मान् शुद्धयिष्यति। वयम् अकृतपापा इति यदि वदामस्तर्हि तम् १० अनृतवादिनं कुर्म्मस्तस्य वाक्यञ्चास्माकम् अन्तरे न विद्यते।

---

## २ द्वितीयोऽध्यायः।

१ अस्माकं पापानां ख्रीष्टस्य प्रायश्चित्तस्वरूपत्वं ३ ईश्वरस्याज्ञापालनात् तदीयतत्त्वज्ञानस्य चिह्नत्वं ७ परस्परप्रेमकथनं १२ संसारे प्रेमनिषेधः १८ ख्रीष्टारितः सावधानत्वं कर्त्तुं ख्रीष्टे विश्वसितुं निवेदनञ्च।

१　हे प्रियबालकाः, युष्माभि र्यत् पापं न क्रियेत तदर्थं युष्मान् प्रत्येतानि मया लिख्यन्ते। यदि तु केनापि पापं क्रियते तर्हि पितुः समीपे ऽस्माकं एकः सहायो ऽर्थतो धार्म्मिको यीशुः २ ख्रीष्टो विद्यते। स चास्माकं पापानां प्रायश्चित्तं केवलमस्माकं नहि किन्तु लिखिलसंसारस्य पापानां प्रायश्चित्तं।

३　वयं तं जानीम इति तदीयाज्ञापालनेनावगच्छामः। अहं ४ तं जानामीति वदित्वा यस्तस्याज्ञा न पालयति सो ऽनृतवादी ५ सत्यमतञ्च तस्यान्तरे न विद्यते। यः कश्चित् तस्य वाक्यं पालयति तस्मिन् ईश्वरस्य प्रेम सत्यरूपेण सिध्यति वयं तस्मिन् ६ वर्त्तामहे तद् एतेनावगच्छामः। अहं तस्मिन् तिष्ठामीति यो गदति तस्येदम् उचितं यत् ख्रीष्टो यादृग् आचरितवान् सो ऽपि तादृग् आचरेत्।

७　हे प्रियतमाः, युष्मान् प्रत्यहं नूतनामाज्ञां लिखामीति नहि ८ किन्त्वादितो युष्माभि र्लब्धां पुरातनामाज्ञां लिखामि। आदितो युष्माभि र्यद् वाक्यं श्रुतं सा पुरातनाज्ञा। पुनरपि युष्मान् प्रति नूतनाज्ञा मया लिख्यत एतदपि तस्मिन् युष्मासु च सत्यं, ९ यतो ऽन्धकारो व्यत्येति सत्या ज्योतिश्चेदानीं प्रकाशते; अहं ज्योतिषि वर्त्त इति गदित्वा यः स्वभ्रातरं द्वेष्टि सो ऽद्यापि १० तमिस्रे वर्त्तते। स्वभ्रातरि यः प्रीयते स एव ज्योतिषि वर्त्तते ११ विघ्नजनकं किमपि तस्मिन् न विद्यते। किन्तु स्वभ्रातरं यो द्वेष्टि स तिमिरे वर्त्तते तिमिरे चरति च तिमिरेण च तस्य नयने ऽन्धीक्रियेते तस्मात् क्क यामीति स ज्ञातुं न शक्नोति।

१२　हे शिशवः, यूयं तस्य नाम्ना पापक्षमां प्राप्तवन्तस्तस्माद् १३ अहं युष्मान् प्रति लिखामि। हे पितरः, य आदितो वर्त्त-

मानस्तं यूयं जानीथ तस्माद् युष्मान् प्रति लिखामि। हे युवानः, यूयं पापात्मानं जितवन्तस्तस्माद् युष्मान् प्रति लिखामि। हे बालकाः, यूयं पितरं जानीथ तस्मादहं युष्मान् प्रति लिखितवान्। हे पितरः, आदितो यो वर्त्तमानस्तं यूयं जानीथ १४ तस्माद् युष्मान् प्रति लिखितवान्। हे युवानः, यूयं बलवन्त आध्वे,ईश्वरस्य वाक्यञ्च युष्मदन्तरे वर्त्तते पापात्मा च युष्माभिः पराजिग्ये तस्माद् युष्मान् प्रति लिखितवान्। यूयं संसारे १५ संसारस्थविषयेषु च मा प्रीयध्वं यः संसारे प्रीयते तस्यान्तरे पितुः प्रेम न तिष्ठति। यतः संसारे यद्यत् स्थितम् अर्थतः १६ शारीरिकभावस्याभिलाषो दर्शनेन्द्रियस्याभिलाषो जीवनस्य गर्व्वश्च सर्व्वमेतत् पितृतो न जायते किन्तु संसारादेव। संसा- १७ रस्तदीयाभिलाषश्च व्यत्येति किन्तु य ईश्वरस्येष्टं करोति सो ऽनन्तकालं यावत् तिष्ठति।

हे बालकाः, शेषकालोऽयं, अपरं ख्रीष्टारिणोपस्थातव्य- १८ मिति युष्माभि र्यथा श्रुतं तथा बहवः ख्रीष्टारय उपस्थिता-स्तस्मादयं शेषकालोऽस्तीति वयं जानीमः। ते ऽस्मन्मध्यान् नि- १९ र्गतवन्तः किन्त्वस्मदीया नासन् यद्यस्मदीया अभविष्यन् तर्ह्य-स्मत्सङ्गे ऽस्थास्यन्, किन्तु सर्व्वे ऽस्मदीया न सन्त्येतस्य प्रकाश आवश्यक आसीत्। यः पवित्रस्तस्माद् यूयम् अभिषेकं प्राप्त- २० वन्तस्तेन सर्व्वाणि जानीथ। यूयं सत्यमतं न जानीथ तत्कारणाद् २१ अहं युष्मान् प्रति लिखितवान् तन्नहि किन्तु यूयं तत् जानीथ सत्यमताच्च किमप्यनृतवाक्यं नोत्पद्यते तत्कारणादेव। यीशुर- २२ भिषिक्तस्त्रातेति यो नाङ्गीकरोति तं विना को ऽपरोऽनृतवादी भवेत्? स एव स ख्रीष्टारि र्यः पितरं पुत्त्रञ्च नाङ्गीकरोति।

२३ यः कश्चित् पुत्रं नाङ्गीकरोति स पितरमपि न धारयति
२४ यश्च पुत्रमङ्गीकरोति स पितरमपि धारयति। आदितो युष्माभि र्यत् श्रुतं तद् युष्मासु तिष्ठतु, आदितः श्रुतं वाक्यं यदि युष्मासु तिष्ठति, तर्हि यूयमपि पुत्रे पितरि च स्थास्यथ।
२५ स च प्रतिज्ञयास्मभ्यं यत् प्रतिज्ञातवान् तद् अनन्तजीवनं।
२६ ये जना युष्मान् भ्रामयन्ति तानध्यहम् इदं लिखितवान्।
२७ अपरं यूयं तस्माद् यम् अभिषेकं प्राप्तवन्तः स युष्मासु तिष्ठति ततः कोऽपि यद् युष्मान् शिक्षयेत् तद् अनावश्यकं, स चाभिषेको युष्मान् सर्व्वाणि शिक्षयति सत्यश्च भवति न चातथ्यः,
२८ अतः स युष्मान् यद्वद् अशिक्षयत् तद्वत् तत्र स्थास्यथ। अतएव हे प्रियबालका यूयं तत्र तिष्ठत, तथा सति स यदा प्रकाशिष्यते तदा वयं प्रतिभान्विता भविष्यामः, तस्यागमनसमये च
२९ तस्य साक्षान्न त्रपिष्यामहे। स धार्म्मिको ऽस्तीति यदि यूयं जानीथ तर्हि यः कश्चिद् धर्म्माचारं करोति स तस्मात् जात इत्यपि जानीत।

---

## ३ तृतीयोऽध्यायः।

अस्मान् प्रतीश्वरस्यानुग्रहः, तत्कारणात् पापत्यागपरस्परप्रेमधर्म्मकर्म्मणाम् अवश्यकर्त्तव्यत्वञ्च।

१ पश्यत वयम् ईश्वरस्य सन्ताना इति नाम्नाख्यामहे, एतेन पितास्मभ्यं कीदृक् महाप्रेम प्रदत्तवान्, किन्तु संसारस्तं ना-
२ जानात् तत्कारणादस्मान् अपि न जानाति। हे प्रियतमाः, इदानीं वयम् ईश्वरस्य सन्ताना आस्महे पश्चात् किं भविष्याम-स्तद् अद्याप्यप्रकाशितं किन्तु प्रकाशं गते वयं तस्य सदृशा भविष्याम इति जानीमः, यतः स यादृशो ऽस्ति तादृशो ऽस्माभि

र्दर्शिष्यते। तस्मिन् एषा प्रत्याशा यस्य कस्यचिद् भवति स स्वं ३
तथा पवित्रं करोति यथा स पवित्रो ऽस्ति। यः कश्चित् पापम् ४
आचरति स व्यवस्थालङ्घनं करोति यतः पापमेव व्यवस्था-
लङ्घनं। अपरं सो ऽस्माकं पापान्यपहर्त्तुं प्राकाशतैतद् यूयं ५
जानीथ, पापञ्च तस्मिन् न विद्यते। यः कश्चित् तस्मिन् तिष्ठति ६
स पापाचारं न करोति यः कश्चित् पापाचारं करोति स तं न
दृष्टवान् न वावगतवान्। हे प्रियबालकाः, कश्चिद् युष्माकं भ्रमं ७
न जनयेत्, यः कश्चिद् धर्म्माचारं करोति स तादृग् धार्म्मिको
भवति यादृक् स धार्म्मिको ऽस्ति। यः पापाचारं करोति स शय- ८
तानात् जातो यतः शयतान आदितः पापाचारी शयतानस्य
कर्म्मणां लोपार्थमेवेश्वरस्य पुत्त्रः प्राकाशत। यः कश्चिद् ईश्व- ९
रात् जातः स पापाचारं न करोति यतस्तस्य वीर्य्यं तस्मिन्
तिष्ठति पापाचारं कर्त्तुञ्च न शक्नोति यतः स ईश्वरात् जातः।
इत्यनेनेश्वरस्य सन्तानाः शयतानस्य च सन्ताना व्यक्ता भवन्ति। १०
यः कश्चिद् धर्म्माचारं न करोति स ईश्वरात् जातो नहि यश्च
स्वभ्रातरि न प्रीयते सो ऽपीश्वरात् जातो नहि। यतस्तस्य य ११
आदेश आदितो युष्माभिः श्रुतः स एष एव यद् अस्माभिः
परस्परं प्रेम कर्त्तव्यं। पापात्मतो जातो यः काबिल् स्वभ्रातरं १२
हतवान् तत्सदृशैरस्माभि र्न भवितव्यं। स कस्मात् कारणात् तं
हतवान्? तस्य कर्म्माणि दुष्टानि तद्भ्रातुश्च कर्म्माणि धर्म्माण्या-
सन् इति कारणात्। हे मम भ्रातरः, संसारो यदि युष्मान् १३
द्वेष्टि तर्हि तद् आश्चर्य्यं न मन्यध्वं। वयं मृत्युम् उत्तीर्य्य १४
जीवनं प्राप्तवन्तस्तद् भ्रातृषु प्रेमकरणात् जानीमः। भ्रातरि
यो न प्रीयते स मृत्यौ तिष्ठति। यः कश्चित् स्वभ्रातरं द्वेष्टि स १५

नरघाती किञ्चानन्तजीवनं नरघातिनः कस्याप्यन्तरे नाव-
१६ तिष्ठते तद् यूयं जानीथ। अस्माकं कृते स स्वप्राणांस्त्यक्तवान्
इत्यनेन वयं प्रेम्नस्तत्त्वम् अवगताः, अपरं भ्रातॄणां कृते ऽस्माभि-
१७ रपि प्राणास्त्यक्तव्याः। सांसारिकजीविकाप्राप्तो यो जनः स्वभ्रा-
तरं दीनं दृष्ट्वा तस्मात् स्वीयदयां रुणद्धि तस्यान्तर ईश्वरस्य
१८ प्रेम कथं तिष्ठेत्? हे मम प्रियबालकाः, वाक्येन जिह्वया
१९ वास्माभिः प्रेम न कर्त्तव्यं किन्तु कार्य्येण सत्यतया चैव। एतेन
वयं यत् सत्यमतसम्बन्धीयास्तत् जानीमस्तस्य साक्षात् स्वान्तः-
२० करणानि सान्त्वयितुं शक्ष्यामश्च। यतो ऽस्मदन्तःकरणं यद्य-
स्मान् दूषयति तर्ह्यस्मदन्तःकरणाद् ईश्वरो महान् सर्व्वज्ञश्च।
२१ हे प्रियतमाः, अस्मदन्तःकरणं यद्यस्मान् न दूषयति तर्हि
२२ वयम् ईश्वरस्य साक्षात् प्रतिभान्विता भवामः। यच्च प्रार्थया-
महे तत् तस्मात् प्राप्नुमः, यतो वयं तस्याज्ञाः पालयामस्तस्य
२३ साक्षात् तुष्टिजनकम् आचारं कुर्म्मश्च। अपरं तस्येयमाज्ञा
यद् वयं तस्य पुत्त्रस्य यीशुख्रीष्टस्य नाम्नि विश्वसिमस्तस्याज्ञा-
२४ नुसारेण च परस्परं प्रेम कुर्म्मः। यश्च तस्याज्ञाः पालयति स
तस्मिन् तिष्ठति तस्मिन् सोऽपि तिष्ठति; स चास्मान् यम्
आत्मानं दत्तवान् तस्मात् सो ऽस्मासु तिष्ठतीति जानीमः।

---

## ४ चतुर्थोऽध्यायः।

१ परीक्षां विना सर्व्वेषाम् उपदेशकानाम् अग्राह्यत्व ७ परस्परं प्रेमकरणस्य फल-
निर्णयश्च।

१ हे प्रियतमाः, यूयं सर्व्वेष्वात्मसु न विश्वसित किन्तु ते
ईश्वरात् जाता न वेत्यात्मनः परीक्षध्वं यतो बहवो मृषाभवि-

व्यदादिनो जगन्मध्यम् आगतवन्तः। ईश्वरीयो य आत्मा स २ युष्माभिरनेन परिचीयतां, यीशुः ख्रीष्टो नरावतारो भूत्वागत एतद् येन केनचिद् आत्मना स्वीक्रियते स ईश्वरीयः। किन्तु ३ यीशुः ख्रीष्टो नरावतारो भूत्वागत एतद् येन केनचिद् आत्मना नाङ्गीक्रियते स ईश्वरीयो नहि किन्तु ख्रीष्टारेरात्मा, तेन चागन्तव्यमिति युष्माभिः श्रुतं, स चेदानीमपि जगति वर्त्तते। हे बालकाः, यूयम् ईश्वरात् जातास्तान् जितवन्तश्च यतः संसा- ४ राधिष्ठानकारिणो ऽपि युष्मदधिष्ठानकारी महान्। ते संसा- ५ रात् जातास्ततो हेतोः संसाराद् भाषन्ते संसारश्च तेषां वा- क्यानि गृह्लाति। वयम् ईश्वरात् जाताः, ईश्वरं यो जानाति ६ सोऽस्मद्वाक्यानि गृह्लाति यश्चेश्वरात् जातो नहि सोऽस्मद्वाक्यानि न गृह्लाति; अनेन वयं सत्यात्मानं भ्रामकात्मानञ्च परिचिनुमः।

हे प्रियतमाः, वयं परस्परं प्रेम करवाम, यतः प्रेम ईश्व- ७ रात् जायते, अपरं यः कश्चित् प्रेम करोति स ईश्वरात् जात ईश्वरं वेत्ति च। यः प्रेम न करोति स ईश्वरं न जानाति ८ यत ईश्वरः प्रेमस्वरूपः। अस्मास्वीश्वरस्य प्रेमैतेन प्राकाशत ९ यत् स्वपुत्रेणास्मभ्यं जीवनदानार्थम् ईश्वरः स्वीयम् अद्वि- तीयं पुत्रं जगन्मध्यं प्रेषितवान्। वयं यद् ईश्वरे प्रीतवन्त १० इत्यत्र नहि किन्तु स यदस्मासु प्रीतवान् अस्मत्पापानां प्रा- यश्चित्तार्थं स्वपुत्रं प्रेषितवांश्चेत्यत्र प्रेम सन्तिष्ठते। हे प्रिय- ११ तमाः, अस्मासु यदीश्वरेणैतादृशं प्रेम कृतं तर्हि परस्परं प्रेम कर्त्तुम् अस्माकमप्युचितं। ईश्वरः कदाच केनापि न दृष्टः १२ यद्यस्माभिः परस्परं प्रेम क्रियते तर्हीश्वरो ऽस्मन्मध्ये तिष्ठति तस्य प्रेम चास्मासु सेत्स्यते। अस्मभ्यं तेन स्वकीयात्मनोऽंशो दत्त १३

इत्यनेन वयं यत् तस्मिन् तिष्ठामः स च यद् अस्मासु तिष्ठतीति
१४ जानीमः। पिता जगत्त्रातारं पुत्त्रं प्रेषितवान् एतद् वयं दृष्ट्वा
१५ प्रमाणयामः। यीशुरीश्वरस्य पुत्त्र एतद् येनाङ्गीक्रियते तस्मिन्
१६ ईश्वरस्तिष्ठति स चेश्वरे तिष्ठति। अस्मास्वीश्वरस्य यत् प्रेम वर्त्तते
तद् वयं ज्ञातवन्तस्तस्मिन् विश्वसितवन्तश्च। ईश्वरः प्रेमस्वरूपः
१७ प्रेम्नि यस्तिष्ठति स ईश्वरे तिष्ठति तस्मिंश्चेश्वरस्तिष्ठति। स यादृ-
शो ऽस्ति वयमप्येतस्मिन् जगति तादृशा भवाम एतस्माद् वि-
चारदिने ऽस्माभि र्या प्रतिभा लभ्यते सास्मत्सम्बन्धीयस्य प्रेम्नः
१८ सिद्धिः। प्रेम्नि भीति र्न वर्त्तते किन्तु सिद्धं प्रेम भीतिं नि-
राकरोति यतो भीतिः सयातनास्ति भीतो मानवः प्रेम्नि सिद्धो
१९ न जातः। अस्मासु स प्रथमं प्रीतवान् इति कारणाद् वयं तस्मिन्
२० प्रीयामहे। ईश्वरे ऽहं प्रीय इत्युक्त्वा यः कश्चित् स्वभ्रातरं द्वेष्टि
सो ऽनृतवादी। स यं दृष्टवान् तस्मिन् स्वभ्रातरि यदि न प्रीयते
तर्हि यम् ईश्वरं न दृष्टवान् कथं तस्मिन् प्रेम कर्त्तुं शक्नुयात्?
२१ अत ईश्वरे यः प्रीयते स स्वीयभ्रातर्य्यपि प्रीयताम् इयम् आज्ञा
तस्माद् अस्माभि र्लब्धा।

---

## ५ पञ्चमोऽध्यायः।

१ भ्रातृभिः सार्द्धं प्रेमकरणम् ईश्वराज्ञायाः पालनम् ईश्वरस्य प्रेम्नस्सिद्धत्वं १४ ईश्वरस्य स्वकीयलोकानां प्रार्थनाश्रवणं सफलकरणञ्च।

१ यीशुरभिषिक्तस्त्रातेति यः कश्चिद् विश्वसिति स ईश्वरात्
जातः; अपरं यः कश्चित् जनयितरि प्रीयते स तस्मात् जाते
२ जने ऽपि प्रीयते। वयम् ईश्वरस्य सन्तानेषु प्रीयामहे तद् अनेन
३ जानीमो यद् ईश्वरे प्रीयामहे तस्याज्ञाः पालयामश्च। यत ईश्वरे
यत् प्रेम तत् तदीयाज्ञापालनेनास्माभिः प्रकाशयितव्यं, तस्या-

ज्ञाश्च कठोरा न भवन्ति। यतो यः कश्चिद् ईश्वरात् जातः ४ स संसारं जयति किञ्चास्माकं यो विश्वासः स एवास्माकं संसारजयिजयः। यीशुरीश्वरस्य पुत्त्र इति यो विश्वसिति तं विना ५ कोऽपरः संसारं जयति? सोऽभिषिक्तस्त्राता यीशुस्तोयरुधिरा- ६ भ्याम् आगतः केवलं तोयेन नहि किन्तु तोयरुधिराभ्याम्, आत्मा च साक्षी भवति यत आत्मा सत्यतास्वरूपः। यतो ७ हेतोः (स्वर्गे पिता वादः पवित्र आत्मा च त्रय इमे साक्षिणः सन्ति, त्रय इमे चैको भवन्ति। तथा पृथिव्याम्) आत्मा तोयं ८ रुधिरञ्च त्रीण्येतानि साक्ष्यं ददति तेषां त्रयाणाम् एकत्वं भवति च। मानवानां साक्ष्यं यद्यस्माभि र्गृह्यते तर्हीश्वरस्य साक्ष्यं ९ तस्मादपि श्रेष्ठं यतः स्वपुत्त्रमधीश्वरेण दत्तं साक्ष्यमिदं। ईश्व- १० रस्य पुत्त्रे यो विश्वसिति स निजान्तरे तत् साक्ष्यं धारयति; ईश्वरे यो न विश्वसिति स तम् अनृतवादिनं करोति यत ईश्वरः स्वपुत्त्रमधि यत् साक्ष्यं दत्तवान् तस्मिन् स न विश्वसिति। तच्च ११ साक्ष्यमिदं यद् ईश्वरो ऽस्मभ्यम् अनन्तजीवनं दत्तवान् तच्च जीवनं तस्य पुत्त्रे विद्यते। यः पुत्त्रं धारयति स जीवनं धारयति, १२ ईश्वरस्य पुत्त्रं यो न धारयति स जीवनं न धारयति। ईश्वर- १३ पुत्त्रस्य नाम्नि युष्मान् प्रत्येतानि मया लिखितानि तस्याभिप्रायो ऽयं यद् यूयम् अनन्तजीवनप्राप्ता इति जानीयात तस्येश्वरपुत्त्रस्य नाम्नि विश्वसेत च।

तस्यान्तिके ऽस्माकं या प्रतिभा भवति तस्याः कारणमिदं १४ यद् वयं यदि तस्याभिमतं किमपि तं याचामहे तर्हि सो ऽस्माकं वाक्यं शृणोति। स चास्माकं यत् किञ्चन याचनं १५ शृणोतीति यदि जानीमस्तर्हि तस्माद् याचिता वरा अस्माभिः

१६ प्राप्यन्ते तदपि जानीमः। कश्चिद् यदि स्वभ्रातरम् अमृत्यु-
जनकं पापं कुर्व्वन्तं पश्यति तर्हि स प्रार्थनां करोतु तेनेश्व-
रस्तस्मै जीवनं दास्यति, अर्थतो मृत्युजनकं पापं येन नाकारि
तस्मै। किन्तु मृत्युजनकम् एकं पापम् आस्ते तदधि तेन प्रार्थना
१७ क्रियतामित्यहं न वदामि। सर्व्व एवाधर्म्मः पापं किन्तु सर्व्व-
१८ पापं मृत्युजनकं नहि। य ईश्वरात् जातः स पापाचारं न
करोति किन्त्वीश्वरात् जातो जनः स्वं रक्षति तस्मात् स
१९ पापात्मा तं न स्पृशतीति वयं जानीमः। वयम् ईश्वरात् जाताः
किन्तु कृत्स्नः संसारः पापात्मनो वशं गतो ऽस्तीति जानीमः।
२० अपरम् ईश्वरस्य पुत्र आगतवान् वयञ्च यया तस्य सत्यमयस्य
ज्ञानं प्राप्नुयामस्तादृशीं धियम् अस्मभ्यं दत्तवान् इति जानी-
मस्तस्मिन् सत्यमये ऽर्थतस्तस्य पुत्रे यीशुख्रीष्टे तिष्ठामश्च; स
२१ एव सत्यमय ईश्वरो ऽनन्तजीवनस्वरूपश्चास्ति। हे प्रियबालकाः,
यूयं देवमूर्त्तिभ्यः स्वान् रक्षत। आमेन्।

---

## योहनो द्वितीयं पत्रं।

१ मङ्गलाचरणं ४ प्रेम्नि धर्म्माचरणे च नित्यप्रवर्त्तनं मिथ्योपदेशात् सावधानत्वं
१२ समाप्तिश्च।

१ हे अभिरुचिते कुरिये, त्वां तव पुत्रांश्च प्रति प्राचीनोऽहं पत्रं
लिखामि। सत्यमताद् युष्मासु मम प्रेमास्ति केवलं मम नहि
२ किन्तु सत्यमतज्ञानां सर्व्वेषामेव। यतः सत्यमतम् अस्मासु तिष्ठ-
३ त्यनन्तकालं यावच्चास्मासु स्थास्यति। पितुरीश्वरात् तत्पितुः
पुत्रात् प्रभो र्यीशुख्रीष्टाच्च प्राप्यो ऽनुग्रहः कृपा शान्तिश्च सत्य-
ताप्रेमभ्यां सार्द्धं युष्मान् अधितिष्ठतु।

वयं पितृतो याम् आज्ञां प्राप्तवन्तस्तदनुसारेण तव केचिद् ४ आत्मजाः सत्यमतम् आचरन्त्येतस्य प्रमाणं प्राप्याहं भृशम् आनन्दितवान्। साम्प्रतञ्च हे कुरिये, नवीनां काञ्चिद् आज्ञां ५ न लिखन्नहम् आदितो लब्धाम् आज्ञां लिखन् त्वाम् इदं विनये यद् अस्माभिः परस्परं प्रेम कर्त्तव्यं। अपरं प्रेमैतेन ६ प्रकाशते यद् वयं तस्याज्ञा आचरेम। आदितो युष्माभि र्या श्रुता सेयम् आज्ञा सा च युष्माभिराचरितव्या। यतो बहवः ७ प्रवञ्चका जगत् प्रविश्य यीशुख्रीष्टो नरावतारो भूत्वागत एतत् नाङ्गीकुर्व्वन्ति स एव प्रवञ्चकः ख्रीष्टारिश्चास्ति। अस्माकं ८ श्रमो यत् पण्डश्रमो न भवेत् किन्तु सम्पूर्णं वेतनमस्माभि र्लभ्येत तदर्थं स्वानधि सावधाना भवत। यः कश्चिद् विपथ- ९ गामी भूत्वा ख्रीष्टस्य शिक्षायां न तिष्ठति स ईश्वरं न धारयति ख्रीष्टस्य शिक्षायां यस्तिष्ठति स पितरं पुत्रञ्च धारयति। यः कश्चिद् युष्मत्सन्निधिमागच्छन् शिक्षामेनां नानयति स १० युष्माभिः स्ववेश्मनि न गृह्यतां तव मङ्गलं भूयादिति वागपि तस्मै न कथ्यतां। यतस्तव मङ्गलं भूयादिति वाचं यः कश्चित् ११ तस्मै कथयति स तस्य दुष्कर्म्मणाम् अंशी भवति।

युष्मान् प्रति मया बहूनि लेखितव्यानि किन्तु पत्रमसीभ्यां १२ तत् कर्त्तुं नेच्छामि, यतो ऽस्माकम् आनन्दो यथा सम्पूर्णो भविष्यति तथा युष्मत्समीपमुपस्थायाहं सम्मुखीभूय युष्माभिः सम्भाषिष्य इति प्रत्याशा ममास्ते। तवाभिरुचिताया भगिन्या १३ बालकास्त्वां नमस्कारं ज्ञापयन्ति। आमेन्।

---

# योहनस्तृतीयं पत्रं।

१ मङ्गलाचरणं, अतिथिसेवानिमित्तं योहना गायस्य प्रशंसा ९ दियत्रिफिं प्रति भर्त्सनं दीमीत्रियस्य प्रशंसा १३ समाप्तिश्च।

१ प्राचीनो ऽहं सत्यमताद् यस्मिन् प्रीये तं प्रियतमं गायं
२ प्रति पत्रं लिखामि। हे प्रिय, तवात्मा यादृक् शुभान्वित-
३ स्तादृक् सर्व्वविषये तव शुभं स्वास्थ्यञ्च भूयात्। भ्रातृभिरा-
गत्य तव सत्यमतस्यार्थतस्त्वं कीदृक् सत्यमतमाचरस्येतस्य साक्ष्ये
४ दत्ते मम महानन्दो जातः। मम सन्तानाः सत्यमतमाच-
रन्तीतिवार्त्तातो मम य आनन्दो जायते ततो महत्तरो
५ नास्ति। हे प्रिय, भ्रातॄन् प्रति विशेषतस्तान् विदेशिनो भ्रातॄन्
६ प्रति त्वया यद्यत् कृतं तत् सर्व्वं विश्वासिनो योग्यं। ते च
समितेः साक्षात् तव प्रेम्नः प्रमाणं दत्तवन्तः, अपरम् ईश्वर-
७ योग्यरूपेण तान् प्रस्थापयता त्वया सत्कर्म्म कारिष्यते। यतस्ते
तस्य नाम्ना यात्रां विधाय भिन्नजातीयेभ्यः किमपि न गृहीत-
८ वन्तः। तस्माद् वयं यत् सत्यमतस्य सहाया भवेम तदर्थमेता-
दृशा लोका अस्माभिरनुग्रहीतव्याः।

९ समितिं प्रत्यहं पत्रं लिखितवान् किन्तु तेषां मध्ये यो दिय-
१० त्रिफिः प्रधानायते सो ऽस्मान् न गृह्लाति। अतो ऽहं यदो-
पस्थास्यामि तदा तेन यद्यत् क्रियते तत् सर्व्वं तं स्मारयिष्यामि,
यतः स दुर्व्वाक्यैरस्मान् अपवदति, तेनापि तृप्तिं न गत्वा
स्वयमपि भ्रातॄन् नानुगृह्लाति ये चानुग्रहीतुमिच्छन्ति तान्
११ समितितो ऽपि बहिष्करोति। हे प्रिय, त्वया दुष्कर्म्म नानुक्रि-
यतां किन्तु सत्कर्म्मैव। यः सत्कर्म्माचारी स ईश्वरात् जातः, यो
१२ दुष्कर्म्माचारी स ईश्वरं न दृष्टवान्। दीमीत्रियस्य पक्षे सर्व्वैः

साक्ष्यम् अदायि विशेषतः सत्यमतेनापि, वयमपि तत्पक्षे साक्ष्यं दद्मः, अस्माकञ्च साक्ष्यं सत्यमेवेति यूयं जानीथ ।

त्वां प्रति मया बहूनि लेखितव्यानि किन्तु मसीलेखनीभ्यां १३ लेखितुं नेच्छामि । अचिरेण त्वां द्रक्ष्यामीति मम प्रत्याशास्ते १४ तदावां सम्मुखीभूय परस्परं सम्भाषिष्यावहे । तव शान्ति र्भूयात् । अस्माकं मित्राणि त्वां नमस्कारं ज्ञापयन्ति त्वमप्येकैकस्य नाम प्रोच्य मित्रेभ्यो नमस्कुरु । इति ।

---

# यिहूदाः सर्व्वसाधारणपत्रं ।

१ मङ्गलाचरणं २ धर्म्मे स्थिरत्वं दुष्टशिक्षकाणां पापं दण्डश्च १९ यिहूदा विनयकथनं २४ मङ्गलप्रार्थना च ।

यीशुख्रीष्टस्य दासो याकूबो भ्राता यिहूदास्तातेनेश्वरेण १ पवित्रीकृतान् यीशुख्रीष्टेन रक्षितांश्चाहूतान् लोकान् प्रति पत्रं लिखति । कृपा शान्तिः प्रेम च बाहुल्यरूपेण युष्मास्वधितिष्ठतु । २

हे प्रियाः, साधारणपरित्राणमधि युष्मान् प्रति लेखितुं मम ३ बहुयत्ने जाते पूर्व्वकाले पवित्रलोकेषु समर्पितो यो धर्म्मस्तदर्थं यूयं प्राणव्ययेनापि सचेष्टा भवतेति विनयार्थं युष्मान् प्रति पत्रलेखनमावश्यकम् अमन्ये । यस्माद् एतद्रूपदण्डप्राप्तये पूर्व्वं लि- ४ खिताः केचिज्जना अस्मान् उपसृप्तवन्तः, ते ऽधार्म्मिकलोका अस्माकम् ईश्वरस्यानुग्रहं ध्वजीकृत्य लम्पटताम् आचरन्ति, अद्वितीयो ऽधिपति र्यो ऽस्माकं प्रभु र्यीशुख्रीष्टस्तं नाङ्गीकुर्व्वन्ति । तस्माद् यूयं पुरा यद् अवगतास्तत् पुन र्युष्मान् स्मारयितुम् ५ इच्छामि, फलतः प्रभुरेककृत्वः स्वप्रजा मिसरदेशाद् उदधार-

६ यत् ततः परम् अविश्वासिनो व्यनाशयत्। ये च स्वर्गदूताः स्वीयकर्त्तृत्वपदे न स्थित्वा स्ववासस्थानं परित्यक्तवन्तस्तान् स महादिनस्य विचारार्थम् अन्धकारमये ऽधःस्थाने सदा-
७ स्थायिभि र्बन्धनैरबध्नात्। अपरं सिदोमम् अमोरा तन्निकटस्थनगराणि चैतेषां निवासिनस्तत्समरूपं व्यभिचारं कृतवन्तो विषममैथुनस्य चेष्टया विपथं गतवन्तश्च तस्मात् तान्यपि
८ दृष्टान्तस्वरूपाणि भूत्वा सदातनवह्निना दण्डं भुञ्जते। तथैवेमे स्वप्नाचारिणोऽपि स्वशरीराणि कलङ्कयन्ति राजाधीनतां न
९ स्वीकुर्व्वन्त्युच्चपदस्थान् निन्दन्ति च। किन्तु प्रधानदिव्यदूतो मीखायेलो यदा मूससो देहे शयतानेन विवदमानः समभाषत तदा तस्मिन् निन्दारूपं दण्डं समर्पयितुं साहसं न कृत्वा-
१० कथयत् प्रभुस्त्वां भर्त्सयतां। किन्त्विमे यन्न बुध्यन्ते तन्निन्दन्ति
११ यच्च निर्ब्बोधपशव इवेन्द्रियैरवगच्छन्ति तेन नश्यन्ति। तान् धिक्, ते काबिलो मार्गे चरन्ति पारितोषिकस्याशातो बिलियमो भ्रान्तिमनुधावन्ति कोरहस्य दुर्म्मुखत्वेन विनश्यन्ति च।
१२ युष्माकं प्रेमभोज्येषु ते विघ्नजनका भवन्ति, आत्मम्भरयश्च भूत्वा निर्लज्जया युष्माभिः सार्द्धं भुञ्जते। ते वायुभिश्चालिता निस्तो-
१३ यमेघा हेमन्तकालिका निष्फला द्वि र्मृता उन्मूलिता वृक्षाः, स्वकीयलज्जाफेणोद्वमकाः प्रचण्डाः सामुद्रतरङ्गाः सदाकालं यावत् घोरतिमिरभागीनि भ्रमणकारीणि नक्षत्राणि च भव-
१४ न्ति। आदमतः सप्तमः पुरुषो यो हनोकः स तानुद्दिश्य भविष्यद्वाक्यमिदं कथितवान्, यथा,

पश्य स्वकीयपुण्यानाम् अयुतै र्वेष्टितः प्रभुः।
१५ सर्व्वान् प्रति विचाराज्ञासाधनायागमिष्यति।

तदा चाधार्म्मिकाः सर्व्वे जाता यैरपराधिनः।
विधर्म्मकर्म्मणां तेषां सर्व्वेषामेव कारणात्।
तथा तद्वैपरीत्येनाप्यधर्म्माचारिपापिनां।
उक्तकठोरवाक्यानां सर्व्वेषामपि कारणात्।
परमेशेन दोषित्वं तेषां प्रकाशयिष्यते॥

ते वाक्कलहकारिणः स्वभाग्यनिन्दकाः स्वेच्छाचारिणो दर्प- १६ वादिमुखविशिष्टा लाभार्थं मनुष्यस्तावकाश्च सन्ति। किन्तु हे १७ प्रियतमाः, अस्माकं प्रभो र्यीशुख्रीष्टस्य प्रेरितै र्यद् वाक्यं पूर्व्वं युष्मभ्यं कथितं तत् स्मरत, फलतः शेषसमये स्वेच्छातो ऽधर्म्मा- १८ चारिणो निन्दका उपस्थास्यन्तीति।

एते लोकाः स्वान् पृथक् कुर्व्वन्तः सांसारिका आत्महीनाश्च १९ सन्ति। किन्तु हे प्रियतमाः, यूयं स्वेषाम् अतिपवित्रविश्वासे २० निचीयमानाः पवित्रेणात्मना प्रार्थनां कुर्व्वन्त ईश्वरस्य प्रेम्ना २१ स्वान् रक्षत, अनन्तजीवनाय चास्माकं प्रभो र्यीशुख्रीष्टस्य कृपां प्रतीक्षध्वं। अपरं यूयं विविच्य कांश्चिद् अनुकम्पध्वं कांश्चिद् २२ अग्नित उद्धृत्य भयं प्रदर्श्य रक्षत, शारीरिकभावेन कलङ्कितं २३ वस्त्रमपि ऋतीयध्वं।

अपरञ्च युष्मान् स्खलनाद् रक्षितुम् उल्लासेन स्वीयतेजसः २४ साक्षात् निर्द्दोषान् स्थापयितुञ्च समर्थो यो ऽस्माकम् अद्वि- २५ तीयस्त्राणकर्त्ता सर्व्वज्ञ ईश्वरस्तस्य गौरवं महिमा पराक्रमः कर्तृत्वञ्चेदानीम् अनन्तकालं यावद् भूयात्। आमेन्।

---

# योहनं प्रति प्रकाशितं भविष्यद्वाक्यं।

---

## १ प्रथमोऽध्यायः।

१ आभासः ४ मङ्गलाचरणं ७ ख्रीष्टस्यागमनकथनं ९ योहनो बन्धनकथनं ख्रीष्टस्य दर्शनं सप्तदीपवृक्षस्वरूपसप्तसमाजानां दर्शनञ्च।

१ यत् प्रकाशितं वाक्यम् ईश्वरः स्वदासानां निकटं शीघ्रमुपस्थास्यन्तीनां घटनानां दर्शनार्थं यीशुख्रीष्टे समर्पितवान् तत् २ स स्वीयदूतं प्रेष्य निजसेवकं योहनं ज्ञापितवान्। स चेश्वरस्य वाक्ये ख्रीष्टस्य साक्ष्ये च यद्यद् दृष्टवान् तस्य प्रमाणं दत्त- ३ वान्। एतस्य भविष्यद्वक्तृग्रन्थस्य वाक्यानां पाठकः श्रोतारश्च तन्मध्ये लिखिताज्ञाग्राहिणश्च धन्या यतः स कालः सन्निकटः।

४ योहन् आशियादेशस्थाः सप्त समितीः प्रति पत्रं लिखति। यो वर्त्तमानो भूतो भविष्यंश्च ये च सप्तात्मानस्तस्य सिंहासनस्य ५ सम्मुखे तिष्ठन्ति यश्च यीशुख्रीष्टो विश्वस्तः साक्षी मृतानां मध्ये प्रथमजातो भूमण्डलस्थराजानाम् अधिपतिश्च भवति, एतेभ्यो ऽनुग्रहः शान्तिश्च युष्मासु वर्त्ततां। यो ऽस्मासु प्रीतवान् स्व- ६ रुधिरेणास्मान् स्वपापेभ्यः प्रक्षालितवान् तस्य पितुरीश्वरस्य याजकान् कृत्वास्मान् राजवर्गे नियुक्तवांश्च तस्मिन् महिमा पराक्रमश्चानन्तकालं यावद् वर्त्ततां। आमेन्।

७ पश्यत स मेघैरागच्छति तेनैकैकस्य चक्षुस्तं द्रक्ष्यति ये च तं विद्धवन्तस्ते ऽपि तं विलोकिष्यन्ते तस्य कृते पृथिवीस्थाः सर्व्वे ८ वंशा विलपिष्यन्ति। सत्यम् आमेन्। वर्त्तमानो भूतो भविष्यंश्च

यः सर्व्वशक्तिमान् प्रभुः परमेश्वरः स गदति, अहमेव कः चश्चार्थत आदिरन्तश्च।

युष्माकं भ्राता यीशुख्रीष्टस्य क्लेशराज्यतितिक्षाणां सहभागी ९ चाहं योहन् ईश्वरस्य वाक्यहेतो र्यीशुख्रीष्टस्य साक्ष्यहेतोश्च पात्मनामक उपद्वीप आसं। तत्र प्रभो र्दिने आत्मनाविष्टो १० ऽहं स्वपश्चात् तूरीध्वनिवत् महारवम् अश्रौषं, तेनोक्तम्, अहं ११ कः चश्चार्थत आदिरन्तश्च। त्वं यद् द्रक्ष्यसि तद् ग्रन्थे लिखित्वाशियादेशस्थानां सप्त समितीनां समीपम् इफिषं स्मुर्णां पर्गामं थुयातीरां सार्द्दिं फिलादिल्फियां लायदीकेयाञ्च प्रेषय। ततो मया सम्भाषमाणस्य कस्य रवः श्रूयते तद्दर्शनार्थं मुखं परा- १२ वर्त्तितं तत् परावर्त्त्य स्वर्णमयाः सप्त दीपवृक्षा दृष्टाः। तेषां सप्त १३ दीपवृक्षाणां मध्ये दीर्घपरिच्छदपरिहितः सुवर्णशृङ्खलेन वेष्टितवक्षश्च मनुष्यपुत्राकृतिरेको जनस्तिष्ठति, तस्य शिरः केशश्च १४ श्वेतमेषलोमानीव हिमवत् श्वेतौ लोचने वह्निशिखासमे चरणौ १५ वह्निकुण्डे तापितसुपित्तलसदृशौ रवश्च बहुतोयानां रवतुल्यः। तस्य दक्षिणहस्ते सप्त तारा विद्यन्ते वक्राच्च तीक्ष्णो द्विधारः १६ खड्गो निर्गच्छति मुखमण्डलञ्च स्वतेजसा देदीप्यमानस्य सूर्य्यस्य सदृशं। तं दृष्ट्वाहं मृतकल्पस्तच्चरणे पतितस्ततः स्वदक्षिणकरं १७ मयि निधाय तेनोक्तम् अहम् आदिरन्तश्च। अहम् अमर- १८ स्तथापि मृतवान् किन्तु पश्याहम् अनन्तकालं यावत् जीवामि। आमेन्। मृत्योः परलोकस्य च कुञ्जिका मम हस्तगताः। अतो यद् भवति यच्चेतः परं भविष्यति त्वया दृष्टं तत् सर्व्वं १९ लिख्यतां। मम दक्षिणहस्ते स्थिता याः सप्त तारा ये च स्वर्ण- २० मयाः सप्त दीपवृक्षास्त्वया दृष्टास्तत्तात्पर्य्यमिदं ताः सप्त

ताराः सप्त समितीनां दूताः सुवर्णमयाः सप्त दीपवृक्षाश्च सप्त समितयः सन्ति।

---

## २ द्वितीयोऽध्यायः।

१ इफिषीयसमाजं प्रति ख्रीष्टस्य कथनं ८ स्मुर्णासमाजं प्रति कथनं १२ पर्गामसमाजं प्रति कथनं १८ थुयातीरासमाजं प्रति कथनञ्च।

१ इफिषस्थसमितेे र्दूतं प्रति त्वम् इदं लिख; यो दक्षिण-करेण सप्त तारा धारयति सप्तानां सुवर्णदीपवृक्षाणां मध्ये २ गमनागमने करोति च तेनेदम् उच्यते। तव क्रियाः श्रमः सहिष्णुता च मम गोचराः, त्वं दुष्टान् सोढुं न शक्नोषि ये च प्रेरिता न सन्तः स्वान् प्रेरितान् वदन्ति त्वं तान् परीक्ष्य ३ मृषाभाषिणो विज्ञातवान्, अपरं त्वं तितिक्षां विदधासि मम नामार्थं बहु सोढवानसि तथापि न पर्य्यक्लाम्यस्तदपि जानामि। ४ किञ्च तव विरुद्धं मयैतत् वक्तव्यं यत् तव प्रथमं प्रेम त्वया ५ व्यहीयत। अतः कुतः पतितो ऽसि तत् स्मृत्वा मनः परावर्त्त्य पूर्व्वीयक्रियाः कुरु न चेत् त्वया मनसि न परिवर्त्तिते ऽहं तूर्णम् ६ आगत्य तव दीपवृक्षं स्वस्थानाद् अपसारयिष्यामि। तथापि तवेष गुणो विद्यते यत् नीकलायतीयलोकानां याः क्रिया अहम् ७ ऋतीये तास्त्वमपि ऋतीयसे। यस्य श्रोत्रं विद्यते स समितीः प्रत्युच्यमानाम् आत्मनः कथां शृणोतु। यो जनो जयति तस्मा अहम् ईश्वरस्यारामस्थजीवनतरोः फलं भोक्तुं दास्यामि।

८ अपरं स्मुर्णास्थसमितेे र्दूतं प्रतीदं लिख; य आदिरन्तश्च ९ यो मृतवान् पुनर्जीवितवांश्च तेनेदम् उच्यते, तव क्रियाः क्लेशो दैन्यञ्च मम गोचराः किन्तु त्वं धनवानसि ये च यिहूदीया

न सन्तः शयतानस्य समाजाः सन्ति तथापि स्वान् यिहूदीयान् वदन्ति तेषां निन्दामप्यहं जानामि। त्वया यो यः क्लेशः सोढव्य- १० स्तस्मात् मा भैषीः पश्य शयतानो युष्माकं परीक्षार्थं कांश्चित् कारायां निक्षेप्स्यति दश दिनानि यावत् क्लेशो युष्मासु वर्त्तिष्यते च। त्वं मृत्युपर्य्यन्तं विश्वास्यो भव तेनाहं जीवनकिरीटं तुभ्यं दास्यामि। यस्य श्रोत्रं विद्यते स समितीः प्रत्युच्यमानाम् आत्मनः ११ कथां शृणोतु। यो जयति स द्वितीयमृत्युना न हिंसिष्यते।

अपरं पर्गामस्थसमिते दूतं प्रतीदं लिख, यस्तीक्ष्णं द्विधारं १२ खड्गं धारयति स एव भाषते। तव क्रिया मम गोचराः, १३ यत्र शयतानस्य सिंहासनं तत्रैव त्वं वससि तदपि जानामि। त्वं मम नाम धारयसि मद्भक्तेरस्वीकारस्त्वया न कृतो मम विश्वास्य-साक्षिण आन्तिपाः समये ऽपि न कृतः। स तु युष्मन्मध्ये ऽघानि यतः शयतानस्तत्रैव निवसति। तथापि तव विरुद्धं मम किञ्चिद् १४ वक्तव्यं यतो देवप्रसादादनाय परदारगमनाय चेस्रायेलः स-न्तानानां सम्मुख उन्माथं स्थापयितुं बालाक् येनाशिक्ष्यत तस्य बिलियमः शिक्षावलम्बिनस्तव केचित् जनास्तत्र सन्ति। तथा १५ नीकलायतीयानां शिक्षावलम्बिनस्तव केचित् जना अपि सन्ति तदेवाहम् ऋतीये। अतो हेतोस्त्वं मनः परिवर्त्तय न चेदहं १६ त्वरया तव समीपमुपस्थाय मद्वक्त्रस्थखड्गेन तैः सह योत्स्यामि। यस्य श्रोत्रं विद्यते स समितीः प्रत्युच्यमानाम् आत्मनः कथां १७ शृणोतु। यो जनो जयति तस्मा अहं गुप्तमान्नां भोक्तुं दास्यामि शुभ्रप्रस्तरमपि तस्मै दास्यामि तत्र प्रस्तरे नूतनं नाम लिखितं तच्च ग्रहीतारं विना नान्येन केनाप्यवगम्यते।

अपरं थुयातीरास्थसमिते दूतं प्रतीदं लिख। यस्य लोचने १८

वह्निशिखासदृशे चरणौ च सुपित्तलसङ्काशौ स ईश्वरपुत्रो
१९ भाषते, तव क्रियाः प्रेम विश्वासः परिचर्य्या सहिष्णुता च मम
गोचराः, तव प्रथमक्रियाभ्यः शेषक्रियाः श्रेष्ठास्तदपि जानामि।
२० तथापि तव विरुद्धं मया किञ्चिद् वक्तव्यं यतो या ईषेबल्-
नामिका योषित् स्वां भविष्यद्वादिनीं मन्यते वेश्यागमनाय देव-
प्रसादाशनाय च मम दासान् शिक्षयति भ्रामयति च सा त्वया
२१ न निवार्य्यते। अहं मनःपरिवर्त्तनाय तस्यै समयं दत्तवान्
किन्तु सा स्वीयवेश्याक्रियातो मनः परिवर्त्तयितुं नाभिलषति।
२२ पश्याहं तां शय्यायां निक्षेप्स्यामि, ये तया सार्द्धं व्यभिचारं
कुर्व्वन्ति ते यदि स्वक्रियाभ्यो मनांसि न परावर्त्तयन्ति तर्हि
२३ तानपि महाक्लेशे निक्षेप्स्यामि तस्याः सन्तानांश्च मृत्युना हनि-
ष्यामि। तेनाहम् अन्तःकरणानां मनसाञ्चानुसन्धानकारी
युष्माकमेकैकस्मै च स्वक्रियाणां फलं मया दातव्यमिति सर्व्वाः
२४ समितयो ज्ञास्यन्ति। अपरम् अवशिष्टान् थुयातीरस्थलोकान्
अर्थतो यावन्तस्तां शिक्षां न धारयन्ति ये च कैश्चित् शयता-
नस्य गम्भीरार्था उच्यन्ते तान् ये नावगतवन्तस्तानहं वदामि
२५ युष्मासु कमप्यपरं भारं नारोपयिष्यामि; किन्तु यद् युष्माकं
२६ विद्यते तत् ममागमनं यावद् धारयत। यो जनो जयति
शेषपर्य्यन्तं मम क्रियाः पालयति च तस्मा अहम् अन्यजाती-
२७ यानाम् आधिपत्यं दास्यामि; पितृतो मया यद्वत् कर्तृत्वं लब्धं
तद्वत् सोऽपि लौहदण्डेन तान् चारयिष्यति तेन मृद्भाजना-
२८ नीव ते चूर्णा भविष्यन्ति। अपरम् अहं तस्मै प्रभातीयताराम्
२९ अपि दास्यामि। यस्य श्रोत्रं विद्यते स समितीः प्रत्युच्यमानाम्
आत्मनः कथां शृणोतु।

# ३ तृतीयोऽध्यायः।

१ सार्द्दिस्थसमाजं प्रति कथनं ७ फिलादिल्फियास्थसमाजं प्रति कथनं १४ लायदिकेयास्थसमाजं प्रति कथनञ्च।

अपरं सार्द्दिस्थसमिते र्दूतं प्रतीदं लिख, यो जन ईश्वरस्य १ सप्तात्मनः सप्त ताराश्च धारयति स एव भाषते, तव क्रिया मम गोचराः, त्वं जीवदाख्यो ऽसि तथापि मृतो ऽसि तदपि जानामि। प्रबुद्धो भव, अवशिष्टं यद्यत् मृतकल्पं तदपि सबली- २ कुरु यत ईश्वरस्य साक्षात् तव कर्म्माणि न सिद्धानीति प्रमाणं मया प्राप्तं। अतः कीदृशीं शिक्षां लब्धवान् श्रुतवांश्चासि तत् ३ स्मरन् तां पालय स्वमनः परिवर्त्तय च। चेत् प्रबुद्धो न भवेस्तर्ह्यहं स्तेन इव तव समीपम् उपस्थास्यामि किञ्च कस्मिन् दण्डे उपस्थास्यामि तन्न ज्ञास्यसि। तथापि यैः स्ववासांसि न कल- ४ ङ्कितानि तादृशाः कतिपयलोकाः सार्द्दिनगरे ऽपि तव विद्यन्ते ते शुभ्रपरिच्छदै र्मम सङ्गे गमनागमने करिष्यन्ति यतस्ते योग्याः। यो जनो जयति स शुभ्रपरिच्छदं परिधापयिष्यते, ५ अहञ्च जीवनग्रन्थात् तस्य नाम नान्तर्धापयिष्यामि किन्तु मत्पितुः साक्षात् तस्य दूतानां साक्षाच्च तस्य नाम स्वीकरिष्यामि। यस्य श्रोत्रं विद्यते स समितीः प्रत्युच्यमानाम् आ- ६ त्मनः कथां शृणोतु।

अपरञ्च फिलादिल्फियास्थसमिते र्दूतं प्रतीदं लिख, यः ७ पवित्रः सत्यमयश्चास्ति दायूदः कुञ्जिकां धारयति च येन मोचिते ऽपरः कोऽपि न रुणद्धि रुद्धे चापरः कोऽपि न मोचयति स एव भाषते। तव क्रिया मम गोचराः पश्य तव ८ समीपे ऽहं मुक्तं द्वारं स्थापितवान् तत् केनापि रोद्धुं न शक्यते

यतस्त्वाल्पं बलमास्ते तथापि त्वं मम वाक्यं पालितवान् मम
९ नाम्नो ऽस्वीकारं न कृतवांश्च। पश्य यिहूदीया न सन्तो ये
मृषावादिनः स्वान् यिहूदीयान् वदन्ति तेषां शयतानसमा-
जीयानां कांश्चिद् अहम् आनेष्यामि पश्य ते मदाज्ञात आगत्य
तव चरणयोः प्रणंस्यन्ति त्वञ्च मम प्रियो ऽसीति ज्ञास्यन्ति।
१० त्वं मम सहिष्णुतासूचकं वाक्यं रक्षितवानसि तत्कारणात्
पृथिवीनिवासिनां परीक्षार्थं कृत्स्नं जगद् येनागामिपरीक्षा-
११ दिनेनाक्रमिष्यते तस्माद् अहमपि त्वां रक्षिष्यामि। पश्य मया
शीघ्रम् आगन्तव्यं तव यदस्ति तत् धारय को ऽपि तव किरीटं
१२ नापहरतु। यो जनो जयति तमहं मदीयेश्वरस्य मन्दिरे स्तम्भं
कृत्वा स्थापयिस्यामि स पुन र्न निर्गमिष्यति। अपरञ्च तस्मिन्
मदीयेश्वरस्य नाम मदीयेश्वरस्य पुर्य्या अपि नाम अर्थतो या
नवीना यिरूशालम् पुरी स्वर्गात् मदीयेश्वरस्य समीपाद् अवरो-
१३ क्ष्यति तस्या नाम ममापि नूतनं नाम लेखिष्यामि। यस्य श्रोत्रं
विद्यते स समितीः प्रत्युच्यमानाम् आत्मनः कथां शृणोतु।

१४ अपरञ्च लायदिकेयास्थसमिते र्दूतं प्रतीदं लिख, य
आमेन् अर्थतो विश्वास्यः सत्यमयश्च साक्षी, ईश्वरस्य सृष्टेरादि-
१५ श्चास्ति स एव भाषते। तव क्रिया मम गोचराः त्वं शीतो
१६ नासि तप्तो ऽपि नासीति जानामि। तव शीतत्वं तप्तत्वं वा वरं
भवेत्, शीतो न भूत्वा तप्तो ऽपि न भूत्वा त्वमेवम्भूतः कदुष्णो ऽसि
१७ तत्कारणाद् अ ं स्वमुखात् त्वाम् उद्वमिष्यामि। अहं धनी
समृद्धश्चास्मि मम कस्याप्यभावो न भवतीति त्वं वदसि किन्तु
त्वमेव दुःखार्त्तो दुर्गतो दरिद्रो ऽन्धो नग्नश्चासि तत् त्वया
१८ नावगम्यते। त्वं यद् धनी भवेस्तदर्थं मत्तो वह्नौ तापितं सुवर्णं

क्रीणीहि नग्नत्वात् तव लज्जा यन्न प्रकाशेत तदर्थं परिधानाय मत्तः शुभ्रवासांसि क्रीणीहि यच्च तव दृष्टिः प्रसन्ना भवेत् तदर्थं चक्षुर्लेपनायाञ्जनं मत्तः क्रीणीहीति मम मन्त्रणा। येष्वहं प्रीये १९ तान् सर्व्वान् भर्त्सयामि शास्मि च, अतस्त्वम् उद्यमं विधाय मनः परिवर्त्तय। पश्याहं द्वारि तिष्ठन् तद् आहन्मि यदि कश्चित् २० मम रवं श्रुत्वा द्वारं मोचयति तर्ह्यहं तस्य सन्निधिं प्रविश्य तेन सार्द्धं भोक्ष्ये सो ऽपि मया सार्द्धं भोक्ष्यते। अपरमहं यथा २१ जितवान् मम पित्रा च सह तस्य सिंहासन उपविष्टश्चास्मि, तथा यो जनो जयति तमहं मया सार्द्धं मत्सिंहासन उपवेशयिष्यामि। यस्य श्रोत्रं विद्यते स समितीः प्रत्युच्यमानाम् आत्मनः २२ कथां शृणोतु।

---

## ४ चतुर्थोऽध्यायः।

स्वर्गे ईश्वरस्य सिंहासनस्य प्राचीनलोकानां चक्षुर्भिः परिपूर्णचतुःप्राणिनाञ्च दर्शनम्।

ततः परं मया दृष्टिपातं कृत्वा स्वर्गे मुक्तं द्वारम् एकं दृष्टं १ मया सहभाषमाणस्य च यस्य तूरीवाद्यतुल्यो रवः पूर्व्वं श्रुतः स माम् अवोचत् स्थानमेतद् आरोहय, इतः परं येन येन भवितव्यं तदहं त्वां दर्शयिष्ये। तेनाहं तत्क्षणाद् आत्मा- २ विष्टो भूत्वा ऽपश्यं स्वर्गे सिंहासनमेकं स्थापितं तत्र सिंहासने एको जन उपविष्टो ऽस्ति। सिंहासने उपविष्टस्य तस्य जनस्य रूपं ३ सूर्य्यकान्तमणेः प्रवालस्य च तुल्यं तत् सिंहासनञ्च मरकतमणिवद्रूपविशिष्टेन मेघधनुषा वेष्टितं। तस्य सिंहासनस्य चतुर्दिक्षु ४ चतुर्विंशतिसिंहासनानि तिष्ठन्ति तेषु सिंहासनेषु चतुर्विंशतिप्राचीनलोका उपविष्टास्ते शुभ्रवासःपरिहितास्तेषां शिरांसि च सुवर्णकिरीटै र्भूषितानि। तस्य सिंहासनस्य मध्यात तडितो

रवाः स्तनितानि च निर्गच्छन्ति सिंहासनस्यान्तिके च सप्त दीपा
६ ज्वलन्ति त ईश्वरस्य सप्तात्मानः। अपरं सिंहासनस्यान्तिके स्फटिकतुल्यः काचमयो जलाशयो विद्यते, अपरम् अग्रतः पश्चाच्च बहुचक्षुष्मन्तश्चत्वारः प्राणिनः सिंहासनस्य मध्ये चतु-
७ र्दिक्षु च विद्यन्ते। तेषां प्रथमः प्राणी सिंहाकारो द्वितीयः प्राणी गोवत्साकारस्तृतीयः प्राणी मनुष्यवद्वदनविशिष्टश्चतुर्थश्च
८ प्राणी उड्डीयमानकुररोपमः। तेषां चतुर्णाम् एकैकस्य प्राणिनः षट् पक्षाः सन्ति ते च सर्व्वाङ्गेष्वभ्यन्तरे च बहुचक्षुर्विशिष्टाः, ते दिवानिशं न विश्राम्य गदन्ति पवित्रः पवित्रः पवित्रः
९ सर्व्वशक्तिमान् वर्त्तमानो भूतो भविष्यंश्च प्रभुः परमेश्वरः। इत्थं तैः प्राणिभिस्तस्यानन्तजीविनः सिंहासनोपविष्टस्य जनस्य प्रभावे
१० गौरवे धन्यवादे च प्रकीर्त्तिते ते चतुर्विंशतिप्राचीना अपि तस्य सिंहासनोपविष्टस्यान्तिके प्रणिपत्य तम् अनन्तजीविनं प्रणमन्ति स्वीयकिरीटांश्च सिंहासनस्यान्तिके निक्षिप्य वदन्ति,

११ हे प्रभो ईश्वरास्माकं प्रभावं गौरवं बलं।
त्वमेवार्हसि सम्प्राप्तुं यत् सर्व्वं ससृजे त्वया।
तवाभिलाषतश्चैव सर्व्वं सम्भूय निर्म्ममे॥

---

## ५ पञ्चमोऽध्यायः।

सप्तमुद्राभि र्मुद्राङ्कितस्य पुस्तकस्य दर्शनं ख्रीष्टेन तस्य मोचनं दिव्यदूतप्राचीनलोकै-श्चतुर्भिः प्राणिभिश्च तस्य प्रशंसनञ्च।

१ अनन्तरं तस्य सिंहासनोपविष्टजनस्य दक्षिणहस्ते ऽन्त र्वहिश्च
२ लिखितं पत्रमेकं मया दृष्टं तत् सप्तमुद्राभिरङ्कितं। तत्पश्चाद् एको बलवान् दूतो दृष्टः स उच्चैःस्वरेण वाचमिमां घोषयति

कः पत्रमेतद् विवरीतुं तन्मुद्रा मोचयितुञ्चार्हति? किन्तु स्वर्ग- ३
मर्त्त्यपातालेषु तत् पत्रं विवरीतुं निरीक्षितुञ्च कस्यापि सामर्थ्यं
नाभवत्। अतो यस्तत् पत्रं विवरीतुं निरीक्षितुञ्चार्हति ता- ४
दृशजनस्याभावाद् अहं बहु रोदितवान्। किन्तु तेषां प्राची- ५
नानाम् एको जनो मामवदत् मा रोदीः पश्य यो यिहूदा-
वंशीयः सिंहो दायूदो मूलस्वरूपश्चास्ति स पत्रस्य तस्य सप्तमुद्रा-
णाञ्च मोचनाय प्रभूतवान्। अपरं सिंहासनस्य चतुर्णां प्राणिनां ६
प्राचीनवर्गस्य च मध्य एको मेषशावको मया दृष्टः स छेदित इव
तस्य सप्तशृङ्गाणि सप्तलोचनानि च सन्ति तानि कृत्स्नां पृथिवीं
प्रेषिता ईश्वरस्य सप्तात्मानः। स उपागत्य तस्य सिंहासनोप- ७
विष्टजनस्य दक्षिणकरात् तत् पत्रं गृहीतवान्। पत्रे गृहीते ८
चत्वारः प्राणिनश्चतुर्विंशतिप्राचीनाश्च तस्य मेषशावकस्यान्तिके
प्रणिपतन्ति तेषाम् एकैकस्य करयो र्वीणां सुगन्धिद्रव्यैः परिपूर्णं
स्वर्णमयपात्रञ्च तिष्ठति तानि पवित्रलोकानां प्रार्थनास्वरू-
पाणि। अपरं ते नूतनमेकं गीतमगायन्, यथा, ९

ग्रहीतुं पत्रिकां तस्या मुद्रा मोचयितुं तथा।
त्वमेवार्हसि यस्मात् त्वं बलिवत् छेदनं गतः।
सर्व्वाभ्यो जातिभाषाभ्यः सर्व्वस्माद् वंशदेशतः।
ईश्वरस्य कृते ऽस्मान् त्वं स्वीयरक्तेन क्रीतवान्।
अस्मदीश्वरपक्षे ऽस्मान् नृपतीन् याजकानपि। १०
कृतवांस्तेन राजत्वं करिष्यामो महीतले॥

अपरं निरीक्षमाणेन मया सिंहासनस्य प्राणिचतुष्टयस्य प्राची- ११
नवर्गस्य च परितो बहूनां दूतानां रवः श्रुतः, तेषां संख्या अयु-
तायुतानि सहस्रसहस्राणि च। तैरुच्चैरिदम् उक्तं,

१२ पराक्रमं धनं ज्ञानं शक्तिं गौरवमादरं।
प्रशंसाञ्चार्हति प्राप्तुं छेदितो मेषशावकः॥

१३ अपरं स्वर्गमर्त्त्यपातालसागरेषु यानि यानि विद्यन्ते तेषां सर्व्वेषां सृष्टवस्तूनां वागियं मया श्रुता,
प्रशंसां गौरवं शौर्य्यम् आधिपत्यं सनातनं।
सिंहासनोपविष्टश्च मेषवत्सश्च गच्छतां।

१४ अपरं ते चत्वारः प्राणिनः कथितवन्तस्तथास्तु, ततश्चतुर्विंशति-प्राचीना अपि प्रणिपत्य तम् अनन्तकालजीविनं प्राणमन्।

---

## ६ षष्ठोऽध्यायः।

१ खीष्टेन प्रथममुद्रामोचनं ३ द्वितीयमुद्रामोचनं ५ तृतीयमुद्रामोचनं ७ चतुर्थ-मुद्रामोचनं ९ पञ्चममुद्रामोचनं १२ षष्ठमुद्रामोचनञ्च।

१ अनन्तरं मयि निरीक्षमाणे मेषशावकेन तासां सप्तमु-द्राणाम् एका मुद्रा मुक्ता ततस्तेषां चतुर्णाम् एकस्य प्राणिन २ आगत्य पश्येतिवाचको मेघगर्जनतुल्यो रवो मया श्रुतः। ततः परम् एकः शुक्लाश्वो दृष्टः, तदारूढो जनो धनु र्धारयति तस्मै च किरीटमेकम् अदायि ततः स प्रभवन् प्रभविष्यंश्च निर्गतवान्।

३ अपरं द्वितीयमुद्रायां तेन मोचितायां द्वितीयस्य प्राणिन ४ आगत्य पश्येति वाक् मया श्रुता। ततो ऽरुणवर्णो ऽपर एको ऽश्वो निर्गतवान् तदारोहिणि पृथिवीतः शान्त्यपहरणस्य लोकानां मध्ये परस्परं प्रतिघातोत्पादनस्य च सामर्थ्यं समर्पितम्, एको बृहत्खड्गो ऽपि तस्मा अदायि।

५ अपरं तृतीयमुद्रायां तेन मोचितायां तृतीयस्य प्राणिन आगत्य पश्येति वाक् मया श्रुता, ततः कालवर्ण एको ऽश्वो ६ मया दृष्टः, तदारोहिणो हस्ते तुला तिष्ठति अनन्तरं प्राणि-

चतुष्टयस्य मध्याद् वागियं मया श्रुता गोधूमानामेकः सेटको मुद्रापादैकमूल्यः, यवानाञ्च सेटकत्रयं मुद्रापादैकमूल्यं, तैल-द्राचारसाश्च त्वया मा हिंसितव्याः।

अनन्तरं चतुर्थमुद्रायां तेन मोचितायां चतुर्थस्य प्राणिन ७ आगत्य पश्येति वाक् मया श्रुता। ततः पाण्डुरवर्ण एको ऽश्वो ८ मया दृष्टः, तदारोहिणो नाम मृत्युरिति परलोकश्च तम् अनुचरति खड्गेन दुर्भिक्षेण महामार्य्या वन्यपशुभिश्च लोकानां बधाय पृथिव्याश्चतुर्थांशस्याधिपत्यं तस्मा अदायि।

अनन्तरं पञ्चममुद्रायां तेन मोचितायाम् ईश्वरवाक्यहेतो- ९ स्तत्र साक्ष्यदानाच्च छेदितानां लोकानां देहिनो वेद्या अधो मयादृश्यन्त। त उच्चैरिदं गदन्ति, हे पवित्र सत्यमय प्रभो १० अस्माकं रक्तपाते पृथिवीनिवासिभि र्विवदितुं तस्य फलं दा-तुञ्च कति कालं विलम्बसे? ततस्तेषाम् एकैकस्मै शुभ्रः ११ परिच्छदो ऽदायि वागियञ्चाकथ्यत यूयमल्पकालम् अर्थतो युष्माकं ये सहदासा भ्रातरो यूयमिव घानिष्यन्ते तेषां संख्या यावत् सम्पूर्णतां न गच्छति तावद् विरमत।

अनन्तरं यदा स षष्ठमुद्रामसोचयत् तदा मयि निरीक्ष- १२ माणे महान् भूकम्पो ऽभवत् सूर्य्यश्च उष्ट्रलोमजवस्त्रवत् कृष्ण-वर्णश्चन्द्रमाश्च रक्तसङ्काशो ऽभवत् गगनस्थताराश्च प्रबलवायुना १३ चालिताद् उडुम्बरवृक्षात् निपातितान्यपक्वफलानीव भूतले न्यपतन्। आकाशमण्डलञ्च सङ्कुच्यमानग्रन्थइवान्तर्धानम् अग- १४ मत् गिरय उपद्वीपाश्च सर्व्वे स्थानान्तरं चालिताः पृथिवीस्था १५ भूपाला महाँल्लोकाः सहस्रपतयो धनिनः पराक्रमिणश्च लोका दासा मुक्ताश्च सर्व्वे ऽपि गुहासु गिरिस्थशैलेषु च स्वान्

१६ प्राच्छादयन् । ते च गिरीन् शैलांश्च वदन्ति यूयम् अस्मदुपरि पतित्वा सिंहासनोपविष्टजनस्य दृष्टितो मेषशावकस्य कोपा-
१७ च्चास्मान् गोपायत; यतस्तस्य क्रोधस्य महादिनम् उपस्थितं कः स्थातुं शक्नोति ?

---

## ७ सप्तमोऽध्यायः ।

१ ईश्वरस्य लोकानां मुद्राङ्कनं यिहूदिनां संख्या ९ अन्यदेशिनां संख्या १३ खीष्टस्य रक्तेन तेषां त्राणं सुखञ्च ।

१ अनन्तरं चत्वारो दिव्यदूता मया दृष्टाः, ते पृथिव्याश्चतुर्षु कोणेषु तिष्ठन्तः पृथिव्यां समुद्रे वृक्षेषु च वायु र्यथा न वहेत्
२ तथा पृथिव्याश्चतुरो वायून् धारयन्ति । अनन्तरं सूर्य्योदय-स्थानाद् उद्यन् अपर एको दूतो मया दृष्टः सोऽमरेश्वरस्य मुद्रां धारयति, येषु चतुर्षु दूतेषु पृथिवीसमुद्रयो र्हिंसनस्य
३ भारो दत्तस्तान् स उच्चैरिदं अवदत् । ईश्वरस्य दासा यावद् अस्माभि र्भालेषु मुद्रयाङ्किता न भविष्यन्ति तावत् पृथिवी
४ समुद्रौ तरवश्च युष्माभि र्न हिंस्यन्तां । ततः परं मुद्राङ्कित-लोकानां संख्या मयाश्रावि । इस्रायेलः सर्व्ववंशीयाश्चतुश्चत्वा-
५ रिंशत्सहस्राधिकलक्षलोका मुद्रयाङ्किता अभवन्, अर्थतो यि-हूदावंशे द्वादश सहस्राणि रूबेणवंशे द्वादशसहस्राणि गाद्-
६ वंशे द्वादशसहस्राणि, आशेरवंशे द्वादशसहस्राणि नप्तालिवंशे
७ द्वादशसहस्राणि मिनशिवंशे द्वादशसहस्राणि, शिमियोनवंशे द्वादशसहस्राणि लेविवंशे द्वादशसहस्राणि इषाखरवंशे द्वादश-
८ सहस्राणि, सिवूलूनवंशे द्वादशसहस्राणि यूषफवंशे द्वादशसह-स्राणि बिन्यामीनवंशे च द्वादशसहस्राणि लोका मुद्राङ्किताः ।
९ ततः परं सर्व्वजातीयानां सर्व्ववंशीयानां सर्व्वदेशीयानां

सर्व्वभाषावादिनाञ्च महालोकारण्यं मया दृष्टं, तान् गणयितुं केनापि न शक्यं, ते च शुभ्रपरिच्छदपरिहिताः सन्तः करैश्च तालवृन्तानि वहन्तः सिंहासनस्य मेषशावकस्य चान्तिके तिष्ठ-न्ति, उच्चैःस्वरैरिदं कथयन्ति च, १०

सिंहासनोपविष्टस्य परमेशस्य नः स्तवः ।
स्तवश्च मेषवत्सस्य सम्भूयात् त्राणकारणात् ।

ततः सर्व्वे दूताः सिंहासनस्य प्राचीनवर्गस्य प्राणिचतुष्टयस्य च ११ परितस्तिष्ठन्तः सिंहासनस्यान्तिके न्यूब्जीभूयेश्वरं प्रणम्य वदन्ति,

तथास्तु धन्यवादश्च तेजो ज्ञानं प्रशंसनं । १२
शौर्य्यं पराक्रमश्चापि शक्तिश्च सर्व्वमेव तत् ।
वर्त्ततामीश्वरेऽस्माकं नित्यं नित्यं तथास्त्विति ।

ततः परं तेषां प्राचीनानाम् एको जनो मां सम्भाष्य जगाद १३ शुभ्रपरिच्छदपरिहिता इमे के? कुतो वागताः? ततो मयोक्तं १४ हे महेच्छ भवानेव तत् जानाति । तेन कथितं, इमे महाक्लेश-मध्याद् आगत्य मेषशावकस्य रुधिरेण स्वीयपरिच्छदान् प्रक्षा-लितवन्तः शुक्लीकृतवन्तश्च। तत्कारणात् त ईश्वरस्य सिंहा- १५ सनस्यान्तिके तिष्ठन्तो दिवारात्रं तस्य मन्दिरे तं सेवन्ते सिं-हासनोपविष्टो जनश्च तान् अधिस्थास्यति। तेषां क्षुधा पिपासा १६ वा पुन र्न भविष्यति रौद्रं कोप्युत्तापो वा तेषु न निपतिष्यति, यतः सिंहासनाधिष्ठानकारी मेषशावकस्तान् चारयिष्यति, १७ अमृततोयानां प्रस्रवणानां सन्निधिं तान् गमयिष्यति च, ईश्व-रोऽपि तेषां नयनेभ्यः सर्व्वमश्रु प्रमार्क्ष्यति।

---

## ८ अष्टमोऽध्यायः।

१ सप्तममुद्राया मोचनं ६ प्रथमतूर्य्या ध्वनिः ८ द्वितीयतूर्य्या ध्वनिः १० तृतीयतूर्य्या ध्वनिः १२ चतुर्थतूर्य्या ध्वनिश्च।

१ अनन्तरं सप्तममुद्रायां तेन मोचितायां सार्द्धदण्डकालं
२ स्वर्गो निःशब्दोऽभवत्। अपरम् अहम् ईश्वरस्यान्तिके तिष्ठतः
३ सप्तदूतान् अपश्यं तेभ्यः सप्ततूर्य्योऽदीयन्त। ततः परम् अन्य एको दूत आगतः स स्वर्णधूपाधारं गृहीत्वा वेदिमुपातिष्ठत् स च यत् सिंहासनस्यान्तिके स्थितायाः सुवर्णवेद्या उपरि सर्व्वेषां पवित्रलोकानां प्रार्थनासु धूपान् योजयेत् तदर्थं प्रचुर-
४ धूपास्तस्मै दत्ताः। ततस्तस्य दूतस्य करात् पवित्रलोकानां प्रार्थनाभिः संयुक्तधूपानां धूम ईश्वरस्य समक्षं उदतिष्ठत्।
५ पश्चात् स दूतो धूपाधारं गृहीत्वा वेद्या वह्निना पूरयित्वा पृथिव्यां निक्षिप्तवान् तेन रवा मेघगर्ज्जनानि विद्युतो भूमिकम्पश्चाभवन्।

६ ततः परं सप्ततूरी धारयन्तः सप्तदूतास्तूरी वादयितुम्
७ उद्यता अभवन्। प्रथमेन तूर्य्यां वादितायां रक्तमिश्रितौ शिलावह्नी सम्भूय पृथिव्यां निक्षिप्तौ तेन पृथिव्यास्तृतीयांशो दग्धः, तरूणामपि तृतीयांशो दग्धः, हरिद्वर्णतृणानि च सर्व्वाणि दग्धानि।

८ अनन्तरं द्वितीयदूतेन तूर्य्यां वादितायां वह्निना प्रज्वलितो महापर्व्वतः सागरे निक्षिप्तस्तेन सागरस्य तृतीयांशो
९ रक्तीभूतः सागरे स्थितानां सप्राणानां सृष्टवस्तूनां तृतीयांशो मृतः, अर्णवयानानाम् अपि तृतीयांशो नष्टः।

१० अपरं तृतीयदूतेन तूर्य्यां वादितायां दीप इव ज्वलन्ती

एका महती तारा गगणात् निपत्य नदीनां जलप्रस्रवणानाञ्चोपर्य्यावतीर्णा। तस्यास्ताराया नाम नागदमनकमिति, ११ तेन तोयानां तृतीयांशे नागदमनकीभूते तोयानां तिक्तत्वात् बहवो मानवा मृताः।

अपरं चतुर्थदूतेन तूर्य्यां वादितायां सूर्य्यस्य तृतीयांशश्च- १२ न्द्रस्य तृतीयांशो नक्षत्राणाञ्च तृतीयांशः प्रहृतः, तेन तेषां तृतीयांशे ऽन्धकारीभूते दिवसस्तृतीयांशकालं यावत् तेजोहीनो भवति निशापि तामेवावस्थां गच्छति। तदा निरीक्ष- १३ माणेन मयाकाशमध्येनाभिपतत एकस्य दूतस्य रवः श्रुतः स उच्चै र्गदति, अपरै र्यैस्त्रिभि र्दूतैस्तूर्य्यो वादितव्यास्तेषाम् अवशिष्टतूरीध्वनितः पृथिवीनिवासिनां सन्तापः सन्तापः सन्तापश्च सम्भविष्यति।

---

## ९ नवमोऽध्यायः।

१ पञ्चमतूरीध्वनिः, तेन तारकायाः पतनं, रसातलकूपस्य मोचनं घोरतरपतङ्गानामुत्थानं १२ षष्ठतूर्य्या ध्वनिः, तेन चतुर्दूतानां मुक्तिश्च।

ततः परं सप्तमदूतेन तूर्य्यां वादितायां गगनात् पृथिव्यां १ निपतित एकस्तारको मया दृष्टः, तस्मै रसातलकूपस्य कुञ्जिकादायि। तेन रसातलकूपे मुक्ते महाग्निकुण्डस्य धूम इव २ धूमस्तस्मात् कूपाद् उद्गतः। तस्मात् कूपधूमात् सूर्य्याकाशौ तिमिरावृतौ। तस्माद् धूमात् पतङ्गेषु पृथिव्यां निर्गतेषु नर- ३ लोकस्यवृश्चिकवत् बलं तेभ्योऽदायि। अपरं पृथिव्यास्तृणानि ४ हरिद्वर्णशाकादयो वृक्षाश्च तै र्न हिंसितव्याः किन्तु येषां भालेष्वीश्वरस्य मुद्राया अङ्को नास्ति केवलं ते मानवास्तै र्हिंसितव्या इदं त आदिष्टाः। परन्तु तेषां बधाय नहि केवलं ५

पञ्च मासान् यावत् यातनादानाय तेभ्यः सामर्थ्यमदायि। वृश्चिकेन दष्टस्य मानवस्य यादृशी यातना जायते तैरपि तादृ-
६ शी यातना प्रदीयते। तस्मिन् समये मानवा मृत्युं मृगयिष्यन्ते किन्तु प्राप्तुं न शक्ष्यन्ति, ते प्राणान् त्यक्तुम् अभिलषिष्यन्ति
७ किन्तु मृत्युस्तेभ्यो दूरं पलायिष्यते। तेषां पतङ्गानाम् आकारो युद्धार्थं सुसज्जितानाम् अश्वानाम् आकारस्य तुल्यः, तेषां शिरःसु सुवर्णकिरीटानीव किरीटानि विद्यन्ते, मुखमण्डलानि
८ च मानुषिकमुखतुल्यानि, केशाश्च योषितां केशानां सदृशाः,
९ दन्ताश्च सिंहदन्ततुल्याः, लौहकवचवत् तेषां कवचानि सन्ति, तेषां पक्षाणां शब्दो रणाय धावतामश्वरथानां समूहस्य शब्द-
१० तुल्यः। वृश्चिकानामिव तेषां लाङ्गूलानि सन्ति, तेषु लाङ्गूलेषु कण्टकानि विद्यन्ते, अपरं पञ्च मासान् यावत् मानवानां हिंस-
११ नाय ते सामर्थ्यप्राप्ताः। तेषां राजा च रसातलस्य दूतस्तस्य नाम इब्रीयभाषया अबद्दोन् यूनानीयभाषया च अपल्लुयोन्
१२ अर्थतो विनाशक इति। प्रथमः सन्तापो गतवान् पश्य इतः परमपि द्वाभ्यां सन्तापाभ्याम् उपस्थातव्यं।

१३ ततः परं षष्ठदूतेन तूर्य्यां वादितायाम् ईश्वरस्यान्तिके स्थि-
१४ तायाः सुवर्णवेद्याश्चतुःशृङ्गातः कस्यचिद् रवो मयाश्रावि। स तूरीधारिणं षष्ठदूतम् अवदत्, फराताख्ये महानदे ये चत्वारो
१५ दूता बद्धाः सन्ति तान् मोचय। ततस्तद्दण्डस्य तद्दिनस्य तन्मासस्य तद्वत्सरस्य च कृते निरूपितास्ते चत्वारो दूता मान-
१६ वानां तृतीयांशस्य वधार्थं मोचिताः। अपरम् अश्वारोहि-
१७ सैन्यानां संख्या मयाश्रावि, ते विंशतिकोटय आसन्। मया ये ऽश्वा अश्वारोहिणश्च दृष्टास्त एतादृशाः, तेषां वह्निस्वरूपाणि

नीलप्रस्तरस्वरूपाणि गन्धकस्वरूपाणि च वर्म्माण्यासन्, वाजि-
नाञ्च सिंहमूर्द्धसदृशा मूर्द्धानः, तेषां मुखेभ्यो वह्निधूमगन्धका
निर्गच्छन्ति। एतैस्त्रिभि र्दण्डैरर्थतस्तेषां मुखेभ्यो निर्गच्छद्भि १८
र्वह्निधूमगन्धकै र्मानुषाणां तृतीयांशो ऽघानि। तेषां वाजिनां १९
बलं मुखेषु लाङ्गूलेषु च स्थितं, यतस्तेषां लाङ्गूलानि सर्पाका-
राणि मस्तकविशिष्टानि च तैरेव ते हिंसन्ति। अपरम् अव- २०
शिष्टा ये मानवा तै र्दण्डै र्न हतास्ते यथा दृष्टिश्रवणगमन-
शक्तिहीनान् स्वर्णरौप्यपित्तलप्रस्तरकाष्ठमयान् विग्रहान् भू-
तांश्च न पूजयिष्यन्ति तथा स्वहस्तानां क्रियाभ्यः स्वमनांसि
न परावर्त्तितवन्तः स्वबधकुहकव्यभिचारचौर्य्येभ्यो ऽपि मनांसि २१
न परावर्त्तितवन्तः।

---

## १० दशमोऽध्यायः।

पुस्तकहस्तशक्तिमद्दिव्यदूतस्य दर्शनं, ईश्वरस्य नाम्ना तस्य शपथः, भोजनार्थं योहने पुस्तकदानञ्च।

अनन्तरं स्वर्गाद् अवरोहन् अपर एको महाबलो दूतो १
मया दृष्टः, स परिहितमेघस्तस्य शिरश्च मेघधनुषा भूषितं
मुखमण्डलञ्च सूर्य्यतुल्यं चरणौ च वह्निस्तम्भसमौ। स स्वकरेण २
विस्तीर्णमेकं क्षुद्रग्रन्थं धारयति, दक्षिणचरणेन समुद्रे वाम-
चरणेन च स्थले तिष्ठति। स सिंहगर्जनवद् उच्चैःस्वरेण न्यनदत् ३
निनादे कृते सप्त स्तनितानि स्वकीयान् स्वनान् प्राकाशयन्। तैः ४
सप्त स्तनितै र्वाक्ये कथिते ऽहं तत् लेखितुम् उद्यत आसं किन्तु
स्वर्गाद् वागियं मया श्रुता सप्त स्तनितै र्यद् यद् उक्तं तत्
मुद्रयाङ्कय मा लिख। अपरं समुद्रमेदिन्योस्तिष्ठन् यो दूतो ५
मया दृष्टः स गगनं प्रति स्वदक्षिणकरमुत्थाप्य स्वर्गस्य तन्मध्य- ६

स्थानाञ्च मेदिन्यास्तन्मध्यस्थानाञ्च समुद्रस्य तन्मध्यस्थानाञ्च सष्टुरनन्तजीविनो नाम्ना शपथमिदम् अकरोत्, पुन र्विलम्बो ७ न भविष्यति, किन्तु तूरीं वादिष्यतः सप्तमदूतस्य तूरीवादनसमय ईश्वरस्य गुप्ता मन्त्रणा तस्य दासान् भविष्यद्वादिनः प्रति ८ तेन सुसंवादे यथा प्रकाशिता तथैव सिद्धा भविष्यति। अपरं स्वर्गाद् यस्य रवो मयाश्रावि स पुन र्मां सम्भाष्यावदत् त्वं गत्वा समुद्रमेदिन्योस्तिष्ठतो दूतस्य करात् तं विस्तीर्णं क्षुद्रग्रन्थं गृ- ९ हाण, तेन मया दूतसमीपं गत्वा कथितं ग्रन्थो ऽसौ दीयतां। स माम् अवदत् तं गृहीत्वा गिल, तवोदरे स तिक्तरसो भवि- १० ष्यति किन्तु मुखे मधुवत् स्वादु र्भविष्यति। तेन मया दूतस्य कराद् ग्रन्थो गृहीतो गिलितश्च। स तु मम मुखे मधुवत् ११ स्वादुरासीत् किन्त्वदनात् परं ममोदरस्तिक्ततां गतः। ततः स माम् अवदत् बहून् जातिवंशभाषावादिराजान् अधि त्वया पुन र्भविष्यद्वाक्यं वक्तव्यं।

---

## ११ एकादशोऽध्यायः।

१ मन्दिरमापनं, द्वयोः साक्षिणोः कथनं हननं सार्द्धदिनत्रयात् परम् उत्थानं स्वर्गगमनञ्च १५ सप्तमतूर्य्या ध्वनिः १९ स्वर्गीयमन्दिरमोचनञ्च।

१ अनन्तरं परिमाणदण्डवद् एको नलो मह्यमदायि, स च दूत उपतिष्ठन् माम् अवदत्, उत्थायेश्वरस्य मन्दिरं वेदीं तत्र- २ त्यसेवकांश्च मिमीष्व। किन्तु मन्दिरस्य वहिःप्राङ्गणं त्यज न मिमीष्व यतस्तद् अन्यजातीयेभ्यो दत्तं, पवित्रं नगरञ्च द्विचत्वा- ३ रिंशन्मासान् यावत् तेषां चरणै र्मर्द्दिष्यते। पश्चात् मम द्वाभ्यां साक्षिभ्यां मया सामर्थ्यं दायिष्यते तावुष्ट्रलोमजवस्त्रपरिहितौ षष्ठ्यधिकद्विशताधिकसहस्रदिनानि यावद् भविष्यद्वाक्यानि

वदिष्यतः। तावेव जगदीश्वरस्यान्तिके तिष्ठन्तौ जितवृत्तौ ४
दीपवृत्तौ च। यदि केचित् तौ हिंसितुं चेष्टन्ते तर्हि तयो ५
र्वदनाभ्याम् अग्नि निर्गत्य तयोः शत्रून् भस्मीकरिष्यति। यः
कश्चित् तौ हिंसितुं चेष्टते तेनैवमेव विनष्टव्यं। तयो र्भविष्य- ६
द्वाक्यकथनदिनेषु यथा वृष्टि र्न जायते तथा गगनं रोद्धुं तयोः
सामर्थ्यम् अस्ति, अपरं तोयानि शोणितरूपाणि कर्त्तुं निजा-
भिलाषात् मुहुर्मुहुः सर्व्वविधदण्डैः पृथिवीम् आहन्तुञ्च तयोः
सामर्थ्यमस्ति। अपरं तयोः साक्ष्ये समाप्ते सति रसातलाद् ७
येनोत्थितव्यं स पशुस्ताभ्यां सह युद्ध्वा तौ जेष्यति हनिष्यति च।
ततस्तयोः प्रभुरपि यस्यां महापुर्य्यां क्रुशे हतो ऽर्थतो यस्याः ८
पारमार्थिकनाम्नी सिदोमं मिसरश्चेति तस्या महापुर्य्याः सन्नि-
वेशे तयोः कुणपे स्थास्यतः। ततो नानाजातीया नानावंशीया ९
नानाभाषावादिनो नानादेशीयाश्च बहवो मानवाः सार्द्धदिन-
त्रयं तयोः कुणपे निरीक्षिष्यन्ते, तयोः कुणपयोः श्मशाने
स्थापनं नानुज्ञास्यन्ति। पृथिवीनिवासिनश्च तयो र्हेतोरान- १०
न्दिष्यन्ति सुखभोगं कुर्व्वन्तः परस्परं दानानि प्रेषयिष्यन्ति
च यतस्ताभ्यां भविष्यद्वादिभ्यां पृथिवीनिवासिनो यातनां
प्राप्ताः। तस्मात् सार्द्धदिनत्रयात् परम् ईश्वरात् जीवनदायक ११
आत्मनि तौ प्रविष्टे तौ चरणैरुदतिष्ठतां, तेन यावन्तस्ताव-
पश्यन् ते ऽतीव त्रासयुक्ता अभवन्। ततः परं तौ स्वर्गाद् उच्चै- १२
रिदं कथयन्तं रवम् अशृणुतां युवां स्थानम् एतद् आरोहतां
ततस्तयोः शत्रुषु निरीक्षमाणेषु तौ मेघेन स्वर्गम् आरूढवन्तौ।
तद्दण्डे महाभूमिकम्पे जाते पुर्य्या दशमांशः पतितः सप्तसह- १३
स्राणि मानुषाश्च तेन भूमिकम्पेन हताः, अवशिष्टाश्च भयं गत्वा

१४ स्वर्गीयेश्वरस्य प्रशंसाम् अकीर्त्तयन्। द्वितीयः सन्तापो गतः पश्य तृतीयः सन्तापस्तूर्णम् आगच्छति।

१५ अनन्तरं सप्तमदूतेन तूर्य्यां वादितायां स्वर्ग उच्चैः स्वरैर्वागियं कीर्त्तिता,

राजत्वं जगतो यद्यद् राज्यं तदधुनाभवत्।
अस्मत्प्रभोस्तदीयाभिषिक्तस्य तारकस्य च।
तेन चानन्तकालीयं राजत्वं प्रकरिष्यते॥

१६ अपरम् ईश्वरस्यान्तिके स्वकीयसिंहासनेषूपविष्टाश्चतुर्विंशतिप्राचीना भुवि न्यङ्मुखा भूत्वेश्वरं प्रणम्यावदन्,

१७ हे भूत वर्त्तमानापि भविष्यंश्च परेश्वर।
हे सर्व्वशक्तिमन् स्वामिन् वयं ते कुर्म्महे स्तवं।
यत् त्वया क्रियते राज्यं गृहीत्वा ते महाबलं।

१८ विजातीयेषु कुप्यत्सु प्रादुर्भूता तव क्रुधा।
मृतानामपि कालो ऽसौ विचारो भविता यदा।
भृत्याश्च तव यावन्तो भविष्यद्वादिसाधवः।
ये च क्षुद्रा महान्तो वा नामतस्ते हि बिभ्यति।
यदा सर्व्वेभ्य एतेभ्यो वेतनं वितरिष्यते।
गन्तव्यश्च यदा नाशो वसुधाया विनाशकैः॥

१९ अनन्तरम् ईश्वरस्य स्वर्गस्थमन्दिरस्य द्वारं मुक्तं तन्मन्दिरमध्ये च नियममञ्जूषा दृश्याभवत्, तेन तडितो रवाः स्तनितानि भूमिकम्पो गुरुतरशिलावृष्टिश्चैतानि समभवन्।

---

# १२ द्वादशोऽध्यायः।

१ आश्चर्य्ययोषिदेकाया दर्शनं तस्याः प्रसवः, पुत्त्रेण सार्द्धं नागात् प्रान्तरं प्रति प्रलायनं ७ मीखायेलनागयो र्युद्धं नागस्य पराभवस्तद्योषितस्ताडनञ्च।

ततः परं स्वर्गे महाचित्रं दृष्टं योषिदेकासीत् सा परिहितसूर्य्या चन्द्रश्च तस्याश्चरणयोरधो द्वादशताराणां किरीटञ्च शिरस्यासीत्। सा गर्भवती सती प्रसववेदनया व्यथिताऽऽर्त्तरावम् अकरोत्। ततः स्वर्गे ऽपरम् एकं चित्रं दृष्टं महानाग एक उपातिष्ठत् स लोहितवर्णस्तस्य सप्त शिरांसि सप्त शृङ्गाणि शिरःसु च सप्त किरीटान्यासन्। स स्वलाङ्गूलेन गगनस्थनक्षत्राणां तृतीयांशम् अवमृज्य पृथिव्यां न्यपातयत्। स एव नागो नवजातं सन्तानं ग्रसितुम् उद्यतस्तस्याः प्रसविष्यमाणाया योषितो ऽन्तिके ऽतिष्ठत्। सा तु पुंसन्तानं प्रसूता स एव लौहमयराजदण्डेन सर्व्वजातीश्चारयिष्यति, किञ्च तस्याः सन्तान ईश्वरस्य समीपं तदीयसिंहासनस्य च सन्निधिम् उद्धृतः। सा च योषित् प्रान्तरं पलायिता यतस्तत्रेश्वरेण निर्म्मित आश्रमे षष्ठ्यधिकशतद्वयाधिकसहस्रदिनानि तस्याः पालनेन भवितव्यं। १ २ ३ ४ ५ ६

ततः परं स्वर्गे संग्राम उपापिष्ठत् मीखायेलस्तस्य दूताश्च तेन नागेन सहायुध्यन् तथा स नागस्तस्य दूताश्च संग्रामम् अकुर्व्वन्, किन्तु प्रभवितुं नाशक्नुवन् यतः स्वर्गे तेषां स्थानं पुन र्नाविद्यत। अपरं स महानागो ऽर्थतो दियावलः (अपवादकः) शयतानश्च (विपक्षः) इति नाम्ना विख्यातो यः पुरातनः सर्पः कृत्स्नं नरलोकं भ्रामयति स पृथिव्यां निपातितस्तेन सार्द्धं तस्य दूता अपि तत्र निपातिताः। ततः परं स्वर्गे उच्चै र्भाषमाणो रवो ऽयं मयाश्रावि, ७ ८ ९ १०

चाणं शक्तिश्च राजत्वमधुनैवेश्वरस्य नः।
तथा तेनाभिषिक्तस्य चातुः पराक्रमो ऽभवत्॥
यतो निपातितो ऽस्माकं भ्रातृणां सो ऽभियोजकः।
येनेश्वरस्य नः साक्षात् ते ऽदूष्यन्त दिवानिशं॥
११ मेषवत्सस्य रक्तेन स्वसाक्ष्यवचनेन च।
ते तु निर्जितवन्तस्तं न च स्नेहम् अकुर्व्वत।
प्राणेष्वपि स्वकीयेषु मरणस्यैव सङ्कटे।
१२ तस्माद् आनन्दतु स्वर्गो हृष्यन्तां तन्निवासिनः।
हा भूमिसागरौ तापो युवामेवाक्रमिष्यति।
युवयोरवतीर्णो यत् शैतानो ऽतीव कोपनः।
अल्पो मे समयो ऽस्त्येतच्चापि तेनावगम्यते॥

१३ अनन्तरं स नागः पृथिव्यां स्वं निक्षिप्तं विलोक्य तां पुत्रप्रसूतां
१४ योषितम् उपाद्रवत्। ततः सा योषित् यत् स्वकीयं प्रान्तरस्थाश्रमं प्रत्युत्पतितुं शक्नुयात् तदर्थं महाकुररस्य पक्षद्वयं तस्यै दत्तं, सा तु तत्र नागतो दूरे कालैकं कालद्वयं कालार्द्धञ्च
१५ यावत् पाल्यते। किञ्च स नागस्तां योषितं स्रोतसा प्लावयितुं
१६ स्वमुखात् नदीवत् तोयानि तस्याः पश्चात् प्राक्षिपत्। किन्तु मेदिनी योषितम् उपकुर्व्वती निजवदनं व्यादाय नागमुखाद्
१७ उद्गीर्णां नदीम् अपिबत्। ततो नागो योषिते क्रुद्धो तद्वंशस्यावशिष्टलोकैरर्थतो य ईश्वरस्याज्ञाः पालयन्ति यीशोः साक्ष्यं धारयन्ति च तैः सह योद्धुं निर्गतवान्।

---

## १३ त्रयोदशो ऽध्यायः।

१ सप्तशीर्षदशशृङ्गदशकिरीटविशिष्टपशोः सागरादुत्थानं तस्मै नागपराक्रमदानं

११ धरणीतो द्वितीयपशोरुत्थानं पूर्व्वीयपशोः प्रतिमानिर्म्माणं सर्व्वै र्लोकैस्तत्पूजनञ्च।

ततः परमहं सागरीयसिकतायां तिष्ठन् सागराद् उद्ग- १
च्छन्तम् एकं पशुं दृष्टवान् तस्य दश शृङ्गाणि सप्त शिरांसि च
दश शृङ्गेषु दश किरीटानि शिरःसु चेश्वरनिन्दासूचकानि
नामानि विद्यन्ते। मया दृष्टः स पशुश्चित्रव्याघ्रसदृशः किन्तु २
तस्य चरणौ भल्लूकस्येव वदनञ्च सिंहवदनमिव। नागेन तस्मै
स्वीयपराक्रमः स्वीयं सिंहासनं महाधिपत्यञ्चादायि। मयि ३
निरीक्षमाणे तस्य शिरसाम् एकम् अन्तकाघातेन छेदितमिवा-
दृश्यत, किन्तु तस्यान्तकक्षतस्य प्रतीकारो ऽक्रियत ततः कृत्स्नो
नरलोकस्तं पशुमधि चमत्कारं गतः, यश्च नागस्तस्मै पशवे ४
सामर्थ्यं दत्तवान् सर्व्वे तं प्राणमन् पशुमपि प्रणमन्तो ऽकथयन्,

को विद्यते पशोस्तुल्यस्तेन को योद्धुमर्हति।

अनन्तरं तस्मै दर्पवाक्येश्वरनिन्दावादि वदनं द्विचत्वारिंश- ५
न्मासान् यावद् अवस्थितेः सामर्थ्यञ्चादायि। ततः स ईश्वर- ६
निन्दनार्थं मुखं व्यादाय तस्य नाम तस्यावासं स्वर्गनिवासिनश्च
निन्दितुम् आरभत। अपरं धार्म्मिकैः सह योधनस्य तेषां ७
पराजयस्य चानुमतिः सर्व्वजातीयानां सर्व्ववंशीयानां सर्व्व-
भाषावादिनां सर्व्वदेशीयानाञ्चाधिपत्यमपि तस्मा अदायि।
ततो जगतः सृष्टिकालात् छेदितस्य मेषवत्सस्य जीवनपुस्तके ८
यावतां नामानि लिखितानि न विद्यन्ते ते पृथिवीनिवासिनः
सर्व्वे तं पशुं प्रणंस्यन्ति। यस्य श्रोत्रं विद्यते स शृणोतु। यो ९
जनो ऽपरान् वन्दीकृत्य नयति स स्वयं वन्दीभूय स्थानान्तरं १०
गमिष्यति, यश्च खड्गेन हन्ति स स्वयं खड्गेन घानिष्यते। अत्र
पवित्रलोकानां सहिष्णुतया विश्वासेन च प्रकाशितव्यं।

११ अनन्तरं पृथिवीत उद्गच्छन् अपर एकः पशु र्मया दृष्टः स
१२ मेषशावकवत् शृङ्गद्वयविशिष्ट आसीत् नागवच्चाभाषत। स
प्रथमपशोरन्तिके तस्य सर्व्वं पराक्रमं व्यवहरति विशेषतो यस्य
प्रथमपशोरन्तिकक्षतं प्रतीकारं गतं तस्य पूजां पृथिवीं तन्निवा-
१३ सिनश्च कारयति। अपरं मानवानां साक्षाद् आकाशतो भुवि
१४ वह्निवर्षणादीनि महाचित्राणि करोति। तस्य पशोः साक्षाद्
येषां चित्रकर्म्मणां साधनाय सामर्थ्यं तस्मै दत्तं तैः स पृथिवी-
निवासिनो भ्रामयति, विशेषतो यः पशुः खड्गेन क्षतयुक्तो भूत्वा-
प्यजीवत् तस्य प्रतिमानिर्म्माणं पृथिवीनिवासिन आदिशति।
१५ अपरं तस्य पशोः प्रतिमा यथा भाषते यावन्तश्च मानवास्तां
पशुप्रतिमां न पूजयन्ति ते यथा हन्यन्ते तथा पशुप्रतिमायाः
१६ प्राणप्रतिष्ठार्थं सामर्थ्यं तस्मा अदायि। अपरं क्षुद्रमहद्धनि-
दरिद्रमुक्तदासान् सर्व्वान् दक्षिणकरे भाले वा कलङ्कं ग्राह-
१७ यति। तस्माद् ये तं कलङ्कमर्थतः पशो र्नाम तस्य नाम्नः संख्याङ्कं
वा धारयन्ति तान् विना परेण केनापि क्रयविक्रये कर्त्तुं न
१८ शक्येते। अत्र ज्ञानेन प्रकाशितव्यं। यो बुद्धिविशिष्टः स पशोः
संख्यां गणयतु यतः सा मानवस्य संख्या भवति। सा च संख्या
षट्षष्ठ्यधिकषट्शतानि।

---

## १४ चतुर्द्दशोऽध्यायः।

१ सियोनपर्व्वते स्वीयलोकैः सार्द्धं ख्रीष्टस्य दर्शनं ६ सुसंवादप्रचारिणो बाबिल्-विनाशप्रकाशिनो दूतस्य दर्शनं १४ ईश्वरस्य कोपस्वरूपं शस्यच्छेदनं द्राक्षाफल-मर्द्दनञ्च।

१ ततः परं निरीक्षमाणेन मया मेषशावको दृष्टः स सियोन-
पर्व्वतस्योपर्य्यतिष्ठत्, अपरं येषां भालेषु तस्य नाम तत्पितुश्च

नाम लिखितमास्ते तादृशाश्चतुश्चत्वारिंशत्सहस्राधिका लक्ष-
लोकास्तेन सार्द्धम् आसन्। अनन्तरं बहुतोयानां रव इव गुरु- २
तरस्तनितस्य च रव इव एको रवः स्वर्गात् मयाश्रावि। मया
श्रुतः स रवो वीणावादकानां वीणावादनस्य सदृशः। सिंहा- ३
सनस्यान्तिके प्राणिचतुष्टयस्य प्राचीनवर्गस्य चान्तिके ऽपि ते
नवीनमेकं गीतम् अगायन् किन्तु धरणीतः परिक्रीतान् तान्
चतुश्चत्वारिंशत्सहस्राधिकलक्षलोकान् विना नापरेण केनापि
तद् गीतं शिक्षितुं शक्यते। इमे योषितां सङ्गेन न कलङ्किता ४
यतस्ते ऽमैथुना मेषशावको यत् किमपि स्थानं गच्छेत् तत्सर्व्व-
स्मिन् स्थाने तम् अनुगच्छन्ति यतस्ते मनुष्याणां मध्यतः प्रथम-
फलानीवेश्वरस्य मेषशावकस्य च कृते परिक्रीताः। तेषां वदनेषु ५
चानृतं किमपि न विद्यते यतस्ते निर्द्दोषा ईश्वरसिंहासनस्या-
न्तिके तिष्ठन्ति।

अनन्तरम् आकाशमध्येनोड्डीयमानो ऽपर एको दूतो ६
मया दृष्टः सो ऽनन्तकालीयं सुसंवादं धारयति स च सुसंवादः
सर्व्वजातीयान् सर्व्ववंशीयान् सर्व्वभाषावादिनः सर्व्वदेशीयांश्च
पृथिवीनिवासिनः प्रति तेन घोषितव्यः। स उच्चैःस्वरेणेदं गदति ७
यूयमीश्वराद् बिभीत तस्य स्तवं कुरुत च यतस्तदीयविचारस्य
दण्ड उपातिष्ठत् तस्माद् आकाशमण्डलस्य पृथिव्याः समुद्रस्य
तोयप्रस्रवणानाञ्च स्रष्टा युष्माभिः प्रणम्यतां। तत्पश्चाद् द्वितीय ८
एको दूत उपस्थायावदत् पतिता पतिता सा महाबाबिल् या
सर्व्वजातीयान् स्वकीयं व्यभिचाररूपं क्रोधमदम् अपाययत्।
तत्पश्चात् तृतीयो दूत उपस्थायोच्चैरवदत्, यः कश्चित तं पशुं ९
तस्य प्रतिमाञ्च प्रणमति स्वभाले स्वकरे वा कलङ्कं गृह्लाति च

१० सो ऽपीश्वरस्य क्रोधपात्रे स्थितम् अमिश्रितं मदम् अर्थत ईश्वरस्य क्रोधमदं पास्यति पवित्रदूतानां मेषशावकस्य च साक्षाद् वह्नि-
११ गन्धकयो र्यातनां लप्स्यते च। तेषां यातनाया धूमो ऽनन्त-कालं यावद् उद्गमिष्यति ये च पशुं तस्य प्रतिमाञ्च पूजयन्ति तस्य नाम्नो ऽङ्कं वा गृह्लन्ति ते दिवानिशं कञ्चन विरामं न
१२ प्राप्स्यन्ति। ये मानवा ईश्वरस्याज्ञा यीशौ विश्वासञ्च पाल-
१३ यन्ति तेषां पवित्रलोकानां सहिष्णुतयात्र प्रकाशितव्यं। अपरं स्वर्गात् मया सह सम्भाषमाण एको रवो मयाश्रावि तेनोक्तं त्वं लिख, इदानीमारभ्य ये प्रभौ म्रियन्ते ते मृता धन्या इति; आत्मा भाषते सत्यं स्वश्रमेभ्यस्तै र्विरामः प्राप्तव्यः, तेषां कर्म्माणि च तान् अनुगच्छन्ति।

१४ तदनन्तरं निरीक्षमाणेन मया श्वेतवर्ण एको मेघो दृष्ट-स्तन्मेघारूढो जनो मानवपुत्राकृतिरस्ति तस्य शिरसि सुवर्ण-
१५ किरीटं करे च तीक्ष्णं दात्रं तिष्ठति। ततः परम् अन्य एको दूतो मन्दिरात् निर्गत्योच्चैःस्वरेण तं मेघारूढं सम्भाष्यावदत् त्वया दात्रं प्रसार्य्य शस्यच्छेदनं क्रियतां शस्यच्छेदनस्य समय
१६ उपस्थितो यतो मेदिन्याः शस्यानि परिपक्वानि। ततस्तेन मेघा-
१७ रूढेन पृथिव्यां दात्रं प्रसार्य्य पृथिव्याः शस्यच्छेदनं कृतं। अन-न्तरम् अपर एको दूतः स्वर्गस्थमन्दिरात् निर्गतः सो ऽपि
१८ तीक्ष्णं दात्रं धारयति। अपरम् अन्य एको दूतो वेदितो निर्गतः स वह्नेरधिपतिः स उच्चैःस्वरेण तं तीक्ष्णदात्रधारिणं सम्भाष्यावदत् त्वया स्वं तीक्ष्णं दात्रं प्रसार्य्य मेदिन्या द्राक्षागु-
१९ च्छच्छेदनं क्रियतां यतस्तत्फलानि परिणतानि। ततः स दूतः पृथिव्यां स्वदात्रं प्रसार्य्य पृथिव्या द्राक्षाफलच्छेदनम् अकरोत्

तत्फलानि चेश्वरस्य क्रोधस्वरूपस्य महाकुण्डस्य मध्यं निरक्षि-
पत्। तत्कुण्डस्थफलानि च बहि र्मर्द्दितानि ततः कुण्डमध्यात् २०
निर्गतं रक्तं क्रोशशतपर्य्यन्तम् अश्वानां खलीनान् यावद् व्याप्नोत्।

---

## १५ पञ्चदशोऽध्यायः।

१ सप्तोत्पातकारिणां सप्तदूतानां दर्शनं, पशुजयिनां गीतं ५ ईश्वरकोपसप्तपात्राणां प्रकाशश्च।

ततः परम् अहं स्वर्गे ऽपरम् एकम् अद्भुतं महाचिह्नं दृष्ट- १
वान् अर्थतो ये दण्डैरीश्वरस्य कोपः समाप्तिं गमिष्यति तान्
दण्डान् धारयन्तः सप्त दूता मया दृष्टाः। वह्निमिश्रितस्य २
काचमयस्य जलाशयस्याकृतिरपि दृष्टा ये च पशोस्तत्प्रति-
मायास्तन्नाम्नो ऽङ्कस्य च प्रभूतवन्तस्ते तस्य काचमयजलाशयस्य
तीरे तिष्ठन्त ईश्वरीयवीणा धारयन्ति, ईश्वरदासस्य मूससो ३
गीतं मेषशावकस्य च गीतं गायन्तो वदन्ति, यथा,

सर्व्वशक्तिविशिष्टस्त्वं हे प्रभो परमेश्वर।
त्वदीयसर्व्वकर्म्माणि महान्ति चाद्भुतानि च।
सर्व्वपुण्यवतां राजन् मार्गा न्याय्या ऋतास्च ते।
हे प्रभो नामधेयात्ते को न भीतिं गमिष्यति। ४
को वा त्वदीयनाम्नश्च प्रशंसां न करिष्यति।
केवलस्त्वं पवित्रो ऽसि सर्व्वजातीयमानवाः।
त्वामेवाभिप्रणंस्यन्ति समागत्य त्वदन्तिकं।
यस्मात्तव विचाराज्ञाः प्रादुर्भावं गताः किल॥

तदनन्तरं मयि निरीक्षमाणे सति स्वर्गे साक्ष्यावासस्य ५
मन्दिरस्य द्वारं मुक्तं। ये च सप्त दूताः सप्त दण्डान् धारयन्ति ६
ते तस्मात् मन्दिरात् निरगच्छन्। तेषां परिच्छदा निर्म्मल-

शुभ्रवर्णवस्त्रनिर्म्मिता वक्षांसि च सुवर्णशृङ्खलै वेष्टितान्यासन्।
७ अपरं चतुर्णां प्राणिनाम् एकस्तेभ्यः सप्तदूतेभ्यः सप्तसुवर्णकंसान्
८ अददात्। अनन्तरम् ईश्वरस्य तेजःप्रभावकारणात् मन्दिरं धूमेन परिपूर्णं तस्मात् तैः सप्तदूतैः सप्तदण्डानां समाप्तिं यावत् मन्दिरं केनापि प्रवेष्टुं नाशक्यत।

## १६ षोडशोऽध्यायः।

१ पात्रावतारणं २ प्रथमपात्रावतारणं ३ द्वितीयपात्रावतारणं ४ तृतीयपात्रावतारणं ८ चतुर्थपात्रावतारणं १० पञ्चमपात्रावतारणं १२ षष्ठपात्रावतारणं १७ सप्तमपात्रावतारणञ्च।

१ ततः परं मन्दिरात् तान् सप्तदूतान् सम्भाषमाण एष महारवो मयाश्रावि, यूयं गत्वा तेभ्यः सप्तकंसेभ्य ईश्वरस्य क्रोधं पृथिव्यां स्रावयत।

२ ततः प्रथमो दूतो गत्वा स्वकंसे यद्यद् अविद्यत तत् पृथिव्याम् अस्रावयत् तस्मात् पशोः कलङ्कधारिणां तत्प्रतिमापूजकानां मानवानां शरीरेषु व्यथाजनका दुष्टव्रणा अभवन्।

३ ततः परं द्वितीयो दूतः स्वकंसे यद्यद् अविद्यत तत् समुद्रेऽस्रावयत् तेन स कुणपस्थशोणितरूप्यभवत् समुद्रे स्थिताश्च सर्व्वे प्राणिनो मृत्युं गताः।

४ अपरं तृतीयो दूतः स्वकंसे यद्यद् अविद्यत तत् सर्व्वं नदीषु जलप्रस्रवणेषु चास्रावयत् ततस्तानि रक्तमयान्यभवन्। अपरं तोयानाम् अधिपस्य दूतस्य वागियं मया श्रुता।

५ वर्त्तमानश्च भूतश्च भविष्यंश्च परेश्वरः।
त्वमेव न्याय्यकारी यद् एतादृक् त्वं व्यचारयः।

६ भविष्यद्वादिसाधूनां रक्तं तैरेव पातितं।
शोणितं त्वन्तु तेभ्यो ऽदास्तत्पानं तेषु युज्यते॥

अनन्तरं वेदीतो भाषमाणस्य कस्यचिद् अयं रवो मया श्रुतः, ७

हे परेश्वर सत्यं तत् हे सर्व्वशक्तिमन् प्रभो।

सत्या न्याय्याश्च सर्व्वा हि विचाराज्ञास्त्वदीयकाः॥

अनन्तरं चतुर्थो दूतः स्वकंसे यद्यद् अविद्यत तत् सर्व्वं सूर्य्ये ८
ऽस्रावयत् तस्मै च वह्निना मानवान् दग्धुं सामर्थ्यम् अदायि। तेन ९
मनुष्या महातापेन तापितास्तेषां दण्डानाम् आधिपत्यविशिष्ट-
स्येश्वरस्य नामानिन्दन् तत्प्रशंसार्थञ्च मनःपरिवर्त्तनं नाकुर्व्वन्।

ततः परं पञ्चमो दूतः स्वकंसे यद्यद् अविद्यत तत् सर्व्वं १०
पशोः सिंहासने ऽस्रावयत् तेन तस्य राष्ट्रं तिमिराच्छन्नम्
अभवत् लोकाश्च वेदनाकारणात् स्वरसना अदंदश्यत। स्वकी- ११
यव्यथाव्रणकारणाच्च स्वर्गस्थम् ईश्वरम् अनिन्दन् स्वक्रिया-
भ्यश्च मनांसि न परावर्त्तयन्।

ततः परं षष्ठो दूतः स्वकंसे यद्यद् अविद्यत तत् सर्व्वं १२
फराताख्ये महानदे ऽस्रावयत् तेन सूर्य्योदयदिश आगमि-
ष्यतां राज्ञां मार्गसुगमार्थं तस्य तोयानि पर्य्यशुष्यन्। अन- १३
न्तरं नागस्य वदनात् पशो र्वदनात् मिथ्याभविष्यद्वादिनश्च
वदनात् निर्गच्छन्तस्त्रयो ऽशुचय आत्मानो मया दृष्टास्ते
मण्डूकाकाराः। त आश्चर्य्यकर्म्मकारिणो भूतानाम् आत्मानः १४
सन्ति सर्व्वशक्तिमत ईश्वरस्य महादिने येन युद्धेन भवितव्यं
तत्कृते कृत्स्नजगतो राज्ञः संग्रहीतुं तेषां सन्निधिं निर्गच्छन्ति।
अपरम् इब्रिभाषया हर्म्मगिद्दोनामकस्थाने ते सङ्गृहीताः। १५
पश्याहं चैरवद् आगच्छामि यो जनः प्रबुद्धस्तिष्ठति यथा १६
च नग्नः सन् न पर्य्यटति तस्य लज्जा च यथा दृश्या न भवति
तथा स्ववासांसि रक्षति स धन्यः।

१७ ततः परं सप्तमो दूतः स्वकंसे यद्यद् अविद्यत तत् सर्व्वम् आकाशे ऽस्रावयत् तेन स्वर्गीयमन्दिरमध्यस्थसिंहासनात् १८ महारवो ऽयं निर्गतः समाप्तिरभवदिति। तदनन्तरं तडितो रवाः स्तनितानि चाभवन्, यस्मिन् काले च पृथिव्यां मनुष्याः सृष्टास्तम् आरभ्य यादृङ्महाभूमिकम्पः कदापि नाभवत् ता- १९ दृग् भूकम्पो ऽभवत्। तदानीं महानगरी त्रिखण्डा जाता भिन्न- जातीयानां नगराणि च न्यपतन् महाबाबिल् चेश्वरेण स्वकीय- २० प्रचण्डकोपमदिरापात्रदानार्थं संस्मृता। द्वीपाश्च पलायिता २१ गिरयश्चान्तर्हिताः। गगनमण्डलाच्च मनुष्याणाम् उपर्य्येकैक- द्रोणपरिमितशिलानां महावृष्टिरभवत् तच्छिलावृष्टेः क्लेशात् मनुष्या ईश्वरम् अनिन्दन् यतस्तज्जातः क्लेशो ऽतीव महान्।

---

## १७ सप्तदशोऽध्यायः।

सप्तशीर्षदशशृङ्गविशिष्टस्य पशोरुपरि बाबिल्नामिकाया वेश्याया आरोहणं सप्तशीर्षदशशृङ्गाणां तात्पर्य्यं तेषां दण्डनं ख्रीष्टस्य जयनञ्च।

१ तदनन्तरं तेषां सप्तकंसधारिणां सप्तदूतानाम् एक आ- २ गत्य मां सम्भाष्यावदत्, अत्रागच्छ, मेदिन्या नरपतयो यया वेश्यया सार्द्धं व्यभिचारकर्म्म कृतवन्तः, यस्या व्यभिचारमदेन च पृथिवीनिवासिनो मत्ता अभवन् तस्या बहुतोयेषूपवि- ३ ष्टाया महावेश्याया दण्डम् अहं त्वां दर्शयामि। ततो ऽहम् आत्मनाविष्टस्तेन दूतेन प्रान्तरं नीतस्तत्र निन्दानामभिः परि- पूर्णं सप्तशिरोभि र्दशशृङ्गैश्च विशिष्टं सिन्दूरवर्णं पशुमुप- ४ विष्टा योषिदेका मया दृष्टा। सा नारी कृष्णलोहितवर्णं सिन्दूरवर्णञ्च परिच्छदं धारयति स्वर्णमणिमुक्ताभिश्च विभू- षितास्ति तस्याः करे घृणार्हद्रव्यैः स्वव्यभिचारजातमलैश्च परि-

पूर्ण एकः सुवर्णमयः कंसो विद्यते। तस्या भाले निगूढवाक्य- ५
मिदं पृथिवीस्थवेश्यानां घृण्यक्रियाणाञ्च माता महाबाबिलिति
नाम लिखितम् आस्ते। मम दृष्टिगोचरस्था सा नारी पवित्र- ६
लोकानां रुधिरेण यीशोः साक्षिणां रुधिरेण च मत्तासीत्
तस्या दर्शनात् ममातिशयम् आश्चर्य्यज्ञानं जातं। ततः स दूतो ७
माम् अवदत् कुतस्तवाश्चर्य्यज्ञानं जायते? अस्या योषितस्तद्वा-
हनस्य सप्तशिरोभि र्दशशृङ्गैश्च युक्तस्य पशोश्च निगूढभावम्
अहं त्वां ज्ञापयामि। त्वया दृष्टो ऽसौ पशुरासीत् नेदानीं ८
वर्त्तते किन्तु रसातलात् तेनोदेतव्यं विनाशश्च गन्तव्यः। ततो
येषां नामानि जगतः सृष्टिकालम् आरभ्य जीवनपुस्तके लिखि-
तानि न विद्यन्ते ते पृथिवीनिवासिनो भूतम् अवर्त्तमानमुप-
स्थास्यन्तञ्च तं पशुं दृष्ट्वाश्चर्य्यं मंस्यन्ते। अत्र ज्ञानयुक्तया बुद्ध्या ९
प्रकाशितव्यं। तानि सप्तशिरांसि तस्या योषित उपवेशनस्थान-
स्वरूपाः सप्तगिरयः सप्त राजानश्च सन्ति। तेषां पञ्च पतिता १०
एकश्च वर्त्तमानः शेषश्चाद्याप्यनुपस्थितः स यदोपस्थास्यति
तदापि तेनाल्पकालं स्थातव्यं। यः पशुरासीत् किन्त्विदानीं न ११
वर्त्तते स एवाष्टमः, स सप्तानाम् एको ऽस्ति विनाशं गमिष्यति
च। त्वया दृष्टानि दशशृङ्गाण्यपि दश राजानः सन्तिः, अद्यापि १२
ते राज्यं न प्राप्तं किन्तु मुहूर्त्तमेकं यावत् पशुना सार्द्धं ते रा-
जान इव प्रभुत्वं प्राप्स्यन्ति। त एकमन्त्रणा भविष्यन्ति स्वकीय- १३
शक्तिप्रभावौ पशवे दास्यन्ति च। ते मेषशावकेन सार्द्धं यो- १४
त्स्यन्ति, किन्तु मेषशावकस्तान् जेष्यति यतः स प्रभूनां प्रभू
राज्ञां राजा चास्ति तस्य सङ्गिनो ऽप्याहूता अभिरुचिता वि-
श्वास्याश्च। अपरं स माम् अवदत् सा वेश्या यत्रोपविशति तानि १५

तोयानि लोका जनता जातयो नानाभाषावादिनश्च सन्ति।
१६ त्वया दृष्टानि दश शृङ्गाणि पशुश्चेमे तां वेश्याम् ऋतीयिष्यन्ते
दीनां नग्नाञ्च करिष्यन्ति तस्या मांसानि भोच्यन्ते वह्निना
१७ तां दाहयिष्यन्ति च। यत ईश्वरस्य वाक्यानि यावत् सिद्धिं
न गमिष्यन्ति तावद् ईश्वरस्य मनोगतं साधयितुम् एकां
मन्त्रणां कृत्वा तस्मै पशवे स्वेषां राज्यं दातुञ्च तेषां मनांसी-
१८ श्वरेण प्रवर्त्तितानि। अपरं त्वया दृष्टा योषित् सा महानगरी
या पृथिव्या राज्ञाम् उपरि राजत्वं कुरुते।

---

## १८ अष्टादशोऽध्यायः।

१ बाबिलोऽधःपतनं तस्माद् ईश्वरस्य लोकानां निर्गमनं, तदर्थं राज्ञां बाणिज्यकारिणां पोतीयलोकानाञ्च विलपनं, ईश्वरस्य लोकानाम् आनन्दः २१ बाबिलः पतनस्य दृष्टान्तश्च।

१ तदनन्तरं स्वर्गाद् अवरोहन् अपर एको दूतो मया दृष्टः
२ स महापराक्रमविशिष्टस्तस्य तेजसा च पृथिवी दीप्ता। स
बलवता स्वरेण वाचमिमाम् अघोषयत् पतिता पतिता महा-
बाबिल्, सा भूतानां वसतिः सर्व्वेषाम् अशुच्यात्मनां कारा
३ सर्व्वेषाम् अशुचीनां घृण्यानाञ्च पक्षिणां पिञ्जरश्चाभवत्। यतः
सर्व्वजातीयास्तस्या व्यभिचारजातां कोपमदिरां पीतवन्तः
पृथिव्या राजानश्च तया सह व्यभिचारं कृतवन्तः पृथिव्या बणि-
४ जश्च तस्याः सुखभोगबाहुल्याद् धनाढ्यतां गतवन्तः। ततः
परं स्वर्गात् मयापर एष रवः श्रुतः, हे मम प्रजाः, यूयं यत्
तस्याः पापानाम् अंशिनो न भवत तस्या दण्डैश्च दण्डयुक्ता न
५ भवत तदर्थं ततो निर्गच्छत। यतस्तस्याः पापानि गगनस्पर्शा-
६ न्यभवन् तस्या अधर्म्मक्रियाश्चेश्वरेण संस्मृताः। परान् प्रति

तया यद्वद् व्यवहृतं तद्वत् तां प्रति व्यवहरत, तस्याः कर्म्मणां द्विगुणफलानि तस्यै दत्त, यस्मिन् कंसे सा परान् मद्यम् अपाययत् तमेव तस्याः पानार्थं द्विगुणमद्येन पूरयत। तया यात्म- ७ श्लाघा यश्च सुखभोगः कृतस्तयो र्द्विगुणौ यातनाशोकौ तस्यै दत्त, यतः सा स्वकीयान्तःकरणे वदति, राज्ञीवद् उपविष्टाहं नानाथा न च शोकवित्। तस्माद् दिवस एकस्मिन् मारीदु- ८ र्भिक्षशोचनैः, सा समाप्लोष्यते नारी ध्यक्ष्यते वह्निना च सा; यद् विचाराधिपस्तस्या बलवान् प्रभुरीश्वरः, व्यभिचारस्तया ९ सार्द्धं सुखभोगश्च यैः कृतः, ते सर्व्व एव राजानस्तद्दाहधूमदर्श- नात्, प्ररोदिष्यन्ति वक्षांसि चाहनिष्यन्ति बाहुभिः। तस्यास्तै १० र्यातनाभीते दूरे स्थित्वेदमुच्यते, हा हा बाबिल् महास्थान हा प्रभावान्विते पुरि, एकस्मिन् आगता दण्डे विचाराज्ञा त्वदीयका। मेदिन्या वणिजश्च तस्याः कृते रुदन्ति शोचन्ति ११ च यतस्तेषां पण्यद्रव्याणि केनापि न क्रीयन्ते। फलतः सुवर्ण- १२ रौप्यमणिमुक्ताः सूक्ष्मवस्त्राणि कृष्णलोहितवासांसि पट्टवस्त्राणि सिन्दूरवर्णवासांसि चन्दनादिकाष्ठानि गजदन्तेन महार्घ- काष्ठेन पित्तललौहाभ्यां मर्म्मरप्रस्तरेण वा निर्म्मितानि सर्व्व- विधपात्राणि त्वगेला धूपः सुगन्धिद्रव्यं गन्धरसो द्राक्षारसस्तैलं १३ शस्यचूर्णं गोधूमो गावो मेषा अश्वा रथा दासेया मनुष्यप्राणा- श्चैतानि पण्यद्रव्याणि केनापि न क्रीयन्ते। तव मनोऽभिलाषस्य १४ फलानां समयो गतः, त्वत्तो दूरीकृतं यद्यत् शोभनं भूषणं तव, कदाचन तदुद्देशो न पुन र्लप्स्यते त्वया। तद्विक्रेतारो ये वणिज- १५ स्तया धनिनो जातास्ते तस्या यातनाया भयाद् दूरे तिष्ठन्तो रोदिष्यन्ति शोचन्तश्चेदं गदिष्यन्ति हा हा महापुरि, त्वं सूक्ष्म- १६

वस्त्रैः कृष्णलोहितवस्त्रैः सिन्दूरवर्णवासोभिश्चाच्छादिता स्वर्ण-
१७ मणिमुक्ताभिरलङ्कृता चासीः, किन्त्वेकस्मिन् दण्डे सा महासम्पद्
लुप्ता। अपरं पोतानां कर्णधाराः समूहलोका नाविकाः
१८ समुद्रव्यवसायिनश्च सर्व्वे दूरे तिष्ठन्तस्तस्या दाहस्य धूमं नि-
रीक्षमाणा उच्चैःस्वरेण वदन्ति तस्या महानगर्य्याः किं तुल्यं?
१९ अपरं स्वशिरःसु मृत्तिकां निक्षिप्य ते रुदन्तः शोचन्तश्चोच्चैः-
स्वरेणेदं वदन्ति हा हा यस्या महापुर्य्या बाहुल्यधनकारणात्,
सम्पत्तिः सञ्चिता सर्व्वैः सामुद्रपोतनायकैः, एकस्मिन्नेव दण्डे
सा सम्पूर्णोच्छिन्नतां गता।

२० हे स्वर्गवासिनः सर्व्वे पवित्राः प्रेरिताश्च हे।
हे भाविवादिनो यूयं कृते तस्याः प्रहर्षत।
युष्माकं यत् तया सार्द्धं यो विवादः पुराभवत्।
दण्डं समुचितं तस्य तस्यै व्यतरदीश्वरः॥

२१ अनन्तरम् एको बलवान् दूतो बृहत्पेषणीप्रस्तरतुल्यं
पाषाणमेकं गृहीत्वा समुद्रे निक्षिप्य कथितवान्, ईदृग्बल-
प्रकाशेन बाबिल् महानगरी निपातयिष्यते ततस्तस्या उद्देशः
पुन र्न लप्स्यते।

२२ वल्लकीवादिनां शब्दः पुन र्न श्रोष्यते त्वयि।
गायकानाञ्च शब्दो वा वंशीतूर्य्यादिवादिनां।
शिल्पकर्म्मकरः को ऽपि पुन र्न द्रक्ष्यते त्वयि।
पेषणीप्रस्तरध्वानः पुन र्न श्रोष्यते त्वयि।
२३ दीपस्यापि प्रभा तद्वत् पुन र्न द्रक्ष्यते त्वयि।
न कन्यावरयोः शब्दः पुनः संश्रोष्यते त्वयि।
यस्मान्मुख्याः पृथिव्या ये बणिजस्तेऽभवन् तव।

यस्माच्च जातयः सर्व्वा मोहितास्तव मायया।
भाविवादिपवित्राणां यावन्तश्च हता भुवि। २४
सर्व्वेषां शोणितं तेषां प्राप्तं सर्व्वं तवान्तरे॥

---

## १९ ऊनविंशोऽध्यायः।

१ वाबिल्वेश्याया दण्डार्थं स्वर्गीयलोकानां गानं, ख्रीष्टस्य धर्म्मविवाहः, दूतभजननिषेधः ११ जयिख्रीष्टस्य दर्शनं १७ मांसमत्तुं खगाह्वानञ्च।

ततः परं स्वर्गस्थानां महाजनताया महाशब्दो ऽयं मया श्रुतः, १

ब्रूत परेश्वरं धन्यम् अस्मदीयो य ईश्वरः।
तस्याभवत् परित्राणं प्रभावश्च पराक्रमः।
विचाराज्ञाश्च तस्यैव सत्या न्याय्या भवन्ति च। २
या स्ववेश्याक्रियाभिश्च व्यकरोत् कृत्स्नमेदिनीं।
तां स दण्डितवान् वेश्यां तस्याश्च करतस्तथा।
शोणितस्य स्वदासानां संशोधं स गृहीतवान्॥

पुनरपि तैरिदमुक्तं यथा, ३

ब्रूत परेश्वरं धन्यं यन्नित्यं नित्यमेव च।
तस्या दाहस्य धूमो ऽसौ दिशमूर्द्ध्वमुदेष्यति॥

ततः परं चतुर्व्विंशतिप्राचीनाश्चत्वारः प्राणिनश्च प्रणिपत्य ४ सिंहासनोपविष्टम् ईश्वरं प्रणम्यावदन्,

तथास्तु परमेशश्च सर्व्वैरेव प्रशस्यतां॥

अनन्तरं सिंहासनमध्याद् एष रवो निर्गतो, यथा, ५

हे ईश्वरस्य दासेयास्तद्भक्ताः सकला नराः।
यूयं क्षुद्रा महान्तश्च प्रशंसत व ईश्वरं॥

ततः परं महाजनतायाः शब्द इव बहुतोयानाञ्च शब्द इव ६ गुरुतरस्तनितानाञ्च शब्द इव शब्दो ऽयं मया श्रुतः,

ब्रूत परेश्वरं धन्यं राजत्वं प्राप्तवान् यतः।
स परमेश्वरो ऽस्माकं यः सर्व्वशक्तिमान् प्रभुः।
७ कीर्त्तयामः स्तवं तस्य हृष्टाश्चोल्लासिता वयं।
यन्मेषशावकस्यैव विवाहसमयो ऽभवत्।
वाग्दत्ता चाभवत् तस्मै या कन्या सा सुसज्जिता।
८ परिधानाय तस्यै च दत्तः शुभ्रः सुचेलकः॥

९ स सुचेलकः पवित्रलोकानां पुण्यानि। ततः स माम् उक्तवान् त्वमिदं लिख मेषशावकस्य विवाहभोज्याय ये निमन्त्रितास्ते धन्या इति। पुनरपि माम् अवदत्, इमानीश्वरस्य सत्यानि १० वाक्यानि। अनन्तरम् अहं तस्य चरणयोरन्तिके निपत्य तं प्रणन्तुमुद्यतः। ततः स माम् उक्तवान् सावधानस्तिष्ठ मैवं कुरु यीशोः साक्ष्यविशिष्टैस्तव भ्रातृभिस्त्वया च सहदासो ऽहं। ईश्वरमेव प्रणम यस्माद् यीशोः साक्ष्यं भविष्यद्वाक्यस्य सारं।

११ अनन्तरं मया मुक्तः स्वर्गो दृष्टः, एकः श्वेतवर्णो ऽश्वो ऽपि दृष्टस्तदारूढो जनो विश्वास्यः सत्यमयश्चेति नाम्ना ख्यातः स १२ याथार्थ्येन विचारं युद्धञ्च करोति। तस्य नेत्रे ऽग्निशिखातुल्ये शिरसि च बहुकिरीटानि विद्यन्ते तत्र तस्य नाम लिखितमस्ति १३ तमेव विना नापरः को ऽपि तन्नाम जानाति। स रुधिरमग्नेन परिच्छदेनाच्छादित ईश्वरवाद इति नाम्नाभिधीयते च। १४ अपरं स्वर्गस्थसैन्यानि श्वेताश्वारूढानि परिहितनिर्म्मलश्वेत- १५ सूक्ष्मवस्त्राणि च भूत्वा तमनुगच्छन्ति। तस्य वक्त्राद् एकस्तीक्ष्णः खड्गो निर्गच्छति तेन खड्गेन सर्व्वजातीयास्तेनाघातितव्याः स च लौहदण्डेन तान् चारयिष्यति सर्व्वशक्तिमत ईश्वरस्य प्रचण्डकोपरसोत्पादकद्राक्षाकुण्डे यद्यत् तिष्ठति तत् सर्व्वं स

एव पदाभ्यां पिनष्टि। अपरं तस्य परिच्छद उरसि च राज्ञां १६ राजा प्रभूनां प्रभुश्चेति नाम लिखितमस्ति।

अनन्तरं सूर्य्ये तिष्ठन् एको दूतो मया दृष्टः, आकाशमध्य १७ उड्डीयमानान् सर्व्वान् पक्षिणः प्रति स उच्चैःस्वरेणेदं घोषयति, अत्रागच्छत। ईश्वरस्य महाभोज्ये मिलत, राज्ञां क्रव्याणि १८ सेनापतीनां क्रव्याणि वीराणां क्रव्याण्यश्वानां तदारूढानाञ्च क्रव्याणि दासमुक्तानां क्षुद्रमहतां सर्व्वेषामेव क्रव्याणि च युष्माभि र्भक्षितव्यानि। ततः परं तेनाश्वारूढजनेन तदीय- १९ सैन्यैश्च सार्द्धं युद्धं कर्त्तुं स पशुः पृथिव्या राजानस्तेषां सैन्यानि च समागच्छन्तीति मया दृष्टं। ततः स पशु र्धृतो यश्च मिथ्या- २० भविष्यद्वक्ता तस्यान्तिके चित्रकर्म्माणि कुर्व्वन् तैरेव पश्वङ्क- धारिणस्तत्प्रतिमापूजकांश्च भ्रमितवान् सो ऽपि तेन सार्द्धं धृतः। तौ च वह्निगन्धकज्वलितह्रदे जीवन्तौ निक्षिप्तौ। अव- शिष्टाश्च तस्याश्वारूढस्य वक्त्रनिर्गतखड्गेन हताः, तेषां क्रव्यैश्च २१ पक्षिणः सर्व्वे तृप्तिं गताः।

---

## २० विंशोऽध्यायः।

१ वर्षसहस्रं यावत् शयतानस्य बन्धनं तत्कालीयसुखस्य वर्णना, ८ ततः परं जूज-मागूजयोः पराजयः शयतानस्य च दण्डः ११ विचारदिनकथनञ्च।

ततः परं स्वर्गाद् अवरोहन् एको दूतो मया दृष्टस्तस्य करे १ रसातलस्य कुञ्जिका महाशृङ्खलञ्चैकं तिष्ठतः। अपरं नागो २ ऽर्थतः यो वृद्धः सर्पो ऽपवादकः शयतानश्चास्ति तमेव धृत्वा वर्षसहस्रं यावद् बद्धवान्। अपरं रसातले तं निक्षिप्य तदु- ३ परि द्वारं रुद्ध्वा मुद्राङ्कितवान् यस्मात् तद् वर्षसहस्रं यावत् सम्पूर्णं न भवेत् तावद् भिन्नजातीयास्तेन पुन र्न भ्रमितव्याः।

४ ततः परम् अल्पकालार्थं तस्य मोचनेन भवितव्यं। अनन्तरं मया सिंहासनानि दृष्टानि तत्र ये जना उपाविशन् तेभ्यो विचारभारो ऽदीयत; अनन्तरं यीशोः साक्ष्यस्य कारणाद् ईश्वरवाक्यस्य कारणाच्च येषां शिरश्छेदनं कृतं पशोस्तदीय-प्रतिमाया वा पूजा यैर्न कृता भाले करे वा कलङ्को ऽपि न धृतस्तेषाम् आत्मानो ऽपि मया दृष्टाः, ते प्राप्तजीवनास्तद्वर्ष-
५ सहस्रं यावत् ख्रीष्टेन सार्द्धं राजत्वमकुर्व्वन्। किन्त्ववशिष्टा मृतजनास्तस्य वर्षसहस्रस्य समाप्तेः पूर्व्वं जीवनं न प्रापन्।
६ एषा प्रथमोत्थितिः। यः कश्चित् प्रथमाया उत्थितेरंशी स धन्यः पवित्रश्च। तेषु द्वितीयमृत्योः को ऽप्यधिकारो नास्ति त ईश्वरस्य ख्रीष्टस्य च याजका भविष्यन्ति वर्षसहस्रं यावत् तेन सह राजत्वं करिष्यन्ति च।

७ वर्षसहस्रे समाप्ते शयतानः स्वकारातो मोक्ष्यते। ततः स
८ पृथिव्याश्चतुर्दिक्षु स्थितान् सर्व्वजातीयान् विशेषतो जूजाख्यान् माजूजाख्यांश्च सामुद्रसिकतावद् बहुसंख्यकान् जनान् भ्रम-
९ यित्वा युद्धार्थं संग्रहीतुं निर्गमिष्यति। ततस्ते मेदिन्याः प्रस्थे-नागत्य पवित्रलोकानां दुर्गं प्रियतमां नगरीञ्च वेष्टितवन्तः किन्त्वीश्वरेण निक्षिप्तो ऽग्निराकाशात् पतित्वा तान् खादित-
१० वान्। तेषां भ्रमयिता च शयतानो वह्निगन्धकयो र्ह्रदे ऽर्थतः पशु र्मिथ्याभविष्यद्वादी च यत्र तिष्ठतस्तत्रैव निक्षिप्तः, तत्रा-नन्तकालं यावत् ते दिवानिशं यातनां भोक्ष्यन्ते।

११ ततः शुक्लम् एकं महासिंहासनं मया दृष्टं तदुपविष्टो ऽपि दृष्टस्तस्य वदनान्तिकाद् भूनभोमण्डले पलायेतां पुनस्ताभ्यां
१२ स्थानं न लब्धं। अपरं क्षुद्रा महान्तश्च सर्व्वे मृता मया दृष्टाः,

ते सिंहासनस्यान्तिके ऽतिष्ठन् ग्रन्थाश्च व्यस्तीर्य्यन्त जीवनपुस्तकाख्यम् अपरम् एकं पुस्तकमपि विस्तीर्णं। तत्र ग्रन्थेषु यद्यत् लिखितं तस्मात् मृतानाम् एकैकस्य स्वक्रियानुयायी विचारः कृतः। तदानीं समुद्रेण स्वान्तरस्था मृतजनाः समर्पिताः, मृत्युप- १३ रलोकाभ्यामपि स्वान्तरस्था मृतजनाः समर्पिताः, तेषाञ्चैकैकस्य स्वक्रियानुयायी विचारः कृतः। अपरं मृत्युपरलोकौ वह्निह्रदे १४ निक्षिप्तौ, एष एव द्वितीयो मृत्युः। यस्य कस्यचित् नाम जीवन- १५ पुस्तके लिखितं नाविद्यत स एव तस्मिन् वह्निह्रदे न्यक्षिप्यत।

---

## २१ एकविंशोऽध्यायः।

१ नव्यनभःपृथिव्यो र्दर्शनं २ नव्यधर्म्मपुरयिरूशालमो दर्शनं ९ तत्तेजआकृतिधनसुखानां वर्णनञ्च।

अनन्तरं नवीनम् आकाशमण्डलं नवीना पृथिवी च मया १ दृष्टे यतः प्रथमम् आकाशमण्डलं प्रथमा पृथिवी च लोपं गते समुद्रो ऽपि ततः परं न विद्यते।

अपरं स्वर्गाद् अवरोहन्ती पवित्रा नगरी, अर्थतो नवीना २ यिरूशालमपुरी मया दृष्टा, सा वराय विभूषिता कन्येव सुसज्जितासीत्। अनन्तरं स्वर्गाद् एष महारवो मया श्रुतः ३ पश्यायं मानवैः सार्द्धम् ईश्वरस्यावासः, स तैः सार्द्धं वत्स्यति ते च तस्य प्रजा भविष्यन्ति, ईश्वरश्च स्वयं तेषाम् ईश्वरो भूत्वा तैः सार्द्धं स्थास्यति। तेषां नेत्रेभ्यश्चाश्रूणि सर्व्वाणीश्वरेण प्रमार्क्ष्यन्ते ४ मृत्युरपि पुन र्न भविष्यति शोकविलापक्लेशा अपि पुन र्न भविष्यन्ति, यतः प्रथमानि सर्व्वाणि व्यतीतानि। अपरं सिंहा- ५ सनोपविष्टो जनोऽवदत् पश्याहं सर्व्वाणि नूतनीकरोमि। पुनरवदत् लिख यत इमानि वाक्यानि सत्यानि विश्वास्यानि च सन्ति।

६ पुन र्माम् अवदत् समाप्तं, अहं कः चश्च, अहम् आदिरन्तश्च यः पिपासति तस्मा अहं जीवनदायिप्रस्रवणस्य तोयं विनामूल्यं
७ दास्यामि। यो जयति स सर्व्वेषाम् अधिकारी भविष्यति, अहञ्च
८ तस्येश्वरो भविष्यामि स च मम पुत्रो भविष्यति। किन्तु भीतानाम् अविश्वासिनां घृण्यानां नरहन्तॄणां वेश्यागामिनां मोहकानां देवपूजकानां सर्व्वेषाम् अनृतवादिनाञ्चांशो वह्निगन्धकज्वलितह्रदे भविष्यति, एष एव द्वितीयो मृत्युः।

९ अनन्तरं शेषसप्तदण्डैः परिपूर्णाः सप्त कंसा येषां सप्तदूतानां करेष्वासन् तेषामेक आगत्य मां सम्भाष्यावदत्, आगच्छाहं तां
१० कन्याम् अर्थतो मेषशावकस्य भाविभार्य्यां त्वां दर्शयामि। ततः स आत्माविष्टं माम् अत्युच्चं महापर्व्वतमेकं नीत्वेश्वरस्य सन्निधितः स्वर्गाद् अवरोहन्तीं यिरूशालमाख्यां पवित्रां नगरीं
११ दर्शितवान्। सा ईश्वरीयप्रतापविशिष्टा तस्यास्तेजो महार्घ-
१२ रत्नवद् अर्थतः सूर्य्यकान्तमणितेजस्तुल्यं। तस्याः प्राचीरं बृहद् उच्चञ्च तत्र द्वादश गोपुराणि सन्ति तद्गोपुरोपरि द्वादश स्वर्गदूता विद्यन्ते तत्र च द्वादश नामान्यर्थत इस्रायेलीयानां द्वाद-
१३ शवंशानां नामानि लिखितानि। पूर्व्वदिशि त्रीणि गोपुराणि उत्तरदिशि त्रीणि गोपुराणि दक्षिणदिशि त्रीणि गोपुराणि
१४ पश्चिमदिशि च त्रीणि गोपुराणि सन्ति। नगर्य्याः प्राचीरस्य द्वादश मूलानि सन्ति तत्र मेषशावकस्य द्वादशप्रेरितानां
१५ द्वादश नामानि लिखितानि। अपरं नगर्य्यास्तदीयगोपुराणां तत्प्राचीरस्य च मापनार्थं मया सम्भाषमाणस्य दूतस्य करे
१६ स्वर्णमय एकः परिमाणदण्ड आसीत्। नगर्य्या आकृतिश्चतुरस्रा तस्या दैर्घ्यप्रस्थे समे। ततः परं स तेन परिमाणदण्डेन

तां नगरीं परिमितवान् तस्याः परिमाणं द्वादशसहस्रनल्वाः। तस्या दैर्घ्यं प्रस्थम् उच्चत्वञ्च समानानि। अपरं स तस्याः प्राचीरं १७ परिमितवान् तस्य मानवस्यार्थतो दूतस्य परिमाणानुसारत-स्तत् चतुश्चत्वारिंशदधिकशतहस्तपरिमितं। तस्य प्राचीरस्य १८ निर्म्मितिः सूर्य्यकान्तमणिभि र्नगरी च निर्म्मलकाचतुल्येन शुद्धसुवर्णेन निर्म्मिता। नगर्य्याः प्राचीरस्य मूलानि च सर्व्व- १९ विधमहार्घमणिभि र्भूषितानि। तेषां प्रथमं भित्तिमूलं सूर्य्य-कान्तस्य, द्वितीयं नीलस्य, तृतीयं ताम्रमणेः, चतुर्थं मरकतस्य, पञ्चमं वैदूर्य्यस्य, षष्ठं शोणरत्नस्य, सप्तमं चन्द्रकान्तस्य, अष्टमं २० गोमेदस्य, नवमं पद्मरागस्य, दशमं लशूनीयस्य, एकादशं पेरोजस्य, द्वादशं मर्टीष्मणेश्चास्ति। द्वादशगोपुराणि द्वादश- २१ मुक्ताभि र्निर्म्मितानि, एकैकं गोपुरम् एकैकया मुक्तया कृतं नगर्य्या महामार्गश्चाच्छकाचवत् निर्म्मलसुवर्णेन निर्म्मितं। तस्या २२ अन्तर एकमपि मन्दिरं मया न दृष्टं यतः सर्व्वशक्तिमान् प्रभुः परमेश्वरो मेषशावकश्च स्वयं तस्य मन्दिरं। तस्यै नगर्य्यै दीप्ति- २३ दानार्थं सूर्य्याचन्द्रमसोः प्रयोजनं नास्ति यत ईश्वरस्य प्रतापस्तां दीपयति मेषशावकश्च तस्या ज्योतिरस्ति। परित्राणप्राप्तलोक- २४ निवहाश्च तस्या आलोके गमनागमने कुर्व्वन्ति पृथिव्या राजा-नश्च स्वकीयं प्रतापं गौरवञ्च तन्मध्यम् आनयन्ति। तस्या २५ द्वाराणि दिवा कदापि न रोत्स्यन्ते निशापि तत्र न भविष्यति। सर्व्वजातीनां गौरवप्रतापौ तन्मध्यम् आनेष्येते। परन्त्वपवित्रं २६ घृण्यकृद् अनृतकृद् वा किमपि तन्मध्यं न प्रवेक्ष्यति मेषशाव- २७ कस्य जीवनपुस्तके येषां नामानि लिखितानि केवलं त एव प्रवेक्ष्यन्ति।

# २२ द्वाविंशोऽध्यायः।

१ अमृतनदीनगर्य्यो र्दर्शनं, ईश्वरस्य लोकानां सुखं ६ दूतख्रीष्टयोः कथनं ८ दूतस्य स्वपूजानिषेधः १२ ख्रीष्टस्य कथनं १८ एतत्पुस्तकस्य न्यूनाधिककरणनिषेधः शुभप्रार्थना च।

१ अनन्तरं स स्फटिकवत् निर्म्मलम् अमृततोयस्य स्रोतो माम् अदर्शयत् तद् ईश्वरस्य मेषशावकस्य च सिंहासनात् निर्गच्छति।
२ नगर्य्या मार्गमध्ये तस्या नद्याः पार्श्वयोरमृतवृक्षा विद्यन्ते तेषां द्वादशफलानि भवन्ति, एकैको वृक्षः प्रतिमासं स्वफलं फलति
३ तद्वृक्षपत्राणि चान्यजातीयानाम् आरोग्यजनकानि। अपरं किमपि शापग्रस्तं पुन र्न भविष्यति तस्या मध्य ईश्वरस्य मेषशावकस्य
४ च सिंहासनं स्थास्यति तस्य दासाश्च तं सेविष्यन्ते। तस्य वदनदर्शनं प्राप्स्यन्ति तेषां भालेषु च तस्य नाम लिखितं भविष्यति।
५ तदानीं रात्रिः पुन र्न भविष्यति तेषां दीपस्य तेजसा सूर्य्यस्य वा तेजसा प्रयोजनं न भविष्यति यतः प्रभुः परमेश्वरस्तान् दीपयिष्यति ते चानन्तकालं यावद् राजत्वं करिष्यन्ते।

६ अनन्तरं स माम् अवदत्, वाक्यानीमानि विश्वास्यानि सत्यानि च, अचिराद् यै र्भवितव्यं तानि स्वदासान् ज्ञापयितुं पवित्रभविष्यद्वादिनां प्रभुः परमेश्वरः स्वदूतं प्रेषितवान्।
७ पश्याहं तूर्णम् आगच्छामि, एतद्ग्रन्थस्य भविष्यद्वाक्यानि यः पालयति स एव धन्यः।

८ योहनहम् एतानि श्रुतवान् दृष्टवांश्चास्मि श्रुत्वा दृष्ट्वा च
९ तद्दर्शकदूतस्य प्रणामार्थं तच्चरणयोरन्तिके ऽपतं। ततः स माम् अवदत् सावधानो भव मैवं कुरु, त्वया तव भ्रातृभि र्भविष्यद्वादिभिरेतद्ग्रन्थस्थवाक्यपालनकारिभिश्च सहदासो ऽहं।
१० त्वम् ईश्वरं प्रणम। स पुन र्माम् अवदत्, एतद्ग्रन्थस्थभविष्यद्वा-

क्यानि त्वया न मुद्राङ्कयितव्यानि यतः समयो निकटवर्त्ती।
अधर्म्माचार इतः परमप्यधर्म्मम् आचरतु, अमेध्याचार इतः ११
परमप्यमेध्यम् आचरतु धर्म्माचार इतः परमपि धर्म्मम्
आचरतु पवित्राचारश्चेतः परमपि पवित्रम् आचरतु।

पश्याहं तूर्णम् आगच्छामि, एकैकस्मै स्वक्रियानुयायिफल- १२
दानार्थं मद्दातव्यफलं मम समवर्त्ति। अहं कः क्षश्च प्रथमः शेष- १३
श्चादिरन्तश्च। अमृतवृक्षस्याधिकारप्राप्त्यर्थं द्वारै र्नगरप्रवेशार्थञ्च १४
ये तस्याज्ञाः पालयन्ति त एव धन्याः। कुक्कुरै र्मायाविभिः पुङ्गा- १५
मिभि र्नरहन्तृभि र्देवार्च्चकैः सर्व्वैरनृते प्रीयमाणैरनृताचारि-
भिश्च वहिः स्थातव्यं। मण्डलीषु युष्मभ्यमेतेषां साक्ष्यदानार्थं १६
यीशुरहं स्वदूतं प्रेषितवान्, अहमेव दायूदो मूलं वंशश्च, अहं
तेजोमयप्रभातीयतारास्वरूपः। आत्मा कन्या च कथयतः, १७
त्वयागम्यतां। श्रोतापि वदतु, आगम्यतामिति। यश्च तृषार्त्तः
स आगच्छतु यश्चेच्छति स विना मूल्यं जीवनदायि जलं गृह्णातु।

यः कश्चिद् एतद्ग्रन्थस्थभविष्यद्वाक्यानि शृणोति तस्मा अहं १८
साक्ष्यमिदं ददामि, कश्चिद् यद्यपरं किमप्येतेषु योजयति तर्हीश्वरो ग्रन्थेऽस्मिन् लिखितान् दण्डान् तस्मिन्नेव योजयिष्यति। यदि १९
च कश्चिद् एतद्ग्रन्थस्थभविष्यद्वाक्येभ्यः किमप्यपहरति तर्हीश्वरो
ग्रन्थे ऽस्मिन् लिखितात् जीवनवृक्षात् पवित्रनगराच्च तस्यांश-
मपहरिष्यति। एतत् साक्ष्यं यो ददाति स एव वक्ति सत्यम् अहं २०
तूर्णम् आगच्छामि। तथास्तु। प्रभो यीशो, आगम्यतां भवता।

अस्माकं प्रभो यीशुख्रीष्टस्यानुग्रहः सर्व्वेषु युष्मासु वर्त्ततां। २१
आमेन्।

धर्म्मपुस्तकस्य शेषांशः समाप्तः।

